




श्लोकः

कोशं शब्दार्थ चिन्तामणि मथ रहितं पूर्णभावेन पूर्णं
कृत्वा श्रीसज्जनेश स्त्रिदिवपथ गत स्तत्प्रचाराय लोके ॥
तत्सूनु स्तातभक्तो नरपति फतह : सिंह भूपैकवीर :
विद्वत्कंठैकशोभा भरण विधिरुचिः प्रेषयत्येक कोशम् ॥ १ ॥

श्रीम त्फ़तह सिंहस्य नृपते : परमा ज्ञया ॥
कविराजः श्यामलाख्यः कोशं प्रेषयति ध्रुवम् ॥ २ ॥

*By order of H. H. Maha Rana Fateh Sin[gh]*
*Presented to the Library of the Asiatic Socie[ty of]*
*Bengal Calcutta*

*Oodeypore*
*July 2/86* }

*(sd) Kavi Raj Shy[amal Das]*
*M. [illegible]*

# NOTICE.

## THE SHABDARTH CHINTAMANI.

### A NEW SANSKRIT LEXICON.

This new and valuable work, in the compilation of which Brahmi-vadhúta Shri Sukhánand Natha of Delhi, spent more than thirty years of his life, contains (as its name implies) the meanings of all words in general and colloquial use.

The following is a resumé of the plan on which this most useful work has been arranged.

1st. The word-forms have been tested by the process suggested in the Grammatical Sutras of Panini.

2nd. The meanings of the words are derived from their roots, by which means not only correctness, but clear-ness of conception are secured. The Primary meaning is given first, and others are described according to their logical order.

The utmost care has been taken to express the meanings of the words in the best and simplest language — a feature in the construction of this work, which cannot fail to recommend it above all others for practical use.

3rd. Another point is well worthy of notice in the work, viz; that words which have special reference to Aryan Literature whether the Smritis, Purâns or Vedas, are clearly and briefly ex-plained.

4th. Special attention has been paid to the full definition of Scientific and Technical terms, whether these occur in the Vedas Vedangas, Shastras, Chemis-try, Mechanics or Music.

5th. The descriptions of weapons of warfare, metals, precious stones; and the directions for preparing the different kinds of soil for planting garden — and forest-trees are fully given.

6th. The officinal and non-officinal properties of drugs and the immediate causes of those diseases for which they may be given, have been fully described according to the best Medical Treatises on the subject.

7th. The author has specially adapt-ed his work for Educational purposes in explaining the various Figures of Rhetoric employed in Poetry; also those feelings Poetry is calculated to excite, and by describing the different Metres.

8th. In the arrangement of the words the Alphabetical order is strictly preserved.

From these points it will be clearly seen that this excellent work will be an unerring guide to those who seek infor-mation on Political as well as Practical matters.

Fully convinced of the usefulness of such a Lexicon, Adi Gaur, Pt. Ghási-Ram (late Gumasta of Govt. Comurt Agra) resolved to undertake the publi-cation of the first 2Vols. as far as the letter [ग] but on account of the want of pecuniary assistance, he could not finish the remaining portion of the Dictionary.

About 16 years ago, the first two volumes were published, and are now in the libraries of many of the Chiefs, Nobles and Pandits of India, who deeply regret that the remaining 2vols. are not in their possession.

However, no one seemed willing to undertake this arduous and important task until H. H. the late Mahá Raná Sajjan Singh G. C. S. I. of Meywár, who during his life time was the Patron of Art and Literature, on hearing through Kavi Raja Shyámal Das of this unfinished Dictionary, issued orders that the remaining 2vols (3rd & 4th.) should be printed in the Ráj Press with all possible rapidity. So minute were H. H. the late Maha Rana's directions that he expressed the desire that the same kind of paper be used and type of equal clearness, and legibility employed as in the first two volumes.

In fulfilment of His Highness' wishes, the work has been completed.

It is therefore requested that those who are desirous of obtaining the Lexicon send their names and full address to the undersigned.

Oodeypore, June 1885 } Pundit Bansi Dhar (Vajpai) Manager, Raj Press Meywar.

# शब्दार्थचिन्तामणिः

अर्थात्

गीर्वाणभाषासाशेषशास्त्रानेककोशादिभ्यः सङ्गृहीतानामकाराद्यर्ण
क्रमेण विन्यस्तानां शब्दानां तत्तल्लिङ्गनानार्थैकार्थपर्यायप्रयोगोल्लेखेन
पाणिन्युक्तनिष्पत्तिरूपैस्तत्तदर्थस्फुटीकरणेन तत्तच्छब्दप्रस्तावागतवे-
दाङ्गस्मृतिपुराणागमेतिहासादिप्रयोगैः छन्दःशिल्पसङ्गीतादिशास्त्रीय
विषयाणां वर्णनैः शस्त्रास्त्रधातुरत्नादिपरीक्षाभिः ग्राम्यारण्यपशुप
क्ष्यादिवर्णनैर्दुर्गार्गलेन सजलनिर्जलभूमिपरिज्ञानेनोद्यानवृक्षा
युर्वेदेन द्रव्यगुणरोगनिदानादिभिरलङ्कारच्छन्दःप्रभृतिनाम
लक्षणोदाहरणैश्च संयुक्तोखिलशास्त्रमताभिद्योतकः
सहृदयहृदयाह्लाददो ग्रन्थः ॥

## तस्यायमवर्गकवर्गात्मकः प्रथमोभागः

ब्रह्मावधूतश्रीसुखानन्दनाथेन विनिर्मितः

एकविंशत्यधिकोनविंशतितमे १९२१ वैक्रमे ऽब्दे आगरेति साधारणत
याविख्याते अग्रपुरे आदिगौडश्रीघासीरामकन्हैयालालयोर्यत्ने
नतयोर्निजे संस्कृतयन्त्रालये श्रीरामप्रसाददृष्ट्या मुद्राङ्किता
ऽभिव्यक्तः

तत् सत्

शब्दार्थचिन्तामणेर्मुखबन्धः तत्राद्य

श्रीजगदानन्दनाथः

---

नमो गुरवे ॥ श्रीमद्गौडकुले नितान्तविपुले ऽडीचप्रथोत्थेऽतुले जातः पुष्करराज इत्यभिधया ख्यातो धरामण्डले । यत् सौजन्यसुधासरित्प्रवितरङ्गान्दोलनानन्दिता विद्यौदार्य्यदयादिशेवधिपराःसर्वे बभूवुर्ज्जनाः ॥ १ ॥ श्रीनन्दलालः सुकृते विशाल स्तुलादिरामस्सुमनोऽभिरामः । तदात्मजा वप्रतिमप्रभावौ श्रीरामरामानुजनैजभावौ ॥ २ ॥ श्रीनन्दलालपत्नी सुषुवे सुनुत्रयं सुता मेकाम् । प्रथमस्तु शम्भुनाथोऽन्तरजो रामप्रसादाह्वः ॥ ३ ॥ मोतीरामोऽवरजः सर्वे सकलार्थतत्त्वज्ञाः । देवी सुलक्षणासीद् याहि सती शील सम्पन्ना ॥ ४ ॥ विद्वत्तुलारामसुतो भवानीशङ्करोऽभवत् । ज्येष्ठःश्रेष्ठमति र्नाति संसारासक्तमानसः ॥ ५ ॥ द्वितीयः सम्भूतो धनपतिपुरो राज इति यं कुलीनो नाम्नै नं जगति कृतवन्तो मुमुदिरे । प्रकृत्त्या ऽऽजन्माऽसौ विरलतरकर्म्मातिरसिको ह्यगा दप्रत्यक्षं निजजनत एकः शिवपुरीम् ॥ ६ ॥ त्रिचन्द्राब्दायुष्मान् परमपरतत्त्वं विविदिषुः पठित्वा शास्त्राणि प्रतिहरिहरानन्दपदतः ॥ प्रतीतं मायाख्यं निखिलनिगमार्थैकसुधियं गतोऽयं योगीन्द्रं कुशलमवधूतं कुलगुरुम् ॥ ७ ॥ प्रीत्त्या नमस्या सन्तुष्टः सद्गुरुः करुणानिधिः । त्वं सुखानन्दनाथो ऽसी त्याचष्ट हि यथो चितम् ॥ ८ ॥ आत्मावधूतपदवीं प्राप्य देशाननेकशः ॥ गाहं गाहं बहुविधान् दर्शं दर्शं जमव्रजान् ॥ ९ ॥ ज्वालामुखीं महादेवीं जालन्धरनिवासिनीम् ॥ जग्मिवान् सुपमं पश्यं स्तत्र स्थिति मुपाश्रयत् ॥ १० ॥ यात्राप्रसङ्गतोऽस्मिन् भज्जीदेशाधिप स्तदा गतवान् ॥ राणादिरुद्रपालोऽमृतपालसुतो महोदारः ॥ ११ ॥ पर्वतराज स्त्वतुः स्वतुर्षु यतेषु दीक्षितो विद्वान् ॥ श्रीरुद्रमणेः शिष्योऽमुं विचरन्तं यदाद्राक्षीत् ॥ १२ ॥ आहूय श्रुतवाणीजनितश्रद्धो निर्नीषुरनुकूलः ॥ शुश्रूषया स्वदेशं तं प्रार्थ्यानी

नवद् यथायोग्यम् ॥ १३ ॥ सोऽयं प्रसन्नहृदयो मंत्राशयाद्वैतुकीभक्त्या ॥ अध्यितरणाभद्राख्यं तत्पुत्रं पाठयन् न्यवसत् ॥ १४ ॥ निश्चिन्तो विरले समन्तत उपेतेष्टार्थसिद्धि स्तत श्चिन्तां तत्र समासदद् द्विजकुले दृष्ट्वा कले राघदा ॥ मैावं तस्य तुशान्तये निखिलशास्त्रार्थौज्जिहीर्षु र्मुदा व्यास्यत् कोशकलाधरं कविहरं शब्दार्थचिन्तामणिम् ॥ १५ ॥ गङ्गातीरे रुद्रपाले शिवेन शिवतां गते ॥ शात्वा नैमित्तिकाभावं निमित्ताभावसङ्गतौ ॥ १६ ॥ इन्द्रप्रस्थं पुनःप्रत्यागत्य मनसि चिन्तयन् ॥ कथ मेतस्य कोशस्य स्यात् प्रवृत्ति र्निरन्तरा ॥ १७ ॥ प्रस्तुतश्रीनन्दलालदोषित्रौ श्रेयआश्रयौ ॥ कोविदौ व्यवहाराणां प्रायःसुप्रनिवासिनौ ॥ १८ ॥ चुन्नीलालाग्रजो घासीरामनामा प्रतापवान् ॥ धनिमान्यो राजमान्यः स्वभुजार्जितसद्यशाः ॥ १९ ॥ बालप्रवासिनं दैवनोदितो दूरदर्शिनम् ॥ स मातुल मनुप्राप्य कृत्वालापं मनोगतम् ॥ २० ॥ कोशम मुंतां प्रस्तावे श्रुत्वा तत्रोत्सुकं मनः ॥ तन्मुद्रीकरणायाशु यद्वात्त्यर्थं मवो भवीत् ॥ २१ ॥ परेश्वरकराङ्कैकमिते १९२१ विक्रमहायने ॥ तदैव मुद्रितो भागःप्रथमः साङ्ग इत्यभूत् ॥ २२ ॥ उत्तमश्लोकशिष्येण श्रीपादाम्बुजसेविना ॥ धर्म्मीसारस्वतेनैभिरिन्द्रप्रस्थनिवासिना ॥ २३ ॥ जगदानन्दनाथेन पारम्पर्यानुवर्त्तिना ॥ जगदीशोपनाम्नैषा श्लोकैरुद्घाटिता कृतिः ॥ २४ ॥ * ॥ * ॥

---

अथ शब्दार्थचिन्तामणेः संकेताक्षराणां विवरणम् ॥

---

अ० ...... अर्द्धर्चाः पुंसिच ॥ अश्वादिभ्यःफञ् ॥

अघ० ...... अघ्रादिभ्यश्चेति यक् ॥

अङ्गु० .... अङ्गुल्यादिभ्यष्ठक् ॥

अजा० .... अजादित्वात् टाप् ॥

अध्या० .. अध्यात्मादित्वात् ठञ् ॥

अनु० उ० .. अनुशतिकादित्वादुभयपदवृद्धिः ॥

अन्य० .... अन्यत्रापीति ङः ॥

अन्ये० .... अन्येषामपीति दीर्घः ॥ अन्येभ्योपीति ङः ॥ अन्येभ्यो पिदृश्यतेइतिवः ॥ वलः ॥

अन्येभ्योपि दृश्यते क्विप् ॥
अन्येभ्योपिदृश्यतेइति यप्
॥अन्येभ्योपिदृश्यन्ते॥ मनि
न्क्वनिप्वनिप् विच एते॥

अन्येष्व० ·· अन्येष्वपि दृश्यतेइतिडः॥
अश्व० ···· अश्वादयश्चेतिसाधुः ॥
अर्० ···· अर्शआदिभ्योऽच् ॥
अली० ···· अलीकादय श्चेति की-
कन् ॥
अश्रु० ···· अश्र्वादयश्चेतिसाधुः ॥
अश्व० ···· अश्वपत्यादिभ्यश्चेत्यण्॥
आ० ······ आकर्षादिभ्यः कन् ॥
आद्या०···· आद्यादिभ्य उपसङ्ख्यान
मिति तसिः ॥
इ० ······ इति ॥
इ०वि०ति०·· इतिविष्णुपुराणतिलके
इ०रा० ···· इतराभ्योपि दृश्यन्ते तसि
लादयः ॥
इष्० ······ इष्टादिभ्यश्चेति इनिः ॥
उ० ······ उक्थादित्वात् ठक् ॥
उत्० ···· उत्सादित्वादञ् ॥
उद्० ···· प्राणभृज्जातिवयोवचनो
द्गात्रादिभ्योऽञ् ॥
उदा० ···· उदाहरणम् ॥
उर्०······ उरःप्रभृतिभ्यः कप् ॥
उल्० ····, उल्वादयश्चेति वन्नन्तः-
साधुः ॥
उल० ···· [illegible]

ऋ० ······ ऋत्व्यादिभ्यः क्तिन्निष्ठा
द्वाच्यः ॥
ए०वि० ···· एतद्विवरणम् ॥
क० ······ कण्ड्वादिभ्यो यक् ॥
क० ······ कर्ममीमांसीयाम् ॥
क१० ···· कश्चित् ॥
कच्० ···· कच्छादिभ्यश्चेत्यण् ॥
कत्० ···· कत्र्यादिभ्योढकञ् ॥
कपि० ···· कपिलकादित्वाल्लत्वम् ॥
कम० ···· कमलादिभ्यः खण्डः ॥
कल्या० ·· कल्याण्यादित्वाड्ढक् ।
इनङादेशश्च ॥
का० ···· काश्यपः । काश्यादित्वात्
ञिठः ॥ -
का०पु०···· कालीपुराणम् ॥
कालि०···· कालिदासः ॥
का० ···· काादिभ्यः किदितिडः ॥
काश्मी० ·· काश्मीरखण्डम् ॥
का०सू० ·· कापिलसूत्रम् ॥
कि० ···· किसरादिभ्यःष्ठन् ॥
किशो० ·· किशोरादयश्चेत्यो[illegible]
कु० ···· कुर्वादिभ्योण्यः ॥
कु० ···· कुटादिः ॥
कुला० ····कुलालादिभ्यो वुञ् ॥ कुला
लः ॥
कू० ···· कूर्मपुराणम् ॥
[illegible]

कुद० .... कुदरादयश्चेतिसाधुः ॥

क्रतू० .... क्रतूथकादित्वान्नाट्ठ-क् ॥

क्रमा० .... क्रमादिभ्योवुन् ॥

खं० .... खण्डिकादित्वादञ् ॥

ख० .... खर्जादित्वात् ऊरः ॥

खर्० .... खर्जपिञ्जादिभ्य ऊरोल-चौ ॥

खला० .... खलादिभ्यइनिर्वक्तव्यः ॥

ग० .... गर्गादिभ्योयञ् ॥

गम्० .... गम्भीरादयश्चेति ईरन् ॥

गहा० .... गहादिभ्यश्चेतिछः ॥

गु० .... गुपादिभ्यःकिदितिइत्वच् ।

गुडा० .... गुडादिभ्यष्ठञ् ॥

गौ० .... गौरादिः ॥

गौ० भा० गौडभाषा ॥

गृष्० .... गृष्ट्यादिभ्यश्चेतिढञ् ॥

ग्रहि० .... नन्दिग्रहिपचादिभ्योल्यु-णिन्यचइतिणिनिः ॥

चतु० .... चतुर्वर्णादीनांस्वार्थे उपसंख्यानम् । ष्यञ् ॥

चु० .... चुरादिः ॥

छ० .... छत्रादित्वाणः ॥

छाम्० .... [illegible]लसः ॥

छां०भा० .. छान्दोग्यभाष्यम् ॥

[illegible] .... [illegible]दिभ्यो नित्यमिति-

जु० .... जुहोत्यादिः ॥

ज्व० .... ज्वलादित्वाणः ॥

ज्यो० .... ज्योत्स्नादित्वादण् ॥

त० .... तथाच ॥

त०छ०प० .. तदुक्तं छन्दोगपरिशिष्टे ॥

तडा० .... तडागादयश्चेतिनिपातः ॥

त० प० .. तत् पञ्चविधम् ॥

तर० .... तरत्यादिभ्यश्चेत्यञ्च

ता० .... तारकादित्वादितच् ॥

ति० .... तिकादिभ्यःफिञ्

तुन्० .... तुन्दादिभ्यइलच्चेतिइनिश्च

तु० .... तुदादिः

तुषा० .. तुषारादयश्चेत्यारन् ॥

दं० .... दण्डादित्वात् यत् ॥

दाम० .... दामन्यादित्रिगर्त्तषष्ठा-च्छः ॥

दि० .... दिगादिभ्योयदिति यत् । दिवादिः ॥

दी० .... दीपिका ॥

दृ० .... दृढादिः । वर्णदृढादिभ्यः ष्यञ्च । इमनिच्च ॥

नं० .... नन्द्यादित्वात्ल्युः । नन्दिग्रहिपचादिभ्योल्युणिन्यचः ॥

नडा० .... नडादित्वात् फक् । नडादीनांकुक्चेतिछः ॥

नद्या० .... नद्यादिभ्योढगितिढक् ॥

न्यङ्कु० .... न्यङ्क्वादित्वात् कुत्वम् ॥

[illegible] ॥

3573

ना० ...... नारदः ॥

नि० ...... निपातः ॥

नि० ...... निदानम् ॥

नै० ...... नैषधः ॥

प० ........ पचाद्यच् । पचाद्याच्॥

प० ...... नन्दिग्रहिपचादिभ्यो ल्यु-
णिन्यचः ॥

प०प० .... पराशरपद्धतिः ॥

पर्क० ...... पर्करीकादयश्चेती कन् ॥

प०भा० .... पर्वतभाषा ॥

पर० ...... पर्पादिभ्यःष्ठन् ॥

पर्श्वा० .... पर्श्वादियौधेयादिभ्यो ऽण
ञौ ॥

प०सं० .... पराशरसंहिता ॥

पा० ...... पामादित्वात् नः ॥

पा०पा० .. पाद्मे पातालखण्डः ॥

पाघा० .. पाघाध्मास्थनेति दीर्घ्घ-
न ॥

पारस्० .... पारस्करादित्वात् सुट् ॥

पाश० .... पाशादिभ्योयः ॥

पि० .... पिच्छादित्वात् इलच् ॥

पिञ्ज० .... खर्जपिञ्जादिभ्यऊ रोल
चावित्त्यूलच् ॥

पिना० .... पिनाकादयश्चेत्याकः ॥

पु० .... पुष्करादिभ्योदेशेइति इ-
निः । पुराणम् ॥

पुरो० .... पथ्यक्तपुरोहितादिभ्योयक्

पृ० ...... पृषोदरादीनि यथोपदि-
ष्टम् ॥

पृथ्व० .... पृथ्वादिभ्य इमनिज्वा ॥

प्र० ...... प्रस्तिचञ्चुप्रादिभ्यस्चेति
स्वार्थे ऽण् प्रत्ययः ॥

प्रति० .... प्रतिजनादिभ्यः खञ् ॥

प्रा०वि० .. प्रायश्चित्तविवेकः ॥

फ० ...... फलम् ॥

ब० ...... बलादिभ्योमतुप् ॥ वशिष्ठः
। बहुलमन्यत्रापीति युच्॥

बकु० .... बकुञ्यादयश्चेति किन् ॥

बला० .... बलाकादयश्चेत्याकः ॥

बसं० ... बसन्तादिभ्यष्ठक् ॥

बह्वा० .... बह्वादिभ्यश्चेति ङीष् ॥

व०वृ० .... वर्णवृत्तप्रभेदः ॥

बा० .... बाहुलकात् । बाह्वादि-
त्वादिञ् ॥

वा०पु० .... वायुपुराणम् ॥

वाहि० .... वाहिताग्न्यादिषु॥

वि० ...... विशेषः । विल्वादयण् ॥

विडा० .... विडादिभ्यःकिदित्यकृच ॥

विदा० .... अनृष्यानन्तर्ये विदादिभ्यो
ऽञ् ॥

वि०ध० .... विष्णुधर्मोत्तरम् ॥

विन० .... विनयादिभ्यष्ठक् इति स्वा
र्थेठक् ॥

वि०पु० .... विष्णुपुराणम् ॥

वी० वीरमित्रोदयः ॥

वे०भा० .... वेदभाष्यम् ॥

चेत० …… चेतनादिभ्यो जीवतीति-
ठञ् ॥
वै० …… वैदिकप्रयोगः ॥
वै०प० ·· वैद्यकपरिभाषा ॥
वै०म० …. वैद्यकमतम् ॥
वृ० …… वृत्ते ॥
वृत्ता० …. वृत्तादिभ्यःखण्डः ॥
वृषा० …. वृषादिभ्यश्चिदितिकलः ॥
वृह० …. वृहद्धर्मपुराणम् ॥
व्यु० …… व्युत्पत्त्या ॥
भा० …… भावप्रकाशः ॥
ब्र० …… ब्रह्मवैवर्त्तपुराणम् ॥
ब्र०पु० …. ब्रह्मपुराणम् ॥
ब्र०वै०ब्र० ·· ब्रह्मवैवर्त्ते ब्रह्मखण्डम् ॥
ब्रा० …… गणवचनब्राह्मणादिभ्यःकर्मणिचेतिष्यञ् ॥
ब्री० …… ब्रीह्यादिभ्यश्चेतिइनिः ॥
व्या०व० ·· व्यासवचनम् ॥
भा० …… भागवतम् ॥
भा०प० …. भाषापरिच्छेद ॥
भा०प्र० ·· भावप्रकाशः ॥
भार० …. भारतः ॥
भि० …… भिदिदादिभ्योऽङ् ॥
भिक्षा० …. भिक्षादिभ्योऽण् ॥
भी० …… भीमादयोऽपादाने ॥
भू० …… भूम्नि ॥
भ्वा० …… भ्वादिः ॥
म० मत्वर्थीयः ॥

मधु० …. मध्वादयश्चेति उरच् ॥
मनो० …. द्वन्द्वमनोज्ञादिभ्यश्चेति
म०भा० ·· महाभारतम् ॥
मयू० …… मयूरव्यंसकादित्वात् ॥
मातृ० …. मात्राहत्तम् ॥
वुञ् ॥
महा० …. महाभारते महाभारतम् ॥
मा०तं० ·· मायातन्त्रम् ॥
मि० …… मिथिलादयश्चेति इलच् ॥
मित० …. मितद्र्वादित्वात् डुः ॥
मुं०तं० ·· मुण्डमालातन्त्रम् ॥
मू० …… कप्रकरणे मूलविभुजादिभ्यउपसंख्यानमितिकः ॥
मूले० …. मूलेरादयश्चेत्येरक् ॥
मृ० …… मृगय्वादयश्चेतिकः ॥
मो० …. मोक्षधर्मः ॥
य० …… यज्ञादित्वात् । यथा ॥
या० …… यावत् । यावादिभ्यःकन् ॥
याज्ञ० …. याज्ञवल्क्यः ॥
यु० …… हायनान्तयुवादिभ्योऽण् ॥
यौ० …. पर्श्वादियौधेयादिभ्योऽणञौ ॥
र० …… रसादिभ्यश्चेति मतुप् ॥
रा० …… रामायणम् ॥
राज० …. राजदन्तादिषु परम् ॥
रानि० …. राजनिर्घण्टः ॥
रेव० …… रेवत्यादिभ्यष्ठक् ॥

लं० ······ लक्षणम् ॥
ली० ···· लीलावती ॥
लो० ···· लोमादिभ्यात् शः
ल्वा० ···· ल्वादिभ्यश्चेतिनत्वम् ॥
श० ······ शकन्ध्वादिः ॥
शका० ···· शकादिभ्योऽटन् ॥
शम्० ···· शमादिभ्योऽयच् ॥
शर्० ···· शर्करादिभ्योऽण् ॥
शा० ···· शाकपार्थिवादिः । शाखादिभ्योयः ॥
शार्० ·· शार्ङ्गरवाद्यञोङीन् ॥
शि० ···· शिवादिभ्योऽण् ॥
शु० ···· शुभ्रादिभ्यश्चेतिढक् ॥
शुण्० ·· शुण्डिकादिभ्योऽण् ॥
श्री० ···· श्रीभागवतम् ॥
स० ···· समासः ॥
स०कं० ·· सरस्वतीकण्ठाभरणम् ॥
सं० ···· सम्पदादिभ्यात्क्विप् ॥
सङ्० ···· सङ्काशादिभ्योण्यः ॥
संज्ञा० ·· संज्ञापूर्वकत्वाद्वृद्ध्यभावः ॥
सम्० ···· सम्प्रसारणम् ॥
सर्० ···· सर्वधातुभ्योमनिन् ॥
सर्व० ···· सर्वधातुभ्यइन् । सर्वधातुभ्यःष्ट्रन् । सर्वधातुभ्योऽसुन्
सा०द० ·· साहित्यदर्पणः ॥
सि० ·· सिध्मादिभ्यश्चेतिलच् ॥
सिन्० ·· सिन्ध्वादिभ्यादण् ॥
सिमु० ···· सिद्धान्तमुक्तावली ॥
सिशि० ·· सिद्धान्तशिरोमणिः ॥
स्त्रि० ···· स्त्रियाङ्क्तिन् ॥
सु० ···· सुषामादिषुचेतिषत्वम् ॥
सुवा० ···· सुवास्त्वादिभ्योऽण् ॥
स्थूला० ·· स्थूलादिभ्यःप्रकारवचने कन् ॥
स्म० ·· स्मरणम् । स्मृतिः ॥
स्वा० ···· स्वार्थे ॥
ह० ···· हरिवंशः ॥
हरि० ···· हरितादिभ्योऽञ् ॥
हरी० ·· हरीतक्यादिभ्यश्चेतिफल प्रत्ययस्यलुप् ॥
हे० ···· हेमचन्द्रः ॥

इक्० ···· इक्कृष्यादिभ्यः ॥
इञ्० ···· इञवपादिभ्यः ॥
इण्० ···· इणजादिभ्यः ॥
ण्वुल्० ···· धात्वर्थनिर्देशे ण्वुल्वक्तव्यः । संज्ञायाम् ॥
कः० ···· अज्ञाते । कुत्सिते । अल्पे । ह्रस्वे ॥
कन्० ···· संज्ञायाम् । अनुकम्पायाम् । अवक्षेपेकन् । इवेप्रतिकृतौ । संज्ञायांच ॥
क्षुभ्० ···· क्षुभ्नादिषु चेतिणत्वाभावः ॥

तत् सत्

श्रीगणेशाय नमः

# अथ शब्दार्थचिन्तामणौ मंगलम्

तत्रादौ मङ्गलाचरण मभिधेयादिकञ्च

नमः श्रीसद्गुरवे ॥ ॥ श्रीमद्धरिहरानन्दनाम्नाभिन्नं स्वदेशिकम्। नारायणमहं वन्दे सच्छास्त्रज्ञान भास्करम् ॥ १ ॥ लम्बोदरं महाकाय मेकदन्तं गजाननम्। गौरीप्रियं मुदा वन्दे सर्वविघ्नविनाशनम् ॥ २ ॥ नमो देवि महाविद्ये भजामि चरणौ तव। देहि ज्ञानप्रकाशं मे निखिलार्थ प्रसिद्धये ॥ ३ ॥ श्रीशारदां शारद चन्द्रकान्तिं हृदम्बुजेऽभीतिवरं दधानाम्। पुस्तं विपञ्चीं सुकरैः प्रसन्नां ध्यायेऽनिशं जाड्यहरां त्रिनेत्राम् ॥ ४ ॥ वेद्यं ब्रह्मादिभिर्ध्येयं योगीन्द्रै र्यन्महत्पदम् । तत् तत्त्वं तत्त्व मस्यादिवाक्यै रिष्टं भवाम्यहम् ॥ ॥ ५ ॥ यद् ज्ञानादिदं जातं यज्ज्ञानेविलयं व्रजेत् । तन्निर्गुणं निर्विशेषं ब्रह्मात्मानं समाश्रये ॥ ६ ॥ कोशाननेकानवलोक्य यत्नाच्छास्त्राणि भूयः प्रविचार्य्य तेभ्यः। बालावबोधाय लिखामि शब्दान् सार्थान् सुसङ्गृह्य मुदे बुधानाम् ॥ ७ ॥

अल्पायुषो ऽल्पबुद्धींश्च द्विजान् दृष्ट्वा कला वथ। सुखानन्दोलिलेखैतत् कोषं सुखसुबोधदम् ॥ ८॥ सलिङ्गालिङ्गशब्दानां स्थानायतु पुरः पुरः। तत्तदार्थालिलेखोऽपि समासार्थो विधीयते ॥ ९॥ जिज्ञासा यत्र कुत्रापि शास्त्रीये शब्द उद्भवेत्। तदैवैतत् पश्यता ऽनुभूयते कृतकृत्यता ॥ १०॥ तावद् भ्रमति शब्दार्थचिन्ताव्याकुलमानसः। सुश्रद्दधानः स्थिरधीर्यावदेनं न पश्यति ॥ ११॥ चतुर्दशसुविद्यासु प्रायः शब्दो न तादृशः। मातृकानुक्रमे ना ऽत्र सपर्यायो निवेशितः ॥ १२॥ निदर्शनेषु शब्दानां तत्तच्छास्त्रसमुद्धृता। गद्यपद्यमयी वाणी वर्णितास्मिन् क्वचित् क्वचित् ॥ १३॥ केषाञ्चि द्देशभाषापि गुप्तबोधाय दर्शिता। अतः परोपकृतये कोन्यो भवितु मर्हति ॥ १४॥ शब्दार्थचिन्तामणि नामकूतं कोशेषु सर्वेषु च रत्नभूतम्। श्रीमत्सुखानन्दबुधेन कृतं द्विजोपकारार्थ मिदं प्रभूतम् ॥ १५॥ पण्डितै राजधनिनां कृता ग्रन्था ह्यनेकशः। धनाढ्ये तुस्या देतत् सर्वान्तर्यामितुष्टये ॥ १६॥ १९२० ॥ खनेत्रग्रहभूयुक्ते वैक्रमे वत्सरे शुभे। मार्गस्यासितपञ्चम्या मारब्धो मुद्रितुं ह्यसौ ॥ १७॥

# अथ शब्दार्थचिन्तामणिः

**अः**

अ। । अभावे ॥ स्वल्पार्थे ॥ प्रतिषेधे ॥ अनुकम्पायाम् ॥ सम्बोधने ॥ अधिक्षेपे ॥ स्वराणामादिमेवर्णे ॥ अः। पुं। वासुदेवे ॥ महेश्वरे नभो-

**अंशः**

यमकारः ॥ यद्वा ॥ अततिसर्वंव्याप्नोति। अततेर्डः ॥ न। परब्रह्मणि ॥ अंशः। पुं। वण्टके। भागे ॥ स्कन्धे ॥ वस्तुन एक देशे ॥ नवांशे ॥ अंसयते।

अंशविभाजने । अदन्तः । कर्म्मणि घञ् ॥

अंशकः । पुं । दायादे ॥ अंशंहारीअवश्यमंशंहर्त्तेत्यर्थः 'अंशंहारीतिकन ॥ अल्पांशे ॥ अल्पार्थेकन् ॥ न । वासरे । दिने ॥

अंशी । त्रि । भागाधिकारिणि । भागिनि ॥ अंशो ऽस्यास्ति । इनिः ॥

अंशुः । पुं । प्रभायाम् ॥ सूत्रादिसूक्ष्मांशे ॥ किरणे ॥ सूर्ये ॥ अंशयति । अंशविभाजने । चुरादिः । मृगय्वादित्वात्कुः ॥ लेशे ॥ वेगे ॥

अंशुकम् । न । सूक्ष्मवस्त्रे ॥ वस्त्रमात्रे ॥ उत्तरीये ॥ परिधानीये । अधोवस्त्रे ॥ अंशून् कायति । कैशब्दे । आत इतिकः ॥ यद्वा । अंशुभिः काशते । काशृदीप्तौ । अन्येष्वपीतिडः ॥ तेजपाताख्यपत्रे ॥ त्रि । अल्पांशौ ॥ अल्पे इतिकन् ॥

अंशुजालम् । न । प्रभापटले ॥ अंशूनां जालमिव ॥

अंशुधरः । पुं । सूर्ये ॥ धरति । धृञ० । अच् । अंशूनांधरः ॥ त्रि । प्रभाविशिष्टे ॥

अंशुपट्टः । पुं । पट्टशाटके ॥

अंशुमान् । पुं । सूर्ये ॥ विश्वव्यापिप्रकाशे परमात्मनि ॥ सूर्यवंशीयनृपान्तरे ॥ त्रि । अंशुविशिष्टे ॥ अंशवो विद्यन्तेऽस्य । तदस्यास्तीतिमतुप् ॥

अंशुमती । स्त्री । पर्देवतायाम् ॥ अंशवः सन्त्य ऽस्याः । मतुपङीपौ ॥ शालपर्ण्याम् ॥ अंशुमत्याः फलं मूलञ्चांशुमती । अनुदात्तादेश्च- त्यञः फलपाकमूलेष्वितिलुपि युक्तवद्भावः ॥

अंशुमत्फला । स्त्री । कदल्याम् ॥ अंशुमन्ति सूक्ष्मावयववन्ति फलान्यस्याः । अंशुमानिव वा फलान्यस्याः । अजादित्वाट्टाप् ॥

अंशुमाली । पुं । राजभेदे ॥ भास्करे ॥ अंशूनां माला । साऽस्ति अस्य । व्रीह्यादित्वा दिनिः ॥

अंशुलः । पुं । चाणक्यमुनौ । द्रौमिणौ ॥ इति त्रिकाण्डशेषः ॥

अंशुहस्तः । पुं । सूर्ये ॥

अंशूदकम् । न । हंसोदके ॥ यथा । दिवा रविकरैर्जुष्टं निशि शीतकरांशुभिः । ज्ञेयमंशूदकं नामस्निग्धं दोषत्रयापहम् ॥ अंशूनामुदकम् ॥

अंसः । पुं । न । भुजशिरसि । स्कन्धे ॥ अंस्यतेसमाहन्यते । अंससमाघाते । घञ् ॥ यद्वा । अमति अम्यते वा

भारादिना । अमगतौ । अमेः सन् ॥ पुं । विभागे ॥

अंसकूटः । पुं । ककुदि । वृषाङ्गे । कूडो ढाठ इति भाषाप्रसिद्धे ॥ अंसेकूटः ॥

अंसलः । त्रि । मांसले । पुष्टे । बलवति॥ अंसोस्यास्ति । वत्सांसाभ्यां काम बले इति लच् ॥

अंहतिः । स्त्री । त्यागे । दाने ॥ हन्ति दुरितमनया । हन्तेरंहचे- त्यतिः ॥ रोगे ॥

अंहती । स्त्री । अंहतौ ॥ वह्वादित्वात् पक्षेङीष् ॥

अंहः । न । दुःखे ॥ स्वधर्मत्यागे । दुरिते ॥ अमति गच्छति प्रायश्चि- त्तादिना । अमगत्यादिषु । अमे- र्हुक्चेत्यसुन् हुगागमश्च॥ अम न्ति गच्छन्त्यधोनेनवा ॥ अन्हेरसुना सिद्धे अघेरसुनि अङ्घ इतिमा भू- दिति अमेर्हुक्चेतिसूत्रम् । तथा च । स्यान्मध्योपचतुर्थत्व मंहसोरं हसस्तथेति द्विरूपकोशः । एवञ्च । हत्तार्याःसिद्ध सङ्घैर्विदधतुघृणयः शीघ्रमङ्घो विघात मितिपाठोऽनु प्रास रसिकानांप्रामादिक इति व दन्ति॥

अकम् । न । पापे ॥ दुःखे ॥ नकम् ॥ कं सुखं तद्विरुद्धंवा ॥ नलोपोनञः ॥

अकचः । पुं । केतुग्रहे ॥ त्रि । केश- हीने ॥

अकनिष्ठगः । पुं । वुद्धमुनौ ॥

अकम्पनः । पुं । राक्षसान्तरे ॥

अकम्पितः । पुं । बौद्धगणाधिपवि- शेषे ॥ त्रि । कम्पशून्ये॥

अकरणिः । स्त्री । शापे । आक्रोशने ॥ यथा । अकरणि रिह भूयादप्रश- स्तस्यधातु रिति ॥ अकरणम् । आ- क्रोशेनञ्यनिः ॥

अकरा । स्त्री । आमलक्याम् ॥ त्रि । करशून्ये ॥ अकरः । अकरम् ॥

अकरुणः । त्रि । निर्दये ॥ नकरुणः ॥

अकर्कशः । त्रि । कोमले ॥

अकर्णः । त्रि । वधिरे ॥

अकर्त्ता । त्रि । अक्रिये। अव्यापारे । कर्तृत्व रहिते ॥ नकर्त्ता । नलोपो नञः ॥

अकर्मण्यः । त्रि । क्रियासुमन्दे । निक म्मा इति भाषा ॥

अकर्म । न । तूष्णीम्भावे ॥ मोक्षे ॥ न विद्यते कर्म यस्मिन् तत् ॥ त्रि । का- र्याक्षमे ॥

अकर्मी । त्रि । ब्रह्मविदि ॥ अकर्मअस्ति अस्य । व्रीह्यादित्वादिनिः । नकर्मी वा ॥ कर्मा नुष्ठा नरहित अवधूते ॥

यथा ॥ अनुतिष्ठन्तु कर्माणि परलोकयियासव:। सर्वलोकात्मक: कस्मादनुतिष्ठामिकिं कथमिति ॥

अकल्कन:। त्रि। ) वीतदम्भे ॥
अकल्मष:। त्रि। )

अकस्मात्।। सहसार्थे। अतर्कितनिमित्तके॥ यथा। अकस्माद्युवती वृद्धं केशेष्वाकृष्य चुम्बति। पतिंनिर्दयमालिङ्ग्य हेतुरत्रभविष्यतीति॥

अकाम:। त्रि। बाह्यविषयकामनाशून्ये॥ नविद्यतेकामोऽस्य॥ यथा। दृष्टानुश्रविकावाह्या: कामायस्यन सन्त्यसौ। अकामस्तादृशस्त्वन्तुनिष्कामत्त्वेनसिध्यतीति॥

अकामकार:। पुं। यथेष्टानाचरणे॥ नकामकार:॥

अकामहत:। त्रि। आब्रह्मलोकानन्दादर्वाचीनेष्वानन्देषु वितृष्णे॥ कामेनहत: कामहत:। नकामहत:॥

अकाय:। त्रि। अशरीरे॥ लिङ्गशरीरवर्जिते॥ नविद्यते कायोयस्यस:॥

अकार:। पुं। अ अक्षरे। वर्णानां मध्ये भगवद्विभूतौ॥ अ वर्णनिर्देशे॥ वर्णात्कार:॥

अकाल:। पुं। कालाशुद्धौ॥ यथा। अनुराधर्क्षमारभ्यषोडशर्क्षेषु भास्कर:। यावच्चरतिवैतावदकालं मुनयो विदुरिति॥ असमये॥ त्रि। तद्विशिष्टे॥

अकालवृष्टि:। स्त्री। सहस्यादिषुवर्षणे॥ यथा। पौषादिचतुरो मासान्प्रोक्ता वृष्टिरकालजा। व्रतं याचादिकं तत्रवर्जयेत्सप्तवासरानिति॥

अकिञ्चन:। त्रि। दीने॥ नास्ति किञ्चन यस्य। मयूरव्यंसकादित्त्वात्समास:॥ निष्कामे॥

अकिञ्चनिमा। पुं। आकिञ्चन्ये॥ अकिञ्चनस्य भाव: इमनिच्॥

अकीर्त्तिकरम्। त्रि। कीर्त्त्यभावकरे। अपकीर्त्तिकरे॥ नकीर्त्तिकरम्॥

अकुप्यम्। न। स्वर्णरजतात्मकेधने॥ कुप्यादन्यत्॥

अकुलसंज्ञ:। त्रि। तिथि वारर्क्ष विशेषे॥ यथा। स्वात्यन्तकाश्विवसु पौष्णकरानुराधा दित्यध्रुवाणि विषमास्तिथयोऽकुला: स्यु:। सूर्येन्दुमन्दगुरवश्चेति॥

अकुशलम्। त्रि। अशोभने॥ नकुशलम्॥

अकूपार:। पुं। कूर्म्मराजे॥ समुद्रे॥ कुंपृथ्वीं पिपर्त्ति। पृपालनपूरणयो:। कर्म्मण्यण्। अन्येषा

अपीति दीर्घ:। नञ् समास:॥ उप लादौ॥ कमठे॥

अकूर्च:। पुं। बुद्धे॥ त्रि। कैतवहीने॥

अकूवार:। पुं। समुद्रे॥

अकृतम्। त्रि। निश्चये॥ मोक्षे॥ अवि हिते॥ कारणे॥ प्रमाणाविषये॥ स्वयमजनिते॥ नकृतम्॥ अनिष्पादिते॥ यथा। कालातीतन्तु यत्कुर्यादकृतन्तद्विनिर्दिशेदितिस्मृति:॥ स्त्री। प्रकृतिविशेषे॥ यथा ऽपांनिम्बदेशगमनादिलक्षणा प्रकृति: सानकेन चितकृता॥

अकृतक:। त्रि॥ स्वाभाविके॥ नकृतक:

अकृतज्ञ:। त्रि। उपकाराभिमानिनि। कृतघ्ने॥

अकृतबुद्धि:। त्रि। शास्त्राचार्योपदेशन्यायै रनुपजनितविवेकबुद्धौ॥ अकृतावुद्धिर्यस्य येनवा॥

अकृतात्मा। त्रि। यन्त्रादिभिरशोधितान्त:करणे॥ शास्त्रेणासंस्कृतान्त:करणे॥

अकृताभ्यागम:। पुं। दोषविशेषे। अकृतयो: पुण्यपापयोरकस्मातफलदातृत्वे॥

अकृत्रिम:। त्रि। अकरणजे। अजन्ये। सिद्धे॥

अकृषिमानन्द:। पुं। स्वरूपभूतानन्दाभिव्यञ्जके निदिध्यासने॥ अकृषिमश्वासावानन्दश्च॥ त्रि। कृषिमानन्दविरहिणि॥ अविद्यमान: कृषिमानन्दोऽस्य॥

अकृतस्त्ववित्। त्रि। अनात्माभिमानिनि॥ अकृतस्नं वेत्ति। विद ज्ञाने। क्विप्॥

अकृष्णकर्मा। त्रि। शिशिवदाने। अपापकर्मणि॥ अकृष्णं निष्पापत्वात् शुद्धंकर्मास्य॥

अकोट:। पुं। गुवाकवृक्षे। छटाफले॥

अकौशलम्। न। अकौशले॥

अक्का। स्त्री। मातरि। अनन्याम्। अम्बायाम्॥

अक्त:। त्रि। व्याप्ते॥ युक्ते॥ परिच्छिन्ने॥ अक्षेर्गतौक्त:। अक्तपरिमाणस्य वाचका इति भाष्यस्यकैयटेन तथा व्याख्यातत्वात्॥ अनक्ति अज्यते-वा। अंजूव्यक्त्यादौ। अंजिष्ठ घिभ्य: क्त:॥

अक्रतु:। त्रि। अकामे। दृष्टादृष्टवा ह्यविषयोपरतबुद्धौ॥

अक्रान्ता। स्त्री। वृहत्याम्॥ त्रि। अनाक्रान्ते॥

अक्रिय:। त्रि। श्रौतस्मार्तक्रियात्यागिनि॥ अव्यापारे। अकर्त्तरि॥ कुकर्मविशिष्टे॥

अक्रूरः । पुं । श्वफल्कतनये । गान्दिनीसुते ॥ चि । अकठिने । अनिष्ठुरे ॥ नक्रूरः ॥ क्रौर्यवान् क्रूरः सनेत्यक्रूरः । यद्वाक्रूरे इतिभावप्रधानो निर्देशः । नविद्यते क्रौर्यमस्येत्यक्रूरः॥

अक्रोधः । पुं । परैराक्रोशे ताडनेवा कृते सति प्राप्तो यःक्रोधस्तस्य तत्कालोपशमने ॥ चि । क्रोधरहिते ॥

अक्रोधनः । चि । क्रोधरहिते ॥

अक्लमः । चि । सततव्यापारेप्यश्रान्ते॥ अविद्यमानः क्लमोयस्यसः ॥

अक्षः । पुं । रथावयवे । चक्रे ॥ चक्रधारणदारुभेदे । नभ्ये ॥ ज्ञातार्थे ॥ व्यवहारे । आयव्ययचिन्तायाम् ॥ पाशके । येन द्यूतविद्यायामेजति ॥ रुद्राक्षे ॥ इंद्राक्षे ॥ विभीतकतरौ ॥ ज्ञाने ॥ आत्मनि ॥ रावणौ ॥ सर्पे ॥ शकटे ॥ षोडशमाषेषु । कर्षे ॥ जात्यन्धे ॥ गरुडे ॥ पलभायाम् ॥ यथा । चंद्राश्विनिघ्नापलभाह्वितावल क्षावधिः स्यादिहदक्षिणोक्ष इति ॥ न । सौवर्चले लवणे ॥ तुत्थे ॥ हृषीके ॥ अक्ष्णोति अक्षतिवा अक्ष्यतेवा ऽनेनाक्षवा अक्षूव्याप्तौ । पचाद्यच् घञ्वा ॥ अश्नुते ऽर्थम् । अशूव्याप्तौ । अशेर्देवने इति सोक्षा ॥

अक्षकः । पुं । तिनिशे ॥ इतिरत्नमाला ॥

अक्षगणः । पुं ॥ श्रोत्रादीन्द्रियसङ्घाते ॥ अक्षाणांगणः ॥

अक्षचरणः । पुं ॥ अक्षपादे ॥

अक्षतम् ॥ न ॥ षण्डे ॥ पुं ० भू ० लाजेषु ॥ क्षणनम् ॥ क्षणुहिंसायाम् । नपुंसकेभावेक्तः । अनुदात्तोपदेशेत्यादिनाणलोपः । ।नक्षतं येषांते ॥ मुकुटस्त्वमरव्याख्यावसरे लाजाः पुंभूम्नि ते ऽक्षतमितिपठित्वा कर्मणिक्तः । क्षतंखण्डितम् । नक्षतमक्षतमितिविगृह्य नित्यंपुल्लिंगानित्यबहुवचनान्ताश्च लाजा अक्षतमितिव्याचख्यौ ॥ केचित्तु अखण्डतण्डुला अक्षतमित्याहुः ॥ पुं । यवे ॥ चि । अहिंसिते ॥ अव्रणे । अखण्डिते ॥

अक्षता । स्त्री । कर्कटशृङ्ग्याम् ॥ पुरुषसंसर्गरहितायां स्त्रियाम् ॥ नक्षता ॥

अक्षदर्शकः । पुं । प्राड्विवाके । धर्माध्यक्षे ॥ अक्षवाधके ॥ पश्यति । दृशिर्प्रेक्षणे । ण्वुल् । अक्षाणां व्यवहाराणांदर्शकः ॥

अक्षदृक् । पुं । व्यवहारस्यज्ञातरि । अक्षदर्शके ॥

अक्षदेवी । त्रि । द्यूतकृति । धूर्ते ॥ अक्षैर्दीव्यति । दिवुक्रीडादौ । सुपीतिणिनिः ॥

अक्षद्यूः । पुं । अक्षदेविनि ॥ अक्षैर्दीव्यति । दिवु० क्विप् । च्छोरि त्यूठ् ॥

अक्षधूर्त्तः । पुं । द्यूतकारे । कितवे ॥ अक्षेषुधूर्त्तः । सप्तमीशौण्डैरिति समासः ॥

अक्षधूर्त्तिलः । पुं । वृषे ॥ इति हारावली ॥

अक्षपादः । पुं । गौतमे । नैयायिके ॥

अक्षपीडा । स्त्री । यवतिक्ताख्यलतायाम् ॥

अक्षमः । त्रि । क्षमताशून्ये ॥ क्षमारहिते ॥

अक्षमा । स्त्री । ईर्ष्यायाम् । अक्षान्तौ ॥

अक्षमाला । स्त्री । अक्षसूत्रे । अकारादिक्षकारान्त वर्णमालायाम् ॥ अरुन्धत्याम् ॥ अक्षमाला वशिष्ठेन संयुक्ताधमयोनिजेतिवचनात् ॥ रुद्राक्षमालायाम् ॥

अक्षयः । पुं । अनन्ते । अक्षयकालाभिमानिनि ॥ त्रि । क्षयाभावे । क्षयरहिते ॥ अव्यये ॥ ब्रह्मनिष्ठे ॥ अः वासुदेवः तस्मिन् क्षयोनिवासो ऽस्य ॥

अक्षयकालः । पुं । अक्षयकालाभिमानिनि परमेश्वराख्यकाले ॥ अक्षयश्चासौकालश्च ॥

अक्षयतृतीया । स्त्री । वैशाखशुक्लतृतीयायाम् ॥ यथा । वैशाखे मासि राजेन्द्र शुक्लपक्षे तृतीयिका । अक्षयासातिथिः प्रोक्ता कृत्तिकारोहिणीयुता ॥ तस्यांदानादिकं पुण्यमक्षयं समुदाहृतमिति ॥ इयं सप्तद्युगाद्या ॥

अक्षया । स्त्री । रव्यादिवारैः सप्तम्यादितिथिषु ॥ यथा आमावै सोमवारेण रविवारेण सप्तमी । चतुर्थी भौमवारेण अक्षयादपिचाक्षया इतिभविष्यपुराणम् ॥ क्षयरहितायाम् ॥ नास्तिक्षयोयस्याः सा ॥

अक्षरम् । न । नक्षरतीतिव्युत्पत्त्या अविनाशिनि निर्विशेषे प्रणवाख्ये ब्रह्मणि कूटस्थेनित्ये आत्मनि ॥ यथा । क्षराद्विरुद्धधर्मत्वादक्षरं ब्रह्मभण्यते । कार्यकारणरूपन्तु नश्वरंक्षरमुच्यते ॥ यत्किञ्चिद्वस्तुलोकेस्मिन् वाचोगोचरतांगतम् । प्रमाणस्यचतत्सर्वमक्षरे प्रतिषिध्यते ॥ यद्प्रबोधात्कार्पण्यंयत्प्रबोधतः । तद-

क्षरं प्रवोद्दव्यं यथोक्तेश्वरवर्त्मनेति ॥ ईश्वरवर्त्मनेतिंशासितृत्वादि तटस्थ लक्षणद्वारेत्यर्थः ॥ अकारादिक्ष कारान्तवर्णे ॥ यथा। षाण्मासिके तुसम्प्राप्ते भ्रान्तिः संजायतेयतः। धात्राक्षराणि सृष्टानिपत्रारूढा न्यतः पुरेति। तत् पञ्चविधं लिपिश ब्दे द्रष्टव्यम् ॥ अपामार्गे॥ गगने ॥ मोक्षे। अपवर्गे॥ धर्मे॥ तपसि॥ अध्वरे ॥ अव्याकृताख्ये मूलका रणे॥ पुं। शङ्करे॥ अजे। विष्णौ॥ जीवे॥ नक्षरति। क्षरसञ्च लने। पचाद्यच्॥ यद्वा। अश्नुते। यशूव्याप्तौ। अशेः सरः॥ त्रि। अक्षरणीये। अच्युते॥

अक्षरचणः। पुं। लेखकोत्तमे॥ अक्षरैर्वित्तः। तेनवित्तश्चुञ्चुप्च- णपाविति चणप्॥

अक्षरचुञ्चुः। पुं। लेखकोत्तमे॥ अक्षरैर्वित्तः। तेनवित्तइतिचुञ्चुप्॥

अक्षरजननी। स्त्री। लेखन्याम्॥ प्रकृतौ॥ अक्षराणा मक्षरस्यवा- जननी॥

अक्षरजीवकः। पुं। लेखके॥ लेखके ऽक्षरपूर्वाः स्युस्तुणजीवकचुञ्चव इति हेमचन्द्रः॥

अक्षरजीविकः। पुं। कायस्थजातौ॥ अक्षरैर्जीविकायस्यसः॥ लेखकः स्याल्लिपिकरः कायस्थोऽक्षरजीवि कइतिहलायुधः। त्रि। अक्षरजी- विनि॥

अक्षरतूलिका। स्त्री। लेखन्याम्॥ अ क्षराणां तूलिका॥ इतिजटाधरः॥

अक्षरधीः। स्त्री। अक्षरंब्रह्मणिधीर्या भ्यः इतिव्युत्पत्त्या श्रुतिषु॥ त्रि। ब्रह्मनिष्ठे॥

अक्षरपङ्क्तिः। स्त्री। छन्दोभेदे॥ यथा। चेद्गगणान्तेगदययोगः। इन्ति रिह्नोक्तासाऽक्षरपङ्क्तिरिति॥

अक्षरमुखः। त्रि। काव्याचरिके। शिक्षिताक्षरे॥ इतिचिकाण्डशेषः॥

अक्षरविन्यासः। पुं। लिपौ॥ अक्ष राणांविन्यासः॥

अक्षरसमुद्भवः। पुं। अपौरुषेयत्वेन निरस्तसमस्ताशङ्के वेदे॥ अक्षरात्प- रमात्मनः समुद्भवः आविर्भावोय- स्यसः॥

अक्षवती। स्त्री। द्यूतक्रीडाविशेषे। चौपडइतिभाषा॥ अक्षाः पाशकाः सन्त्यस्याम्। मतुप्। लोकात्स्त्री त्वम्॥

अक्षवाटः। पुं। मल्लभूमौ। नियुद्ध- भुवि। अखाडा इतिभाषा॥

अक्षवित्। त्रि। व्यवहारज्ञे॥ द्यूतज्ञे॥

अक्षविवर्त्तः । पुं । द्यूतप्रभेदे ॥

अक्षसूत्रम् । न । जपमालायाम् ॥

अक्षाग्रकीलकः । पुं । अणौ । रथच क्राग्रस्थितकीले । अणी इति भाषा ॥ अक्षस्यनाभिक्षेप्यकाष्ठस्यान्ते बन्धार्थंकीलकः ॥

अक्षान्तिः । स्त्री । परोत्कर्षासहने । ईर्ष्यायाम् ॥ नक्षमणम् । क्षमूस हने । दिवादिः । अस्याषित्त्वात् क्तिन् । अनुनासिकस्येति दीर्घे नञ्‌समासः ॥

अक्षारलवणम् । न । अकृत्रिमे सैन्धवादौ ॥ यथा । गोक्षीरं गोघृतंचैव धान्यंमुद्गास्तिलायवाः । सामुद्रं सैन्धवंचैव अक्षारलवणंस्मृतमिति स्मृतिर्व्वारलतायाम् ॥

अक्षि । न । चक्षुषि ॥ अश्नुतेऽनेनवा ॥ अशूव्याप्तौ संघातेच । अशेर्नि- दितिक्सिः ॥ यद्वा । अक्षति । अक्षू- व्याप्तौ । इन् ॥

अक्षिकूटः । पुं । ईषिकायाम् । गजाक्षिपुटके ॥

अक्षिगतः । त्रि । द्वेष्ये ॥ इत्यमरः ॥ अक्षिगतएवखेदकृत् ॥

अक्षिभेषजम् । न । लोध्रे ॥

अक्षिविकूणितम् । न । अपाङ्गदृष्टौ । कटाक्षे ॥



अक्षीणः । त्रि । पूर्णे ॥ अदीने ॥ न- क्षीणः । यथा । अलब्ध्वानविषीदेत कालेकालेऽप्यनंक्वचित् । लब्ध्वान हृष्येदृतिमानुभयं दैवतन्त्रितम् ॥ इतिमत्वानदीनोयोवधूतोऽक्षीणउच्यतइति ॥

अक्षीबम् । न । वशिरे । सामुद्रलवणे ॥ पुं । शिग्रौ ॥ त्रि । अमत्ते ॥ न- क्षीवति अनेनवा अक्षीवयति- वा । क्षीवृमदे । पचाद्यच् ॥ अ- क्षणः ईः । अक्षींवातिवायति वा । वागतिगन्धनयोः ओवैशोषणेवा । आतोनुपेतिकः ॥

अक्षेशः । पुं । मनसि ॥ अक्षाणामीशः ॥

अक्षोटः । पुं । शैलोत्थपीलौ । कर्परा- ले । अखरोटइतिख्याते ॥ अक्षणो- ति । अक्षूव्याप्तौ संघातेच । बा- हुलकादोटः ॥ अक्षस्येवओटाः प- र्णान्यस्येतिवा ॥

अक्षोटकः । पुं । कर्परालवृक्षे । पर्वत- पीलौ ॥ यथा । अक्षोटकोऽपितद्वा- दसदृशः कफपित्तकृदिति ॥ अक्षो- टात्स्वार्थेकः ॥

अक्षोपकरणम् । न । द्यूतसाधने ॥

अक्षोभः । पुं । आलाने । शङ्कौ । ह स्तिबन्धनस्तम्भे ॥ त्रि । क्षोभरहिते ॥

अक्षोभ्यः । पुं । शिवे ॥ रागद्वेषादि

भिः शब्दादिविषयैरसुरैश्च नचो-भ्यते चोभंविचेपं व्यथांनप्राप्यते। सुभैहेंतुमक्षण्यन्ता दचोयदितिय तमत्ययः। त्रि। अप्रधृष्ये।

अक्षौहिणी। स्त्री। सेनाविशेषे। दृशानीकिन्याम्। सायथा। इभाः २१८७०। रथाः २१८७०। अश्वाः ६५६१०। पदातयः १०९३५०। उक्तञ्च। अक्षौहिण्या मित्यधिकैः सप्तत्याष्टभिःशतैः। संयुक्तानि सहस्राणि गजानामेकविंशतिः। एवमेव रथानान्तु संख्यानंकीर्त्तितंबुधैः। पञ्चषष्टिसहस्राणि षट्शतानिदृशैव तु। संख्यातास्तुरंगास्तज्ज्ञैर्विना रथतुरंगमैः। तथाशतसहस्रंतु सहस्राणि नवैवतु। शतानित्रीणि चान्यानि पंचाशच्चपदातयः इति॥ समस्तसंख्ययातु। खद्वयस्वरवस्विंदुनैवै रक्षौहिणीमतेति। २१८७००। ऊहः समूहोस्त्यस्याः इनिः। अचाणामूहिनो। पूर्वपदादिति णत्वम्। अक्षादूहिन्यामिति वृद्धिः।

अक्ष्णम्। त्रि। अखण्डे। अश्नुते अशूव्याप्तौसंघातेच। कृत्यशूभ्यां क्स्नः। न। काले।

अक्षहृः। पुं। प्रियालवृक्षे। इतिराज.



निर्घण्टः॥

अखट्टिः। पुं। असद्व्यवहारे। इति त्रिकाण्डशेषः।

अखण्डम्। त्रि। पूर्णे। खण्डशून्ये। अनन्ते। नखण्डयते। खंडिभेदने। घञ्। नास्तिखण्डोऽस्यवा॥

अखण्डनः। पुं। काले। इति शब्दचन्द्रिका॥

अखण्डपरशुः। पुं। परशुरामे। नखण्डः अखण्डः केनाप्यखण्डितः परशुःकुठारोस्य।

अखातम्। पुं। न। देवखाते। अकृत्रिमजलाशये। खाताङ्गिन्नम्॥

अखिलम्। त्रि। विश्वस्मिन्। कृत्स्ने। नखिलमस्य।

अखिलाधारम्। त्रि। ब्रह्मणि। अखिलस्याकाशादिप्रपञ्चस्याधारमाश्रयस्तदितिविग्रहः। आश्रयशब्दः सृष्टिप्रलययोरप्युपलचणार्थः॥

अगः। पुं। पर्वते। वृक्षे। सरीसृपे। भानौ॥ नगच्छति। गमॢगतौ। अन्येभ्योपीति अन्येष्वपीतिवाडः॥ नगोऽप्राणिष्विति पाक्षिकोऽप्रकृतिभावः।

अगजः। त्रि। गिरिसम्भवे। न। शिलाजतुनि।

अगतिः। पुं। अनववोधे। अपरिज्ञा-

ने ॥

अगदः । पुं । औषधे ॥ त्रि । नीरुजि ॥ गदविरुद्धः । नगदोऽस्मादितिवा ॥

अगदङ्कारः । त्रि । चिकित्सके ॥ अगदमरोगंजन्तुंकरोति । कर्मण्यण् । कारेसत्यागदस्येतिमुम् ॥

अगदतन्त्रम् । न । वैद्यविद्याङ्गविशेषे ॥ यथा । अगदतन्त्रंनामसर्पकीटलूतावृश्चिकमूषिकादिदष्टविषव्यञ्जनार्थं विविधविषसंयोगविषोपहतोपशमनार्थमितिसुश्रुतः ॥

अगमः । पुं । वृक्षे ॥ नगच्छति । गम्लृगतौ । पचाद्यच् ॥

अगम्यः । त्रि । अज्ञेये ॥ गमनायोग्ये ॥ नगम्यः ॥

अगस्तिः । पुं । मुनिविशेषे ॥ विन्ध्याख्यम् अगमस्यतीत्यगस्तिः । अस्यतेः क्तिच्क्तौचेतिक्तिच् । बाहुलकात्स्विर्वा । शकन्ध्वादिः ॥ वकद्रौ ॥ अगस्तिः पित्तकफजिच्चतुर्थकहरो-हिमः । रूक्षोवातकरस्तिक्तः प्रतिश्यायनिवारणः ॥

अगस्तिद्रुः । पुं । वकपुष्पवृक्षे । मुनिद्रुमे ॥ इतित्रिकाण्डशेषः ॥

अगस्त्यः । पुं । वकद्रौ ॥ मुनिभेदे । पुलस्त्यतनये ॥ अगं विन्ध्यं स्त्यायतिस्तभ्नाति । स्त्यमङ्घाते । आतोनु-



पसर्गेकः ॥

अगस्त्याश्रमः । पुं । अगस्त्यकुण्डइतिनाम्नाकाश्यांप्रसिद्धेस्थाने ॥ मलयाचलेवर्त्तमाने मुनिवासस्थाने ॥

अगस्तिकुसुमम् । न । मुनिद्रुमपुष्पे ॥ अगस्तिपुष्पशाके ॥ अस्यगुणायथा । अगस्तिकुसुमं शीतंचतुर्थकनिवारणम् । नक्तान्ध्यनाशनंतिक्तंकषायंकटुपाकिच ॥ पीनसश्लेष्मपित्तघ्नंवातघ्नंमुनिभिर्मतम् ॥ आगस्त्यंकुसुमं तथा मृदुफलंकेना हृतंजन्तुनाधन्यंचाद्यदिनं यदद्यमिलितंकस्यास्यमालोकितम् । स्विन्नंतक्रयुतंसहिंगुलवणं तप्तेघृतेपाचितंभोक्ता संततभाषितं प्रियतमेनाद्यापिसमप्रापितमिति ॥

अगाधम् । त्रि । अतलस्पर्शे । अतिगगम्भीरे ॥ दुर्बोधाशये ॥ न । श्वभ्रे ॥ नास्तिगाधः स्थितिरत्र । नञोऽस्त्यर्थानामिति बहुव्रीहिः ॥

अगाधजलः । पुं । ह्रदे ॥ त्रि । अतलस्पर्श जलविशिष्टे ॥ अगाधंजलंयत्र ॥

अगारम् । न । गृहे ॥ अगान्वृक्षान्ऋच्छति । ऋगतौ । कर्मण्यण् ॥

अगारदाही । त्रि । गृहदाहके ॥

अगुः । पुं । राहुग्रहे ॥ त्रि । किरणरहिते ॥

अगुरुः । न । जोङ्गके । सुगन्धिकाष्ठ

भेदे। अगर इति भाषा॥ अगुरु
ण्यंकटुस्त्वच्यंतिक्तं तीक्ष्णंचपित्तल
म्। लघुकर्णाक्षिरोगघ्नं शीत
वातकफमणुत्॥ अगुरुर्वापुंसीति
वोपालितः। शिंशपायाम्॥ का
लागुरुणि॥ त्रि। लघुनि॥ नगुरुर
स्मात्॥

अगूढगन्धम्। न। हिङ्गुनि॥ इतिरा
जनिर्घण्टः॥

अगोचरम्। त्रि। इन्द्रियजन्यप्रत्य
क्षाविषये॥

अगौकाः। पुं। शरभे॥ खगे॥ सिंहे
॥ त्रि। अद्रिवासिनि। अद्रिगे॥ अ
गः ओकोयस्यसः॥

अग्नायी। स्त्री। वह्निपत्न्याम्॥
अग्नेः स्त्रीत्यस्मिन्नर्थे वृषाक
प्यग्निकुसितेत्यादिसूत्रेणाग्निशब्द
स्यैकारादेशोङीपच॥ त्रेतायुगे॥

अग्निः। पुं। अङ्गयन्ति अग्र्यंजन्मप्रा
पयन्तीतिव्युत्पत्त्या हविःप्रक्षेपाधि
करणेषु गार्हपत्याहवनीयदक्षिणा
ग्निसभ्यावसथ्यौपासनाख्येषु षड
ग्निषु॥ पावके। वैश्वानरे॥ अस्य
गुणा यथा। रूपंनेत्रेन्द्रियंपाकःस
न्तापस्तीक्ष्णतास्मृता। वर्णोभ्राजि
ष्णुतामर्षः शौर्यमग्नेर्गुणाअमीति॥
षट्सुधूमाग्न्यादिषु॥ यथा। अर्क

निष्कासनार्थायक्रमाज्ज्ञेयाः षडग्न
यः। धूमाग्निश्चैवदीपाग्निर्मन्दाग्नि
र्मध्यमस्तथा॥ खराग्निश्च भडाग्नि
श्च तेषांवक्ष्यामि लक्षणम्॥ वि
ज्वालोयोधूमशिखो धूमाग्निःसउदा
हृतः॥ ससारमतिशुष्कं यन्मुष्टिम
ध्येसमेष्यति। तत्काष्ठं काष्ठमित्याहु
ः खदिरादिसमुद्भवम्॥ द्वाभ्यां
तस्यचतुर्थाभ्यां योग्निर्दीपाग्निरुच्य
ते। चतुरंशेन तेनैवमन्दाग्निः
परिकीर्त्तितः॥ अर्द्धीकृताभ्यांद्वा
भ्यांतुमध्यमाग्निरुदाहृतः। अर्द्धै
स्तैः पञ्चभिः प्रोक्तःखराग्निःसर्वक
र्मसु॥ मस्तकावधिपात्रस्य चतुर्दि
क्षुक्रमेणच। प्रसरंतियदाज्वालाः
सभडाग्निरुदीरितः॥ सार्द्धयामञ्च
यामञ्चयाममेकंमुहूर्त्तकम्। मुहूर्त्त
मात्रमित्येवमर्कार्थेवन्हयःस्मृताः इ
ति॥ चित्रकाख्यौषधौ॥ तृतीये॥
चतुष्कलेऽ॥ आदिगुरोः संज्ञायाम्॥
कृत्तिकानक्षत्रे॥ अङ्गति ऊर्द्ध्वंगच्छ
ति। अगिगतौ। अङ्गेर्नलोपश्चे
तिनिर्नलोपश्च॥ रक्तचित्रके॥ भल्ला
तके॥ निम्बूके॥ पित्ते॥ स्वर्णे॥

अग्निकः। पुं। इन्द्रगोपकीटे॥ इति
हेमचन्द्रः॥

अग्निकणः। पुं। स्फुलिङ्गे॥ अग्नेः

काणः ॥ इत्यमरः ॥

अग्निकारिका । स्त्री । अग्निकार्ये ॥ इति हेमचन्द्रः ॥

अग्निकार्यम् । न । होमादौ हविर्दानादिपूर्वकाग्निज्वालने । अग्नीन्धने ॥ अग्नौसायंप्रातःसमिद्धोमानुष्ठाने ॥ अग्नावग्नेर्वाकार्य्यम् ॥

अग्निकाष्ठम् । न । अगुरुणि ॥ इति राजनिर्घण्टः ॥

अग्निकुक्कुटः । पुं । ज्वलदग्नितृणोल्कायाम् ॥ इतित्रिकाण्डशेषः ॥ अग्नेःकुक्कुटः ॥

अग्निक्रीडा । स्त्री । खधूपादित्यागे । हवाइ इतिभाषाप्रसिद्धे ॥

अग्निगर्भः । पुं । औषधविशेषे । अग्निनिर्यासे । अग्निजारे ॥ सूर्यकान्तमणौ ॥

अग्निगर्भा । स्त्री । महाज्योतिष्मत्याम् ॥ इतिराजनिर्घण्टः ॥

अग्निचित् । पुं । साग्निके । अग्निचेतरि ॥ इत्यमरः । अग्निमचैषीत् । चिञ्चयने । अग्नौचेरिति क्विप् तुक् ॥

अग्निचित्या । स्त्री । अग्नेश्चयने ॥ चित्याग्निचित्ययोरितिभावेयप्रत्ययस्तुक्चनिपात्यते ॥

अग्निचूडा । स्त्री । अग्निशिखायाम् ॥

अग्निजः । पुं । भल्लातके । भिलावाख्ये ॥ अग्निजारवृक्षे ॥ त्रि । अग्नेर्जातमात्रे ॥

अग्निजातः । पुं ।
अग्निजारः । पुं ।
अग्निजालः । पुं । } औषधविशेषे । वडवाग्निमले । सिन्धुफले इति राजनिर्घण्टः ॥

अग्निजिह्वा । स्त्री । अग्नेर्ज्वालायाम् ॥ लाङ्गलीवृक्षे ॥ योगविशेषे ॥ यथा । सप्तषष्ठ्यादितिथयःसोमवारादिभिर्युताः । अग्निजिह्वाःसप्तयोगामङ्गलेष्वतिगर्हिताः इति ॥ काल्यादिसप्तसु ॥ यथा । कालीकपालीचमनोजवाचसुलोहितायाचसुधूम्रवर्णा । स्फुलिङ्गिनीविश्वरुचीचदेवीलेलायमाना इतिसप्तजिह्वा इतिप्रथममुण्डकश्रुतिः ॥

अग्निज्वलिततेजनः । पुं । अग्निना दीप्तफलके । आयुधविशेषे ॥

अग्निज्वाला । स्त्री । वह्निशिखायाम् ॥ धातृपुष्पिकायाम् ॥ लाङ्गलिक्यौषधौ ॥ अग्नेरिवज्वालाऽस्याः । अग्नेर्ज्वालेववर्णा । रक्तपुष्पत्वात् ॥

अग्निदमनी । स्त्री । क्षुपविशेषे । बहुकण्टकायाम् । गुच्छफलायाम्

अग्निदीप्ता । स्त्री । महाज्योतिष्मतीवृक्षे ॥ इति राजनिर्घण्टः ॥

अग्निदेवा । स्त्री । कृत्तिकानक्षत्रे ॥ इ

ति हेमचन्द्रः ॥

अग्निध्वजः । पुं । मरुदाहे । धूमे । धूंवां इति भाषा प्रसिद्धे ॥

अग्निनिर्यासः । पुं । अग्निजारवृक्षे ॥

अग्निपर्णी । स्त्री । अग्निवर्ती अगिया इतिलोकप्रसिद्धौषधौ ॥

अग्निपुराणम् । न । आग्नेये ॥ तत्र श्लोकसंख्या यथा । षोडशैवसहस्राणिपुराणंचाग्निसंज्ञितमिति ॥

अग्निभम् । न । स्वर्णे ॥ कृत्तिकानक्षत्रे ॥

अग्निभूः । पुं । कार्त्तिकेये ॥ पुराकिल तारकोपप्लुतदेवरक्षार्थंशिवेनाग्निरूपंस्ववीजंवन्हिमुखेक्षिप्तंतेनाग्निनाकृत्तिकासुक्षिप्तंताश्चदैवागतगर्भसत्रपाः शरवणं प्रविश्यप्रसूताः तेनाग्निभूरितिसर्वानन्दः ॥ न । जले ॥ त्रि । अग्निजाते ॥ अग्नेर्भवति । भू । क्विप् ॥

अग्निभूतिः । पुं । बौद्धभेदे ॥ इतिहेमचन्द्रः ॥

अग्निमणिः । पुं । सूर्यकान्ते ॥ इति जटाधरः ॥

अग्निमन्थः । पुं । श्रीपर्णे । गणिकारिकायाम् । अरणीतिख्याते ॥ अग्निमन्थः श्वयथुहृद्वीर्योष्णः कफवातहृत । पाण्डुनुत् कटुकस्तिक्तस्तुवरोमधुरोग्निदः ॥ अग्निमन्थकुसुमशाकस्तु । अग्निमन्थभववालमुनीता ससगाचमुद्रकेसुसाधिता । तक्रतप्तघृतयुक्तपाचितार्धहिंगुनाजनितवासवासिता ॥ अग्निमन्थोथहृद्यश्चित्रिदोषशमनः सरः । आध्मानच्छर्दिहाशोथचक्षूरोगविषापहः ॥



अग्निमथ्नाति । मन्थविलोडने । कर्मण्यण् ॥ जयपर्णे ॥

अग्निमुखः । पुं । देवे ॥ विप्रे ॥ चित्रके ॥ अग्निर्मुखंयस्य ॥ न । वन्हेर्वक्रेषुपञ्चसु ॥

अग्निमुखी । स्त्री । भल्लातके । भिलावाइतिख्याते ॥ लाङ्गलिकायाम् ॥ अग्निरिवमुखमस्याः । गौरादिः ॥

अग्नियन्त्रम् । न । अगन्यस्त्रविशेषे । तोप बन्दूक अगन गन इत्यादिभाषा प्रसिद्धे ॥

अग्निरक्षणम् । न । अगन्याधाने ॥ अग्निपालने ॥ अग्नेः रक्षणम् ॥

अग्निरजाः । पुं । इन्द्रगोपाभिधेकीटे ॥

अग्निरुहा । स्त्री । मांसरोहिण्याम् ॥

अग्निवल्लभः । पुं । राले ॥ सालवृक्षे ॥

अग्निवाहः । पुं । छागे ॥ अग्नेर्वाहः ॥ धूमे ॥

अग्निवित् । पुं । अग्निचिति । अग्निहोत्रिणि ॥

अग्निबीजम् । न ।
अग्निवीर्यम् । न । स्वर्णे ॥

अग्निव्रतम् । न । भूभुजोव्रतविशेषे ॥ यथा । प्रतापयुक्तस्तेजस्वीनित्यंस्यात्पापकर्मसु । दुष्टसामन्तहिंस्रश्चतदाग्नेयंव्रतंस्मृतमिति ॥

अग्निशरणम् । न । दक्षिणाग्निगार्हपत्याहवनीयसभ्यावसथ्यशालायाम् ॥ अग्नीनांशरणम् ॥

अग्निशाला । स्त्री । अग्निशरणे ॥ अग्नीनांशाला ॥

अग्निशिखम् । न । कुसुम्भपुष्पे ॥ कुङ्कुमे ॥ अग्नेरिवशिखाकेसरोऽस्य॥ स्वर्णे ॥ पुं । कुसुम्भवृक्षे ॥ दीपे ॥ वाणे ॥ इतिशब्दरत्नावली ॥

अग्निशिखा । स्त्री । लाङ्गलिक्याख्यौषधौ ॥ अग्नेरिवशिखायस्याः ॥ विशल्यायाम् । शाकभेदे ॥ अग्नेरिवशिखासन्तापोयस्याः ॥ ज्वालायाम् ॥

अग्निशेखरम् । न । कुङ्कुमे ॥

अग्निष्टुत् । पुं । अग्निष्टोमस्यविकृतिरूपे क्रतुविशेषे । अग्निःस्तूयतेऽस्मिन् क्रतुविशेषे । ष्टुञ्स्तुतौ । सम्पदादित्वादधिकरणे क्विप् । अग्नेःस्तुत्स्तोमसोमा इति षः ॥

अग्निष्टोमः । पुं । यज्ञविशेषे ॥ अग्नीनांस्तोमः । अग्नेःस्तुत्स्तोमसोमादितिषः ॥ अग्निष्टोमार्थग्रन्थे ॥

अग्निष्ठः । पुं । लोहमयेतण्डुलादिभर्जनपात्रे ॥

अग्निष्वात्ताः । पुं । दिव्यपितृभेदे ॥ यथा । अग्निष्वात्ताश्चदेवानांमारीच्यालोकविश्रुताः इति॥ अपिच । अग्निष्वात्तादयोलोके पितरश्चिरवासिनः इति । चिरलोकपितरइत्यर्थः ॥ अग्निनास्पृष्टा यथास्यादेवमात्ताः भक्षिताः श्रौतस्मार्त्ताग्नि दग्धाइत्यर्थः । एवञ्चात्रमूर्धन्यादेशोनयुक्तः । मन्वादिस्मृतिषु मूर्धन्यषकारवानेवपाठः । नित्यवहुवचनान्तोयमितिकेचित् ॥

अग्निहोत्रम् । न । यज्ञभेदे । अग्न्याधाने ॥ सायंप्रातःकालयोर्नियमेनानुष्ठेयेकर्मविशेषे ॥ अग्नयेहोत्रमत्रेतिवहुव्रीहिः ॥ पुं । अग्नौ ॥ हविषि ॥ इतिमेदिनिकरः ॥

अग्निहोत्रहवणी । स्त्री । यज्ञाङ्गभूते निर्वापसाधने काष्ठपात्रविशेषे ॥

अग्निहोत्री । पुं । अग्निहोत्रयुक्ते । अग्निचिति ॥ अग्निहोत्रमस्यास्ति । अतइनिठनाविति निः । -येनर्चिषिजुहोत्यग्नौव्यङ्गारिणिचमानवः । मन्दाग्निरामयावीचदरिद्रश्चसजायते ॥

अग्नीत् । पुं । ऋत्विग्भेदे ॥ अग्नि मिन्धे । ञिइन्धीदीप्तौ । क्विप् । न लोपः ॥ यज्ञमण्डपभेदे ॥

अग्नीध्रः । पुं । धनदारावरणीये ऋ त्विग्विशेषे ॥ तस्यकर्म । अरत्तणम् ॥ अग्निविशेषे ॥

अग्नीध्रा । स्त्री । अग्निकार्य्ये । हविर्दा नादिपूर्वकाग्निज्वालने ॥

अग्नीध्रीयः । पुं । दक्षिणाग्नौ ॥

अग्नीन्धनम् । न । अग्निकार्ये ॥ अग्नौ इन्धनम् ॥

अग्नीषोमीयम् । न । अग्नीषोम्येह विषि ॥ अग्नीषोमौदेवतेअस्य। द्या वापृथिवीसुनासीरेत्यादिनाछः ॥

अग्नीषोम्यम् । न । हविर्विशेषे ॥ अ ग्नीषोमौदेवते अस्य । द्यावापृथि वीत्यचस्यचकारात्यत् ॥

अग्न्याधानम् । न । श्रौताग्निसंस्कृ तौ । अग्निहोत्रे । अग्निरक्षणे ॥ अग्नेः आधानम् । अग्निहोत्रमि- त्यर्थः ॥

अग्न्याधेयम् । न । आहवनीयादग्न्यु त्पादकेकर्मणि ॥

अग्न्यालयः । पुं । अग्न्याधारकुण्डे ॥ अग्नेःआलयः ॥

अग्न्युत्पातः । पुं । उल्कापातादिदिव्य वैकृते आकाशादिष्वग्नि विकारे । उपाहिते ॥ अग्नेरुत्पातनमुत्पातो वैकृतम् ॥ अग्निनिष्ठोत्पाते ॥ म- न्त्रादिनाग्नेर्दाह शक्तिनिवारणे इ- त्यर्थः ॥



अग्रम् । न । पुरस्तात् ॥ उपरि ॥ पल परिमाणे ॥ आलम्बने ॥ समूहे ॥ वृ क्षादिशिरसि । प्रान्ते ॥ भिक्षावि- शेषे । ग्रासचतुष्टये ॥ ग्रासप्रमाणा भिक्षास्यादग्रं ग्रासचतुष्टयमि ति स्मृतेः । त्रि । अधिके ॥ प्रथमे ॥ प्र धाने ॥ अग्यते अगतिवा । अगकुटि लायांगतौ । ऋज्रेन्द्रेतिसाधु ॥

अग्रकाण्डः । पुं । स्तोमवल्ल्याम् । का ण्डीरे ॥

अग्रगः । त्रि । सेवके । अग्रेसरे ॥ अग्रेग च्छति । गम्लृगतौ । अन्यत्रापी तिडः ॥

अग्रगण्यः । त्रि । अग्रेगणनीये ॥ यथा । गमनभ्वनयाने यद्भवानग्रगण्य इतिमहानाटकम् ॥

अग्रगामी । त्रि । अग्रगे । अग्रेसरे ॥

अग्रजः । पुं । ज्येष्ठभ्रातरि ॥ ब्राह्मणे ॥ त्रि । पूर्वजाते ॥ अग्रेजातः सप्तम्यां जनेर्डः ॥

अग्रजङ्घा ॥ स्त्री । जङ्घाग्रभागे । प्रतिजङ्घायाम् ॥

अग्रजन्मा । पुं । द्विजे ॥ ज्येष्ठभ्रातरि ॥

अग्रमांसम्। न। हृदयान्तर्गतमांसभेदे। मुक्तायाम्॥ अग्रं मुख्यंमांसम्॥ उदरमध्यवर्त्तिमांसवर्धनरूपरोगविशेषे॥

अग्रयाणम्। न। प्रथमे॥ नासीरे। सेनाविशेषे॥

अग्रयायी। त्रि। अग्रेसरे॥

अग्रलोहिता। स्त्री। चिल्लीशाके॥ इति राजनिर्घण्टः॥

अग्रसन्धानी। स्त्री। यमपञ्जिकायाम्। जीवानांशुभाशुभकर्मलिखितयमस्यपुस्तके॥

अग्रसरः। त्रि। अग्रगामिनि॥ अग्रेसरति। बाहुलकाट्टः॥ पुरोगामितोग्रेषुसर्त्तेरितिटोवा॥

अग्रहः। पुं। वानप्रस्थे॥

अग्रहायणः। पुं। मार्गमासे। मार्गशीर्षे॥

अग्रायणीयम्। न। वादस्यभेदे॥

अग्राह्यः। त्रि। परमेश्वरे॥ इन्द्रियाऽविषये॥ नग्राह्यः॥ गृहआयो ग्ये॥ यथा। अग्राह्यं शिवनैवेद्यंपत्रंपुष्पंफलंजलम्। सालग्रामशिलास्पर्शात्सर्वंयातिपवित्रतामिति॥

अग्रिमः। त्रि। ज्येष्ठे॥ उत्तमे॥ अग्रेजातः। तत्रभवोवा। अग्रादिपश्चाड्डिमच्॥

अग्राख्यि॥ अग्रेआदौजन्मास्य॥

अग्रजातः। पुं। विप्रे॥ त्रि। पूर्वजाते॥ अग्रेजातः॥

अग्रजातिः। पुं। ब्राह्मणे॥ अग्रेजातिर्जन्मास्य॥

अग्रणीः। त्रि। अग्रिमे। उत्तमे॥ अग्रं नयति। णीञ्प्रापणे। सत्सूद्विषेतिक्विप्। अग्रग्रामाभ्यामितिणत्वम्॥ विष्णौ॥ सर्वेषामग्रणीर्विष्णुः सेव्यःपूज्यश्चनित्यशः इतिमोक्षधर्मः॥ अग्रमुत्कृष्टंनिरस्तसकलदुःखानुषङ्गंपरमानन्दस्वरूपं पदंस्थानंनयतिमुमुक्षूनितितथा॥

अग्रतः। अ। प्रथमे॥ पुरोऽर्थे॥ यथा। अग्रतश्चतुरोवेदाइति॥ अग्रेइति। आद्यादित्वात्तसिः॥ अग्रे॥

अग्रतःसरः। त्रि। अग्रगामिनि। पुरोगे॥ अग्रतःसरति। सृगतौ। पुरोग्रतोग्रेषुसर्त्तेरितिटः॥

अग्रदानी। पुं। आग्रहारिके। प्रेतसंप्रदानकषडङ्गतिलादि द्रव्यग्राहिणि पतितब्राह्मणे॥ यथा। लोभीविप्रश्चशूद्राणामग्रेदानं गृहीतवान्। ग्रहणेमृतदानानामग्रदानी बभूवस इतिब्रह्मवैवर्त्तपुराणम्॥

अग्रपर्णी। स्त्री। गौडभाषायामाल्कुशीतिप्रसिद्धौषधौ। अजलोमाख्यवृक्षे॥

अग्रिमा । स्त्री । लवलीफले । लोना इतिगौडप्रसिद्धफलवृक्षे ।

अग्रियः । पुं । ज्येष्ठसोदरे । त्रि । प्रधाने । इत्यमरः । अग्रेभवः । घः ।

अग्रीयः । त्रि । अग्रियार्थे । अग्रेभवः । छप्रत्ययः ।

अग्रे । । प्रधाने । विभक्तिप्रतिरूपकोनिपातः ।

अग्रेगूः । पुं । अग्रगे । अग्रेगच्छति । गमऌगतौ । क्विप् । ऊङ्गमादीनामित्यूङ् । अनुनासिकलोपश्च । अग्रेग्वौ अग्रेग्वः इत्यादिवोध्यम् ।

अग्रेदिधिषूः । पुं । पुनर्भूभर्त्तरि । प्रधानपुनर्भूभार्ये । अग्रेप्रधानंदिधिषूर्यस्य । अग्रेइतिविभक्तिप्रतिरूपकोनिपातः । समासान्तविधेरनित्यत्वान्नकप् ।

ग्रेदिधिषूः । स्त्री । ज्येष्ठायांसोदरभगिन्यामनूढायां याकनिष्ठा विवाह्यते दीयतेतस्याम् । उक्तञ्चलोकाचिणा । ज्येष्ठायांयद्यनूढायां कन्यायामुह्यतेऽनुजा । साचाग्रेदिधिषूर्ज्ञेयापूर्वा तुदिधिषुःस्मृतेति ।

अग्रेवणम् । न । वनस्याग्रभागे । वनस्याग्रे । राजदन्तादिषु निपातनात्सप्तम्याअलुक् । वनंपुरगेतिणत्वम् ।

अग्रेसरः । त्रि । अग्रगे । पुरोगमे । अग्रमग्रेणाग्रे वासरति । सृगतौ । पुरोग्रतोग्रेषुसर्त्तेरितिटः अग्रेइति एदन्तत्वंनिपातनात् ।

अग्रेसरिकः । त्रि । अग्रगामिनि ।

अग्र्यः । त्रि । अग्रिमे । प्रधाने । पुं । ज्येष्ठभ्रातरि । प्रतिष्ठिते । अग्रे भवः । अग्राद्यत् । अग्रेसाधुर्वा । तत्रसाधुरितियत् । अग्रइववा । शाखादिभ्योयः ।

अघम् । न । व्यसने । दुःखे । दुरिते । पापे । अपराधे । त्रि । तद्वति । पापाचरणे । अंघतेगच्छतिदानादिना । अघिगतौ । पचाद्यच् । आगमशास्त्रस्या ऽनित्यत्वान्ननुम् । अङ्घतेऽनेनवा । अघंविद्यते ऽस्यअर्शआद्यच् ।

अघमर्षणम् । त्रि । पापनाशिमन्त्रविशेषे । सर्वेनसामपध्वंसिनिजप्ये । अघंमर्षति । मृषुसहने । सहनमभिभवः । यद्वा । मृष्यति । ल्युट् । स्त्रियांटित्वान्ङीप् ।

अघमारः । पुं । यमे । अघेनपापविशेषेणअत्युग्रेण अकाले मारयतिइतिअघमारः अजन्तः ।

अघायुः । त्रि । पापजीवने ।

अघोरः । पुं । गिरिशे । त्रि । अभयानके ।

अघोरा । स्त्री । भाद्रकृष्णचतुर्दश्याम् ।

यथा । भाद्रमास्यसितेपक्षेअघोराख्याचतुर्दशी । तस्यामाराधितः स्थाणुर्नयेच्छिवपुरंध्रुवमितिस्मृतिः ॥

अघोः । त । सम्बोधने ॥

अघन्यः । पुं । प्रजापतौ ॥ अघन्यादिस्वात्हन्तेर्यक्अडागमउपधालोपस्र ॥ हन्तुमशक्यो ऽघ्न्यःपर्वतइतिवेदभाष्यम् ॥

अघन्या । स्त्री । सौरभेय्याम् ॥ नहन्यतेनहन्ति वादातारम् । अघन्याद यश्चेतिसाधुः ॥

अङ्कः । पुं । रूपकभेदे ॥ चिन्हे ॥ आजौ ॥ भूषणे ॥ कुक्षभूषायाम ॥ रूपके ॥ अंशे ॥ अन्तिके ॥ उत्सङ्गे ॥ स्थाने ॥ प्रकरणे ॥ अगे ॥ कटिप्रदेशे ॥ नाटकादिपरिच्छेदे ॥ एकादिरेखायाम् ॥ अपराधे ॥ नवसु ॥ नवमाङ्के ॥ अङ्क्यतेऽनेन । अकिलक्षणे । हलश्चेतिघञ् ॥

अङ्कतिः । पुं । अग्निहोत्रिणि ॥ वन्हौ ॥ वेधसि ॥ वायौ ॥ अञ्चति । अञ्चुगतौ । अञ्चे.केतिच्यतिःकस्यान्तादेशः ॥

अङ्कनम् । न । संख्यासंस्थाने ॥ चिह्नयुक्तीकरणे । आंकनादृतिख्याते ॥

अङ्कपालिका । स्त्री । आश्लेषे । आलिङ्गने ॥

अङ्कपाली । स्त्री । परीरम्भे ॥ धात्र्या म् ॥ वेदिकायाम् ॥ इतिमेदिनी ॥ कोटयामितिहेमचन्द्रः ॥

अङ्कलोड्यः । पुं । चिञ्चोटके । चेचकोइतिगौडभाषाप्रसिद्धे ॥

अङ्कः । न । चिन्हे ॥ शरीरे ॥ अञ्चति । अञ्चुगतिपूजनयोः । अञ्च्यञ्जियुजिभृजिभ्यःकुश्चेत्यसुन् कवर्गश्चान्तादेशः । अङ्कसी । अङ्कांसि ॥

अङ्कितः । चि । चिन्हिते । लाञ्छिते ॥ इतिव्याडिः ॥

अङ्किनी । स्त्री । अङ्कानांसमूहे ॥ खलादिस्त्वादिनिः ॥

अङ्की । स्त्री । मृदङ्गभेदे । अङ्क्ये ॥

अङ्कुरः । पुं । रुधिरे ॥ लोम्नि ॥ सलिले ॥ अभिनवोद्भिदि ॥ अङ्क्यते । अकिलक्षणे । मन्दिवाशिमथीच्युरच् ॥

अङ्कुरितः । चि । उदयति ॥

अङ्कुशः । पुं । न । शृण्याम् ॥ वाधायाम् । अङ्क्यतेऽनेन । अकि । सानसिवर्णसिपर्णसितण्डुलाङ्कुशेति निपातनादुशच् ॥

अङ्कुशदुर्दुरः । पुं । गम्भीरवेदिनि ॥

अङ्कुशी । स्त्री । फलाद्याहृतिसाधने ॥ बौद्धमातरि । जिनानांचतुर्विंशति शासनदेव्यन्तर्गतदेवी विशेषे ॥ इतिहेमचन्द्रः ॥

अङ्कूरः । पुं । अङ्कुरे । अभिनवोद्भिदि ॥ अंक्यते । अकिलचणे । खर्ज्जूरादित्वादूरः ॥

अङ्कोटः । पुं । निकोचके । अङ्कोले । टेराइतिख्यातवृक्षे ॥ अङ्कोटकःकटुस्तीक्ष्णःस्निग्धोष्णस्तुवरोलघुः । रेचनःकृमिशूलामशोथग्रहविषापहः ॥ विसर्प कफपित्तास्रमूषकस्वविषापहः । तत्फलंशीतलंस्वादुश्लेष्मघ्नंबृंहणंगुरु ॥ वल्यंविरेचनंवातपित्तदाहचयास्रजित् ॥ अङ्क्यते । अकिलचणे । वाहुलकादोटः ॥

अङ्कोठः । पुं । अङ्कोटे । टेराइतिख्यातवृक्षे । आकोडइतिगौडभाषाप्रसिद्धे ॥ अङ्क्यतेवाहुलकादोठः ॥

अङ्कोलः । पुं । अङ्कोटवृक्षे ॥

अङ्कोलिका । स्त्री । आलिङ्गने ॥ इति शब्दमाला ॥

अङ्कोल्लसारः । पुं । । स्थावरविषप्रभेदे द्रुमान्तरे ॥ इतिहेमचन्द्रः ॥

अङ्क्यः । पुं । मृदङ्गभेदे ॥ यथा । सार्द्धतालचयायाम श्चतुर्दशाङ्गुलाननः । हरीतक्याकृतिर्यःस्यादङ्क्योऽङ्कसञ्ज्ञिवाद्यतेइतिभरतः ॥ अपिच । हरीतक्याकृतिस्त्वंक्योयवमध्यस्तथोर्द्धकः । आलिङ्ग्यश्चैव गोपुच्छोमध्यदक्षिणवामगाः ॥

अङ्ग । । सम्बोधने ॥ अङ्गति । अगिगतौ । पचाद्यच् । हर्षे ॥ सङ्गमे ॥ असूयायाम् ॥ पुनरर्थे ॥ अङ्गनम् । घञ् । मूर्खोपिनावमन्तव्यः किमङ्गविद्वान् ॥

अङ्गम् । न । काये । गात्रे ॥ अवयवे । प्रतीके ॥ उपाये ॥ श्रुतेःशिक्षादिषट्सु ॥ यथा । शिक्षाकल्पोव्याकरणं निरुक्तंछंदएवच । ज्योतिषञ्चषडङ्गानिकथितानिमनीषिभिः ॥ मनसि ॥ यथा । हिरण्यगर्भाङ्गभुवंमुनिंहरिरितिमाघः ॥ क्लीवैकत्वेतु अप्रधाने ॥ तल्लक्षणंयथा । तदीयप्रधानफलजनकव्यापारजनकत्वेसतितदीयप्रधानफलाजनकत्वमङ्गत्वम् ॥ पुंभूम्नि । नीवृति ॥ यथा । वैद्यनाथंसमारभ्यभुवनेशान्तगंशिवे । तावदङ्गाभिधोदेशोयात्रायांनहिदुष्यतीति ॥ अङ्गाःक्षत्रियविशेषाःतेषांनिवासोजनपदःअङ्गाः । तस्यनिवासइत्यणोजनपदेलुपलुपियुक्तवद्व्यक्तिवचने । त्रि । अङ्गवति ॥ अन्तिके ॥ अङ्ग्यते ज्ञायतेऽनेन । अगिगतौ । घञ् ॥ अङ्गति । अच् ॥ सम्पादके ॥ षट्सु ॥ लग्ने ॥

अङ्गग्रहः । पुं । गात्रवेदनायाम् ॥ इति वैद्यकम् ॥

अङ्गजः । पुं । अनङ्गे ॥ केशे ॥ पुत्रे ॥ गदे ॥ न । रुधिरे ॥ मले ॥ अङ्गात्

अङ्गेभ्योवा जातः । जनी । डः ॥ कन्यायामङ्गजामता ॥ त्रि । कायजे॥

अङ्गणम् । न । अङ्गने ॥ पृषोदरादित्वा साम्वम् ॥ अङ्गत्यच । अगि । ल्युट् । अमादेशस्यबाहुलकात्सत्वमित्येके॥

अङ्गतिः । पुं । अग्निहोत्रिणि ॥ वह्नौ वेधसि ॥ विष्णौ ॥ इतिशब्दरत्नावली ॥

अङ्गदः । पुं । वालिवानरपुत्रे॥ न । केयूरे ॥ त्रि । अङ्गदातरि॥ अङ्गंदय तेद्दायति द्यतिवा । दोङ्रक्षणे दैप् शोधनेदो अवखण्डनेवा । आतोनुपेतिकः ॥

अङ्गदा । स्त्री । याम्यदिग्दन्तिहस्तिन्याम् ॥

अङ्गनम् । न । प्राङ्गणे ॥ याने ॥ अङ्गत्यच । अगिगतौ । करणेप्यधिकरणेल्युट् ॥

अङ्गना । स्त्री । कामिन्याम् ॥ प्रशस्तान्यङ्गान्यस्याः । अङ्गात्कल्याणइतिनः ॥ सार्वभौमस्योत्तरदिग्गजस्ययोषिति॥ अङ्गति । अगिगतौ । युच्॥

अङ्गनाप्रियः । पुं । अशोकपादपे ॥

अङ्गपः । पुं । लग्नेशे॥

अङ्गपालिः । पुं । आलिङ्गने ॥ इतित्रिकाण्डशेषः ॥

अङ्गभूः । पुं । पुत्रे ॥ स्मरे ॥

अङ्गमर्दः । पुं । अङ्गसंवाहके । नापितादौ ॥

अङ्गमर्दकः । पुं । अङ्गमर्दे । अङ्गमर्दिनि ॥

अङ्गमेजयत्वम् । न । अङ्गकम्पने ॥ आसनस्थैर्य्यविघाते ॥ सर्वाङ्गाणांवेपथौ । आसनमनसोःस्थैर्यस्यबाधके ॥

अङ्गरक्तः । पुं । मुण्डारोचन्याम् । पिकारोहके ॥ त्रि । रञ्जिते ॥

अङ्गरक्षणी । स्त्री । आयस्याम् । जालिकायाम् । लोहिकासंज्ञावाइतिभाषाप्रसिद्धायाम् ॥

अङ्गरागः । पुं । चन्दनाद्यैरङ्गलेपे । विलेपने ॥ अङ्गेषुरागः ॥

अङ्गराट् । पुं । अङ्गदेशाधिपे । कर्णे॥

अङ्गलक्ष्मीः । स्त्री । देहकान्तौ ॥

अङ्गलोद्यः । पुं । चिस्फोटतृणे ॥

अङ्गवः । पुं । शुष्कफले । वाने ॥

अङ्गविकृतिः । पुं । अपस्माररोगे ॥ अङ्गविकारे ॥

अङ्गविक्षेपः । पुं । अङ्गुल्यादङ्गचालनरूपेनृत्ये । अङ्गविक्षेपणे । अङ्गहारे ॥ अङ्गानांविक्षेपोयत्र ॥

अङ्गवैकृतम् । न । अङ्गविकारे । इङ्गिते॥

अङ्गः । न । पश्चिमे ॥ अज्यते । अञ्जू व्यक्त्यादौ । अञ्च्यञ्जियुजिभृजिभ्यः

वस्थानात् । सौक्ष्म्याद्यवधानादभिभवात्समानाभिहाराच्च । ७ । उदाहरणानि यथा । उत्पतन् वियति पतत्री अतिदूरतया सन्नपि नप्रत्यक्षेणोपलभ्यते । लोचनस्थमञ्जनमतिसामीप्यान्नदृश्यते । वाह्येन्द्रियघातोऽन्धत्वबधिरत्वादिस्तस्मात् रूपादयोनोपलभ्यन्ते अक्लिकामाद्युपहतमनाः स्फीतालोकमध्यवर्त्तिनमिन्द्रियसन्निकृष्टमप्यर्थं मनोनवस्थानान्नपश्यति । इन्द्रियसन्निकृष्टं परमाण्वादिप्रणिहितमना अपिसौक्ष्म्यान्नपश्यति । कुड्यादिव्यवहितं राजदारादिव्यवधानान्नपश्यति । अहनिसौरीभिर्भाभिरभिभूतंग्रहनक्षत्रमण्डलंनपश्यति । तोयदमुक्तजलविंदून्जलाशये समानाभिहारान्नपश्यति । चकारोऽनुक्तसमुच्चयार्थः । तेनानुद्भवोपिसङ्गृहीतः । तद्यथा । क्षीराद्यवस्थायां दध्याद्यनुद्भवान्न दृश्यते ।

अनुपशयः । त्रि । असात्म्ये ।

अनुपसंहारी । पुं । हेत्वाभासविशेषे । सच अन्वयव्यतिरेकदृष्टान्तरहितोनुपसंहारी । यथा । सर्वमनित्यं प्रमेयत्वादिति । अत्रसर्वस्यापिपक्षत्वात दृष्टान्तोनास्ति । नउपसंहारी ।

अनुपस्कृतम् । त्रि । अविकृते । अविगर्हिते ।

अनुपस्थितः । त्रि । समपक्षस्थानतदुपस्थितेश्वरयोराश्रये स्वमस्मिन्नप्रतिष्ठिते अक्षरशब्दवाच्ये चिन्मात्रे ।

अनुपाकृतः । पुं । मन्त्रैः पशोः स्पर्शनमुपाकरणं तद्रहितेपशौ ।

अनुपातः । पुं । त्रैराशिकगणिते । पश्चात्पतने । पूर्वाङ्कपातानुसारेणापराङ्कपाते ।

अनुपातकम् । न । पञ्चत्रिंशत्प्रकारभिन्नेमहापातकसदृशपापविशेषे ।

अनुपात्ययः । पुं । क्रमप्राप्तस्यानतिपाते । पर्याये ।

अनुपानम् । न । भेषजाङ्गे पेयविशेषे । भेषजेनसह तत्पश्चाद्वा यत्पीयते तस्मिन् । यथा । अनुपानविशेषेणकरोतिविविधान्गुणानिति वैद्यकम् । समीपस्थोदके । अनुगतंपानम् ।

अनुपुष्पः । पुं । शरे । इतिशब्दचन्द्रिका ।

अनुपूर्वशः । । । क्रमेणेत्यर्थे ।

अनुपेतः । त्रि । मामुपनयस्वेत्युपनयनार्थमनुपसन्ने । अननुगते । एकाकिनि ।

अनुप्रविष्टः । त्रि । विषयविकारविज्ञानैः प्रच्छन्ने ।

अनुप्रभूतः । त्रि । अनुव्याप्ते ।

अनुप्रासः । पुं । शब्दालङ्कारभेदे । स यथा । वर्णसाम्यमनुप्रासः। स्वरवैसा दृश्येपिव्यञ्जनसदृशत्वं वर्णसाम्यम् । रसाद्यनुगतः प्रकृष्टोन्यासोऽनुप्रासः ॥ उदाहरणं यथा । आदायवकुल गन्धानन्धीकुर्वन पदेपदे भ्रमरान् । अयमेतिमन्दमन्दं कावेरीवारिपाव नःपवनइति । छेकवृत्तिगतोद्विधा । छेकाःविदग्धाः। वृत्तिर्नियतवर्णगतो रसविषयोव्यापारः । गतइतिछेकानु प्रासोवृत्त्यनुप्रासश्चेतितद्भेदै ॥

अनुप्लवः । चि । सहाये ॥ अनुगे ॥ अ नुपश्चात् प्लवते । प्लुङ्गतौ । पचाद्य च ॥

अनुबन्धः । पुं । बन्धे ॥ दोषोत्पादे । इच्छातोऽपराधकरणे ॥ यथा । अनु बन्धमवस्थांचदृष्ट्वादण्डं निपातयेदि ति ॥ वातादिदोषाणाम प्राधान्ये ॥ उच्चरितप्रध्वंसिनि । विनश्वरे ॥ प्र- कृतिप्रत्ययागमादेशानांयः कार्यार्थ मासज्यते नचप्रयोगसमवायी सो ऽनुबन्धउच्यते॥ मुख्यानुयायिनिशि- शौ। मुख्यंपित्रादिकमनुयातियः शि शुस्तस्मिन् ॥ प्रकृतस्यानुवर्त्तने । प्र कृतस्यप्रारब्धस्यअनुवर्त्तने । सम्बन्धे॥ पश्चाद्भाव्यशुभपरिणामे ॥ अधिकारि विषयसम्बन्धप्रयोजनेषु ॥ लेशे ॥

फलसाधने ॥ अनुबध्यते । बन्धबन्धने । घञ् ॥

अनुबन्धी । चि । सहचारिणि ॥ अवि च्छेदेनव्यापके ॥ अनुबध्नातीति ॥

अनुबन्धी । स्त्री । हिक्कायाम् । तृष्णा याम् ॥

अनुबोधः । पुं । प्रबोधने । गतगन्धस्य पुनःप्रयत्नेनोद्बोधने । यथा । कस्तू- रिकादिनामस्यादेः ॥ पश्चाद्बोधे ॥

अनुबोधनम् । बुधअवगमने । भावे- घञ् ॥

अनुब्राह्मणी । चि । अनुब्राह्मणाध्ययन कर्त्तरि ॥ ब्राह्मणसदृशोग्रन्थोऽनुब्रा ह्मणम् । तदधीते । अनुब्राह्मणा दिनिः ।

अनुभवः । पुं । स्मृतिभिन्नज्ञाने । सद्वि विधः यथार्थोऽयथार्थश्चेति । तद्वति तत्प्रकारकानुभवो यथार्थानुभवः । सैवप्रमेत्युच्यते । तदभाववति तत् प्रकारकश्चायथार्थानुभवः॥ उपलम्भे। उपलब्धौ। साक्षात्कारे । साक्षात् स्वरूपबोधे ॥ अस्यमाहात्म्यन्तु । य स्यानुभवपर्यन्ता दृष्टिस्तत्त्वे प्रवर्त्तते । तद्दृष्टिगोचराःसर्वेमुच्यन्तेसर्वकि ल्बषैरिति ॥ प्रत्ययादौ ॥ अनुभ वनम् । भू० । ऋदोरप् ॥

अनुभविता । चि । चेतने ॥

अनुभावः । पुं । कोषदण्डजतेजसि । प्रभावे । निश्चये ॥ सतांमतिनिश्चये । सतामभिप्रायस्यनिश्चये । भावबोधके रोमाञ्चादौ । कटाक्ष भुजाक्षेप प्रभृतिषु । यथा । भावंमनोगतंसाक्षात्स्वहेतुंव्यञ्जयन्तिये । तेऽनुभावा इतिख्याताभ्रूविक्षेपस्मितादय इतिरसार्णवसुधाकरः ॥ भवनंभावः । श्रिणीभुवइतिघञ् । अनुगतोभावोऽनुभावः। प्रादयोगताद्यर्थइतिसमासः। सामर्थ्ये । अनुभावयति । भुवःपचाद्यच् ॥

अनुभाव्यः । त्रि । अनुभवविषये ॥

अनुभूतः । त्रि । परिचिते ॥ यथा । जयतिश्रीगुरुर्देवोयत्प्रसादादिदंजगत् । अनुभूतंमयासम्यग्दृष्टंनसारमणवपीति ॥

अनुभूतिः । स्त्री । ज्ञानभेदे । अनुभवे । यथा । अनुभूतिंविनामूढोवृथाब्रह्मणिमोदते । प्रतिबिम्बितशाखाग्रफलास्वादनमोदवदिति ॥ प्रत्यक्षानुमित्युपमितिशब्दभेदात्साचतुर्विधाभवति ॥

अनुमतः। त्रि। कृतोक्ताद्ये ॥ अनुज्ञाते॥

अनुमतकर्म्मकारी । त्रि । आज्ञयाकार्यकर्त्तरि ॥ लिखितपत्राद्यनुसारेणकर्मकर्त्तरि ॥

अनुमतिः । स्त्री । कलोननेन्दुपूर्णिमायाम् । अष्टायास्तनयायाम् ॥ उदयकालेप्रतिपद्योगात्कलाहीनेचन्द्रेसत्यनुमतिशब्दवाच्यापूर्णिमाभवति ॥ अनुज्ञायाम् । राजादेःसम्मतौ । तांविनायागादिक्रियायाअनिष्पत्तेः ॥ सम्मतिपूर्वकाज्ञायाम् ॥ अनुमन्यतेक्तिच् ॥

अनुमन्ता । त्रि । यदनुमतिंविनाकर्त्तुंनशक्यतेतस्मिन् । अनुमतिदातरि ॥ कार्यकारणप्रवृत्तिषुस्वयमप्रवृत्तोपिपरमात्मा प्रवृत्तइवसन्निधिसत्तामात्रेणतदनुकूलत्वात्स्वव्यापारेषुप्रवृत्तान्देहेन्द्रियादीननिवारयतिकदाचिदपि ततसाक्षिभूतःपुरुषः साक्षीअनुमन्ता ॥

अनुमरणम् । न । अनुसंस्थायाम् । पश्चान्मरणे । भर्त्तरिमृतेतत्पादुकादिकमुरसिनिधायज्वलच्चितारोहणपूर्वकं ब्राह्मणीभिन्नस्त्रियाः मरणे ॥ यथा । देशान्तरमृतेपत्यौसाध्वीतत्पादुकाद्वयम् । निधायोरसिसंशुद्धाप्रविशेज्जातवेदसमितिब्रह्मपुराणम् ॥ पृथक्चितिंसमारुह्यनविप्रागन्तुमर्हतीतिस्मृतिः ॥ तत्स्वरूपारमणीजगत्याच्छन्नविग्रहा । मोहाङ्गर्त्तुभ्रिंचतारोहाङ्गवेन्नरकगामिनी॥

तिसहमरणानुमरणयोःसामान्यतो निषेधकमागमवचनम् ॥ सहमरणे॥
अनुमा । स्त्री । अनुमितौ । अनुमाने॥
अनुमानम् । न । कल्पने ॥ सांख्यस्मृति परिकल्पिते प्रधाने ॥ स्मृतौ ॥ अनुमीयतेश्रुतिर्यथेतिव्युत्पत्त्या स्मृतेरपिप्रामाण्यम्प्रतिसापेक्षत्वात् ॥ अनुमितिकरणे ॥ लिङ्गलिङ्गिपूर्वके । पूर्ववत् शेषवत् सामान्यतो दृष्टंचेति त्रिविधे अनुमितिसाधने ॥ अत्रोक्तं-भाष्यकारैः।सत्सुचवेदान्तवाक्येषुजगतो जन्मादिकारणवादिषु तदर्थ ग्रहदार्ढ्यायानुमानमपिवेदान्तवाक्या विरोधिभवन् न निवार्यतइति ॥
अनुमानोक्तिः । स्त्री । तर्के ॥ अनुमानस्यउक्तिः ॥
अनुमितिः । स्त्री । अनुभवविशेषे । परामर्शजन्यज्ञाने । व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञाने ॥ यथा । धूमदर्शनाद्वह्निमान्पर्वतइत्याकारज्ञानमनुमितिः । अस्याव्यापारकारणंपरामर्शः । अस्याःकरणंव्याप्तिज्ञानम् ॥ अनुमानम् । ऊर्मिजप्रक्षेपणे । क्लिम् ॥
अनुमेयः । त्रि । अनुमातुंयोग्ये ॥
अनुमोदः । पुं । एवमस्त्वित्याकारे अनुमोदने ॥
अनुमोदनम् । न । अनुमोदे ॥
अनुमोदितः । त्रि । अनुमते । कृतानुमोदने । अनुमते ॥ यथा । भवता यद्व्यवसितंतन्मेसाध्वनुमोदितमिति श्रीभागवतम् ॥
अनुयाजः पुं । यज्ञाङ्गे ॥ पश्चाद्याजाः । यजेर्घञि प्रयाजानुयाजौयज्ञाङ्गइति कुत्वाभावोनिपातसिद्धः ॥
अनुयायी । त्रि । सदृशे ॥ पश्चाद्गामिनि ॥
अनुयुक्तः । पुं । भृतकाध्येतरि ॥ इति-महाभारतम् ॥
अनुयोक्ता । पुं । भृतकाध्यापके ॥ इति महाभारतम् ॥
अनुयोगः । पुं । प्रश्ने ॥ अनुयोजनम् । युजेर्घञ् ॥
अनुयोगकृत् । पुं । आचार्ये ॥ इतिहेमचन्द्रः ॥
अनुयोजनम् । न । प्रश्ने ॥ इतिहेमचन्द्रः ॥
अनुरक्तः । त्रि । अनुरागवति ॥ यथा । अनुरक्तोगुणानन्यूनैर्विरक्तोदूषणानि चेति ॥ अनुकूले ॥
अनुरञ्जनम् । न । अनुरागे । हर्षजनने ॥
अनुरतः । त्रि । अनुरागविशिष्टे । प्रीते । अनुरक्ते ॥ अनुपूर्वात् रमेः क-

र्त्तरक्तः ।

अनुरतिः । स्त्री । अनुरागे ।

अनुरहसम् । न । एकान्ते । रहोऽनु । अनुगतंरहः । अनुगतं रहोऽस्मिन्वा । अव्ययतत्पादूहसदृत्यच् ।

अनुरागः । पुं । अन्योन्यप्रीतौ । स्नेहे । अनुगतोरागः ।

अनुरागी । त्रि । अनुरक्ते । अनुरागो ऽस्यास्तिअस्मिन् वा । अनुवर्ध्येइनिः ।

अनुराधा । स्त्री । सप्तदशनक्षत्रे । अत्रजातस्यफलंयथा । सत्कीर्त्तिकान्ति स्सदोत्सवःस्याज्जेतारिपूणाञ्चकला प्रवीणः । स्यातसम्भवेयस्यकिलानुराधासम्पत्प्रमादौर्विविधौ भवेतामिति कोष्ठीप्रदीपः । राधामनुगता ।

अनुरुद्धः । त्रि । निवद्धे ॥

अनुरूपम् । त्रि । सदृशे । योग्ये ।

अनुरूपम् । । । सदृशे । प्रतिरूपे । रूपस्ययोग्यम् । यथार्थेयोग्यतायामव्ययं विभक्तीत्यव्ययीभावः । अव्ययीभावश्चेत्यव्ययत्वम् ।

अनुरोधः । पुं । अनुवृत्तौ । अनुवर्त्तने । आराध्यादेरिष्टसम्पादने । अनुरोधनम् । रुधिर्आवरणे । घञ् ।

अनुलब्धः । त्रि । अनुविक्ते ।

अनुलापः । पुं । मुहुर्भाषणे । वारंवारं भाषणे । अनुलपनम् लपव्यक्तायांवा



चि । भावे घञ् ।

अनुलिप्तः । त्रि । रञ्जिते ॥ कृतानुलेपने ।

अनुलेपः । पुं । चन्दनादौ । अनुलेपनम् । लिपेर्घञ् ।

अनुलेपनम् । न । चन्दनादौ ॥ गात्रेसुगन्धिद्रव्यादिलेपने । अनुलिप्यते । लिपउपदेहे । कर्मणिल्युट् ॥

अनुलोमः । पुं । यथाक्रमे । अनुमन्वय अन्वेत्यच् ।

अनुलोमजः । त्रि । अनुलोमजाते । अप्रतिलोमजे ॥ यथा । ब्राह्मणात् चत्रियागर्भजातः । चत्रियात् वैश्यायां जातइत्यादिर्ज्ञेयम् ।

अनुवत्सरः । पुं । सम्वत्सरे ।

अनुवर्त्तनम् । न । अनुरोधे । आराध्यादीष्टसम्पादने ॥ अनुगम्यवर्त्तनमाराधनम् । अनुवृत्तौ ।

अनुवर्त्तितः । त्रि । सेविते ।

अनुवर्त्ती । त्रि । अनुकूले ॥

अनुवाकः । पुं । ग्रन्थे । अनुगीतऋग्जाते । ऋग्यजुःसमूहे । अनुउच्यते । वचपरिभाषणे । घञ् । चजोरिति कुत्वम् ।

अनुवाक्या । स्त्री । पुरोनुवाक्यार्थांदेवताह्वान्यामृचि । अनुउच्यते । वचेर्ऋहलोर्ण्यत् । चजोरितिकुत्वम् ।

। शब्दसंज्ञत्त्वात् वचोशब्दसंज्ञाया- मितिनप्रतिषेधः ॥

अनुवातः । पुं । वायुविशेषे । यःशिष्य देशाद्गुरुदेशमागच्छतिवायुः सोनु वातइत्युच्यते ॥

अनुवादः । पुं । प्राप्तस्यपुनः कथने । ज्ञातार्थस्यप्रतिपादने। सिद्धस्योपन्यासे ॥ प्रमाणान्तरावगतस्यार्थस्यशब्देनोक्तिरनुवादः ॥ ज्ञातस्यकथने ॥ यथा । अग्निर्हिमस्यभेषजमित्यादिः। हिमविरोधित्वस्याग्नेःप्रत्यक्षावगतत्वात् । अनुवदनम् । वदअभिवादनस्तुत्योः । घञ् । कुत्सितेर्थे ॥ विधिविहितस्यानुवचनमनुवादः । न्या० २ । ६५॥

अनुवासः । पुं । सौरभ्ये ॥

अनुवासनम् । न । स्नेहने ॥ धूपने ॥ वैद्यकोक्तस्नेहवस्तौ ॥ यथा । द्विधावस्तिः परिज्ञेयानिरूहश्चानुवासनम् । कषायाद्यैर्निरूहः स्यात्स्नेहाद्यैरनुवासनमिति ॥ वासच्छेदेचु० । अनुपूर्वात् भावेल्युट् ॥

अनुवित्तः । त्रि । अनुलब्धे ॥

अनुविद्धः । त्रि । खचिते ॥

अनुविषमम् । त्रि । अनुगते ॥

अनुविहितः । त्रि । अनुवर्त्तिनि ॥ कर्त्तरिक्तः ॥

अनुवृत्तः । त्रि । प्रविष्टे । व्याप्ते ॥ पालिते ॥ अनुवृत्तिविशिष्टे ॥

अनुवृत्तिः । स्त्री । प्रवाहरूपेणानुगतौ॥ अनुरोधे ॥ आनुकूल्ये । सेवायाम् ॥ अन्वये ॥ अनुवर्त्ततेव्याप्नोति । वृतुवर्त्तने । क्तिच् ॥ अनुवर्त्तनंवाक्तिन् ॥

अनुवेश्यः । त्रि । तदन्तर्गृहवासिनि ॥

अनुव्रजनम् । न । अनुव्रज्यायाम् । गृहागतानांशिष्टानांगमनसमयेकियद्दूरपर्यन्तंपश्चाद्गमनरूपे शिष्टाचारे ॥ यथा । आयान्तमग्रतोगच्छेत् गच्छन्तंतमनुव्रजेदितिनिगमकल्पद्रुमतन्त्रम् ॥

अनुव्रज्या । स्त्री । गच्छतोनुगमने । अनुव्रजने ॥ अनुव्रजनम् । अनुव्रज्या- । क्यप् ॥

अनुशयः । पुं । द्वेषे ॥ पश्चात्तापे ॥ अनुबन्धे ॥ दीर्घद्वेषे ॥ शास्त्रोक्तकर्मणि ॥ अनुशयनम् अनेनवा । शीङ्स्वप्ने । एरच् पुंसीतिघोवा ॥

अनुशयी । त्रि । चन्द्रस्थलस्खलितेऽवरोहतिव्रीह्यादिदेहसंश्लिष्टे वेदविहितकर्मानुष्ठातरि कर्मिणि ॥ जीवे ॥ अनुदण्डयत्प्रमाणैश्वरणमूलेशेते इति तथा ॥

अनुशयी । स्त्री । क्षुद्ररोगान्तर्गतपादरोगविशेषे ॥ तल्लक्षणादिर्यथा ॥

गभीरामत्यन्तशोभांचसवर्णामनुपरि-
चिताम्। पादस्यानुशयीतान्तुविद्या
द्वत्तः प्रपाकिनीम्॥ इरेदनुशयीवै
वःश्रियायाश्लेषविद्रधेरितिभावप्रका
शः॥

अनुशरः। पुं। राक्षसे॥ अनुशृणाति। शहिंसायाम्। अनुपूर्वः। ऋदोरप्॥

अनुशायी। पुं। जीवे॥

अनुशासनम्। न। अनुशिष्टौ। आज्ञायाम्॥ उपदेशे॥ नियोगवचने॥ अनुशिष्यते व्याख्यायते जयादिर्येन। शासुअनुशिष्टौ अनुपूर्वः। ल्युट्॥ व्युत्पादने॥ यथा। शब्दानामनुशासनम्। अनुशिष्यन्तेऽसाधुशब्देभ्यः प्रविभज्यबोध्यन्तेयेनेतिकरणेल्युट्॥

अनुशासितः। त्रि। अनुशिष्टे। अनुशिक्षिते॥

अनुशासिता। त्रि। नियन्तरि॥ प्रशासितरि॥

अनुशिष्टः। त्रि। ज्ञापिते। शिक्षिते॥ आज्ञप्ते॥

अनुशिष्टिः। स्त्री। कर्त्तव्याकर्त्तव्ययोर्विविच्यज्ञापने। अनुशासने॥ अनुशासनम्। शासु०। स्त्रियांक्तिन् नावादिभ्यः। शास इदङ्हलोः॥

अनुशीलनम्। न। आलोचने॥ मुहुः सेवने॥ पुनःपुनरभ्यासे॥



अनुशोचनम्। न। शोके॥ पुनश्शोके॥ अनुपूर्वः। ल्युट्॥

अनुश्रवः। पुं। वेदे॥ गुरुमुखादनुश्रूतएव न केनचित्क्रियते अनुपूर्वाच्छृणोतेर्ऋदोरबित्यप्॥

अनुषक्। अ। अनुक्रमे॥

अनुषक्तः। त्रि। अनुविषक्ते। अनुगते॥ अनुसज्यतेस्म। षञ्ज०। क्तः॥

अनुषङ्गः। पुं। करुणायाम्॥ इतिहलायुधः। एकत्राच्छितार्थानामपरत्राच्छये॥ आसक्तौ॥ न्याये। उपनयस्याऽयम्पदस्यनिगमने॥ यथा। वह्निव्याप्यधूमवांश्चायमतस्माद्वह्निमानिति॥ अनुषज्यतेऽत्र। षञ्जसङ्गे। हलश्चेतिघञ्॥ अन्योद्देशेनप्रवृत्तावन्यस्यापिसिद्धौ॥

अनुषङ्गि। त्रि। व्यापके॥

अनुष्टुप्। स्त्री। सरस्वत्याम्॥ अष्टाक्षरायांवृत्तौ॥ यथा। पञ्चमोलोगुरुः षष्ठःसप्तमस्तुसमेलघुः। पादेष्वविषमेगश्चेत्श्लोकोऽनुष्टुप्प्रकीर्त्तितः॥ क्वचित्पादेतुविषमेपञ्चमाद्याद्वयोपिलाः। नैकापिसर्वगाःश्लोकेक्वचित् केवलपञ्चमइति॥ अनुस्तुभ्नाति। स्तुन्भु०। क्विप्॥

अनुष्ठानम्। न। क्रियारम्भे॥ करणे॥ अनुष्ठीयतेयत्। ष्ठा०। ल्युट्॥

अनुष्ठितः। त्रि। कृते॥

अनुष्णः । वि । अलसे । मन्दे । शीतले ॥ उष्णाद्यः उष्णादन्यः । न । उत्पले ।
अनुष्णवल्लिका । स्त्री । नीलदूर्वायाम् ।
अनुसंख्या । स्त्री । अनुमरणे ॥
अनुसञ्चरन् । त्रि । गमनागमनेकुर्वति ।
अनुसन्ततम् । त्रि । अनुस्यूते । अनुगते ।
अनुसन्धानम् । न । अन्वेषणे ॥ अनुसन्धीयते । डुधाञ् ० । ल्युट् ॥
अनुसमुद्रम् । । समुद्रस्यसमीपे ॥ समुद्रंसमया । अनुर्यत्समयेत्यव्ययीभावः ॥
अनुसरणम् । न । अनुवृत्तौ ॥ अनुपूर्वात् सर्त्तेर्ल्युट् ॥
अनुसर्गः । पुं । प्रतिसर्गे ॥ ब्रह्मादीनाम मन्तरोत्पत्तिरूपे ॥
अनुसवम् । म । त्रिकाले ॥
अनुसवनम् । । सर्वदार्थे ॥
अनुसारः । पुं । पूर्वानुरूपे ॥ अनुसरणे ॥ अनुक्रमे ॥ अनुसर्त्ते र्घञ् ॥
अनुसारी । वि । अनुसृत्यवर्त्तमाने ॥
अनुसृतः । वि । उपासिते ॥
अनुस्मृतिः । स्त्री । ध्याने ॥ अनुस्मरणम् । स्मृ० । क्तिन् ॥
अनुस्यूतम् । वि । अनुसन्तते ॥ अनुसीव्यतेस्म । षिवु० । क्तः । च्छ्वोरित्यूठ् ॥
अनुस्वारः । पुं । अं इति अचः परेविन्दौ ॥ स्वरति । स्वृशब्दोपतापयोः ।

अनूकः । ततःमहाद्यण् । स्वरणम् भावे घञ्वा ॥ अनुगतःस्वारः ॥ स्वरमनुभवतिवा ॥
अनुहारः । पुं । अनुकारे । सदृशकरणे । सदृशरूपवेशभाषाद्याविष्करणे ॥
अनुहरणम् । हृञ्हरणे । हञ् । उपमायाम् ॥
अनूकः । पुं । गतजन्मनि ॥ न । कुले ॥ शीले ॥ अनूच्यति । उचसमवाये । दृगुपधेतिकः । न्यंक्वादिः ॥ त्रिपुरुषानूकमित्यत्रतु त्रीनपुरुषाननुकायति । कैशब्दे । आतश्चेतिकः । अन्येषामपीतिदीर्घः ॥
अनूचानः । पुं । साङ्गवेदविचक्षणे ॥ अनुवचनसमर्थे ॥ यथा । अनूचानःपण्डितम्मन्यमानोयोविद्ययाहन्तियशः परेषाम् । तस्यान्तवन्तस्तुभवन्ति लोकानचास्यतद्ब्रह्मफलंददातीति- महाभारतम् ॥ वि । सविनये । विनीते ॥ अन्ववोचत् । वेदस्यानुवचनं कृतवान्वा । उपेयिवानिति साधुः ॥
अनूचानमानी । वि । अनूचानंमन्य ॥ अनूचानमात्मानंमन्यते दृश्यवंशीलः । आत्ममानेखश्चेतिपच्चणिनिः ॥
अनूचः । त्रि । वामने ॥ नीचे ॥
अनूढः । त्रि । अविवाहिते ॥ नञ्ऊढः । नञ्समासः । नलोपोनञः । सास्मा

बुडषि ।

अनूचम् । चि । अवक्तव्येगुर्वादिनामनि । यथा । आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामोनगृह्णीयाज्ज्येष्ठापत्यकलत्रयोरिति । वद: सुपिक्यप्चेति वदेर्भावेक्यप् ।

अनून: । चि । पूर्णे । नञुन: । अनिश्चिते । नास्तिनूनंयस्य ।

अनूनक: । चि । पूर्णे । ऊनयति । ऊन परिहाणे । अच् । स्वार्थेकन् । नञुनक: ।

अनूप: । पुं । सैरिभे । महिषे । चि । जलप्राये । अम्बुप्रायदेशे । अस्यलक्षणंयथा । वह्वम्बुर्वहुवृक्षश्चवातश्लेष्मामयान्वित: । देशोऽनूपं इतिख्यात: शास्त्रेषुचमनीषिभिरिति । अपि च । नदीपल्वलसंशैलाढ्यफुल्लोत्पलकुलैर्युत: । हंससारसकारण्डचक्रवाकादिसेवित: । सरोवराहमहिषरुरुरोहितकुलाकुल: । प्रभूतद्रुममुख्याख्यो नानाशस्यफलान्वित: । अनेकशालिकेदारकदलीक्षुविभूषित: । अनूपदेशोवातश्लेष्मामयाश्रिमानितिभावप्रकाश: । अनुगता आपोऽत्र । प्रादिभ्योधातुजस्यवाच्योवाचोत्तरपदलोपश्चेतिवहुव्रीहि: । ऋक्पूरिति: । ऊदनोर्देशे ।

अनूपजम् । न । आर्द्रके । इतिराजनिघण्ट: । त्रि । अनूपोत्पन्नमात्रे ।

अनूबन्ध: । पुं । अनुबन्धे । अनुबध्यते । बन्धबन्धने । घञ् । उपसर्गस्यघञीतिदीर्घ: ।

अनूरु: । पुं । अरुणे । सूर्यसारथौ । अविद्यमानावूरूयस्य ।

अनूरुसारथि: । पुं । सूर्ये । अनूरु: सारथिर्यस्य ।

अनृच: । पुं । माणवके । अविद्यमाना ऋचोऽस्य । ऋक्पूरित्यप्रत्यय: ।

अनृजु: । चि । शठे । वक्राशये । नञ्जु: ।

अनृणी । चि । ऋणमुक्ते । यथा । एकमप्यक्षरंयस्तुगुरु:शिष्येनिवेदयेत् । पृथिव्यांनास्तितद्द्रव्यंयद्दत्वासोऽनृणीभवेदिति तिथ्यादितत्त्वम् ।

अनृतम् । न । कृषौ । असत्ये । अयथादृष्टकथने । अयथार्थभाषणे । तत्कथनेदोष: । समूलोवाएषपरिशुष्यति योऽनृतमभिवदतीतिश्रुते: । अवध्यहिंसानुवन्धियथार्थभाषणे । नऋतम् । अनृतम् । विवाहादिपञ्चके ष्वनृतभाषणेपापाभावो यथा । विवाहकाले रतिसंप्रयोगेप्राणात्यये सर्वधनापहारे । विप्रस्यचार्थेह्यनृतं वदेत पञ्चानृतान्याहुरपातकानी-

तिकार्यपर्वणि शिष्यंप्रति श्रीकृष्णो
क्तिः ॥

अनेकः । चि । एकभिन्ने । बहुषु ॥ न ।
एके ॥ प्रतिपुरुषं बुध्यादीनां भेदा-
त् ॥ पृथिव्यादिकमपि शरीरघटादि
भेदेनाऽनेकमेव ॥ नएकः ॥

अनेकजः । पुं । पक्षिणि ॥ विष्णौ ॥ ध-
र्मगुप्तयेऽसकृज्जायमानत्वात् ॥ त्रि ।
बहुजाते ॥

अनेकता । स्त्री । परस्परंभिन्नतायाम्
॥ न एकता ॥

अनेकधा । ॥ । अनेकप्रकारे ॥

अनेकपः । पुं । स्त्री । हस्तिनि ॥ अने-
केन करेण मुखेनच पिबति । पापाने
। सुपीतिकः ॥

अनेकरूपम् । त्रि । विविधे ॥ अनेकानि
रूपाणियस्मिन् ॥

अनेकसंयुक्तम् । न । लिङ्गशरीरे ॥ अने
कैर्देवमनुष्यादिनानास्थूलशरीरैःसं
युक्तम् । अनेकाभिः श्रोत्रादिबुध्यन्त-
सप्तदशकलाभिः संयुक्तंवा ॥ त्रि । ब
हुभिः सम्बद्धे ॥

अनेकान्तः । त्रि । अनियते ॥ अनतिश
ये ॥

अनेकान्तवादी । त्रि । आर्हते । सप्तप-
दार्थवादिनि नास्तिकभेदे ॥ यथा
। इहसप्तपदार्थाःस्युर्जीवाजीवास्रवा
श्रयः । संवरोनिर्ज्जरश्चैवबन्धमोक्षा
वुभावपि । स्याद्वादरूपिणश्चैतेस-
र्वेनैकान्तिकत्वतइति ॥

अनेकाश्रितगुणः । पुं । बहुनिष्ठगुणे ॥
सयथा । संयोगः विभागः द्विपृथक्-
त्वादिःएकत्वान्यसङ्ख्येतिसिद्धान्तमु
क्तावली ॥

अनेजत् । त्रि । चलनरहिते । सदैक
रूपे ॥ एजतीत्येजत् । एजृकम्पने ।
चलनं स्थिरत्वप्रच्युतिः । नञ्समा
सः ॥

अनेडमूकः । चि । शठे ॥ मूकबधिरे ।
वाक्श्रुतिवर्ज्जिते ॥ नास्तिएडमूको
ऽस्मात् । एडमूकसदृशोऽनेडमूकइ-
तिवा । सादृश्यस्यनञर्थत्वात् ॥ अन्धे ॥

अनेनाः । त्रि । निर्दोषे ॥

अनेहा । पुं । काले । समये ॥ नहन्यते ।
नञिहनएहचेत्यसिरेहादेशश्च ॥
ऋदुशनसित्यनङ् ॥

अनैकान्तिकः । पुं । हेत्वाभावविशेषेस
व्यभिचारे ॥ साधारणा साधारणानुप
संहारिभेदादनैकान्तिकस्त्रिविधः । ए
कान्तिकोऽव्यभिचारी । नएकान्ति
कः ॥ चि । ऐकान्तिकादितरस्मिन् ॥

अनैक्यम् । चि । एकताशून्ये । अनेकता
याम् ॥ एकस्यभावऐक्यम् । नएक्य
म् ॥

अन्तम्

अनैपुण्यम् । न । अनिपुणतायाम् ॥
अनैश्वर्यम् । न । अनीश्वरतायाम् । असामर्थ्ये ॥
अनोकहः । पुं । कुठे । वृक्षे ॥ अनसःशकटस्याकंगतिंहन्ति । अन्यथ्वपीतिह न्तेर्डः ॥
अनौचिती । स्त्री । लोकमर्यादातिक्रमे ॥ न औचिती ॥
अनौपम्यम् । त्रि । आत्मरूपे ॥ यदितत्सदृशोद्वितीयः पदार्थोजगत्यांस्यात् तदा तदुपमानेनस आत्मोपमेयः स्यात् ननुतदस्ति तस्मादनौपम्यमात्मरूपम् ॥
अन्तम् । न । स्वरूपे ॥ यथा । वनान्तभूः ॥ पुं । नाशे ॥ पुं । न । अवसाने । चरमे ॥ त्रि । अन्तिके ॥ प्रदेशे ॥ यथा । रम्यंहर्म्यतलं न किंवसतयेश्राव्यं नगीतादिकं किंवाप्राणसमासमागमसुखंनैवाधिकप्रीतये। किन्तुभ्रान्तपतत्पतङ्गपवनव्यालोलदीपाङ्कुरच्छायाचञ्चलमाकलय्यसकलं सन्तोवनान्तंगताइति॥परिग्रहापेक्षयासमासौ ॥ अतिमनोहरे । रुचिरे ॥ अवयवे ॥ निर्णये ॥ दूरस्तायाम् । सीमायाम् ॥ यथा । लवणजलान्तानद्यः स्त्रीभेदान्तञ्च मैथुनम् । पैशुन्यंजनवार्त्तान्तं वित्तंदुःखत्रयान्तकम् ॥ राज्यश्रीर्ब्र

अन्तःक

ह्मशापान्ताष्वाणान्तं ब्रह्मचर्यकम् । आचारोघोषवासान्तः कुलस्यान्तंस्त्रियःसुताः ॥ सर्वेक्षयान्तानिचयाः पतनान्ताःसमुच्छ्रयाः । संयोगाविप्रयोगान्तामरणान्तञ्च जीवितमितिगारुडे-११५ अध्यायः ॥ अमति । अमगत्यादौ । हसिमृग्रिणितन् ॥ अनततिवा अतिबन्धने । पचाद्यच् ॥ अन्तनम् । घञ्वा ॥
अन्तः करणम् । न । मनोबुध्यहङ्कारचेतस्सु ॥ यथा । मनोबुद्धिरहङ्कारश्चित्तंकरणमान्तरम् । संशयो निश्चयोगर्वःस्मरणं विषयाअमी इति ॥ अस्योत्पत्तिर्यथा । मिलितैस्तुतैः । अन्तःकरणमेकंस्यादिति । तैःपञ्चभूतसत्त्वांशैर्मिलितैरन्तःकरणं भवतीत्यर्थः । आभ्यन्तरवृत्तित्वादन्तःकरणम् । अन्तःअभ्यन्तरे करणम् ॥
अन्तःकरणदेवता । स्त्री । चन्द्राच्युतचतुर्मुखशङ्करेषु । यथासंख्यंचतुर्णांचतुर्षु ॥
अन्तःकरणविषयः । पुं । सङ्कल्पविकल्पनिश्चयाहङ्काराख्यचैत्याख्येषु ॥ यथासंख्यंचतुर्णां चत्वारो विषयाज्ञेयाः । अन्तःकरणवृत्तित्वेनाप्येषांव्यवहारः ॥
अन्तःकरणवृत्तिः । स्त्री । मनोवृत्तौ ॥ साचानेकविधा । यथाहुः । शान्ताया

रास्त्वामूढाऽमनसोवृत्तयस्त्रिधा । वैराग्यंचान्तिरौदार्यमित्याद्याः शा न्तवृत्तयः ॥ तृष्णास्नेहोरागलोभा-दित्याद्याघोरवृत्तयः । सम्मोहोभय मित्याद्याःकथितामूढवृत्तयइति॥ वृ त्तिभेदादन्तःकरणं चतुर्विधंभवति ॥ वृत्तिभेदोयथा । यदातुसङ्कल्प विकल्पकृत्यंतदाभवेतन्मनइत्यभि ख्यम् । स्याद्बुद्धिसंज्ञञ्चयदाप्रवेत्तिसु निश्चितंसंशयहीनरूपम्॥ अनुसन्धा नरूपंतच्चित्तञ्च परिकीर्त्तितम् । अ हङ्कृत्याऽहमित्यात्तुतदहङ्कारतांगत-मिति ॥ सङ्कल्पविकल्पकृत्यंयदान्तः करणंकरोतितदातदन्तःकरणंमनः संज्ञंभवति । एवमग्रेप्यूह्यम् ॥

अन्तःकुटिलः । पुं । शङ्खे ॥ त्रि । वक्रान्तः करणे ॥

अन्तःपदवी । स्त्री । सुषुम्णायाम् ॥

अन्तःपुरम् । न । भूभुजांस्त्र्यगारे । शु द्धान्ते ॥ अन्तरभ्यन्तरेपुरंगृहम् । ता त्स्थ्याद्राजदारेषु ॥

अन्तःपुराध्यक्षः । पुं । शुद्धान्ताधिकृते ॥ तल्लक्षणमाहयुक्तिकल्पतरुः । यथा । वृद्धः कुलोद्गतः शक्तः पितृपैतामहः शुचिः । राज्ञामन्तः पुराध्यक्षोविनी तश्चतयेष्यत इति ॥

अन्तःप्रज्ञः । पुं । तैजसे ॥ इन्द्रियापेक्षयाप्रज्ञायामनसोन्तः स्थत्वात् तद्वासनारूपा प्रज्ञायस्यसः ॥

अन्तःसत्त्वा । स्त्री । गर्भिण्याम् ॥ अन्तः अभ्यन्तरे सत्त्वंयस्याःसा ॥ भल्लातक्या म् ॥

अन्तःसुखः । त्रि । बाह्यविषयजनितसु-खशून्ये । स्वरूपसुखे ॥ अन्तः अभ्यन्त रे सुखंयस्यसः ॥

अन्तःस्वेदः । पुं । स्त्री । गजे ॥ अन्तः अ भ्यन्तरे स्वेदोयस्य सः ॥

अन्तकः । पुं । नाशकारिणि । यमे ॥ अन्तंकरोति अन्तयति । तत्करोती तिण्यन्तात् ण्वुल् । भरण्याम् ॥

अन्तकरः । त्रि । नाशकरे ॥ अन्तंकरो ति । दिवाविभेतिटः ॥

अन्तकर्म । न । नाशने ॥ राघवस्य शरै र्घोरैर्घोरंरावणमाहवे । अपराघवे-तिसम्भुङ्क्षजम् ॥ स्येतिषोअन्तकर्म णीत्यस्यलोटमध्यमैकवचनम् ॥

अन्तकालः । पुं । मरणसमये । समस्त-करणग्रामवैयग्र्यवति ॥ अन्तश्चासौ-कालश्च ॥

अन्तगः । त्रि । अन्तगामिनि । पारगे ॥ अन्तंगच्छतीतिविग्रहे अन्तात्यन्त-त्यादिनागमे र्ड प्रत्ययः ॥

अन्तगतः । त्रि । अवसानंप्राप्ते ॥ अन्ते-गतः ॥

अन्ततः । अ । सम्भावनावाम् । अवयवे । पञ्चम्यर्थे । शासने । इतिहेमचन्द्रः । अन्ते इत्यर्थे आद्यादित्वात्तसिः ।

अन्तपालः । पुं । बाह्यरक्षके ।

अन्तः । अ । मध्ये । प्रान्ते । अभ्युपगमे । । चित्ते । अमति । अमगत्यादिषु । अमेस्तुट्चेत्यरन् । तस्यतुडागमः । रेफादकारउच्चारणार्थः ।

अन्तरम् । न । अवकाशे । यथा अन्तरंदेहि । अवधौ । यथा मासान्तरेदेयम् । परिधानांशुके । यथा अन्तरे शाटकाःपरिधानीया इत्यर्थः । अन्तर्द्धौ । यथा पर्वतान्तरंगताः स्त्रियः । भेदे । परस्परवैलक्षण्ये । विशेषे । यथा । अन्तरज्ञो भव सदा धनस्य च जनस्य च । विशेषज्ञ इत्यर्थः । तादर्थ्ये । ओदनान्तरस्तण्डुलः । ओदनार्थइत्यर्थः । छिद्रे । यथा । अन्तरं सवध्वाजरेःप्रहरेत । आत्मीये । असोभ्यन्तरोमम । विनार्थे । यथा । अन्तरेण पुरुषकारंनकिञ्चित्सिध्यति । बहिरर्थे । यथा । अन्तरेचाण्डालगृहः । वाह्यइत्यर्थः । अवसरे । यथा । अन्तरज्ञोहि सेवकः । मध्ये । यथा । आवयोरन्तरेजाताःपर्वताःसरितोद्रुमाः । आत्मनि । यथा । प्रमान्तरंवेद । अन्तरात्मानंजानातीत्यर्थः । सदृशे । यथा । इकारस्यचकारोन्तरतमः । अन्तरंराति । रादाने । आतोनुपेतिकः ।

अन्तरङ्गः । त्रि । आत्मीये । अन्तःअङ्गनियस्य ।

अन्तरज्ञः । त्रि । नीचानीचादिविशेषाभिज्ञे ।

अन्तरप्रभवः । त्रि । सङ्कीर्णजातौ । अनुलोम प्रतिलोमजाते ।

अन्तरा । अ । निकटार्थे । मध्यार्थे । विनार्थे । अन्तरेति । इणगतौ । डाप्रत्ययः ।

अन्तरात्मा । पुं । अन्तःकरणे । अन्तःअभ्यन्तरे आत्मा । सर्वान्तरे परमात्मनि ब्रह्मलोकमभ्यवाप्ते । यथा । नकर्मणाकमीयस्ता दृद्धिर्वानान्तरात्मनः । इतिवाक्रुमिवोढृत्य वेदान्तेषोषधाकृतेति ।

अन्तरापत्या । स्त्री । गर्भिण्याम् । अन्तरे अपत्यंयस्याः ।

अन्तरायः । पुं । विघ्ने । अन्तरायस्त्वदर्शितोयोगस्तत्रेषयोगे । व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वाऽनवस्थितत्वानीति- । चित्तविक्षेपे । अन्तर्मध्ये अन्तरंस्थ व्यवधानस्यवा अयनम अयगतौ । इगतौवा । घञऽज्वा । यागे ।

अन्तरारामः । त्रि । त्यक्तसर्वपरिग्रहस्ते

नवांश्रसुखसाधनशून्ये । अन्तःआरा मोयस्य ॥

अन्तरालम । न । मध्ये । अभ्यन्तरे । अन्तरंस्याति । आतोनुपेतिकः । अ न्येषामपीतिदीर्घः ॥ । आङ्प्रश्लेषो वा । मूलविभुजादित्वात्कः ॥

अन्तरालकम । न । अभ्यन्तरे ॥

अन्तरिक्षम । न । अम्बरे ॥ पतत्रिमेघ संचार प्रदेशे ॥ भूलोकसूर्य्यमध्यव र्त्तिनि ॥ द्यावापृथिव्योरन्तरीक्षते । ईक्षदर्शने । कर्मणिघञ् । वेदेर्छांद- संहृस्वत्वम । अन्तर्ऋक्षाणिनक्षत्रा ण्यस्य पृषोदरादित्वादित्त्वंवा ॥

अन्तरिक्षचित । पुं । वायै। । अन्तरिक्षे चयतिवसति । क्षि० । क्विप । तुक ॥

अन्तरितम । त्रि । तिरस्कृते । अवर्जिते । व्यवकलिताङ्के । यस्यवाकीइतिभाषा ॥

अन्तरिन्द्रियम । न । अन्तःकरणे ॥ अन्तः अभ्यन्तरे इन्द्रियम ॥

अन्तरीक्षम । न । नभसि । पतत्रिमेघ संचारप्रदेशे ॥ द्यावापृथिव्योरन्तरी- क्ष्यते । ईक्षदर्शनांकनयोः । कर्मणि घञ । अन्तरीक्षतेजगदस्मिन्निति- अधिकरणव्युत्पत्तिस्तुनोचिता । ल्युटा घञोवाधप्रसङ्गात ॥ अभ्रकधाते। ॥

अन्तरीक्षजलम । न । आकाशजले । दिव्योदके ॥

अन्तरीपः । पुं । न । द्वीपे ॥ अन्तर्गता- आपोऽत्र । ऋक्पूरित्यः समासान्तः । द्व्यन्तरुपसर्गेभ्य इत्यपईदादेशः ॥

अन्तरीयम । न । अधोंशुके । परिधान वस्त्रे ॥ अन्तरेभवम । गहादित्वाच्छः ॥ नाभोधृतस्ययद्वस्त्रमाच्छादयतिजा नुनी । अन्तरीयंप्रशस्तंतदच्छिन्नमुभ यो स्तयोः ॥

अन्तरे । ऽ । मध्ये ॥ अन्तरेति । इणमते। । विच ॥

अन्तरेण । ऽ । विनार्थे ॥ मध्यार्थे ॥ अ- न्तरेति । इणोणः ॥

अन्तर्गडुः । त्रि । निरर्थके । रसैाली इति भाषायाम ॥

अन्तर्गतम । त्रि । मध्यप्राप्ते । विस्मृ- ते । अन्तर्गम्यतेस्म अन्तर्गच्छतिस्म वा । गमलृगतैाक्तः ॥

अन्तर्गृहम । न । गृहमध्ये ॥

अन्तर्घनः । पुं । वाहीकग्रामविशेषे । ह न० । अन्तर्घनोदेशइतिहन्तेर्घनादे- शोऽप प्रत्ययश्चनिपातनात ॥

अन्तर्जठरम । न । कोष्ठे । कुक्षिमध्ये ॥

अन्तर्जलम । न । अन्तर्जलसाध्येऽघमर्ष णजपादै। ॥

अन्तर्ज्योतिः । न । अन्तरात्मनि ॥

अन्तर्द्धनम । न । मद्यबीजे । किण्व ॥

इतिशब्दचन्द्रिका ॥

अन्तर्दाहः । पुं । कोष्ठसन्तापे । शरीराभ्यन्तरस्थज्वालायाम् ॥
अन्तर्द्धा । स्त्री । अन्तर्द्धाने । व्यवधा याम् । अन्तर्द्धानम् । डुधाञ्० । अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वादातश्चोपसर्गइत्यङ् ॥
अन्तर्द्धानम् । न । अन्तर्द्धौ । तिरोधाने । शरीरत्यागे ॥
अन्तर्द्धिः । पुं । पिधाने । व्यवधाने ॥ अन्तर्द्धानम् । अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वादुपसर्गेघोः किरितिकिप्रत्ययः ॥
अन्तर्द्वारम् । न । गृहाभ्यन्तर्गूढद्वारे । प्रच्छन्ने ॥ अन्तःस्थितंद्वारम् । शाकपार्थिवादिः ॥ खिडकीतिख्याते ॥ यथा । प्रच्छन्नमन्तर्द्वारंस्यात्पक्षद्वारंतदुच्यत इतिशवरस्वामी ॥
अन्तर्भूतः । त्रि । मध्यस्थिते । अन्तर्गते ॥
अन्तर्मनाः । त्रि । व्याकुलचेतसि । दुःखितमनसि । दुर्मनसि । विमनसि ॥ अन्तर्मनोऽस्य ॥
अन्तर्यामी । पुं । वायौ ॥ यथा । अन्तःप्रविश्यभूतानियोबिभर्त्त्यात्मकेतुभिः । अन्तर्यामीश्वरः साक्षात्पातुनोयद्वशेस्फुटमिति ॥ केतुभिः प्राणादिवृत्तिभिः ॥ ईश्वरे । प्रत्यक्तमे । अन्तरनुप्रविश्यसर्वेषांभूतानांनियन्तरि ॥ सूत्रादप्यान्तरंतत्त्वमन्तर्याम्याख्यमुच्यते ॥ त्रि । अन्तर्गे । मनोगतश्च ॥
अन्तर्वंशिकः । पुं । अन्तःपुराधिकृते । कुब्जवामनादिजने ॥ अन्तरभ्यन्तरोवंशोगृहम् । अन्तर्वंशेनियुक्तः । तत्रनियुक्तइतिठक् । संज्ञापूर्वकत्वान्नवृद्धिः ॥ यद्वा अन्तर्वंशोऽस्यास्ति अतइतिठनावितिठन् ॥
अन्तर्वत्नी । स्त्री । गर्भिण्याम् । अन्तरस्त्यस्यांगर्भइतिविग्रहे अन्तःशब्दस्याधिकरणप्रधानत्वेन प्रथमासमर्थत्वाभावा दस्तिनासामानाधिकरण्याऽसम्भवादप्राप्तोमतुप् अन्तर्वत्पतिवतोर्नुगित्यनेननिपात्यते नुगागमश्चविधीयते ततश्चऋन्नेभ्य इतिङीप् ॥
अन्तर्वमिः । पुं । अजीर्णे । अपाके ॥ इतित्रिकाण्डशेषः ॥
अन्तर्वाणिः । त्रि । शास्त्रज्ञे ॥ अन्तर्वाणस्य । समासान्तविधेरनित्यत्वान्नबहुव्रीहेतिनकप् । गोस्त्रियोरितिह्रस्वः ॥ यद्वा । अन्तर्वाणयति । वणशब्दे । स्वार्थणिजन्तादिञ् ॥
अन्तर्विगाहः । पुं । प्रवेशे ॥
अन्तर्विगाहनम् । न । प्रवेशने ॥
अन्तर्वेदी । स्त्री । नीवृदन्तरे । गङ्गायमुनयोर्मध्यस्थल्याम् । हरिद्वारादारभ्य प्रयागपर्य

अन्तेरभे । इतित्रिकाण्डशेषः ॥

अन्तर्हासः । पुं । उपहासे । गूढहास्ये ॥ त्रि । तद्वति ॥

अन्तर्हितम् । त्रि । संवीते । तिरोभूते ॥ अन्तर्धीयतेस्म । डुधाञ्० । क्तः । दधातेर्हिः ॥

अन्तवत् । त्रि । विनाशिनि ॥ अन्तोऽस्त्यस्य । मतुप् ॥

अन्तर्वह्निः । पुं । कालानले ॥

अन्तेवासी । पुं । शिष्ये ॥ अन्ते समीपे वस्तुं शीलमस्य । सुप्यजातौणिनिः ॥

अन्तशय्या । स्त्री । मृतौ ॥ भूमिशय्यायाम् ॥ पितृकानने ॥ अन्ते शय्या ॥

अन्तसद् । पुं । अन्तेवासिनि ॥ अन्ते अन्तिके सीदति । षद्लृ० । सत्सूद्विषेति क्विप् ॥

अन्तस्था । स्त्री । पुं । यरलवेषु ॥ अन्तः स्पर्शोष्मणोर्मध्ये तिष्ठति । ष्ठा० । सुपिस्थ इतिकः । टाप् । खर्परे शरि वेति विसर्गलोपः ॥

अन्तस्थीयः । त्रि । अन्तस्थेषु भवे । गहादित्वाच्छः ॥

अन्तावसायी । पुं । श्वपचे ॥ मुनिभेदे ॥ नापिते ॥ अन्तानामन्ते अवसातुं शीलमस्य । योन्तकर्मणि वैवर्ण्ये वा । सुप्यजातौणिनिः । आतोयुक् ॥

अन्ति । अ । समीपे ॥ यथा । मृध्यमभीतवदुपेयतुरन्ति मातोरितिभागवतम् ॥

अन्तिः । स्त्री । नाट्योक्त्या ज्येष्ठभगिन्याम् ॥

अन्तिकम् । त्रि । निकटे ॥ अन्तोऽस्यास्ति । अतइनिठनाविति ठन् ॥ अन्त्यतेऽत्र । अतिबन्धने । ण्वुल् वा ॥ न । सामीप्ये इतिधरणिः ॥

अन्तिकतमः । त्रि । अत्यासन्ने । नेदिष्ठे ॥ अतिशयेनान्तिकम् । अतिशायने तमबिष्ठनाविति तमप् ॥

अन्तिका । स्त्री । शातलोपधौ ॥ चुल्ल्याम् ॥ नाट्योक्त्याज्येष्ठभगिन्याम् ॥ अन्तोऽस्यास्ति । ठन् । अन्त्यते वा । अतिबन्धने । ण्वुल् ॥ प्रत्ययस्थात्कादितीत्त्वम् ॥ समीपवर्त्तिन्याम् ॥

अन्तिकाश्रयः । पुं । समीपस्थावलम्बने । उपघ्ने ॥ अन्तिकेआश्रीयते आश्रयणं वा । एरच् ॥

अन्तिमः । त्रि । चरमे । अन्तभवे । परस्मिन् ॥ अन्तभवः । अन्तादिवतिडिमच् ॥

अन्तेवासी । पुं । शिष्ये ॥ अन्तेसमीपे वस्तुं शीलमस्य । सुप्यजातौणिनिः । अथ वासे त्वलुक् ॥ चण्डाले ॥ ग्रामादेरन्ते वसति ॥ प्रान्तगे ॥

अन्त्यः । पुं । चण्डाले ॥ मुस्तायाम् ॥ त्रि । अधमे ॥ अन्तभवे । चरमस्थे ॥

म । रेवतीनक्षत्रे । मीनराशौ ॥ द्व
शजलधिसंख्यायाम् । सहस्रलक्षको
टौ १०००००००००००००००। अन्ते
भवः । दिगादित्वाद्यत् ॥ द्वादश
स्वपि ।

अन्त्यजः । पुं । स्त्री । शूद्रे । नीचजातौ ।
यथा । रजकश्चर्मकारश्च नटो वरुड
एवच । कैवर्त्तमेदभिल्लाश्च सप्तैते
अन्त्यजाःस्मृता इतियमः ।

अन्त्यजन्मा । पुं । स्त्री । शूद्रे ।

अन्त्यजातिः । पुं । चण्डालादिसप्तसु ।
यथाहापस्तम्बः । अन्त्यजातिरविज्ञा
तो निवसेद्यस्यवेश्मनि । सम्यक्ज्ञात्वा
तुकालेनकुर्यात्तत्र विशोधनम् । चा
न्द्रायणंपराकोवा द्विजातीनांविशो
धनम् । प्राजापत्यन्तुशूद्राणां तथासं
सर्गदूषणे ॥ यैस्तत्रभुक्तंपक्वान्नंकृच्छ्रंते
षांविनिर्द्दिशेत् । तेषामपिचयैर्भुक्तं
तेषामर्द्धंविधीयते । तेषामपिचयै
र्भुक्तंकृच्छ्रपादोविधीयत इतिप्रायश्चि
त्ततत्त्वम् ।

अन्त्यभम् । न । मीनराशौ । रेवतीन
क्षत्रे ।

अन्त्यवर्णः । पुं । स्त्री । शूद्रे । अन्त्यश्चा
सौवर्णश्च । पुं । अन्तिमाक्षरे ।

अन्त्यावसायी । पुं । स्त्री । चण्डालेन
निषाद्यांजनिते । यथा । निषादस्त्री

तु चण्डालात्पुत्रमन्त्यावसायिनम् ।
श्मशानगोचरंसूते वाह्यानामपिग
र्हितम् । इतिमनुः ॥ चण्डालादि
सप्तजातिषु । यथा । चण्डालः श्वप
चः क्षत्तासूतोवैदेहकस्तथा । माग
धायोगवौचैवसप्तैतेऽन्त्यावसायिनः
। इत्यङ्गिराः ।

अन्त्येष्टिः । स्त्री । शवदाहादिक्रियारू
पे चरमसंस्कारे । अन्त्या चासावि
ष्टिश्च ।

अन्त्रम् । न । पुरीतति । अमति अने
नवा । अमगतौ । सर्वधातुभ्यः ष्ट्रन्
। यद्वा । अमिचिमिदिशसिभ्यः क्तः ।
संज्ञापूर्वकत्वाद्दीर्घानुनासिकलो-
पौ ॥ अन्ततिवा । अतिबन्धने । ष्ट्रन्
। उक्ताः सार्द्धास्त्रयोव्यामाः पुंसामं
त्राणिसूरिभिः । अर्द्धव्यामेनहीनानि
योषितोऽन्त्राणिनिर्दिशेदितिवैद्याः ।

अन्त्रवृद्धिः । स्त्री । पुं । रोगविशेषे ।

अन्त्रमांसम् । न । आम्लिके । यथा । आ
म्लिकंछिद्रमार्गेणधौतं निर्मलवारि-
णा । तस्यखण्डान् संविधायवेसवार
युतान् पचेत् । निःसारंविरसोऽग्रार
मान्त्रमांसमुदाहृतमिति ।

अन्दुकः । पुं । हस्तिनिगडे । पादकटके
। अन्दयतेऽनेन । अदिबन्धने । अ
न्दूदन्भूजम्बितिकूः । स्वार्थेकः । स्वा

र्थिका: प्रकृतिलोऽलिङ्गवचनान्यति-वर्त्तन्तेऽपीति पुंस्त्वम् । यद्वाग्निमयादिस्वाट्टक् । ह्रस्वसुक्कान्तात्कः । केऽणेति ह्रस्वः । इकोह्रस्वोऽङ्योगालवस्येतिवा । यद्वा । अन्धशब्दात् संज्ञायांकन् । केणइतिह्रस्वः ॥

अन्दूः । स्त्री । निगडे ॥ स्त्रीपादभूषणे ॥ अन्यतेऽनेन । अदिबन्धने । अन्दूट्टम्भितिकूः ॥

अन्धः । पुं । न । तिमिरे ॥ अदर्शनात्मकाज्ञाने । त्रि । अदृशि । चक्षुर्हीने ॥ पुं । भिक्षौ ॥ यथा । तिष्ठतो व्रजतोवापियस्यचक्षुर्नदूरगम् । चतुर्युगांभुवंमुक्तापरिव्राट्सोऽन्धउच्यतेइति ॥ राशिविशेषे ॥ यथा । मेषोवृषोमृगेन्द्रश्चदिवान्धाःपरिकीर्त्तिताः । नृयुक्कर्कटकन्याश्चरात्रावन्धाःप्रकीर्त्तिताः इति । अन्धयति । अन्धदृष्ट्युपघाते । पचाद्यच् ॥

अन्धकः । पुं । दैत्यविशेषे ॥ देशभेदे ॥ नृपान्तरे ॥ मुनिविशेषे ॥ यादवप्रभेदेषु ॥ हिरण्याक्षसुते ॥

अन्धकरिपुः । पुं । शिवे ॥ अन्धकस्य दैत्यस्यरिपुः ॥ श्लेषकाव्यादावन्धकारनाशकत्वात् । सूर्ये । चन्द्रमसि । अग्नौच ॥

अन्धकवर्त्तः । पुं । पर्वतान्तरे ॥

अन्धकान्तकः । पुं । शिवे ॥ अन्धकस्य अन्तकः ॥

अन्धकारः । पुं । न । तेजस्सामान्याभावे । ध्वान्ते ॥ प्रभाप्रभाग्यावच्छिन्नाभावो ऽन्धकारइतिसामान्यलक्षणायांजगदीशः । भयहेतिते जोबोधकारित्वं तितत्त्वं सर्वव्याधिकरत्वञ्चेत्यस्यगुणाइतिराजवल्लभः । मिथ्याप्रत्ययलक्षणे स्वविषयावरणे तद्दुपादानाज्ञाने ॥ अन्धदृष्ट्युपघाते । चुरादिः । अन्धनम् । घञ् । अन्धंकरोति कर्मण्यण् ॥

अन्धकारिः । पुं । हरे । शिवे । अन्धकस्यअरिः ॥

अन्धकासुहृत् । पुं । ईश्वरे । शिवे ॥ अन्धकासून् हरति । क्विप् ॥

अन्धकूपः । पुं । कर्करान्धुके । सान्धकारकूपे ॥ मोहे ॥ नरकविशेषे ॥ अंधस्यासौ कूपश्च ॥

अन्धतमसम् । न । गाढान्धकारे ॥ अन्धयति । अन्धदृष्ट्युपघाते चुरादिः । अच् । अंधश्चतत्तमश्च । अवसमन्धेभ्यस्तमसइत्यच् ॥

अन्धतामिस्रः । पुं । अभिनिवेशे । स चाष्टादशविधः । तथाहि । देवाः खल्वणिमादिकमष्टविधमैश्वर्यमासाद्यशब्दादीन् भुञ्जानाःशब्दादयो

मोग्वास्तदुपायाश्चाविमादयोऽस्मा कमसुरादिर्मोपघातिवतेतिविभ्यति सदिदंभयमभिनिवेशोऽन्धतामिस्रो- छादशविषयत्वादष्टादशधेतिसां- ख्याः॥ न। निविडान्धकारभये नरक विशेषे॥ पञ्चमकाराश्मानान्तर्गता श्मानविशेषे। सवविशेषोयथा। देह नाशे अहमेवमृतोऽस्मीतिबुद्धिः॥

अन्धमूषिका। स्त्री। देवताडे।

अन्धवर्त्मा। पुं। वायोःसप्तमेस्कन्धे। यथा। मरुदिन्द्रःसरभसःसामगोमा नुषीतिपाः। देवीविशोऽन्धवर्त्मा चस्क न्धः सप्तमआभुवादिति ७।

अन्धः। न। ओदने। अद्यते। अदभ क्षणे। अदेर्नुम् धौ चेत्यसुन्। अन्ध यतिवा अन्धदृष्ट्युपघाते। असुन्।

अन्धातमसम्। न। अत्यन्धे। महा न्धकारे। अन्धञ्च तत्तमश्च। अव समन्धेभ्यस्तमस इत्यच्। अन्येषाम पीतिदीर्घः।

अन्धाहिः। पुं। कुंचियाइतिगौडप्रसि द्धे मीनभेदे। इतित्रिकाण्डशेषः॥

अन्धिका। स्त्री। द्यूतभेदे। रजन्या म्। सर्षप्याम्। सिद्धार्थौषधौ। स्त्रीविशेषे। चक्षुषोरोग विशेषे॥

अन्धुः। पुं। कूपे। अध्यते। अमग त्यादौ। अर्जिदृशिकम्यमीति कु धुंकच। यद्वा। अन्धयति। अन्धदृ- ष्ट्युपघाते। मृगय्वादित्वात्कुः।

अन्धुलः। पुं। शिरीषद्रौ।

अन्ध्रः। पुं। वैदेहेन कारावस्त्रियाम् मुत्पादिते अन्त्यजविशेषे। देशविशे षे॥ यथा। जगन्नाथादूर्द्ध्वभागमर्वाक् श्रीभ्रमरात्मिकात्। तावदन्ध्राभि धोदेशः प्रोक्तःश्रीशक्तिसङ्गमे।

अन्नम्। न। भक्ते। ओदने। स्विन्नतण्डु ले। यथा। सस्यंक्षेत्रगतंप्राहुःसतुषं धान्यमुच्यते। आमंवितुषमित्युक्तं स्विन्नमन्नमुदाहृतमिति वसिष्ठः। व्रीहियवादौ॥ भक्ष्यभोज्यलेह्यचो ष्यभेदाच्चतुर्विधमन्नंभवति॥ पृथि- व्याम्। उपकरणे। औपचारिकम यंगृहीत्वा दृष्टश्चोपकरणेऽन्नशब्दः। यथा स्त्रियोऽन्नम् पशवोऽन्नम् विशो ऽन्नं राज्ञामित्यादौ। त्रि। भुक्ते। अनिति। अन्यन्तेनेनवा। अनप्राणने। कॄपॄजॄसिद्रुपन्यनिस्वपिभ्यो निदितिन न्॥ यद्वा। अद्यतेस्म। अदभक्षणे। क्तः। अन्नाख्य इतिनिपातनात्बहु लंतणीतिवा न जग्धिः। यद्वा। अत ति। अत०। धापवस्यज्यतिभ्योनः इतिनः।

अन्नकोष्ठकः। पुं। तण्डुलादिरक्षण स्थाने॥ गोलाइतिकाख्यायस्यप्रसि

षिका: प्रकृतितोषित्वश्रवनान्यति-वर्तन्तेपीति पुंस्त्वम् । यद्वाविनयादित्वाट्टक् । इसुसुक्तान्तात्कः । केबेति ह्रस्वः । इकोह्रस्वोऽङ्योगालवस्येतिवा । यद्वा । अन्धूशब्दात् संज्ञायांकन् । केणइतिह्रस्वः ।

अन्धूः । स्त्री । निगडे । स्त्रीपादभूषणे । अनयातेऽनेन । अदिबन्धने । अन्दूदृन्भिंतिकूः ।

अन्धः । पुं । न । तिमिरे । अदर्शनात्मकाज्ञाने । त्रि । अदृशि । चक्षुर्हीने । पुं । भिक्षौ । यथा । तिष्ठतो ब्रजतो वापियस्यचक्षुर्नदूरगम् । चतुर्युगांभुवंमुक्तापरिव्राट्सोऽन्धउच्यतेइति ॥ राशिविशेषे । यथा । मेषोवृषोमृगेन्द्रश्चदिवान्धाःपरिकीर्त्तिताः । मिथुनकर्कटकन्याश्चरात्रावन्धाःप्रकीर्त्तिताः इति । अन्धयति । अन्धदृष्ट्युपघाते । पचाद्यच् ।

अन्धकः । पुं । दैत्यविशेषे । देशभेदे ॥ नृपान्तरे । मुनिविशेषे । यादवप्रभेदेषु । हिरण्याक्षसुते ।

अन्धकरिपुः । पुं । शिवे ॥ अन्धकस्यदैत्यस्यरिपुः ॥ श्लेषकाव्यादावन्धकारनाशकत्वात् । सूर्ये । चन्द्रमसि । अग्नौच ।

अन्धकवर्त्तः । पुं । पर्वतान्तरे ॥

अन्धकान्तकः । पुं । शिवे ॥ अन्धकस्य अन्तकः ।

अन्धकारः । पुं । न । तेजसामाभावे । ध्वान्ते ॥ महाप्रभाभावावच्छिन्नाभावो ऽन्धकारइतिसामान्यलक्षणा यांजगदीशः । भयहेतिः नीलरोधकारित्वं तिलत्वं सर्वव्याधिकरत्वञ्चेत्यस्यगुणाइतिराजवल्लभः । मिथ्याप्रत्ययलक्षणे स्वविषयावरणे तदुपादानाज्ञाने । अन्धदृष्ट्युपघाते । चुरादिः । अन्धनम् । घञ् । अन्धंकरोति कर्मण्यण् ।

अन्धकारिः । पुं । हरे । शिवे । अन्धकस्यअरिः ।

अन्धकासुहृत् । पुं । ईश्वरे । शिवे । अन्धकासून् हरति । क्विप् ।

अन्धकूपः । पुं । कर्करान्धुके । सान्धकारकूपे । मोहे । नरकविशेषे । अंधस्यासौ कूपश्च ॥

अन्धतमसम् । न । गाढान्धकारे । अन्धयति । अन्धदृष्ट्युपघाते चुरादिः । अच् । अंधञ्चतत्तमश्च । अवसमन्धेभ्यस्तमसइत्यच् ॥

अन्धतामिस्रः । पुं । अभिनिवेशे । स चाष्टादशविधः । तथाहि । देवाः खल्वणिमादिकमष्टविधमैश्वर्यमासाद्यशब्दादीन् भुञ्जानाःशब्दादयो

अन्धुः

भोग्यास्तदुपायाश्चाविमाद्योऽस्या कमसुरादिर्मोपघातिषतेतिविश्वंति तदिदंभयमभिनिवेशोऽन्धतामिस्रो- छादशविषयस्यादष्टादशधेतिसां- ख्याः॥ न। निबिडान्धकारभये नरक विशेषे ॥ पञ्चमकाराणामान्तर्गता ज्ञानविशेषे। सचविशेषोयथा। देह नाशे अहमेवमृतोऽस्मीतिबुद्धिः॥

अन्धमूषिका। स्त्री। देवताडे।

अन्धपर्णी। पुं। वायोःसप्तमेस्कन्धे। यथा। मरुदिन्द्रःसरभसःसामन्तोमा नुषीतिपाः। देवीविशोऽन्धवर्णोचस्क न्धः सप्तमआभुवादिति ७॥

अन्धः। न। ओदने। अद्यते। अदभ क्षणे। अदेर्नुम् धौचेत्यसुन्। अन्ध यतिवा अन्धदृष्ट्युपघाते। असुन्।

अन्धातमसम्। न। अत्यन्धे। मत्ता न्धकारे। अन्धञ्च तत्तमश्च। अव समन्धे भ्यस्तमस इत्यच्। अन्येषाम पीतिदीर्घः।

अन्धाहिः। पुं। कुंचियाइतिगौडप्रसि द्धे मीनभेदे। इतित्रिकाण्डशेषः॥

अन्धिका। स्त्री। द्यूतभेदे। रजन्या म्। सर्षप्याम्। सिद्धार्थौषधौ। स्त्रीविशेषे। चक्षुषोरोग विशेषे॥

अन्धुः। पुं। कूपे। अम्यते। अमग त्यादौ। अर्जिदृशिकम्यमीति कु

अन्धो

धुंकच। यद्वा। अन्धयति। अन्धदृ- ष्ट्युपघाते। मृगय्वादित्वात्कुः॥

अन्धुलः। पुं। शिरीषद्रौ।

अन्ध्रः। पुं। वैदेहेन कारावस्त्र्यांखिया मुत्पादिते अन्त्यजविशेषे। देशविशे षे॥ यथा। जगन्नाथादूर्ध्वभागमर्वाक् श्रीभ्रमरात्मिकात्। तावदन्ध्राभि धोदेशः मोक्षःश्रीशक्तिसङ्गमे।

अन्नम्। न। भक्ते। ओदने। स्विन्नतण्डु ले। यथा। सतुषंधान्यमित्याहुःसतुषं धान्यमुच्यते। आमंवितुषमित्युक्तं स्विन्नमन्नमुदाहृतमिति वसिष्ठः। ब्रीहियवादौ॥ भक्ष्यभोज्यलेह्यचो ष्यभेदाच्चतुर्विधमन्नंभवति॥ पृथि- व्याम्। उपकरणे॥ औपचारिकम र्थंगृहीत्वा दृष्टश्चोपकरणेऽन्नशब्दः। यथा स्त्रियोऽन्नम् पशवोऽन्नम् विशो ऽन्नं राज्ञामित्यादौ॥ त्रि। भुक्ते। अनिति। अन्यन्तेनेनवा।अन प्राणने। कृवृजृसिद्रुपन्यनिस्वपिभ्योनिदितिन न्॥ यद्वा। अद्यतेस्म। अदभक्षणे। क्तः। अन्नाण इतिनिपातनात्बहु लंतणीतिवा न जग्धिः। यद्वा। अत ति। अत०। धापवस्यज्यतिभ्योनइ तिनः।

अन्नकोष्ठकः। पुं। तण्डुलादिरक्षण स्थाने॥ गोलाइतिकार्य्यायस्यप्रसि

द्धिः । इतिहेमचन्द्रः ।

अन्नगन्धिः । पुं । अतिसारे । उदराम यरोगे । इतित्रिकाण्डशेषः । अन्नस्यगन्ध इव गन्धोऽस्य । उपमानाच्चेतीत्वम् ।

अन्नदः । त्रि । अन्नदातरि ॥

अन्नदा । स्त्री । अन्नपूर्णायांदेव्याम् ।

अन्नदाता । पुं । प्रभौ । अन्नस्यदातरि ।

अन्नपूर्णा । स्त्री । स्वनाम्नाऽतिप्रसिद्धायांदेव्याम् ।

अन्नपूर्णास्थानम् । न । काश्यामतिप्रसिद्धे सिद्धिस्थाने ।

अन्नप्राशनम् । न । अन्नाशने । यथाविधिबालकस्य प्रथमान्नभोजने । षष्ठे अष्टमे वा मासि बालकस्य पञ्चमे सप्तमे वामासि बालिकायाः प्रथमान्नभक्षणरूपसंस्कारइतिस्मार्त्ताः । अन्नस्यप्राशनम्यस्मिन्तत ।

अन्नमयः । पुं । स्थूलशरीरे । प्रथमकोशे । यथा । पित्रभुक्तान्नजादीर्याज्जातोऽन्नेनैववर्द्धते । देहःसोऽन्नमयोनात्मा प्राक्कोर्द्धंतदभावतइति ॥ अन्नस्यविकारःमयट् । यद्वा । प्रकृतमन्नम् । अन्नं प्रकृतमुच्यतेऽस्मिन् वा । तत्प्रकृतवचनेमयट् ॥ स्यान्नसमपञ्चाम् । पञ्चीकृतपञ्चमहाभूततत्कार्यात्मके विराडमूर्त्तौ ।

अन्नविकारः । पुं । रेतसि । शुक्रे । इति राजनिर्घण्टः ।

अन्नादः । त्रि । अन्नस्यभोक्तरि ॥ अन्नमत्तीतिविग्रहेकर्मण्यण् । हीमान्नौ । आमयाविस्वरहिते । पुं । विष्णौ ।

अन्नाशनम् । न । अन्नप्राशने ॥

अन्यः । त्रि । असदृशे । इतरस्मिन् । भिन्ने । अन्यमन्तविलक्षणे । सदृशे । अनिति । अनप्राणने । अघ्न्यादित्वात् ॥

अन्यत । । । अन्यार्थे ।

अन्यतमः । त्रि । भिन्नतमे । बहूनां मध्येनिर्द्धारिते कस्मिन् । न्यायमते अनेकभेदावच्छिन्नप्रतियोगिताकभेदे । अव्युत्पन्नोयम् ।

अन्यतरः । त्रि । निर्द्धार्ये । द्वयोर्मध्ये निर्द्धारितेकस्मिन् । निर्द्धारणेऽइतरच ॥ न्यायमते द्वयावच्छिन्नप्रतियोगिताकभेदे । भिन्नार्थके ॥ अन्यएव । अल्पाच्तरमितिबह्वार्थेतरप् । अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद्द्विबहुविषयेनिर्द्धारणे वर्त्तेते इतिकैयटः । किंयततदृभ्योऽन्यत्रडतराभावादिति विवरणम् ।

अन्यतरेद्युः । । । अन्यतरद्दिवसे । अन्यतरस्मिन्नहनि । सद्यः परदित्या

हिंसान्यतरयश्चादेयुस्पत्ययेवेनिपातितः ।
अन्यतः । ।। अन्यत्रार्थे ॥ अन्यस्मात् । तसिल् ॥
अन्यतस्त्यजायी । त्रि । सपक्षत्यगशीले।
अन्यत्र । ।। व्यतिरेके । अन्यस्मिन् । त्रल् । विनार्थे । यथा । अन्यत्रनिधमातपस्तुः पत्नीकेशान्प्रवापयेत् इति । स्थानान्तरे ।
अन्यथा । ।। वितथे ॥ अपरार्थे ॥ दुष्टे। अन्येनप्रकारेण । प्रकारवचनेथाल् ।
अन्यथासिद्धिः । स्त्री । कार्य्याव्यवहितपूर्ववर्त्तित्वेसतिकार्यानुत्पादकत्वे । सापञ्चविधा । यथा यत्कार्य्यम्प्रति कारणस्यपूर्ववर्त्तिता येनरूपेण गृह्यते तत्कार्यम्प्रति तद्रूप अन्यथासिद्धम् । यथा घटं प्रति दण्डत्वम् । १ ॥ यस्यस्वातन्त्र्येण अन्वयव्यतिरेकौ नस्तः किंतु कारणमादायान्वयव्यतिरेकौ तदन्यथासिद्धम् । यथा घटं प्रतिदण्डरूपम् । २ ॥ अन्यम्प्रतिपूर्ववर्त्तितां गृहीत्वैवयस्य यत्कार्यंप्रति पूर्ववर्त्तित्वं गृह्यते तस्य तत्कार्य्यंप्रति अन्यथासिद्धत्वम् । यथा-घटादिकं प्रतिआकाशस्य ॥ ३ ॥ यत्कार्य्यजनकं प्रति पूर्ववर्त्तित्वंगृहीत्वैव यस्य यत् कार्य्यं प्रति पूर्ववर्त्तित्वं गृह्यते तस्य तत्कार्य्यंप्रति अन्यथासिद्धत्वम् । यथा कुलालपितुर्घटम्प्रति । ४ । अवश्यक्लृप्तनियत पूर्ववर्त्तिनएव कारणत्वसम्भवे तद्भिन्नमन्यथासिद्धम् । यथा घटम्प्रति रासभादिरितिसिद्धान्तमुक्तावली ॥ ५ ॥ यस्य कारणत्वकल्पनांविनाप्यन्यप्रकारेण-कार्यसिद्धिर्भवेत् सोऽन्यथा सिद्धः तद्धर्मोन्यथासिद्धिः ।
अन्यदा । ।। कालान्तरे । अन्यस्मिन्काले । सर्वकान्यकिंयत्तदः कालेदा ।
अन्यपूर्वा । स्त्री । पौनर्भवायां कन्यायाम । एकस्मैवागादिनादत्तायांपुनरन्येनविवाहितायां कुमार्याम् । सा-सप्तधा । यथा । सप्तपौनर्भवाःकन्या वर्ज्जनीयाः कुलाधमाः । वाचादत्ता मनोदत्ता कृतकौतुकमङ्गला । उदकस्पर्शिता याच याचपाणिगृहीतिका । अग्निंपरिगतायातुपुनर्भूप्रसवाचया ॥ इत्येताः कश्यपेनोक्ता दहन्तिकुलमग्निवत । इत्युद्वाहतत्त्वम् ॥
अन्यभृत । पुं । काके ॥ इतिहेमचन्द्रः । त्रि । परेषांपोषके । अन्यंबिभर्त्ति । डुभृञ् । क्विप् ॥
अन्यभृतः । पुं । कोकिले । अन्येनभृतः । इतिहलायुध ।
अन्यवर्द्धितः । त्रि । अन्येन प्रति पालिते ।

। अन्यपुष्टे । पुं । कोकिले । अन्येन वर्द्धित: ।

अन्यवादी । त्रि । अन्यथावादिनि । अस्थिरवादिनि । व्यवहारेपञ्चविधहीनमध्ये जमान्तर्गतहीनविशेषोयम् । यथा । अन्यवादीक्रियाद्वेषीनोपस्थायीनिरुत्तर: । आहूतप्रपलायीचहीन: पञ्चविध: स्मृतइतिनारद: ।

अन्यशाखक: । पुं । शाखारण्डे । स्वशाखामुत्सृज्यान्यशाखोक्तकर्मकारिणि । अन्याशाखा यस्यस: । कप् ।

अन्यादृक् । त्रि । अन्योपमे । अन्यप्रकारे । अन्यइवदृश्यते । दृशिर्प्रेक्षणे । त्यदादिषु दृशइतिक्विन् । आसर्वनाम्न: ।

अन्यादृश: । त्रि । अन्योपमे । अन्यप्रकारे । अन्यइवपश्यति दृश्यतेवा । दृशिर्० । त्यदादिष्विति कञ् । आत्वम् ।

अन्याय: । पुं । अविचारे । परस्वहरणादौ । न्यायभिन्ने । अनौचित्ये । यथा । अन्यायेनापियद्भुक्तं पित्रापूर्वतरैस्त्रिभि: । नतच्छक्यमपाकर्त्तुं क्रमात्त्रिपुरुषागतमितिनारद: । नन्याय: ।

अन्याय्यम् । त्रि । अयोग्ये । यथा । दृष्टार्थसत्त्वेअदृष्टकल्पनायाअन्याय्यत्त्वमिति । नन्याय्यम् ।

अन्येद्यु: । अ । दिवसान्तरे । अन्यस्मिन्नहनि । सद्य:परुदित्यन्यशब्दादेद्युस् प्रत्ययोनिपातित: ।

अन्येद्युष्क: । पुं । विषमज्वरविशेषे । यथा । अन्येद्युष्कस्त्वहोरात्रादेककालं प्रवर्त्ततइति । एककालंदोषाभेदाद्यथा एककालमपि द्वितीयं प्रथमकालेहृद्यवदोषस्थिते: ।

अन्योदर्य्य: । पुं । स्त्री । वैमात्रेये ।

अन्योन्यम् । त्रि । परस्परार्थे । अर्थालङ्कारविशेषे । यथा । क्रिययातुपरस्परं वस्तुनोर्जनने ऽन्योन्यम् । अर्थयोरेकक्रियामुखेनपरस्परं कारणत्वेसत्यन्योन्यं नामालङ्कार: । उदाहरणम् । हंसाणं सरेहिं सिरीसारिज्जइअहसराणं हंसेहिम् । अण्णोण्णंविअ एए अप्पाणं णवरगरुअन्ति । अस्य संस्कृतंयथा । हंसानांसरोभि:श्री:सारीक्रियते अथसरसांहंसै: । अन्योन्यमेवएतेआत्मानंकेवलंगुरुकुर्वन्तीति । श्री: शोभा सारीकरणं श्रेष्ठता सम्पादनम् । अत्रसरोहंसयो: परस्परं शोभासारीकरणरूपोपकारजनकत्वादन्योन्यं नामालङ्कार: । अत्रोभयेषामपि परस्परजनकता मिथ: श्रीसारतासम्पादनद्वारेण । कर्मव्यतिहारे सर्वनाम्नोद्वेभवतइतिद्वित्वम् ।

गृहे । अनु अस० । ल्युट् ॥

अन्वाहार्य्यम् । न । मासिके । दर्शश्राद्धे । पितृयज्ञपिण्डानामनुपश्चात् आह्रियते । हृञ् हरणे । ऋहलोर्ण्यत् । यथा । पितृयज्ञन्तुनिर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् । पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकम् । पितॄणां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधाः । तच्चामिषेण कर्त्तव्यं प्रशस्तेन प्रयत्नतः । इति मनुः । दृष्टे दक्षिणायाम् ॥ अन्वाहरणीये ॥

अन्वाहार्य्यपचनः । पुं । दक्षिणाग्नौ ॥

अन्वाहितम् । त्रि । यदेकस्य हस्ते निहितं द्रव्यं तेनापि पश्चादन्यस्य हस्ते स्वामिने देहीति निहितम् तस्मिन् द्रव्ये ।

अन्विच्छा । स्त्री । अन्वेषणे ।

अन्वितम् । त्रि । मिलिते । युक्ते । अनुगते । कृतान्वये पदादौ ॥

अन्विष्टम् । त्रि । अन्वेषिते ॥ अन्विष्यते स्म । इषइच्छायाम् । क्तः ।

अन्विष्यन् । त्रि । विचिन्वति ।

अन्वीक्षितम् । त्रि । विचारिते ।

अन्वीतम् । त्रि । अन्वित ॥ अनुगते । अनुपूर्वादिण्गताविति धातोः कर्मणि क्तः । पृषोदरादिः । ईङ् गताविच्च स्मादाक्तः ।

अन्वेषणम् । न । अनुसन्धाने । गवेषिते । इषेरनिच्छार्थस्येति युच् ।

अन्वेषणा । स्त्री । अनुमार्गणे । गवेषणायाम् । तर्कादिनायथाबोधितस्य मोक्षान्वेषणे । टाप् ॥

अन्वेषितम् । त्रि । गवेषिते । अन्वेष्यते स्म । एषृ गतौ । इषिपर्यन्तो वा । क्तः ।

अन्वेष्टव्यः । त्रि । मार्गितव्ये । एषितव्ये ।

अन्वेष्टा । त्रि । अनुपदिनि । अन्वेषणकर्त्तरि । पैरखगावनेवारा इति भाषा ।

आपः । स्त्री । भू० । जले ॥ शब्दस्पर्शरूपतन्मात्रसहिताद्रसतन्मात्रादुत्पन्नाः शीतस्पर्शवत्यो ह्यापः । आप्नुवन्ति । आप्लृ व्याप्तौ । आप्नोतेर्ह्रस्वश्चेति क्विप् ह्रस्वत्वं च ।

अप । । । अपकृष्टार्थे ॥ वर्जनार्थे । वियोगे । विपर्यये । विकृतौ । चौर्ये । निर्देशे । हर्षे । अपो वियोगे विकृतौ विपरीते निदर्शने । आनन्दे वर्जने चौर्ये वारणे सम्यगीरितः ॥ वियोगे । अपयाति । विकृतौ । अपाकृतवान् । विपरीते । अपशब्दः । निदर्शने । अपदिशति । आनन्दे । अपहसति । वर्जने । अपत्रिगर्त्तेभ्यो वृष्टो देवः । चौर्ये । अपहरति ।

अपकर्म । न । दुष्क्रियायाम् । अपोपसर्गेण कर्मशब्दस्य कर्मधारयः ।

अपकर्षः । पुं । विद्यमानधर्मापचये । अपकृष्यते । कृषविलेखने । घञ् ।

अपकारः । पुं । द्वेषे । अनिष्टे । अपकरणम् । कृञ् । घञ् ।

अपकारकः । त्रि । अनिष्टकारिणि ॥ अपकरोति । कृ० । ण्वुल् ॥

अपकारगीः । स्त्री । भर्त्सने । अपकारार्थागीर्वाक् ॥

अपकारी । त्रि । धूर्ते । शठे । अपकारके । यथा । अपकारिणिचेत् क्रोधः क्रोधः क्रोधेकथंनते । धर्मार्थकाममोक्षाणां चतुर्णांपरिपन्थिनीति ॥

अपकुशः । पुं । दन्तरोगविशेषे । यथा । वेष्टेपुटाहःपाकस्ताभ्यां दन्ताश्चलन्तिच । अभ्याहताः प्रस्रवन्तिशोणितंदन्तवेदना । आध्मायन्तेस्रुतेरक्तमुखंपूतिचजायते । यस्मिन्सापकुशोनामपित्तरक्तकृतोगदइति ॥७॥

अपकृतः । त्रि । अपकारिणि । न । अपकारे । मित्रस्यनैवापकृतेर्द्विविधा विग्रहःस्मृतस्तयत्र मित्रस्यापकारेद्व्यर्थदर्शनात् ।

अपकृष्टः । त्रि । अधमे । हीने । अपकृष्यतेस्म । कृषविलेखने । क्तः ।

अपक्रमः । पुं । पलायने ॥ अपक्रमणम् । क्रमुपादविक्षेपे । घञ् । अक्रमे ॥

अपक्रिया । स्त्री । द्रोहे ॥ अपकरणम् । कृञःशश्चेतिशः ॥

अपक्रोशः । पुं । निन्दने । जुगुप्सने । अपक्रोशनम् । क्रुश० । घञ् ।

अपक्वम् । त्रि । अपरिणते । आमे । न पक्वम् ॥

अपक्षेपणम् । न । अधोदेशसंयोगहेतौ कर्मविशेषे ॥ अपपूर्वात् क्षिपेर्ल्युट् ॥

अपगतः । त्रि । मृते । पलायिते । दूरीभूते । गते । अपगच्छतिस्म । गम्लृ० । गत्यर्थेतिक्तः ॥

अपगमः । पुं । अपगमने । गमेरप् ।

अपगा । स्त्री । नद्याम् । त्रि । अपगामिनि । अपगच्छति । गमल्लृगतौ । अन्येभ्योपीतिडः । टाप् ।

अपघनः । त्रि । घनशून्ये ॥ पुं । हस्तपादाद्यङ्गेषु । अवयवे । अपहन्यते । अपघनोऽङ्गमिति करणेऽपघनादेशश्च ॥

अपघातः । पुं । अपहनने ॥ अपहननम् । हन्तेर्घञ् । हस्यघः । नस्यतः ।

अपचयः । पुं । व्यये । हानौ । अपकारे । अपचयनम् । चिञ्चयने । एरच् ।

अपचायितम् । त्रि । अर्चिते । अपचाय्यतेस्म । चायृपूजानिशामनयोः । क्तः ।

अपचारः । पुं । अहिताचरणे । यथा । येनिप्रदोषाश्चभवन्तिशिश्ने पञ्चोप

दृशाविविधापचारैरिति। वर्णधर्मव्यतिकरे। दोषे। अविनये।

अपचारिणी। स्त्री। व्यभिचारिण्याम्॥ अपचारोऽस्त्यस्याः। इनिः।

अपचारी। त्रि। अपचारवति॥

अपचितम्। त्रि। अर्चिते। क्षीणे। व्ययिते। अपचाय्यते स्म। चायृपूजानिशामनयोः क्तः। चायतेश्चिरिति चिभावः॥

अपचितिः। स्त्री। पूजायाम्। व्यये। निष्कृतौ। हानौ। अपचीयते अपचाय्यतेऽनया अपचायनं वा। चायृपूजादौ। क्तिन्। चायतेःक्तिनि चिभावो वाच्यः।

अपची। स्त्री। गण्डमालाया अवस्थाविशेषे। यथा। ते ग्रन्थयः केचिदवाप्तपाकाः स्रवन्ति नश्यन्ति भवन्ति चान्ये। कालानुबन्धं चिरमाद्दधाति सैवापचीति प्रवदन्ति केचिदिति। तेग्रन्थयः गण्डमालाया एव गण्डाः॥

अपजयः। पुं। भङ्गे। पराजये। अपजयनम्। जिजये। एरच्॥

अपटान्तरम्। त्रि। आसक्ते। अव्यवहिते। संसक्ते॥ पटेन तिरस्करिण्या अन्तरम्। नपटान्तरमच॥

अपटी। स्त्री। काण्डपटे। वस्त्रमावरणे। कनात इति भाषा। इतिहेमचन्द्रः॥



त्रि। पटशून्ये॥

अपटुः। त्रि। अचतुरे। कार्याक्षमे। पटोरन्यः। रोगिणि। आमयाविनि॥

अपतर्पणम्। न। रोगादौ भोजनाभावे। लङ्घने। इतिहेमचन्द्रः। अपपूर्वात् तृपेर्ल्युट्।

अपतानकम्। न। वायुरोगविशेषे। प्रताने। यथा। दृष्टिं संस्तभ्य संज्ञां च हत्वा कण्ठेन कूजति। हृदि मुक्ते नरः स्वास्थ्यं याति मोहं वृते पुनः। वायुना दारुणं प्राहुरेके तदपतानकमिति।

अपत्यम्। न। सन्ताने। दुहितरि। पुत्रे। नपतन्ति पितरोऽनेन। पत्लृगतौ। वाहुलकाद्यत्। अघ्न्यादिर्वा। यस्मिन्नित्त्यं तस्यापतनं तस्यापत्यमितिफलितोऽर्थः। तथा च पौत्रादिरपि पितामहादीनामपतनहेतुरिति तेषामपत्यं भवति॥

अपत्यदा। स्त्री। क्षुपविशेषे। गर्भदात्र्याम्॥

अपत्यपथः। पुं। भगे। योनौ॥

अपत्यशत्रुः। पुं। कुलीरे। कर्कटे॥

अपत्रः। पुं। करीरे। नविद्यन्ते पत्राणि यस्य। त्रि। पत्रहीने॥

अपत्रपः। त्रि। निर्लज्जे। अपगता त्रपा यस्य सः॥

अपत्रपा। स्त्री। परतो ह्रियाम्। पित्रा

दे: पुरतोजातलज्जायाम् ॥ ह्री भावे । इतिरत्नकोषः ॥

अपत्रपिष्णुः । त्रि । लज्जाशीले । लज्जाशीले । स्वभावतः सत्रपे । अपत्रपते । अलंकृञिति तीष्णुच् ॥

अपथम् । न । । । अमार्गे । पथोऽभावः । नञिति तत्पुरुषः । पथोविभाषेतिपाक्षिकोऽप्रत्ययः । अपथानिगाहते मूढः । अपथंनपुंसकम् । तत्पुरुषस्यैव । अपथोदेशः । अपथान दी । अपथे पदमर्पयन्तिहि श्रुतवन्तोपिरजोनिमीलिताः । योनौ ।

अपन्थाः । पुं । अपथे । मार्गाभावे । पथोऽभावः नञिति तत्पुरुषः । अपथंनपुंसकमिति कृतसमासान्तस्यनिर्देशात्क्लीबत्वम् ।

अपथ्यम् । त्रि । रोगयभोज्ये । अहिते । नपथ्यम् ।

अपदस्थः । त्रि । स्वकर्मच्युते ॥

अपदानम् । न । वृत्तकर्मणि । अवदाने ॥ इत्तिः प्रवर्त्तनं साप्रशस्ता विद्यते यत्र तत्र । यत्र कर्मणि इत्तिः सर्वैः प्रशस्यते तस्मिन्नित्यर्थः । दैप शोधने । भावे ल्युट् । निष्पादाने । अपकृष्टदानम् ।

अपदान्तरम् । त्रि । अनन्तरे । अव्यवहिते । अपदान्तरमत्र ।

अपदिशम् । न । । । दिक्कोणे । दिशोर्मध्ये । विदिशि । दिशोर्मध्यम् । अव्ययमिति योगविभागात्समासः । दिग्ग्रहणस्यशरदादिषु पाठात्कृत् । अव्ययीभावश्चेति क्लीबत्वाव्ययत्वयोर्विधानम् । तेननाव्ययीभावादतोमत्वपंचम्या इत्यादिप्रवृत्तिः ॥ अपेतिप्रत्ययवाची भावस्येन समासेतु टजभावेपेक्षितः ।

अपदिष्टः । त्रि । प्रयुक्ते । यथाकालात्ययापदिष्टः । अपदिश्यते । दिशअतिसर्जने । क्तः ।

अपदेशः । पुं । शरव्ये । लक्ष्ये । निमित्ते ॥ व्याजे ॥ स्थाने । अपदेशनम् अपदिशते वा । दिश अतिसर्जने । घञ् ।

अपध्वंसजः । पुं । वर्णसङ्करे । यथा। शूद्राणांतु सधर्माणः सर्वेऽपध्वंसजाः स्मृता इतिमनुः ।

अपध्वस्तः । त्रि । परित्यक्ते । निन्दिते । अवचूर्णिते । अपध्वंसतेस्म । ध्वंसुअधःस्रंसने गतौच । क्तः ॥

अपनयनम् । न । अधःप्रापणे । दूरीकरणे । खण्डने ॥

अपनीतः । त्रि । विनीते । कृते ।

अपनुतिः । स्त्री । अपनोदे । खण्डने ।

अपनेयः । त्रि । अपनोद्ये । निरस्ये ॥

अपनोदः । पुं । अपनोदने ।

अपनोदनम् । न । दूरी करणे ॥

अपपात्रितः । त्रि । उत्कटदोषैर्ज्ञातिभिर्भिन्नोदकीकृते । यथा । अपपात्रितस्यरिक्तमपिण्डोदकादि निवर्त्तन्त इतिमत्स्यपतन्तो ।

अपभ्रंशः । पुं । अपशब्दे । अशास्त्रशब्दे । असंस्कृतशब्दे । ग्राम्यभाषायाम् । यथा दण्डी । आभीरादिगिरःकाव्येष्वपभ्रंशइतिस्मृतः । शास्त्रेषुसंस्कृतादन्यदपभ्रंशतयोदितमिति । संस्कृतादपभ्रश्यति । भ्रंशुअधःपतने । पचाद्यच् । पतने । यथा । अन्याकृतिर्भवति महतामप्यपभ्रंशनिष्ठेत्यभिज्ञानशाकुन्तला ।

अपमः । पुं । क्रान्तौ । सूर्यगमनमार्यतिर्यग्गोलरेखायाम् ।

अपमानम् । न । अनादरे । अस्यपर्याया यथा । स्यादवज्ञापरीहारः परिहारः पराभावः । अपमानंपरिभवस्तिरस्कारस्तिरस्क्रिया । अवहेलावहेलास्यादवहेलनहेलने । चमेनिकारधिक्कारौपर्यायाःस्युरनादर इतिशब्दरत्नावली । यथा । वेदस्यनाश्च्यामात्वअपमानादधोगतिरिति ।

अपमित्यकम् । न । ऋणे ॥

अपमृत्युः । पुं । विनारोगेमरणे ॥

पश्चिमस्यमङ्गदंष्ट्रिवृश्चिकविषपतनाशनवज्राग्निविषवन्धजलप्रवेशाद्युपतादिजन्यमरणे इतिकेचित् । अपकृष्टोमृत्युः ।

अपम्लषितम् । न । अविस्पष्टवाक्ये ॥

अपयानम् । न । पलायने । याप्रापणे अपपूर्वः । ल्युट् ।

अपरम् । न । गजपश्चार्द्धे ॥ त्रि । इतरस्मिन् । अर्वाचीने । निकृष्टे । पृथ्यादिसामान्ये । कार्ये । सन्निकृष्टे । परं नभवतीत्यपरम् । पुं । पादःपश्चिमे । अपरःपश्चिमःपादः इतिगजप्रकरणे वैजयन्ती ।

अपरक्तः । त्रि । अननुकूले ॥ विरक्ते ।

अपरतालः । पुं । गिरिविशेषे ॥

अपरतिः । स्त्री । निवृत्तौ ॥ अपरमेभावे क्तिन् ।

अपरन्तु । । पश्चादर्थे ॥

अपरत्वम् । न । अपरव्यवहारकारणे॥ तद्द्विविधम् । दिक्कृतं कालकृतञ्चेति । समीपस्थे दिक्कृतम् कनिष्ठे कालकृतमिति । अपरस्यभावः ।

अपरपक्षः । पुं । कृष्णपक्षे ।

अपरराचः । पुं । रात्रिशेषे । उत्तरार्द्धे । अपरंरात्रेः । पूर्वापराधरेति समासे अचः सर्वैकदेशेत्यच ।

अपरवक्त्रम् । न । वैतालीयसंज्ञकेवृत्ते ॥

अपरवैराग्यम् । न । वैराग्यविशेषे । यतमानसंज्ञाव्यतिरेकसंज्ञैकेन्द्रियसंज्ञावशीकारसंज्ञाभेदाच्चतुर्विधे सम्प्रज्ञातस्यान्तरङ्गे । असम्प्रज्ञातस्य बहिरङ्गे ॥

अपरस्परः । चि । क्रियायाः क्रियावतां च सातत्ये । अपरस्परश्चेतिद्वन्द्वः । अपरस्पराः क्रियासातत्ये इति सुट्निपात्यते क्रियासातत्ये । अपरस्परं गच्छन्ति । सततमविच्छेदेन गच्छन्तीत्यर्थः । निर्दिष्टं कर्मसातत्ये सुधीभिरपरस्परम् । क्रियावतां सातत्ये तुलिङ्गत्रयम् । अपरस्पराः सार्थाः स्त्रियश्च गच्छन्ति अपरस्पराणि कुलानि ॥

अपरा । स्त्री । जरायौ । पश्चिमदिशि ॥

अपरागः । पुं । अप्रीतौ । द्वेषे ॥

अपराङ्गम् । न । गुणीभूतव्यङ्ग्यभेदे ॥ इतिकाव्यप्रकाशः ॥

अपराजितः । पुं । ईशे । विष्णौ ॥ ऋषिभेदे ॥ नपराजितः । गेन्धधूपे । चि । अजिते ॥

अपराजिता । स्त्री । उमायाम् ॥ जयायाम् । आर्षीतिप्रसिद्धायाम् । जयन्त्याम् । अशनपर्ण्याम् । शेफाल्याम् ॥ शमीभेदे । शंखिन्याम् ॥ क्षुपभेदे । स्वल्पफलायाम् । गिरिकर्ण्याम् । विष्णुक्रान्तायाम् । श्वेतनीलपुष्पभेदाद्द्विविधे अपराजिते । अपराजिते कटूमेध्ये शीतेकण्ठ्ये सुदृष्टिदे । कुष्ठमूत्रत्रिदोषाम शोथव्रणविषापहे । कषायेकटुपाकेचतिक्तेचस्मृतिबुद्धिदे । ऐशान्यांदिशि । नपराजिता ॥ ब्रह्मलोकेहिरण्यगर्भपुर्य्याम् । ब्रह्मचर्यसाधनवद्भ्योऽन्यैर्नजीयते इति । जी० । क्तः ॥

अपराद्धः । चि । अपराधिनि । अपराध्यति । राध० । क्तः ॥

अपराद्धपृषत्कः । चि । लक्ष्याप्राप्तशरे । अपराद्धः पृषत्कोवाणोऽस्य । अपराद्धपृषत्कोसौ लक्ष्याद्यश्च्युतसायकः ॥

अपराधः । पुं । आगसि । दण्डयोग्यकर्मणि । अपराधनम् । राधसंसिद्धौ घञ् ॥ चि । राधाभाववति ॥

अपराधी । त्रि । कृतापराधे । भेददर्शिनि । अथोक्तंविद्यारण्यगुरुभिः । विप्रश्चवत्चन्द्रलोकदेवभूतादिकं जगत् । स्वस्मादुद्वेदेन पश्यन्तंकोशयेदपराधिनम् । यदस्तितन्नजानातिगन्तेवास्ति तदीक्षते । इत्येवमपरधोस्यविद्यते भेददर्शिनइति । योन्यथासन्तमात्मानमन्यथा प्रतिपद्यते । किंतेननकृतं पापंचौरेणात्मापहारिणोति ॥

अपरान्तः । चि । पाश्चात्ये ॥ अपरान्तास्तुपाश्चात्या इतियादवः । समुद्रमध्य

देशवर्त्तिजने। यथा। अवकाशंकिलोदन्वान् रामायाभ्यर्थितोददौ। अपरान्तमहीपालव्याजेनरघवेकरमिति॥

अपराप्रकृतिः। स्त्री। भूमिरापोनलोवायुः खंमनोबुद्धिरेवच। अहंकार इतीयंमेभिन्नाप्रकृतिरष्टधा। अपरेयमितिभगवद्गीता॥ चञ्चलस्वभावायाम्। अपरायांशक्तौ॥ अपराचासौप्रकृतिश्च॥

अपराभुक्तिः। स्त्री। पातालादिकलान्ताध्ववर्त्तिविचित्रैश्वर्य्यसम्पन्नतत्तद्भुवनवासित्वभावे॥

अपरामुक्तिः। स्त्री। मंत्रमंत्रेश्वरत्वे॥ अपराचासौमुक्तिश्च॥

अपराविद्या। स्त्री। ऋग्वेदादिविद्यायाम्॥ ऋग्यजुःसामाथर्वाख्यावेदाअङ्गानिषड्द्विज। शिक्षाकल्पोव्याकरणंनिरुक्तंज्योतिषांगतिः॥ छन्दोभिधानंमीमांसाधर्मशास्त्रंपुराणकम्। न्यायोवैद्यकगान्धर्वंधनुर्वेदोर्थशास्त्रकम्॥ अपरेयं पराविद्यायया ब्रह्मावगम्यते॥ अपराचासौविद्याच॥

अपराशक्तिः। स्त्री। अपराप्रकृतौ॥ अपराचासौशक्तिश्च॥

अपराह्णः। पुं। दिनान्तांशे॥ तस्यभेदाः। द्विधाविभक्तस्यदिनस्यशेषभागः। त्रिधाविभक्तस्यदिनस्यतृतीयभागः। सतुविंशद्दण्डदिनमानेविंशतिदण्डात्परं दशदण्डंयावत्। पञ्चधाविभक्तस्यदिनस्यचतुर्थभागः। सत्वष्टादशदण्डात्परं षट्दण्डंयावदितिश्रुतिस्मृतिप्रसिद्धाः॥ अह्नअपरमपराह्णः। पूर्वापरैक्ष्येकदेशिसमासः। टच्। अ ह्नोह्नएतेभ्यइत्यह्नादेशः। अह्नोदन्तादितिणत्वम्॥

अपराह्णतनः। त्रि। अपराह्णे भवेवस्तुनि। आपराह्णिके॥ अपराह्णः सोढोऽस्य। विभाषापूर्वाह्णापराह्णाभ्यामितिट्युट्युलौ तुट्च॥

अपराह्णेतनः। त्रि। अपराह्णोद्भवेवस्तुनि। आपराह्णिके॥ अपराह्णेभवः। ट्युट्युलौतुट्च। घकालतनेष्विति सप्तम्याअलुक्॥

अपरिकलितः। त्रि। अज्ञाते॥ अदृष्टे॥ नपरिकलितः॥

अपरिग्रहः। पुं। असङ्ग्रहे॥ अस्वीकारे॥ नपरिग्रहः॥ परिव्राजि॥ नविद्यतेकन्याकौपीनाच्छादनादिव्यतिरिक्तःपरिग्रहोयस्य॥त्रि। परिग्रहहीने॥

अपरिच्छदः। त्रि। दरिद्रे॥ नविद्यते परिच्छदोयस्यसः॥

अपरिच्छिन्नम्। त्रि। परिच्छेदरहिते। असीमनि॥

अपरिज्ञानम् । न । तत्त्वाविवेके । मू ढतायाम् ॥

अपरिम्लानः । पुं । रक्ताम्लानवृक्षे । त्रि । म्लानिरहिते ।

अपरिसङ्ख्यानम् । न । आनन्त्ये । अप रिसंख्यानम् ॥

अपरिहार्य्यः । त्रि । परिहर्त्तुमशक्ये । अत्याज्ये ।

अपरेद्युः । अ । अपरदिने । अपरे अह नि । सद्यः परुदित्यपरस्माद्देद्युस्॥

अपरोक्षम् । त्रि । स्पष्टे । असंभाव नादिनिरासेन विचारविपाकात्तेनैव प्रमाणेन जनितं ज्ञानं प्रतिबन्धाभा वात् फलं जनयद्दपरोक्षमित्युच्यते। अक्षाणामिन्द्रियाणां परोऽतीतोऽभव तीत्यपरोक्षम् । नपरोक्षमा ।

अपर्णा । स्त्री । पार्वत्याम् । नपर्णान्य स्याः । तपसि पर्णानामप्यनशनात्। त्रि । पर्णशून्ये ।

अपर्य्यरीकः । त्रि । विस्तेजसि ।

अपर्य्याप्तम् । त्रि । असमर्थे । पर्याप्ति शून्ये ।

अपर्वदण्डः । पुं । रामशरवृक्षे । इति राजनिर्घण्टः ॥

अपलम् । न । कीलके । त्रि । मांस हीने ॥

अपलापः । पुं । प्रेमणि । अपह्नवे । म तोऽपलक्षणेनकथने । भार्य्यायाक म भरयामीत्यायुक्तौ । अपलपनम् । घञ् ।

अपलाषिका । स्त्री । तृष्णायाम् । इ ति हेमचन्द्रः ।

अपवरकः । पुं । वासौकसि । गर्भगृहे । अपव्रियते वृणोतिवा । ष्वुन् । क्रुशादिभ्यः संज्ञायांवुन् । फत्रूस त्वा ख्टैन इति प्रसिद्धे । आवरके । य था । दीपोऽपवरकस्यान्तर्वर्त्तते त तप्रभावहिरितिध्यानदीपे विद्यार- ण्यगुरवः ।

अपवर्गः । पुं । त्यागे । मोक्षे । क्रिया वसानसाफल्ये । फलप्राप्तिपूर्विकायां क्रियापरिसमाप्तौ । कर्मफले । तद त्यन्तविमोक्षोपवर्गः । न्या० १ । २२ । तस्यदुःखस्य अत्यन्तविमोक्षः स्वस मानाधिकरणदुःखासमानकालीनो ध्वंसः । तस्य च जन्मापायादेव सम्भ व इत्याशयेनदुःखेन अत्यन्तं- विमुक्तिरपवर्गइति भाष्यम् । दुःखे- नदुःखानुषङ्गेणेत्यर्थः ॥ अपवर्जनम पवर्गः । वृजीवर्जने । भावेघञ् । दुः खाभावे । नाशे । पूर्णतायामितिध रणिः ।

अपवर्गगुरुः । पुं । सहामित्रे । श्रौ मोक्षमार्गप्रदर्शके ।

अपवर्जनम् । न । दाने । निर्वाणे । मोक्षे । परित्यागे ॥ वृजी वर्जने अपपूर्वः । भावे ल्युट् ।

अपवर्जितः । त्रि । परिहृते । त्यक्ते ।

अपवर्त्तनम् । न । परिवर्त्ते । अन्यथाभावे ॥

अपवर्त्तितः । त्रि । सञ्चालिते ।

अपवादः । पुं । निन्दायाम् । आज्ञायाम् ॥ विश्रम्भे । प्रणये । बाधके । अपवादो नाम रज्जुविवर्त्तस्य सर्पस्य रज्जुमात्रत्ववत् वस्तुविवर्त्तस्यावस्तुनोऽज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वमिति । कार्य्यस्य कारणमात्रसत्तावशेषकम् कारणस्वरूपस्थितिरेकेण कार्य्यस्यासत्तावधारणं वाऽपवाद इत्यर्थः । अपवदनम् । वद अभिवादनस्तुत्योः । भावे घञ् । अपोद्यते । वद व्यक्तायां वाचि । घञ् वा ।

अपवारणम् । न । अन्तर्द्धौ । वृञ् आच्छादने । चुरादिण्यन्तादस्माद्भावे ल्युट् ।

अपवारितम् । त्रि । अन्तर्हिते । आवृते ॥

अपवित्रः । त्रि । अशुद्धे । न पवित्रः ।

अपविद्धम् । त्रि । प्रतिक्षिप्ते । प्रत्याख्याते ॥ ध्वस्ते । त्यक्ते । पुं । पुत्रविशेषे यथा । मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा । यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते इति मनुः ।

अपविषा । स्त्री । निर्विषीतृणे । इति राजनिर्घण्टः ।

अपवृतिः । स्त्री । अपवारणे ।

अपवृत्तः । त्रि । पराङ्मुखीभूते ।

अपशब्दः । पुं । असंस्कृतशब्दे । अपभ्रंशे । अपभ्रष्टः शब्दोऽपशब्दः । शास्त्रेनापशब्दो नवक्तव्यः । यथाह भगवान्भाष्यकारः । तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः म्लेच्छा मा भूमेत्यध्येयं व्याकरणमिति । म्लेच्छितवा इत्यस्य पर्यायो नापभाषितवा इति कृत्यार्थे इति तवै प्रत्यय इति कैयटः । यथैव हि शब्दज्ञाने धर्मः एवमपशब्दज्ञानेऽप्यधर्मः । इति महाभाष्यम् । एतच्च अपशब्दज्ञानमधर्मसाधनम् धर्महेतुशब्दज्ञानविरोधित्वात् यद्यद्विरोधि तत्तद्विरोधिफलकम् यथा श्लैष्मिकद्रव्यसेवा श्लेष्मवतः इत्यनुमानम् । श्लैष्मिकद्रव्यसेवया श्लैष्मिकव्याधिसम्भवस्तद्विपरीतसेवयारोग्यमित्यर्थः ।

अपशुक् । पुं । आत्मनि । अपगता शुक् यस्मात् ॥

अपशोकः । पुं । अशोकपादपे ।

अपष्टम् । न । अङ्कुशाग्रे । इति हेमचन्द्रः ।

अपष्ठु । । ( निरवद्ये ॥ शोभनार्थे ॥ वि परीते ॥

अपष्ठुः । पुं । काले ॥ त्रि । वामे । प्रतिकूले । विरुद्धार्थे ॥ अपतिष्ठति । ष्ठाग तिनिवृत्तौ । अपदुःसुषुभ्यःस्थ इति कुः सुषामादिः ।

अपष्ठुलम् । त्रि । निन्दिते । विपरीते ॥

अपस् । न । यज्ञकार्ये ॥ अपनशब्दार्थे ॥ आप्नोति । आप्नृ० । आपःकर्माख्यायांह्रस्वोनुट्‌चवेत्यसुन् पाक्षिकोनुडभावः ॥

अपसदः । पुं । अधमे । नीचे ॥ अपकृष्ट अपकृष्टेवासीदति । षद्‌लृविशरणा दौ । पचाद्यच् ॥

अपसरः । पुं । अपसरणे ॥ सर्त्तेरप् ॥

अपसरणम् । न । स्थानात्स्थानान्तरगमने ।

अपसर्जनम् । न । परिवर्जने ॥ दाने ॥ आम्नाते ॥ अपसृज्यते । सृज० ल्युट् ॥ मोक्षे ॥ मारणे ॥

अपसर्पः । त्रि । चरे ॥ अपसर्पति । सृप्ल गतौ । पचाद्यच् ॥ पुं । अक्षिभेदे ॥ अपक्रमे ॥

अपसर्पणम् । न । प्रतीपगमने ॥

अपसलवि । । । पितृतीर्थे । प्रदेशिन्यङ्गुष्ठयोर्मध्ये ॥ यथा । प्रदेशिन्यङ्गुष्ठयोरन्तरा अपसलवि अपसव्यं वा तेनपि तृभ्योनिदधाति इतिआद्गतस्य भट्टभाष्यधृतसूत्रम् ।

अपसव्यम् । त्रि । शरीरदक्षिणे । शरीरस्यदक्षिणभागे ॥ प्रतिकूले । विरुद्धार्थे ॥ न । पितृतीर्थे । अपसलवि ॥ अपगतम् अपक्रान्तंवा सव्यात् ।

अपसारणम् । न । अपनयने ।

अपसारितः । त्रि । उत्सारिते ॥

अपसिद्धान्तः । पुं । स्वीकृतसिद्धान्तात्प्रच्यवे । तल्लक्षणमाह । सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गो ऽपसिद्धान्तः । ५ । ६६ सिद्धान्तं स्वशास्त्रकाराभ्युपगतमर्थं स्वीकृत्याऽनियमात्तन्नियमप्रच्यवात् कथाप्रसङ्गइति । तथाच कथायां स्वीकृतसिद्धान्तप्रच्यवोऽपसिद्धान्तः। तथाचसांख्यमतेनाहं वदिष्यामीत्यभ्युपेत्यारब्धायांकथायाम् आविर्भावस्याविर्भावाभ्युपगमेऽनवस्थेति दूषणोद्धारायाविर्भावस्यासतउत्पत्तिंयद्यभ्युपेतितदाऽपसिद्धान्तः। यस्त्वेकदेशिमतेनकथामारभते तस्यशास्त्रकाराभ्युपगमविरोधेनापसिद्धान्तइतिविबोधयितुमभ्युपेत्येत्युक्तम् ॥ सौगतास्त्वपसिद्धान्तंदूषणं नमन्यन्ते इत्यन्यदेतत् ॥ अपकृष्टः सिद्धान्तः ॥

अपसोपानः । पुं । हस्तिमल्ले ॥

अपह्नवः । पुं । स्नेहे । अपलापे । इति मेदिनीहेमचन्द्रौ । अपह्नवनम् । ह्नुङ् अपनयने । ऋदोरप् ।

अपह्नुतिः । स्त्री । अपलापे । अर्थालंकारे ॥ प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः । उपमेयमसत्यं कृत्वोपमानं सत्यतया यत् स्थाप्यते साऽपह्नुतिः । उदाहरणम् । अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि । अमुष्येयं मन्ये विगलदमृतस्यन्दिशिशिरे रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥ इत्थं वा । बतसखि नियदेतत् पश्य वैरं स्मरस्य प्रियविरहकृशेऽस्मिन् रागिलोके तथा हि । उपवनसहकारोद्भासिभृङ्गच्छलेन प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् । अत्र हि न सभृङ्गाणि सहकाराणि अपितु सकालकूटाः शरा इति प्रतीतिः ॥ एवं वा । अमुष्मिंल्लावण्यामृतसरसि नूनं मृगदृशः स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः । यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे शिखा धूमस्येयं परिणमति रोमावलिवपुः । अत्र न रोमावलिः धूमशिखेयमिति प्रतिपत्तिः ॥ एवमियं भङ्ग्यन्तरैरप्यूह्या । अपह्नवनम् । ह्नुङः



तिम् ।

अपांनाथः । पुं । समुद्रे । अकूपारे । इति राजनिर्घण्टः ॥

अपाकः । पुं । अजीर्णतायाम् । त्रि । पाकाभावविशिष्टे ।

अपाकरणम् । न । निराकरणे । अपाकृपूर्वात् कृञो ल्युट् ।

अपाकशाकम् । न । आर्द्रके । इति राजनिर्घण्टः ॥

अपाकृतम् । त्रि । अपोहिते । त्यक्ते । अपाकारि । उकृञ॰ । क्तः ।

अपाकृतिः । स्त्री । विकारे । अपाकरणे ।

अपाच्यम् । त्रि । प्रत्यचे । इति त्रिकाण्डशेषः ॥

अपाङ्क्तेयः । त्रि । पङ्क्तिभोजनानर्हे । सङ्क्तिः सहैकपंक्त्यां भोजनायोग्ये ॥ ते च । येस्तेनपतितक्लीबा ये च नास्तिकवृत्तयः इत्यादिवचनैर्मनुनोक्ता बोध्याः ।

अपाङ्गः । पुं । नेत्रान्ते । तिलके । त्रि । अङ्गहीने । अपगतोऽङ्गात् । निरादय इति समासः ॥ अपकृष्टोऽङ्गाद्वा । अपकृष्टान्यङ्गान्यस्माद्वा । अपाङ्गति । अङ्गिगतौ । पचाद्यच् वा ॥

अपाङ्गकः । पुं । अपामार्गे । नेत्रान्ते । त्रि । अंगहीने ।

अपाङ्गदर्शनम् । न । कटाक्षे । अपाङ्गेन नेत्रान्तेन दर्शनम् । इति हेमचन्द्रः ।

अपाग । त्रि । दक्षिणदिग्भवेवस्तुनि अपाचीने ।

अपाची । स्त्री । दक्षिणदिशि ॥ अञ्चो मध्येअंचतिसूर्यः । अपेत्यअर्थम ध्यार्थे अपाचिमितिवत् । अंचुगति पूजनयोः । ऋत्विगादिनाक्विन् । उगितश्चेतिङीप् ।

अपाचीनम् । त्रि । विपर्यस्ते । अपाग र्थे । दक्षिणदिग्भववस्तुनि । अपागे व । विभाषाञ्चेरदिक् स्त्रियामिति खः । तस्य ईनादेशः ॥

अपाच्यम् । त्रि । दक्षिणदिग्भवे । पा कानर्थे । युप्रागपागित्यादिनायः पि कोयत् । न पाच्यम् ।

अपाटवम् । न । रोगे । अपटुत्वे ॥ न विद्यते पाटवं यस्मिन् ।

अपात्रम् । न । योग्यताहीने । निन्दि ते । विद्यातपोहीने । नटविटादौ । कुपात्रे । नपात्रम् । अपात्रे पातयेद्द त्तं सुवर्णंनरकार्णवे । इतिमलमा सतत्त्वम् ॥

अपात्रीकरणम् । न । नवविधपापमध्ये पापविशेषे । सचतुर्विधंभवति यथा । निन्दितधनादानम् १ । वाणिज्य म् २ । शूद्रसेवनम् ३ । असत्यभाप णम् ४ । इति । यथाहमनुः । निन्दि तेभ्योधनादानंवाणिज्यंशूद्रसेवनम् ।

अपात्रीकरणंज्ञेयमसत्यस्यचभाषण मिति ।

अपादानम् । न । विश्लेषेऽवधिभूते । पं चमीकारके । यस्माद्वस्तुनोवस्त्वन्तर स्यचलनंभवतितस्मिन् । विश्लेषहेतु क्रियाश्रयत्वेसतिविश्लेषाश्रय इत्य र्थः । तच्च कारकार्थेपंचमीस्यात् । यथा । यतोऽपायः । यथावृक्षात्प र्णं पतति १ । यतो भीः । यथाव्या घ्राद्बिभेति २ । यतोजुगुप्सा । यथा पापात् जुगुप्सते धीरः ३ । यतःपरा जयः । यथा सिंहात् पराजयते हस्ती ४ ॥ यतःप्रमादः । यथा धर्मात् प्र- माद्यतिनीचः ५ । यत आदानम् । यथा भूपात् धनमादत्तेविप्रः ६ । य तो भूः । यथा पितुः पुत्रोजायते ७। यतस्त्राणम् । यथा व्याघ्रात् गां रक्ष- तिगोपः ८ । यतो विरामः । यथा पापाद्विरज्यतिविप्रः ९ । यतोऽन्तर्धिः । यथा गुरोरन्तर्द्धत्तेशिष्यः १० । य- तो वारणम् । यथायवेभ्योगां वारय ति ११ ॥ इतिमुग्धबोधटीका ॥

अपानः । पुं । गुदस्थवायौ । नाभेरध स्तात्गमनवति मलापनयनव्यापारे गपाख्यादिस्थानवर्त्तिनिवायौ ॥ य था । अधोनयत्यपानस्तु आहारञ्च क्रमादधः । मूत्रशुक्रवहोवायुरपान

रक्षम् । अयोग्यानामकामाकांच वाक्यम् । ५।३ । अनर्थके । अर्थे ॥

अपावृतः । त्रि । पिहिते । अप्रतिबद्धे । स्वतन्त्रे । उद्घाटिते । अपगतमावरणमस्य ॥

अपावृत्तम् । त्रि । लुठिते । पराङ्मुखे ।

अपाश्रयः । पुं । चन्द्रातपे । प्रांगनावरणे । त्रि । आश्रयशून्ये । अधीने ॥

अपासनम् । न । मारणे । अपक्षेपे । भावेल्युट् ।

अपास्तः । त्रि । निरस्ते । अवधीरिते ।

अपि । I । सम्भावनायाम् । प्रश्ने । शङ्कायाम् । गर्हायाम् । समुच्चये । युक्तपदार्थे । क्रियाकारं क्रियायाम् । कामकारक्रियासु । अन्वयायाम् । अवधारणे । पुनरर्थे । नपिबति । पिगतौ । क्विप् । आगमशास्त्रस्यानित्यत्वादनुक् ।

अपिगीर्णम् । त्रि । ईरिते । स्तुते । वर्णिते । गीर्णे । अपिगीर्यतेस्म । गनिगरणे । क्तः । निष्ठातस्यनः ।

अपितु । I । किन्त्वर्थे । यदर्थे । यद्यपि ।

अपिधानम् । न । आच्छादने । अपिपूर्वकाट्डुधाञोल्युट् ॥ त्रि । पिधानरहिते ॥

अपिनद्धः । त्रि । परिहिते वस्त्रादौ । पिनद्धे । अपिनह्यतेस्म । णहबन्धने । क्तः ॥

अपिहितः । त्रि । छादिते । अपिधीयतेस्म । डुधाञ् । क्तः । दधातेर्हिः ।

अपीच्यम् । त्रि । अतिसुन्दरे ।

अपीतिः । स्त्री । प्रलये । अत्यये । एकीभावे ।

अपीनसम् । न । पीनसरोगे । ह्रस्वरभसः । त्रि । तद्रहिते ।

अपुच्छा । स्त्री । शिंशपावृक्षे । त्रि । पुच्छहीने ।

अपुनरावृत्तिः । स्त्री । मुक्तौ । कैवल्ये ।

अपुनर्भवः । पुं । मुक्तौ । त्रि । मुक्ते । पुनर्जन्माभावे । यथाऽचरकः । हेतौ लिङ्गे प्रशमने रोगाणामपुनर्भवे । ज्ञानं चतुर्विधं यस्य सराजार्हो भिषक्तमइति । नपुनर्भवो यस्य सः ।

अपुष्पफलदः । पुं । पनसोदुम्बरादिवनस्पतौ ।

अपूपः । पुं । पिष्टके । गोधूमे । नपूयते । पूयीविशरणे । बाहुलकात्पः । वलिलोपः । यद्वा । पवनं पूः । पूञ् पवने । संपदादिक्विप् । अपुंसंयाति पिबतिवा । पा॰ । आतोनुपेति कः ।

अपूपीयम् । त्रि । अपूपार्थकपिष्टादौ । अपूपेभ्योहितम् । विभाषाहविरपूपादिभ्यइतिकः ।

अपूप्यम् । त्रि । अपूपीये । गोधूमचूर्णे ।

अपूर्पेभ्योहितम् । यत् ॥

अपूरणी । स्त्री । शाल्मलितरौ ।

अपूर्व: । त्रि । अदृष्टपूर्वे । अविदिते । आश्चर्ये । यथा । अपूर्वेयंहरेर्माया त्रिगुणारज्जुरूपिणी । ययामुक्तोनब ध्नातिबद्धोधावतिधावति । पुं । पूर्वभा विकारणसंस्पर्शशून्ये अकार्ये परमा त्मनि । नविद्यते पूर्वंकारणं यस्यस: । न । यागादिजन्यव्यापारे ॥ धात्वर्था तिरिक्तेकालान्तरभाविकस्यफलस्यसा धने । अयपचश्वयंमीमांसकानाम् । तदानीमेवस्वस्वरूपेणोत्पन्नंफलमेवा ऽपूर्वम् । कालान्तरफलोत्पादिकाक र्मशक्तिर्वेति । तदुक्तम् । यागादेव फलंतद्धिशक्तिद्वारेण सिध्यति । सूक्ष्मशक्त्यात्मकंवापिफलमेवोपजायते ॥ इति ॥

अपूर्वता । स्त्री । अपूर्वत्वे । भावेतल् ।

अपूर्वत्वम् । न । अपूर्वतायाम् । षड्वि धलिंगेषुतृतीयेलिङ्गे । प्रकरणप्रति पाद्यस्य प्रमाणान्तरेणाविषयत्वम- पूर्वत्वम् । यथाछान्दोग्येषष्ठप्रपाठ केअद्वितीयवस्तुनोमानान्तरेणावि- षयीकरणम् ॥ भावेत्व: ॥

अपूर्वप्रवेश: । पुं । प्रथमप्रवेश । नवंगृहं निर्माय तत्रप्रथमप्रवेशे ।

अपूर्वविधि: । पुं । प्रमाणान्तरेणाऽप्राप्त स्य प्रापके विधौ । यथा यजेतस्वर्ग कामइत्यादि: । स्वर्गार्थयागस्य प्र माणान्तरेणाप्राप्तस्यानेन विधानात् ॥ अपूर्वश्चासौविधिश्च ।

अपेक्षणीय: । त्रि । अपेक्षायोग्ये । अ पेक्षितव्ये ॥

अपेक्षा । स्त्री । आकांक्षायाम् । कार्य निमित्तयोरन्योन्याभिसम्बन्धे । अ पेक्षणम् । ईक्ष० । गुरोश्चहलइत्य: । टाप् ।

अपेक्षाबुद्धि: । स्त्री । अनेकैकत्वविषयक बुद्धौ । नानैकत्वावगाहिबुद्धौ । अय मेक: अयमेक इत्याकारबुद्धौ । इति कारिकावली ।

अपेक्षित: । त्रि । ईप्सिते ।

अपेत: । त्रि । रहिते । अपहृते । अप इत: ॥

अपेतकृत्य: । त्रि । कृत्यशून्ये । कृतकृत्ये ।

अपेतराक्षसी । स्त्री । तुलस्याम् । वृ न्दाहत्वे । इतिराजनिर्घण्ट: ।

अपेताखिलचापल: । त्रि । नियतेन्द्रिये ॥

अपोगण्ड: । त्रि । बलिभे । अतिभीरौ । विकलाङ्गे । शिशौ ॥ पवते पुना तिवा । पूङ: पूऔवा विच् । पोगण्ड एकदेशोस्य । नपोगण्ड: ।

अपोढ: । त्रि । निरस्ते ॥ बाधिते । य था । वातुर्वेद: परोक्षात्माऽबेदिवा

कल्पितः स्मृतः । अपोढेविवयास्मिन् रज्वांसर्पश्वावयः । इत्युपदेशसाहस्यां १४ प्रकरणे १७ पद्यम् ॥

अपोढकर्म्मा । त्रि । त्यक्तव्यापारे ।

अपोदका । स्त्री । उपोदकायाम् । शाकान्तरे । अपगतमुदकमस्याः ।

अपोनपात् । पुं । एतन्नामधेयेदेवताविशेषे ।

अपोहः । पुं । तर्कनिराकरणे । वितर्काभावे । शुश्रूषाद्यष्टधाधीगुणान्तर्गतषष्ठगुणे । त्यागे । अतद्व्यावृत्तौ । अपगतऊहः । अपोहनम् । ऊह० । घञ् ।

अपोहनम् । न । कामक्रोधशोकादिव्याकुलचेतसां स्मृतिज्ञानयोरपाये । अपोह्हे ।

अपोह्यितम् । त्रि । अनाकृते ।

अप्नः । न । यज्ञकार्ये ।

अप्नुः । पुं । शरीरे । अभिलषितार्थे । अंगे । आप्नोति । आप्नृव्याप्तौ । आप्नोतेर्ह्रस्वश्चेतितुः ।

अप्न४। न । अम्बुनि । आप्नोति । आप्नृ० । आपःकर्माख्यायांह्रस्वोमुट् चवेत्यसुन् । वैदिकोयमितिकश्चित् ।

अप्यतिः । पुं । वरुणे । अम्बुधौ । अपांपतिः ।

अप्पित्तम् । न । अग्नौ । चित्रकौषधौ । अपांपित्तमिवदाहकत्वात् ।

अप्ययः । पुं । परब्रह्मणि । अपियन्तिजीवन्तोजगन्त्यस्मिन् । अपपूर्वादिणो ऽधिकरणे ऽचप्रत्ययः । अपाये । अपीतौ । लये । अप्येत्यस्मिन् । इण् इगतौवा । एरच् ।

अप्रकाण्डः । पुं । झिण्टिकादौ । स्तम्बे । गुल्मे । नप्रकाण्डोऽस्य ।

अप्रकाशः । पुं । सत्यप्युपदेशादौबोधकारणेसर्वथाबोधायोग्ये । प्रकाशाभावे । जनान्तिके । गोपने ॥ ३ प्रकाशाभाववति । नप्रकाशः ।

अप्रखरः । त्रि । अतीक्ष्णे । प्राखर्यरहिते ।

अप्रगुणम् । त्रि । व्याकुले । अप्रकृष्टगुणे । भिन्नःप्रगुणात् ॥

अप्रणयः । पुं । अप्रीतौ । प्रणयनम् प्रणयः । नप्रणयः ॥

अप्रतर्क्यः । त्रि । मनोऽगोचरे । अनुमानाविषयेश्रुत्यैकसमधिगम्ये परमेश्वरे ।

अप्रतिकरः । त्रि । विश्वस्ते । विश्वासपात्रे । इतिजटाधरः ।

अप्रतिघः । त्रि । अप्रतिबद्धे । नप्रतिघः ।

अप्रतिपक्षः । त्रि । अप्रतियोगिनि । विपक्षशून्ये । नास्तिप्रतिपक्षोयस्यसः ।

अप्रतिपत्तिः । स्त्री । अकृतज्ञाने ॥

अप्रतिबद्धः । त्रि । उद्दामे । नप्रतिबद्धः ।

अप्रतिभः । त्रि । अधृष्टे । लज्जिते । अप्रत्युत्पन्नमतौ । अप्रगल्भे । नास्ति प्रतिभा नवनवोन्मेषशालिनी प्रज्ञा यस्य सः ।

अप्रतिभा । स्त्री । निग्रहस्थानविशेषे ॥ यथा । उत्तरस्याप्रतिपत्तिरप्रतिभेतिगोतमः । ५ । ६१ । उत्तरार्थं परोक्तं बुद्धापियथोत्तरसमये उत्तरं न प्रतिपद्यते तदाऽप्रतिभानिग्रहस्थानम् ।

अप्रतिमः । त्रि । असदृशे । नविद्यते प्रतिमाउपमायस्य सः ॥

अप्रतिरथम् । न । यात्रायाम् । मङ्गले । सामवेदे । इतिविकाण्डशेषो भूरिप्रयोगश्चेति शब्दकल्पद्रुमेराधाकान्तः । पुं । भटे । हरौ । नविद्यते प्रतिरथः प्रतिपक्षोऽस्य । तुल्ययोद्धृरहिते इतिपुराणम् ॥

अप्रतिरूपकथा । स्त्री । अप्रतिवचनार्थांवाचि । सङ्कुचिकायाम् । इतित्रिकाण्डशेषः ॥

अप्रतिष्ठः । त्रि । अप्रतिष्ठिते । प्रतिष्ठारहिते ॥ नास्तिप्रतिष्ठायस्य सः ।

अप्रतिष्ठानम् । न । अस्थैर्ये ।

अप्रतिष्ठितः । त्रि । अप्रतिष्ठे । प्रतिष्ठारहिते । नप्रतिष्ठितः ॥

अप्रतिसम्बद्धः । त्रि । असम्बद्धे ।

अप्रतिहतः । त्रि । विघ्नैरनभिभूते ।

अप्रत्यक्षम् । न । प्रत्यक्षभिन्ने । प्रत्यक्षाभावे । त्रि । प्रत्यक्षशून्ये । अतीन्द्रिये ॥ भिन्नंप्रत्यक्षात् ।

अप्रत्ययः । पुं । अविधीयमाने । अविश्वासे । प्रतीयते विधीयते इतिप्रत्ययः । न प्रत्ययः । नास्तिप्रत्ययो यस्य वा ।

अप्रधानम् । न । अप्राधान्ये । अंगभूते । गौणे । प्रधानादन्यत् ॥ वाच्यलिङ्गोप्ययम् ।

अप्रधृष्यः । त्रि । अचाल्ये । नप्रधृष्यः ।

अप्रमत्तः । त्रि । प्रमादवर्जिते । सावधाने । नप्रमत्तः । नप्रमादवति वा । मद्धी० । क्तः ।

अप्रमेयः । त्रि । अचिंत्यप्रभावे । इदमित्थमितिपरिच्छेत्तुमशक्ये । स्वप्रकाशचैतन्यरूपे । फलाव्याप्ये । अनवगम्यमानप्रमेये । तथाहि । परमेश्वरो हि शब्दादिरहितत्वा अप्रत्यक्षः । नाप्यनुमानविषयो व्याप्तिलिंगाद्यभावात् । नाप्युपमानसिद्धो निर्विभागत्वेनसादृश्याभावात् । नाप्यर्थापत्तिग्राह्यः तद्विनानुपपद्यमानस्यासम्भवात् । नाप्यभावगोचरो भावरूपत्वाद्भावसाक्षिकत्वाच्च । नापिशाब्दप्र

मानबोधः प्रमाणजन्यातिशयाभा-
वात् । यद्येवंशास्त्रयोनित्वं कथमुच्य
ते । प्रमाणादिसाधित्वेन प्रकाशस्व
रूपस्य प्रमाणाविषयत्वे ऽप्यध्यस्तात
द्रूपनिवर्त्तकत्वेन शास्त्रप्रमाणकत्वम्
इत्यप्रमेयो भगवानीश्वरः । प्रमातुं यो
ग्यः प्रमेयः । न प्रमेयः अप्रमेयः ।

अप्रलम्बम् । न । अविलम्बे । शीघ्रे ।
त्रि । तद्वति ।

अप्रशस्तम् । त्रि । अश्रेष्ठे । अविहिते ।
यथा । अप्रशस्तं विनिःस्नानं राहोर
न्यत्र दर्शनादिति पराशरः ।

अप्रसङ्गः । पुं । अव्यतिकरे ।

अप्रसन्नम् । त्रि । अनच्छे । अतुष्टे ।

अप्रस्तुतः । त्रि । अनुपस्थिते । प्रकरणा
प्राप्ते । न प्रस्तुतः ।

अप्रस्तुतप्रशंसा । स्त्री । अर्थालंकारवि
शेषे । अप्राकरणिकस्यार्थस्याभिधा
नेन प्राकरणिकस्याक्षेपे । यथा । अ
प्रस्तुतप्रशंसा सा याचैव प्रस्तुताश्र-
या । साच । कार्य्ये निमित्ते सामान्ये
विशेषे प्रस्तुते सति । तदन्यस्य वचस्तु
ल्ये तुल्यस्येति च पञ्चधा ॥ तदन्यस्य का
रणादेः । क्रमेणोदाहरणम् । याताः
किन्न मिलन्ति सुंदरि पुनश्चिन्ता त्व
या मत्कृते नो कार्या नितरां कृशा
सि कथयत्येवं सवाष्पे मयि । लज्जाम
न्थरतारकेण निपतत्पीताश्रुणा च
क्षुषा दृष्ट्वा मां हसितेन भाविमरणो-
त्साहस्तया सूचितः । अत्र प्रस्थानात्
किमिति निवृत्तोऽसीति कार्ये पृष्टे कार
णमभिहितम् ॥ १ ॥ राजन् राज
सुता न पाठयति मां देव्योऽपि तूष्णीं
स्थिताः । कुब्जे भोजय मां कुमार स
चिवैर्नाद्यापि किं भुज्यते । इत्थं नाथ
शुकस्तवारिभवने मुक्तो ऽध्वगैः पञ्जरा
च्चित्रस्थानवलोक्य शून्यवलभावेकै
कमाभाषते ॥ अत्र प्रस्थाने त्वत्तं भ
वत्वं ज्ञात्वा सद्यैव त्वदरयः पलाय्य
गता इति कारणे प्रस्तुते कार्य्यमुक्तम् ।
२ ॥ एतत्तस्य मुखात् कियत्कमलि
नीपत्रे कणं वारिणो यन्मुक्तामणि रि
त्यमंस्त स जडः शृणवन् यदस्मादपि ।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादी-
यमाने शनैः कुत्रोड्डीय गतो ममे-
त्यनुदिनं निद्राति नान्तःशुचा ॥ अ
त्रास्थाने जडानाममनत्व संभावना-
भवतीति सामान्ये प्रस्तुते विशेषः क
थितः । ३ । सुहृद्वधूवाष्प जलप्रमा-
र्जनं करोति वैरप्रतियातनेन यः । स
एव पूज्यः स पुमान् स नीतिमान् सु
जीवनं तस्य स भाजनं श्रियः ॥ अत्र
कृष्णं निहत्य नरकासुरवधूनां यदि
दुःखं प्रशमयसि तत्त्वमेवश्लाघ्य इति-

विशेषे प्रकृते सामान्यमुदितम् । ४
। तुल्ये प्रस्तुते तुल्याभिधानेत्रयः प्र
कारा: । श्लेषः समासोक्तिः सादृश्य
मात्रे वा । तुल्यात्तुल्यस्य ह्याक्षेपे हे
तु: । क्रमेणोदाहरणम् । पुंस्त्वाद-
पि प्रविचलेद्यदि यद्यधोपि यायाद्य
दि प्रणयनेन महानपि स्यात् । अभ्यु
द्धरेत्तदपि विश्वमितीदृशीयं केनापि
दिक् प्रकटिता पुरुषोत्तमेन । येना
स्यभ्युदितेन चन्द्रगमितः क्लान्तिं रवौ
तत्र तेयुज्येत प्रतिकर्त्तुमेवमपु नरस्तस्य
व पादग्रहः । क्षीणे नैतदनुग्रहितं यदि
ततः किं लज्जसे नो मनागस्त्वेवं जड धा
मतात् भवतोयद्व्योम्नि विस्फूर्जसे ॥
आदाय वारि परितः सरितां मुखेभ्यः
किन्तावदर्जितमनेन दुरर्णवेन ।
क्षारीकृतं च वडवादहने हुतञ्च पा-
तालकुक्षिकुहरे विनिवेशितञ्च ॥ इ
यञ्च काचिद्वाच्ये प्रतीयमानार्थान-
ध्यारोपेणैव भवति । यथा । अब्धे
रम्भः स्थगितभुवनाभोगपातालकु-
क्षेः पोतोपाया इह हि बहवो लंघने
पि क्षमन्ते । आहो रिक्तः कथमपि भ
वेदेष दैवात्तदानीं को नाम स्यादव
टकुहरालोकने प्यस्य कल्पः । काचि
दध्यारोपेणैव यथा । कस्त्वं भोः कथ
यामि दैवहतकं मां विद्धि शाखोटकं-



वैराग्यादिव वच्मि साधु विदितं कस्मा
दिदं कथ्यते । वामेनात्र वटस्तमध्वग
जनः सर्वात्मना सेवते न च्छायापि प
रोपकारकरणी मार्गस्थितस्यापि मे
। क्वचिदशेषाध्यारोपेण । यथा । सो
पूर्वो रसनाविपर्ययविधिस्तत्कर्णयो-
श्चापलं दृष्टिः सा मदविस्मृतस्वपर
दिक् किं भूयसोक्तेन वा । सर्वं विस्मृतवा
नसि भ्रमर हे यद्वारणोद्याप्यसावन्तः
शून्यकरो निषेव्यत इति भ्रातः क ए
ष ग्रहः । अत्र रसनाविपर्यासः शून्यक
रत्वञ्च भ्रमरस्यासेवने न हेतुः कर्ण-
चापलन्तु हेतुः । मदः प्रत्युत सेवने नि
मित्तम् । इति काव्यप्रकाशः ॥
अप्रहतम् । त्रि । अनाहते । इलायाः ऽ
कृष्टभूमौ । खिले । नप्रहन्यते स्म ।
हनहिंसागत्योः । कर्मणिक्तः ॥
अप्राकृतः । त्रि । अलौके । सामान्ये ॥
अप्राग्र्यम् । त्रि । अप्रधाने । प्राग्र्यादि
न्नम् ॥
अप्राचीनम् । त्रि । नव्ये ॥ प्राचीतरदि
ग्भवे ॥ नप्राचीनम् ।
अप्राप्तः । त्रि । अलब्धे । नप्राप्तः ।
अप्राप्तकालम् । न । सभाक्षोभव्यामो
हादिनाव्यस्तस्याऽभिधाने । यथा-
इगोतमः । अवयवविपर्यासवचनम
प्राप्तकालमिति । ५ । ५४ । अवय

वस्तु कथैकदेशस्य विपर्यासोवैपरीत्यम् । तथाच समयबन्धविषयीभूतक्रमाक्रमविपरीतक्रमेणाभिधानं पर्यवसन्नम् । तथाक्रमः । वादिना साधनमुक्ता सामान्यतो हत्वाभासा उद्भावनीया इत्येकः पादः । प्रतिवादिनश्च तत्रोपालम्भो द्वितीयः पादः । प्रतिवादिनः स्वपक्षसाधनं तत्र हेत्वाभासोद्भावनमितितृतीयः पादः । जयपराजयव्यवस्थाचतुर्थः पादः । एवंप्रतिज्ञाहेत्वादीनांक्रमः । तत्र सभाक्षोभव्यामोहादिनाव्यस्य तस्याभिधानमप्राप्तकालमिति । त्रि । अल अब्समये । अप्राप्तःकालोयस्य ।

**अप्राप्तव्यवहार**: । त्रि । व्यवहारानभिज्ञे । अप्राप्तवयस्के । यथा । अप्राप्तव्यवहाराणां धनं व्ययविवर्जितम् । न्यसेयुर्बन्धुमित्रेषु प्रोषितानांतथैव च ॥ इतिदायतत्त्वे कात्यायनः । किञ्च । गर्भस्थैःसदृशोज्ञेयअष्टमात् वत्सराच्छिशुः । बालआषोडशाद्वर्षात्पौगण्डोपिनिगद्यते । परतो व्यवहारज्ञः स्वतन्त्रःपितरावृते । इति व्यवहारतत्त्वेनारदः ॥

**अप्राप्ति**: । स्त्री । अलाभे । द्वादशभवने ।

**अप्रामाणिक**: । त्रि । प्रमाणानभिज्ञे ॥ प्रमाणासिद्धे ।

**अप्रामाण्यम्** । न । प्रमाण्याभावे ॥

**अप्रियम्** । त्रि । अहिते । अनिष्टवस्तुनि । नप्रियम् ।

**अप्रिया** । स्त्री । मद्गुरसमेमत्स्ये । शृङ्गीमत्स्ये ।

**अप्रीतिः** । स्त्री । दुःखे ॥

**अप्रीत्यात्मकः** । पुं । रजोगुणे ।

**अप्सराः** । स्त्री । उर्वश्यादिस्वर्वेश्यायाम् । अद्भ्यः सरति । सरतेरप्पूर्वात् असुन् अप्सराइत्युसिः । स्त्रियांबहुष्वप्सरसःस्यादेकत्वेऽप्सराअपीति शब्दार्णवः । एकाप्सरःपार्श्विंतयोर्विवाद इतिरघुः ॥

**अप्सरसः** । स्त्री । भूम्नि । उर्वश्यादिस्वर्वेश्यायाम् । यथा । उर्वशीमेनकारम्भाघृताची पुञ्जिकस्थली । सुकेशीमञ्जुघोषाचमहारङ्गवतीतिताइति ॥ अद्भ्यःसरन्ति । सृगतौ । सरतेरप्पूर्वादप्सरा इत्युसिः । भूम्नीति प्रायोवादः । अनयिचेतिलक्ष्ये अप्सरा इतिभाष्यप्रयोगात् ॥ वह्निपुराणेगणभेदनामाध्यायेद्वादशाप्सरसः प्रोक्ताःयथा । उर्वशीमेनकारम्भासिश्रकेशीसुलम्बुषा । विश्वाचीघृताचीवपञ्चचूडातिलोत्तमा । भानुमत्यबलावर्गाद्वादशाप्सरसः शुभा-

इति ॥

अफल: । पुं । झाबुके । इतिशब्दचन्द्रिका । त्रि । अवकेशिनि । निष्फले ॥ नफलमस्य ॥

अफलप्रेप्सु: । त्रि । फलाभिलाषरहिते ॥

अफला । स्त्री । घृतकुमार्याम् । भूम्यामलक्याम् । इतिशब्दचन्द्रिका ॥

अफेनम् । न । अहिफेने । तच्चतुर्विधम् । एकं श्वेतवर्णम् अजीर्णताकारकत्वान्नाम जारणम् । द्वितीयं कृष्णवर्णम् मृत्युकारकत्वान्नाममारणम् । तृतीयम् पीतवर्णम् वय:स्तम्भनकारकत्वान्नामधारणम् । चतुर्थं कर्बुरवर्णम् मलसारकत्वान्नाम सारणम् ॥ इतिराजनिर्घण्ट: ॥

अबद्धम् । त्रि । समुदायार्थशून्यवाक्ये । यथा । जरद्गव: कम्बलपादुकाभ्यां द्वारिस्थितोगायतिमंगलानि । तं ब्राह्मणीपृच्छतिपुत्रकामाराजन् रुमायांलशुनस्यकोर्घ: इत्यादयस्यविषय: । अबन्धने । नबध्यतेस्म । बन्ध बन्धने । क्त: ॥

अबद्धमुख: । त्रि । अप्रियवादिनि । मुखरे । न बद्धंनियंत्रितं मुखमस्य ॥

अबद्धम् । त्रि । अबधार्थे । अनर्थकवचसि । इतिमेदिनीहेमचन्द्रौ ॥

अबन्ध्य: । त्रि । फलेग्रहौ । सफले । व



न्धेसाधु: । तत्रसाधुरितियत् । नबन्ध्य: ॥

अबल: । पुं । वरुणवृक्षे । त्रि । बलशून्ये । दुर्बले । नास्तिबलं यस्य ॥

अबला । स्त्री । वनितामात्रम् । यथा । हृदये वससि गिरीन्द्रौत्रिभुवनजयिनीकटाक्षेण । अबलाश्चंयदि बन्धेक्षेव लवन्तोबयंनजानीमइति । नास्तिबलमस्या: । अल्पार्थेनञ् । पराक्रमौ ॥ नविद्यते बलंयस्या:सकाशात्वाक्यम् ॥

अबलिमा । पुं । अबलभावे । देहस्यरोगादिनिमित्ते जरादिनिमित्तेवाकृशीभावे ॥

अबाध: । त्रि । निरर्गले । अनिवारिते ॥ नबाधा अस्य ॥

अबाध्य: । त्रि । सत्ये । प्रमाणान्तरेण बाधायोग्ये ॥

अबिन्धन: । पुं । वाडवाग्नौ । विद्युति ॥ आपइन्धनंदाह्यमस्य ॥

अबोध: । पुं । अज्ञाने । त्रि । बोधहीने ॥

अबोधविक्लव: । त्रि । अज्ञानोपहते । अबोधेनविक्लव:

अब्ज: । पुं । न । शङ्खे । पुं । निचुले । धन्वंतरौ । हिमकिरणे । न । पद्मे । संख्यान्तरे । दशार्बुदे । शतकोटिसंख्यायाम् । १०००००००० । नरकान्तरे । अप्सुजात: । पञ्चम्यामजा

नामितिख: । अप्सुजायते । अमीमा
दुर्भावे । सप्तम्यामितिडोवा ।
अब्जकर्णिका । स्त्री । संवर्त्तिकायाम् ।
अब्जज: । पुं । ब्रह्मणि ॥ योगान्तरे ।
यथा । स्वराशौस्वांशगे सौम्ये लग्न
स्थेवाभृगो:सुते । जीवेवाऽब्जजयो
गोयं यात:प्रभुविनाशकृदिति ।
अब्जभोग: । पुं । वराटके । पद्मकन्दे ॥
अब्जयोनि: । पुं । धातरि । ब्रह्मणि ।
अब्जंयोनिरुत्पत्तिस्थानमस्य । विष्णो
र्नाभिकमलजत्वात् ।
अब्जबान्धव: । पुं । शिवे । इतित्रिका
ण्डशेष: । स्त्री । लक्ष्म्याम् ।
अब्जह । न । रूपे । आप्नोति । आप्तृ० ।
रूपेजुट्चेत्यसुन् ह्रस्वश्चधातो: प्र
त्ययस्यजुट्च । अब्जसी अब्जांसि ।
अब्जहस्त: । पुं । दिवाकरे ।
अब्जिनी । स्त्री । नलिन्याम् । पद्मसमू
हे ॥ पद्मलतायाम् । अब्जानिसन्त्य
स्याम् । पुष्करादिभ्योदेशइतीनि: ।
अब्जिनीपति: । पुं । सूर्ये ।
अब्द: । पुं । संवत्सरे ॥ सचसावन:सौरश्चा
न्द्रोनाक्षत्रोवार्हस्पत्यश्चेतिपञ्चविध:
। वारिवाहे । मुस्तके ॥ शैलभेदे ।
आप्यते । आप्तृव्याप्तौ । अब्दादयश्चे
तिदन् ह्रस्वत्वञ्च । अपतिवा । अप०
। पूर्ववत्साधु: ॥ अपोददाति । उदा

न० । आपोऽनुपेतिकोवा ॥
अब्दपर्यय: । पुं । समासे वर्षे वितीय
वर्षस्यप्रवृत्तौ ॥
अब्दसार: । पुं । कर्पूरप्रभेदे ॥
अब्दुर्गम् । न । जलदुर्गे । अगाधोद
केनसर्वत: परिवृतेराजोवासपुरे ।
अब्धि: । पुं । समुद्रे । आपोधीयन्तेऽ
त्र । कर्मण्यधिकरणे चेति धाज:
कि: । चतुर्थाङ्के । सरसि ।
अब्धिकफ: । पुं । सिन्धुफेने । त्रिकाण्डशेषे
रे । इत्यमर: । अब्धे: कफइव ।
अब्धिज: । पुं । विधौ । अब्धेर्जात: । ज
नो० । ड: ।
अब्धिद्वीपा । स्त्री । पृथिव्याम् । इतित्रि
काण्डशेष: ।
अब्धिनगरी । स्त्री । कृष्णपुरि । द्वारा
वत्याम् । अब्धौ नगरी ।
अब्धिनवनीतम् । न । शशिनि । अब्धे
र्नवनीतमिव ।
अब्धिफेन: । पुं । समुद्रफेने ।
अब्धिमण्डूकी । स्त्री । शुक्तौ । मुक्ता
स्फोटे । सीपी इतिभाषा ॥ इतिहे
मचन्द्र: ।
अब्धिशयन: । पुं । नारायणे । अब्धि:
शयन मस्य ।
अब्ध्यग्नि: । पुं । वाडवानले । इतिहेम
चन्द्र: ।

अब्धुत्थम् । चि । समुद्रभवे ।

अब्भक्षः । पुं । सर्पे ॥ इतित्रिकाण्डशेषः ॥ त्रि । जलाहारिणि ।

अभ्रमातङ्गः । पुं । ऐरावते । अभ्रमातङ्गे ।

अभ्रिः । स्त्री । तीक्ष्णाग्रलोहदण्डे । अभ्रिं कार्ष्णायसीं दद्यात् सर्पं हत्वा द्विजोत्तम इतिमनुः । अभ्रति । अभ्रगत्याम् । इन् ।

अब्रह्मचर्य्यकम् । न । मैथुने ॥ इतित्रिकाण्डशेषः ।

अब्रह्मण्यम् । न । नाव्योक्त्या अवध्योक्तौ । वधं नार्हतीतिवचसि । ब्रह्मणिसाधुः । तत्रसाधुरितियत् । ततोनञ्समासः । ब्रह्मण्याभावे । चि । तद्वति ।

अब्राह्मणः । पुं । अब्राह्मणपदवाच्येषु षट्सु ॥ तेचोक्ताः शातातपेन यथा । अब्राह्मणास्तु षट्प्रोक्ता ऋषिणातत्त्ववेदिना । आद्योराजभृतस्तेषां द्वितीयः क्रयविक्रयी । तृतीयो बहुयाज्यः स्याच्चतुर्थोग्रामयाजकः । पञ्चमस्तु भृतस्तेषांग्रामस्यनगरस्यच । अनादृत्यांतुयः पूर्वां सादित्यांचैवपश्चिमाम् । नोपासीतद्विजःसंध्यांसषष्ठोऽब्राह्मणःस्मृतः इति ।

अभक्ष्यः । त्रि । भक्षणायोग्ये ग्राम्यकुक्कुटादौ । यथा । अभक्ष्योग्राम्यकुक्कुटः अभक्ष्योग्राम्य शूकरइतिभक्षाभाष्यम् । एवञ्चग्राम्यकुक्कुटादौ विशेषनिषेधस्येतराभ्यनुज्ञाफलकतया आरण्यादिभक्षणे दोषाभावइति विवरणम् ।

अभद्रः । त्रि । दुःखरूपे ।

अभयम् । न । वीरणांघ्रौ । उशीरे ॥ गर्भवासादि दुःखाभावे । मोक्षे ॥ अशेषभयनिवृत्तिसाधने आत्मदर्शने । चि । भयशून्ये । सर्वपरिग्रहशून्ये एकाकिनि । शास्त्रोपदिष्टेऽर्थे सन्देहंविनाऽनुष्ठाननिष्ठे । पुं । याज्ञायोगान्तरे । यथा । उत्तमूलत्रिकोणेषु वर्त्तेतेगुरुभार्गवौ । अभयाभिधयोगोयंभयंकरविनाशनइति । अन्यच्च । यद्येकादशगश्चन्द्रो भानुर्वाप्रबलःशुभः । अभयोनामयोगोयमरिभूतविनाशकृदिति । नभयमस्मात् । आत्मनि ॥ आत्मातिरिक्तस्यकस्यचिदभावात् ।

अभयडिण्डिमः । पुं । युद्धवाद्यविशेषे । रणतूर्य्ये । सङ्ग्रामपटहे ।

अभया । स्त्री । हरीतक्याम् । पञ्चरेखाभयाप्रोक्तेतिलक्षणलक्षितायाम् ॥ नेत्ररोगेप्रशस्तेयम् । नभयमस्याः ॥

अभवः । पुं । मोक्षे ।

अभव्यः । त्रि । अविनीते । निर्भाग्ये ।

नञसः ।

अभावः । पुं । मरणे । असत्त्वे । द्रव्यादिषट्कभिन्ने । स चतुर्विधोयथा । प्रागभावः प्रध्वंसाभावः अत्यन्ताभावः अन्योन्याभावश्चेतितर्कसङ्ग्रहः । संसर्गाभावोऽन्योन्या भावश्चेतिद्विविधोऽभाव इतिभाषापरिच्छेदः ॥ नाशे । त्रि । प्रेमशून्ये । भ वहीने ॥ भावः स्थायिभावादिरित्यालङ्कारिकाः ।

अभावसम्पत्तिः । स्त्री । प्रातृषेययोर्मिथ्यात्ववुद्धौ ।

अभाषणम् । न । मौने ॥ नभाषणम् । भाषव्यक्तायांवाचि । भावेल्युट् ॥

अभि । । । इत्थंभूतकथने । आभिमुख्ये । अभिलाषे । वीप्सायाम् । लक्षणे ॥

अभिकः । त्रि । कामुके । अभिकामयते । अनुकाभिकेति साधुः ।

अभिक्रमः । पुं । अभीतयोधादे र्युद्धेशत्रुसम्मुखगमने । आरोहणे । इति हेमचन्द्रः । अभिक्रमणाम् । क्रम० । घञ् । नोदात्तेतिवृद्ध्यभावः । अभिक्रम्यतेकर्मणाप्रारभ्यतेइतिव्युत्पत्त्या कर्मारब्धफले । प्रारंभे ।

अभिक्लृप्तः । त्रि । अभिसमर्थिते । अभिप्रकाशिते ।

अभिख्या । स्त्री । अभिधाने । शोभायाम । यशसि । अभिख्यानम् । ख्याप्रकथने घञिकारेशोवा । आतश्चोपसर्ग इत्यङ् ।

अभिगतः । त्रि । सेविते ।

अभिगन्तव्यः । त्रि । अभितःसमासाद्ये । यथाहरामंप्रतिचसिद्धः । सन्तःसदाभिगन्तव्यायद्यप्युपदिशन्तिन । याहिस्वैरकथास्तेषाम् पदेशाभवन्तिताः इति ।

अभिगीतम् । न । शोभनगीते ।

अभिगृहीतपाणिः । त्रि । संयोजितहस्ते ।

अभिग्रहः । पुं । अभिग्रहणे । अभियोगे । आभिमुख्येनोद्यमे । गौरवे । अभिग्रहणम् । ग्रहउपादाने । ग्रहवृद्धिरित्यप् ।

अभिग्रहणम् । न । चौर्ये । अभिहारे । आभिमुख्येनग्रहणे । अभिग्रहेर्ल्युट् ।

अभिघातः । पुं । प्रहारे । अभिहननम् । हन० । घञ् । हनस्तोचिण्णलोः । हो हन्तेरितिकुत्वम् । क्रियाविशिष्टद्रव्यस्य द्रव्यान्तरेण संयोगविशेषो भिघातः । यथोद्यमितनिपतितमुसलस्योलूखलेन संयोग इतिव्याख्यातारः ॥ सम्बन्धे ।

अभिघातिः । पुं । शत्रौ । अभिघातेः क्तिच् वाहुलकात्क्तिर्वा ।

अभिघाती । पुं । रिपौ ॥ अभिहन्तुंशी

ज्ञः । सुपीतिश्चिनिः ॥

अभिघारः । पुं । अभितः सेचने ॥ घृते ॥ इतिराजनिर्घण्टः ।

अभिचरः । पुं । दासे ॥ इतिहेमचन्द्रः ।

अभिचारः । पुं । हिंसाकर्मणि ॥ अथर्ववेदोक्तमन्त्रयन्त्रादिनिष्पादितेमारणोच्चाटनादिहिंसात्मकेकर्मणि इतिभरतः ॥ मारणादिफलकेतान्त्रिककर्मयोगविशेषे॥ सचषड्विधः । मारणमोहनस्तंभनविद्वेषणोच्चाटनवशीकरणभेदादितितन्त्रशास्त्रम् ॥ उपपातकविशेषोयम् ॥ नाशोऽभिचारतोनास्ति धर्म्मिष्ठानां नसंशयः । अतश्च । ब्राह्मणंधार्मिकंभूपंवनितामास्तिकंनरम् । वदान्यंसदयंनित्यमभिचारे न योजयेत् । अभिचरणम् । चरेर्घञ् ।

अभिजनः । पुं । कुले ॥ ख्यातौ ॥ जन्मभूम्याम् ॥ कुलध्वजे ॥ अभिजायतेऽस्मिन् । जनीप्रादुर्भावे । हलश्चेति घञ् । जनिवध्योश्चेति वृद्धिर्न । शिलोपस्वस्थानिवत्त्वाद्वा ॥ अभिजन्यते । कर्मणिघञ् वा ॥ अभितोऽभिमुखोवाजनोजन्माच ॥ अभिजनोमाम यत्र पूर्वैरुषितमिति भाष्यम् ॥

अभिजनवान् । त्रि । कुलीने ॥ अभिजनोऽस्यास्ति । मतुप् । वत्वम् ॥

अभिजातः । त्रि । कुलीने ॥ न्याय्ये ॥ पण्डिते ॥ यथा । नम्ले च्छितव्यंयज्ञादौ स्त्रीषुनाप्रकृतंवदेत् । सङ्कीर्णनाभिजातेषुनाप्रबुद्धेषुसंस्कृत मिति ॥ अभिजायतेस्म । जनीप्रादुर्भावे । गत्यर्थेतिक्तः ॥

अभिजातकोविदः । पुं । जातककर्मकोविदे । जातकज्ञे ॥

अभिजित् । न । नक्षत्रविशेषे ॥ उत्तराषाढायाश्चतुर्थांशस्य श्रवणादिचतुर्दण्डस्यचसंज्ञा ऽभिजिदिति ॥ अत्र जातस्यफलं यथा । अतिसुललितकान्तिः सम्मतःसज्जनानामतु भवतिच विनीतश्चारुकीर्त्तिःसुवेशः । द्विजवरसुरभक्तो व्यक्तवाङ्मानवःस्यादभिजितियदिसूतिर्भूपतिः स्वस्ववंशे ॥ इतिकोष्ठीप्रदीपः । यात्रामुहूर्त्तान्तरे । यथा । मध्यंव्योमप्रयातेस्फुरदमलनिभेकेशरे चार्कबिम्बे छायासाक्षीचकान्ता प्रचलतिपुरुषे यत्नत्यादलग्ना । तावत्तौरेमदृष्टिः कुजकृतमशुभं नैवऋक्षंनयोगः सम्मानारोग्यसम्पत् क्षितिमययुवतींतज्जगन्नालभेत ॥ अभिमुखीभूयजयतिप्रतिपक्षाननेन । जि० । क्विप् ॥ कुतपकालइतिमसिद्धेदिवसस्याष्टमेमुहूर्त्ते ॥ यथा । अपराह्णेतु सम्प्राप्तेअभिजिद्रौहिणोदये । यद्यद्दीयतेजन्तो

स्तद्द्वयमुदाहृतमितिमत्स्यपुराणम्॥

अभिज्ञः। त्रि। निपुणे। अभिजानाति। ज्ञा०। आतश्चोपसर्गे इतिकः॥

अभिज्ञा। स्त्री। आद्यज्ञाने। स्मृतौ॥ अभिज्ञायते। ज्ञा०। आतश्चोपसर्ग इत्यङ्॥ टाप्॥

अभिज्ञानम्। न। चिह्ने। ज्ञानभेदे॥ अभिज्ञायतेऽनेनेतितत्। ज्ञा०। ल्युट्॥

अभिज्ञापकः। त्रि। बोधके॥

अभिडीनम्। न। पक्षिणआभिमुख्येनपुनःपुनःपतने॥

अभितप्तः। त्रि। पीडिते॥ अभितस्तप्तः॥

अभितः। अ। शीघ्रे। साकल्ये। सम्मुखे। उभयतः। अन्तिके। सर्वतः॥ पर्यऽभिभ्यां चेत्यभिशब्दात्तसिल्॥

अभिद्रवणम्। न। वेगेनगमने॥

अभिद्रोहः। पुं। आक्रोशे॥

अभिधर्षणम्। न। रक्षःपिशाचभूतादेरभिसङ्गे। सर्वतोभावेनधर्षणे॥

अभिधा। स्त्री। शक्तमतभावनायाम्॥ आह्वये। वाचके। न्यायमतेनशब्दशक्तौ। मीमांसकमतेन विधिसमवेतविधिव्यापारीभूतपदार्थे। अभिधानम्। डुधाञ्०। आतश्चेत्यङ्॥

अभिधानम्। न। संज्ञायाम्। कथने॥ अभिधीयते अनेनवा। डुधाञ् धारणपोषणयोः। कर्मणि करणे वा ल्युट्। शब्दकोषे॥ यथा। कृततद्धितसमासाना मभिधाननियामकम्॥ इति वोपदेवः॥

अभिधायकः। त्रि। वाचके॥

अभिधेयम्। न। संज्ञायाम्। त्रि। वाच्ये। शब्दप्रतिपाद्ये। अभिधातुंशक्यम्। डुधाञ्०। अचोयत्। ईद्यति। गुणः॥

अभिध्या। स्त्री। अशुणेच्छायाम्। परस्वविषये स्पृहायाम्॥ परस्वेविषये चौर्यादिनाभिलाषायामितिमुकुटः॥ परस्वविषयविषयिण्यामिच्छायामितिरामाश्रमः। विषयप्रार्थनाऽभिध्येतिस्वामी॥ जिघृक्षामात्रमभिध्येतिकश्चित्॥ स्वस्यवस्तुन्यसंकल्पे। अभि-ध्यानम्। ध्यै चिन्तायाम्। ध्याने। आतश्चोपसर्गइत्यङ्। टाप्॥

अभिनद्धः। त्रि। बद्धे। बंधा इति भाषा॥ अभितोनद्धः॥

अभिनन्दः। पुं। सुखलवे। अपत्यादिसुखहेतुर्यः स्वक्लत्रादिः सम्भोगविषयः तद्गुणकथनादिप्रवर्त्तिकाधीवृत्तिर्भाक्तिरूपा अभिनंदःसंपत्तामसः॥ अभितोनन्दः आनंदः॥

अभिनन्दनः । पुं । बुद्धभेदे । चतुर्थस्तीर्थकरजिनोऽयम् ॥ न । स्तवने ॥ त्रि । सर्वतो भावेनानन्दजनके । अभितो नन्दनः ॥

अभिनयः । पुं । विशेषितार्थप्रतिपत्त्यर्थं मसाधारणशारीरव्यापारे । व्यञ्जके । अन्तर्गतभावस्यव्यञ्जके ऽङ्गचेष्टाविशेषे ॥ अभिनयश्चतुर्धा । वाचिकाङ्गिकाऽऽहार्यसात्त्विकभेदात् । विशेषो दृश्यरूपकादिष्वनुसंधेयः । अभिनयत्यर्थम् । पचाद्यच् ॥

अभिनवः । पुं । स्तोषे । त्रि । नूतने ॥ अभिनूयते । णु स्तुतौ । ऋदोरप् ॥

अभिनवतामरसम् । न । तामरसाख्ये जगतीछन्दोभेदे । अभिनवतामरसं नजजाय इति लक्षणलक्षिते ॥

अभिनवोद्भिद् । पुं । अङ्कुरे ॥ उद्भिनत्तिभुवम् । भिदिर् विदारणे । सत्सूद्विषेतिक्विप् । अभिनवश्चासावुद्भिच्च ॥

अभिनहनम् । न । बन्धने । मुसक इति भाषा ॥

अभिनिर्मुक्तः । पुं । सूर्यास्तकाले निद्राणे ब्राह्मणादौ ॥ अभिसर्वतःसायंतनेनकर्मणा निश्चयेनमुक्तः ॥ अभिसर्वं सायन्तनं कर्म निश्चयेन मुक्तं येनवा ॥

अभिनिर्याणम् । न । विजिगीषोः प्रस्थितौ । गमने ॥ अभिनिर्पूर्वात् यातेर्ल्युट् ॥

अभिनिविष्टः । त्रि । अभिनिवेशविशिष्टे । दुराग्रहग्रस्ते ॥

अभिनिवेशः । पुं । अन्धतामिस्रे । पञ्चमक्लेशे ॥ सत्यमायुरभावेष्यैतैः शरीरेन्द्रियादिभि रनित्यै रपिवियोगोमाभूदित्याविद्वदज्ञानाधारणस्वाभाविकः सर्वप्राणिसाधारणोमरणत्रासरूपोविपर्ययविशेषः । मनोयोगे । आग्रहे । अभितोनिवेशः ।

अभिनिष्टानः । पुं । अक्षरमात्रे । विसर्जनीये । विसर्गे ॥ अभिनिस्तननम् । स्तन° । भावे घञ् । अभिनिसःस्तनःशब्दसंज्ञायामितिमूर्द्धन्यः ॥

अभिनिष्पत्तिः । स्त्री । सिद्धौ । उत्पत्तौ ॥

अभिनिस्तानः । पुं । अभिनिष्टाने ॥ पक्षेमूर्द्धन्याभावः ॥

अभिनीतः । त्रि । न्याय्ये ॥ क्रोधने । अमर्षिणि ॥ संस्कृते ॥ अभिनीयतेस्म । णीञ् प्रापणे । क्तः ॥

अभिनीतिः । स्त्री । अभिनये ।

अभिनेता । त्रि । नाटकप्रसिद्धे अभिनयकर्त्तरि । स्वांगी स्वांगवाला इति भाषा प्रसिद्ध ॥

अभिपन्नः । त्रि । अपराद्धे । अभिग्रस्ते ॥ आपन्नते ॥ स्वीकृते । आभिमुख्येन प्राप्ते ॥ अभिद्रुते ॥ अभिपद्यतेस्म

पद्गतौ । गत्यर्थेतिक्तः । कर्मणि वा ॥

अभिमतारी । पुं । वेदप्रसिद्धे ऋषिविशेषे । काक्षसेनौ ।

अभिमायः । पुं । आशये । मानससम्मतौ । अभिप्रयाणम् । प्रीञ्तर्पणे । घञ् ॥

अभिप्रेतः । त्रि । सम्मते । अभिप्रायविषयीभूते । अभीष्टे । अभितः प्रेति सम्यतिम् । इण्० । क्तः ॥

अभिभवः । पुं । अनादरे । जये । गर्वनाशे । भावे इञ् ।

अभिभूतः । त्रि । गर्वासे । पराभूते । आत्तगर्वे । इतिकर्त्तव्यतामूढे । धामरहिते । व्याकुले ॥ अभिभूयतेस्म । अकर्मकत्वात्कर्त्तरिक्तः ।

अभिभूतिः । स्त्री । निकारे । अवज्ञायाम् ॥

अभिमतः । त्रि । सम्मते । आदृते । अभीष्टे ।

अभिमन्त्रणम् । न । निमन्त्रणे । आह्वाने । आकारणे । आङ् मन्त्रि० ल्युट् ॥

अभिमन्थः । पुं । अक्षिरोगे । अधिमन्थे । सचतुर्विधः । यथा । हन्याद्दृष्टिंश्लैष्मिकः सप्तरात्रादधिमन्थोरक्तजः पञ्चरात्रात् । षड्रात्राद्वैवातिकः संनिहन्यान्मिथ्याचारात् पैत्तिकः सद्य एवेतिमाधवः ॥



अभिमन्युः । पुं । अर्जुनात्सुभद्रायामुत्पन्ने ।

अभिमन्युसुतः । पुं । परीक्षिते । कौरव्ये ॥

अभिमरः । पुं । युद्धे । बधे । स्वबलसाधने । इतिमेदिनीकारः । संकेतस्थलनिर्गमे । स्वबलसाध्वसे ॥ इति हेमचन्द्रः ॥ प्राणनिरपेक्षोयोद्ध्रुव्हेतोर्ध्वंडंसतिनंवा योधयति सोऽभिमरइत्येके ॥

अभिमर्द्दः । पुं । मद्ये । युद्धे । मद्ययुद्धयोरिति हेमचन्द्रः । पीडने । अभिमर्द्दनम् । मृदक्षोदे । घञ् ।

अभिमर्शः । पुं । घाते ।

अभिमर्शितः । त्रि । स्पृष्टे ।

अभिमानः । पुं । अहङ्कारवृत्तौ । धनस्वजनादिनिमित्ते महत्त्वधारणहेतौ गर्वविशेषे । आत्मन्यसत्त्वपूज्यत्वातिशयाध्यारोपे । अर्थादिदर्पे । आदिना कुलपरगुणादिग्रहः । ज्ञाने । प्रणये ॥ हिंसायाम् ॥ अभिमन्यते मानः ॥ अभिमननम् । मनज्ञाने । घञ् । मीञ्हिंसायांवा । मीनातेस्याल्वम् ।

अभिमानितम् । न । सुरते । त्रि । अभि

मानयुक्ते । अभिमानः सञ्जातोऽस्य । तारकादित्वादितच् ।

अभिमानी । त्रि । मानिनि । सर्वतो मानास्पदे । अभिमानोऽस्यास्ति । इनिः । अभितोमानीवा ।

अभिमुखः । त्रि । सम्मुखे । अभिमतो मुखम् । अत्यादयः क्रान्ताद्यर्थेद्वितीयये ति समासः ।

अभिमृष्टः । त्रि । संमृष्टे ॥

अभियातः । त्रि । स्वयंप्राप्ते ।

अभियुक्तः । त्रि । परैरुद्धे । तत्परे । प्रार्थिनि । अभियोगविषयीभूते । आसामोतिख्याते । प्रतिवादिनि । यथा । अभियुक्तोऽभियोगस्ययदिकुर्या दपह्नवम् । मिथ्यातत्तुविजानीया दुत्तरंव्यवहारत इतिनारदः । अभितोयुक्तः ॥

अभियोक्ता । पुं । अर्थिनि । विवादस्य कर्त्तरि । फरियादीति इतरजनेषु ख्याते । यथा । अभियोक्ताऽप्रगल्भ त्वात वक्तुंनोत्सहतेयदि । तदाकालः प्रदातव्यः कार्यशक्त्यनु रूपतः । इति नारदः ॥

अभियोगः । पुं । अन्यकृतस्यस्वधर्षणस्य राज्ञेवेदने । अन्येनविरोधे स्वार्थ सम्बन्धितयाराजसमीपे कथने । नालिश इतिइतरजनेषुख्याते । सचद्वि



विधः । यथाहनारदः । द्व्यभियोगस्तुविज्ञेयः शङ्कातत्त्वाभियोगतः । शङ्काऽसतांतु संसर्गात् तत्त्वंह्रोढाभिदर्शनादिति । अभिग्रहे । आग्रहे । अभिगम्याक्रमणे । शपथे । आह्वे । अभियोजनम् । युजिर्योगे । घञ् । उद्योगे ॥

अभिरक्षा । स्त्री । सर्वतस्त्राणे ।

अभिरतः । त्रि । रते ।

अभिराद्धः । त्रि । आराधिते ।

अभिरामः । त्रि । सुन्दरे । मनोज्ञे । प्रिये । अभिरमन्तेऽस्मिन् । रम० । अधिकरणे घञ् ॥

अभिरामकथा । स्त्री । आख्यायिके ।

अभिरूपः । पुं । हरे । विष्णौ । इन्दौ । कामे ॥ त्रि । बुधे । पण्डिते ॥ मञ्जुले । सुन्दरे । मनोहरे ॥ अभिलक्ष्यं रूपमस्य ॥ सदृशे ॥ ममाहमेवाभिरूप इतिलक्ष्यम् ॥

अभिलषितः । त्रि । अभीप्सिते ।

अभिलापः । पुं । सङ्कल्पाङ्गवाक्ये ॥ यथा । काम्याभिलापसहितः कुशतिलजलत्यागरूपः सङ्कल्पःशास्त्रार्थइतिप्रक्रमाधिकरणम् । अभिलप्यतेऽनेनेतिव्युत्पत्त्यावाककरणेअभिपूर्वाल्लपेघञ् ॥ शब्दे । इतित्रिकाण्डशेषः ।

अभिलावः । पुं । छेदने । लवने ॥ अभिलवनम् । लूञ् छेदने । निरभ्योः पूल्वोरिति घञ् ।

अभिलाषः । पुं । लोभे । मनोरथे ॥ अभिलषणम् । लषकान्तौ । घञ् । भोग्यवस्तूनि ॥ अभिलष्यते । कर्मणि घञ् ॥ सङ्गमेच्छायाम् ।

अभिलाषी । त्रि । इच्छावति । अभिलाषयुक्ते ।

अभिलाषुकः । त्रि । लुब्धे । अभिलष्यति । लषकान्तौ । लषपतपदेत्युकञ् ।

अभिलासः । पुं । अभिलाषार्थे । अभिलसनम् । लसश्लेषणक्रीडनयोः । घञ् ॥

अभिवादः । पुं । प्रणामे ॥ अभिवदनम् । वदेर्घञ् ।

अभिवादकः । त्रि । प्रणामयुते । वन्दारौ । वन्दनशीले । अभिवादयति । वदिअभिवादनस्तुत्योः । ण्वुल् ।

अभिवादनम् । न । पादग्रहणे । नामोच्चारणपूर्वकसंस्कृतप्रयोगेण नमस्कृतौ । वाचानतौ ॥ अभिमुखीकरणार्थं वादनं वदनम् । वद्वाक्संदेशयोः चुरादिः । ल्युट् । अभिमुखेनवाद्यते आशीः कार्यतेऽनेनवा । णयन्तादेः करणे ल्युट् । अभिवादनविधिमाहमनुः । अभिवादात् परं वि



प्रोच्चार्यासमभिवादयन् । असौनाममाहमस्मीतिस्वंनामपरिकीर्त्तयेत् । नामधेयस्ययेकेचिदभिवादंनजाननते । तान् प्राज्ञोऽहमितिब्रूयात्स्त्रियःसर्वास्तथैवच । भोःशब्दंकीर्त्तयेदन्ते स्वस्यनाम्नोऽभिवादने । नाम्नां स्वरूपभावोहिभोभावऋषिभिः स्मृतःइति । तथाच अभिवादये शुभशर्माहमस्मिभोः इत्यभिवादनवाक्यम् । तन्निषेधोयथा । समित्पाम्बुधरकुशपुष्पान्नहस्तोनाभिवादयेत्कार्ष्यसंयुतमितिबौधायनः ॥ जपयज्ञजलस्थञ्चसमित्पुष्पकुशानलान् । दन्तकाष्ठञ्चभक्ष्यञ्चवहन्तंनाभिवादयेदिति लघुहारीतः ।अन्यत्रापि।समित्पुष्पकुशाग्न्यम्बुमृदन्नाक्षतपाणिकः । जपंहोमञ्चकुर्वाणोनाभिवाद्योद्विजोभवेदिति ।

अभिवाद्यः । त्रि । अभिवादनार्हे ।

अभिविधिः । पुं । तेनसहेत्यर्थे । व्याप्तौ ।

अभिविनीतः । त्रि । सर्वतःशिक्षिते ।

अभिविमानम् । न । आभिमुख्येनविश्वं मिमीते जानातीतियोगादेहस्थानरात्मनि ।

अभिव्यक्तः । त्रि । सर्वतःप्रव्यक्ते ।

अभिव्यक्तिः । स्त्री । प्रव्यक्तौ । उद्भूते । अभितोव्यक्तिः ।

अभिव्याप्तिः । स्त्री । साकल्येन योगे । सम्मूर्छने । सर्वतोव्याप्तौ ॥ अभिव्यापम् । आमूव्याप्तौ । क्तिन्नावादिभ्य इति क्तिन् ॥

अभिशंसनम् । न । अभिकथने ॥

अभिशपनम् । न । अभिशापे ॥

अभिशप्तः । त्रि । शापग्रस्ते । मासाभिशापे ॥

अभिशस्तः । पुं । स्वपे । अभितःशस्तः प्रशस्तः ॥ त्रि । मृषापवादग्रस्ते । परस्त्रियां परपुरुषेवा मैथुनं प्रतिमिथ्या दूषिते । शापग्रस्ते । आचारिते । अनिर्णीतेपितस्मिन्महापातकादौ जाताभिशापे ॥ अभिशस्यतेस्म । शसुहिंसायाम् । क्तः । यस्यविभाषेति नेट् । धृषिशसीइतिवा ॥

अभिशस्तिः । स्त्री । लोकापवादे । प्रार्थनायाम् । याच्ञायाम् ॥ अभिशंसनम् । शंसुस्तुतौ याचनेच । स्त्रियां क्तिन् ॥

अभिशापः । पुं । मिथ्याभिशंसने । स्वर्णस्तेयंत्वया कृतमित्यादिमिथ्यादूषणाभिधायकेवाक्ये । ब्राह्मणगुरुहत्यादिहुसिद्धानामनिष्टाभिशंसने ॥ अभिशपनम । शपआक्रोशे । घञ् ।

अभिषङ्गः । पुं । पराभवे । आक्रोशे । शपथे । सर्वतोभावेनसङ्गे । भूताद्यावेशे । अभिषञ्जनम् । षञ्जसङ्गे । घञ् । उपसर्गादितिषः ॥

अभिषवः । पुं । अवभृथस्नाने ॥ यज्ञे । स्नपने । पीडने । मद्यसन्धाने । सुराकरणे । सुरोत्पादनप्रकारे ॥ सवने । सुत्यायाम् । अभिषूयते अभिषवणंवा । षुञ् अभिषवे । ऋदोरप् । उपसर्गादितिषः । न । काञ्जिके ॥ इतिहलायुधः ॥

अभिषवणम् । न । स्नाने । षुञ्० । ल्युट् ।

अभिषह्य । । । प्रसह्यार्थे । अभिषोढ्वा । षहमर्षणे । क्त्वा । ल्यप् ॥

अभिषिक्तः । त्रि । अभिषेचिते ॥

अभिषिषेणयिषुः । त्रि । सेनयाऽभियातुमिच्छति ॥ सत्यापपाशेत्यादिना सेनाशब्दाण्णिचि सनि सनाशंसेच्छुः । स्थादिष्वितिधात्वभ्यासकारयोः षत्वम् ।

अभिषुतम् । न । काञ्जिके । अभिषूयते स्म । षुञ् अभिषवे । क्तः । उपसर्गादितिषत्वम् ।

अभिषेकः । पुं । शान्तिस्नाने । स्नाने । रुद्राभिषेकादौ । पूर्णाभिषेकशाक्ताभिषेकराजाभिषेकादिपदवाच्ये अधिकारप्राप्त्यर्थंस्नाने ॥ मार्जने । अभिषेचनम् । षिच० । घञ् । जले । अभिषिच्यतेऽनेन घञ् ।

अभिषेचनम् । न । अभिषेके । षिच० । ल्युट् ।

अभिषेणनम् । न । शत्रोःऽरिसम्मुखगतौ । सुदूधायाम् । यत्सेनयाभिगमनमरौ तदभिषेणनम् । सेनया अभियानम् । सत्यापेतिसेनायव्दाशिच् । ल्युट् । उपसर्गात्सुनोतीतिषत्वम् ।

अभिष्टुतम् । त्रि । स्तुते । वर्णिते । ईडिते । अभिष्टूयतेस्म । ष्टुञ् स्तुतौ । क्तः ।

अभिष्यन्दः । पुं । अतिवृद्धौ । आस्रावे । अक्षिगदविशेषे । अभिष्यंदनम् । स्यंदू० घञ् ।

अभिष्यन्दिरमणम् । न । शाखानगरे । प्रधाननगरसन्निहितनगरे । इतिजटाधरः ।

अभिष्वङ्गः । पुं । उत्कटरागे । अन्यस्मिन्नहंबुद्धौ । अभिष्वञ्जनम् । ष्वञ्ज० । घञ् ।

अभिसंरब्धः । त्रि । कुपिते ।

अभिसंवृत्तिः । स्त्री । व्यवहारे ।

अभिसन्तापः । पुं । युद्धे । अभिग्रामे । अभितः सन्तापोऽत्र ।

अभिसन्धः । पुं । सत्यत्वाभिमाने ।

अभिसन्धानम् । न । वञ्चने । प्रतारणे ।

अभिसन्धिः । पुं । अभिसन्धाने । उद्देशे ।

अभिसम्पातः । पुं । युद्धे । अभिसम्पतनम् । पतॢ गतौ । घञ् ॥

अभिसरः । त्रि । अनुचरे । सहाये । अभितः । सरति । सृ गतौ । पचाद्यच् ।

अभिसर्जनम् । न । दाने । वधे ॥ अभिपूर्वात् सृजेर्भावे ल्युट् ॥

अभिसारः । पुं । बले । युद्धे । सहाये । साधने । स्त्रीपुंसयोरन्यतरस्याऽन्यतरार्थं सङ्केतस्थानगमने ॥ अभिसरणम् । सृ० । घञ् ।

अभिसारिका । स्त्री । नायिकाविशेषे । सङ्केतस्थलेस्वयङ्गमनकर्त्र्याम् । एवं प्रियगमनकारयित्र्याम् । कान्तार्थिनीतुयायातिसङ्केतंसाभिसारिके त्यमरः । भरतस्तु । हित्वालज्जाभये श्लिष्टामदनेमदनेनच । अभिसारयतेकान्तंसाभवेदभिसारिकेति॥ अभिसरति । सृ गतौ । ण्वुल् ।

अभिसारिणी । स्त्री । अभिसारिकायाम् ।

अभिसृष्टः । त्रि । दत्ते ॥

अभिहतः । त्रि । विद्धे । ताडिते ।

अभिहारः । पुं । अभियोगे । अभिगम्याक्रमणे । अभिग्रहणे । आभिमुख्येन ग्रहणे । चौर्ये । कवचधारणे । सन्नहने ॥ मद्यपे । अभिहरणम् । हृञ् हरणे । घञ् ।

अभिहितम् । त्रि । कथिते । प्रोक्ते । अ

भिधीयतेस्म। डुधाञ् धारणपोषण योः। क्तः। दधातेर्हिः॥

अभीकः। त्रि। कामुके। क्रूरे। निर्भये। पुं। कवौ। अभिकामयते। अनुकाभिके तिसाधुः। स्वामिनि।

अभीक्ष्णम्। ।। नित्ये। अत्यर्थे। भृशे। पौनःपुन्ये। अभिक्ष्णौति। क्ष्णु तेजने। बाहुलकादमुः। अन्येषामपीतिदीर्घः॥ यद्वा। अभिक्ष्णवनम्। क्ष्णु तेजने। डम्। पृषोदरादित्वाद भेर्दीर्घः॥ शीघ्रे। प्रकर्षे।

अभीच्णम्। न। भृशे। पौनः पुन्ये। नित्ये। सर्वदार्थे। त्रि। भृशयुक्तक्रियायाम्। नित्ययुक्तक्रियायाम्॥

अभीतः। त्रि। अभिव्याप्ते अभि पूर्वात् इणः क्तः। अभितइतोवा॥ निर्भये। नभीतः॥

अभीप्सितम्। त्रि। वाञ्छिते। अभीष्टे॥ अभ्याप्तुमिष्यतेस्म। आप्लृ व्याप्तौ सनन्तः। आपज्ञप्यृधामीत्। क्तः।

अभीरः। पुं। आभीरे। गोपे। अभिईरयति। ईरगतौकम्पनेच। पचाद्यच्॥

अभीरुः। त्रि। निर्भये। स्त्री। शतमूल्याम्। नभीरुः। स्थिरपत्रत्वात्।

अभीरुपत्री। स्त्री। शतमूल्याम्। अभीरूणि पत्राण्यस्याः। पाककर्णेति

ङीष्॥

अभीशुः। पुं। प्रग्रहे। किरणे। रश्मौ।

अभीषङ्गः। पुं। आक्रोशने। शापे। पराजसङ्गे। घञ्। उपसर्गस्यघञीति दीर्घः॥

अभीषुः। पुं। किरणे। अश्वास्यरज्जौ। प्रग्रहे। कामे। अनुरागे। त्रि। इच्छति। ईषतेहिनस्ति ईष्यतेवा। ईषगतिहिंसादर्शनेषु। ईषेः किच्च उः। आदेरिकारादेशश्च। अभिगतईषुः। प्रादयोगतेति समासः॥

अभीष्टः। त्रि। ईप्सिते। प्रिये। अभितइष्यतेस्म। इषुइच्छायाम्। क्तः॥

अभीष्टा। स्त्री। रेणुकाभिधगन्धवस्तुनि।

अभुक्तः। त्रि। उपवासिनि। यथा अभुक्तस्यदिवानिद्रापाषाणमपिजीर्यतीति। अकृतभोजनेवस्तुनि।

अभुक्तमूलः। पुं। न। ज्येष्ठान्त्यघटीचतुष्टयसहितमूलाद्यघटीचतुष्टये॥ ज्येष्ठान्त्यैकघटीसहित मूलाद्यघटिकाद्वये॥ ज्येष्ठान्त्यघटिकार्द्धसहित मूलादिघटिकार्द्धे॥ ज्येष्ठान्त्यपञ्चघटिकासहितमूलाद्यष्टनाडिकासु॥

अभूतः। त्रि। अविद्यमाने॥

अभूताभिनिवेशः। पुं। असतिअस्तित्वनिश्चये॥

अभेद: । पुं । ऐक्ये । अविशेषे । नभेदः । यथा । रलयोर्डलयोस्तद्वज्जययोर्बवयोरपि । शसयोर्मनयोश्चान्ते सविसर्गाविसर्गयोः । सबिन्दुकाबिन्दुकयोःस्यादभेदेन कल्पनमिति । यथा वा । गुणगुणिनोः क्रियाक्रियावतोश्चाभेदः ।

अभेद्यम् । न । हीरके । त्रि । अभेदनीये ।

अभोग: । त्रि । भोगशून्ये । भोगानर्हे ॥ नास्तिभोगोयस्य ॥

अभोजनम् । न । भोजनाभावे । उपवासे । यथा । अजीर्णे भोजनंयेषां जीर्णेयेषामभोजनम् । राजाभभोजनंयेषांतेषांनश्यन्तिधातवः इतिवैद्यकम् । अपिच । वेदोदितानां नित्यानां कर्मणां समतिक्रमे । स्नातकव्रतलोपेच प्रायश्चित्तं अभोजनमितिमनुवाक्यतत्त्वम् ।

अभ्यक्त: । त्रि । कृततैलाभ्यंगे । अभितोऽक्तः ।

अभ्यग्रम् । त्रि । आसन्ने । समीपे । अभिमुखमग्रमस्य ।

अभ्यङ्ग: । पुं । तैलमर्दने । स्नेहने । यथा । तैलमभ्यंगदद्भ्युन मस्तादचतर्पणम् । सामाष्टिः पृथगभ्यंगोमस्तकादौ प्रकीर्त्तितः । अभ्यङ्गमाचरेन्नित्यं सजराश्रमवातहा । शिरःश्रवणपादेषु तं विशेषेण शीलयेदित्यायुर्वेदः । मातृगते वेश्मिरे यस्य चि सम्बद्धस्तः अतश्चतुर्हितार्थिना-पादाभ्यङ्गः करणीयः । कफग्रस्तकृतभेदवमनाजीर्णिभिर्नाभ्यङ्गःकरणीयः । अपिच । मूर्द्ध्निदत्तं यदातैलं भवेत्सर्वाङ्गसङ्गतम् । स्रोतोभिस्तर्पयेद्धातून् अभ्यङ्गस्तत्रचेरित इति । तैलादिना शिरस्सहितदेहमर्द्दने ।

अभ्यञ्जनम् । न । तैले । अभ्यङ्गे । मक्षणपदस्थाने । अभितःअञ्जनम् ।

अभ्यधिक: । त्रि । सर्वोत्कृष्टे ।

अभ्यनुज्ञा । स्त्री । अनुमतौ । अभितःअनुज्ञा ।

अभ्यनुज्ञात: । त्रि । आभिमुख्येनज्ञाते ।

अभ्यन्तम् । त्रि । प्रकाशिते ।

अभ्यन्तरम् । न । अन्तराले । मध्यमात्रे । अभिगतमन्तरम् ।

अभ्यमित: । त्रि । रोगिणि । अभ्यम्यतेस्म । अमरोगे । क्तः । चुरादीनां णिचोवैकल्पिकत्वात् णिअभावे इट् । अभ्यमतिस्मवा । अमगत्यादौ । गत्यर्थेतिक्तः । रुष्यमत्वरेतिवेट् ।

अभ्यमित्रीण: । त्रि । अभ्यमित्र्यं । अभ्यमित्रमलंगामी । अभ्यमित्र्येच्छेतिखः ।

अभ्यमित्रीयः । त्रि । अभ्यमित्र्ये । अभ्यमित्रमलंगामी । अभ्यमित्राच्छ्चेतिछः । अमित्राभिमुखंसुष्ठुगच्छतीत्यर्थः ॥

अभ्यमित्र्यः । त्रि । स्वशक्तितःशत्रोरभिमुखंगच्छतीरे । अभ्यमित्रीये । अमित्रस्याभिमुखम् । लक्षणेनाभिप्रती इत्यव्ययीभावः । अभ्यमित्रमलं गामी । अभ्यमित्राच्छ्चेतियत् ॥

अभ्यर्णम् । त्रि । समीपे ॥ अभ्यर्द्यतेस्म अभ्यर्दतिस्मेतिवा । अर्दगतौ । कर्मणिकर्त्तरिवाक्तः । अभेश्चाविदूर्यइतीडभावः । रदाभ्यामितिनस्तस्यचणत्वम् ॥

अभ्यर्दितः । त्रि । पीडिते । अभिपूर्वादर्देः क्तः । इट् ॥

अभ्यर्हणीयः । त्रि । पूज्ये ।

अभ्यर्हितः । त्रि । उचिते ॥ श्रेष्ठे ।

अभ्यवकर्षणम् । न । शल्यादेः समुत्पाटने । निर्हारे । शल्यादेर्युक्त्याभिःसारणे । अभ्यवकृषेर्ल्युट् ॥

अभ्यवस्कन्दः । पुं । रिपोराक्रमणे । निःशक्तीकरणाय शत्रुभिर्दीयमानेप्रहारे । अभ्यासादने । प्रपाते ॥

अभ्यवस्कन्दनम् । न । रिपोराक्रमणे । अभ्यासादने । प्रहारादिना शत्रोर्निःशक्तीकरणे । बलादाक्रमणे इतिस्वामी । शत्रोः सम्मुखगमने । स्कन्दिर् गतिशोषणयोः । ल्युट् ।

अभ्यवहारः । पुं । भक्षणे । सचभक्ष्यभोज्यलेह्यपेयचोष्यभेदेन पञ्चविधः ।

अभ्यवहृतम् । त्रि । भुक्ते ॥ अभ्यवह्रियतेस्म । क्तः ।

अभ्यसनम् । न । अभ्यासे । पौनःपुन्येनचिन्तने करणेच ॥

अभ्यसूयकः । त्रि । गुर्वादीनां वैदिकमार्गस्थानां कारुण्यादिगुणेषु प्रतारणादिदोषारोपके । अभितोऽसूयकः ।

अभ्यसूया । स्त्री । गुणेषुदोषारोपे ॥ अभ्यसूयनम् । असूञ् असूयायाम् । कण्ड्वादित्वाद्यकिअप्रत्ययादित्यः ।

अभ्याकाङ्क्षितम् । न । अलीकाभियोगे । मिथ्यादावा इतिख्याते । अभ्याख्याने । त्रि । ईप्सिते । अभितः आकाङ्क्षितम् ।

अभ्याख्यानम् । न । मिथ्याभियोगे । शतंमे धारयसीत्यादिमिथ्योद्भावने । मिथ्यावादे । अभ्याङ्पूर्वाच्चक्षिङोभावेल्युट् ।

अभ्यागतः । पुं । अतिथौ । दृष्टपूर्वेगृहागते । त्रि । सम्मुखागते ॥ अभितआगतः । आभिमुख्येन आगतोवा ॥

 

अभ्यागमः । पुं । विरोधे । समरे । अन्तिके । अभिघाते । अभ्युद्गमने । भोगे । स्वीकारे । फलसम्बन्धे । अभ्यागमनम् । गम्लृ गतौ । ऋवृद्धिश्चप् ॥

अभ्यागारिकः । त्रि । कुटुम्बव्यापृते । पुत्रदारादिपोषणव्यग्रे । अभ्यागारेनियुक्तः । अगारान्ताट्ठन् । अभिअधिकआगारिकोवा ।

अभ्याघातः । पुं । चौर्याद्यनर्थोपदेशे ।

अभ्यात्तः । त्रि । अभिव्याप्ते । व्याप्त्यर्थस्याततेः कर्त्तरि कर्मणिवा निष्ठा ।

अभ्यादानम् । न । आरम्भे । आभिमुख्येनादानम् ।

अभ्यान्तः । त्रि । रोगिणि । अभ्यम्यतेस्म । अमरोगे । क्तः । चुरादीनांणिचोवैकल्पिकत्वात् णिजभावपक्षे ॥ अमतिस्सवा । अमगत्यादौ । गत्यर्थेतिक्तः । रुष्यमत्वरेतिवेट् । इडभावे अनुनासिकस्येतिदीर्घः ।

अभ्यामर्दः । पुं । रणे । समरे । अभ्यामर्दनम् । मृदक्षोदे । घञ् ।

अभ्याशः । पुं । अवश्यमेव । अन्तिके । अभ्यश्यते । अशूव्याप्तौ । घञ् ।

अभ्यासः । पुं । अभ्यसने । आवृत्तौ । आकर्णनं विचारोजपः शिष्येभ्योदानमावृत्तिश्चेति पञ्चविधोऽभ्यासोभवति ॥ खुरल्याम् । शराभ्यासे । पुनःप्रयोगे । संस्कारवाहुल्ये । दृढतरसंस्कारे । षड्विधलिङ्गेषु द्वितीये लिङ्गे । यथाहुः । प्रकरणप्रतिपाद्यस्य तन्मध्ये पौनःपुन्येनप्रतिपादनमभ्यासः । यथाछान्दोग्येषष्ठप्रपाठके अद्वितीयस्यवस्तुनोमध्ये तत्त्वमसीति नवकृत्वः प्रतिपादनमिति । विजातीयप्रत्ययानन्तरिते सजातीयप्रत्ययवाहे । अतिपरिचये । त्रि । अन्तिके । अभ्यासीदति । अन्येभ्योपीतिडः ॥

अभ्यासयोगः । पुं । एकस्मिन् प्रतिमाद्यालम्बने सर्वतः समाहृत्य चेतसः पुनःपुनः स्थापनमभ्यासस्तत्पूर्वकेसमाधौ ।

अभ्यासादनम् । न । रिपोरस्त्राद्यैर्निःशक्तीकरणे । अभ्यवस्कन्दने । शत्रोःसम्मुखगमने । षद्लृ विशरणादौ । चुरादिः । ल्युट् ॥

अभ्याहारः । पुं । अभिग्रहणे । चौर्ये ॥ आभिमुख्येनाहरणम् । हृञ्हरणे । घञ् ।

अभ्याहितः । त्रि । उपचिते । इन्धनैरुपचितेग्नौ पुं ।

अभ्युक्तः । त्रि । प्रकाशिते

अभ्युत्थानम् । न । गौरवोत्थमण्युद्गमने । गौरवंदृष्ट्वाआसनादेरुत्थाने ।

उद्यमे । उद्गवे ॥ आभिमुख्येनउत्थानम् ॥

अभ्युत्पतनम् । न । आभिमुख्येनोत्पतने ।

अभ्युदय: । पुं । पराक्रमे ॥ वृद्धिश्राद्धे ॥ अभीष्टानांकार्याणामाभिमुख्येनोदय: प्रादुर्भावोयेनेतिविग्रह: । सर्वतोभावेनधनजनादीनांवृद्धौ । यथा । राजन्नभ्युदयोस्तु वल्लनकवे हस्तेकिमास्तेतव श्लोक: कस्यकवेरमुष्य कृतिनस्तत्पश्यतांपश्यते । किन्त्वासामरविन्दसुन्दरदृशां द्राक्चामरान्दोलनादुद्वेल्लद्भुजवल्लिकङ्कणझणत्कार: क्षणं वार्यताम् ॥ अस्यपूर्वार्द्धंवल्लनकविकर्णाटराजयोर्वाक्यं शेषार्द्धं कालिदासस्य ।

अभ्युदित: । त्रि । सूर्योदयकालेनिद्राणे । सुप्तेयस्मिन्सूर्यउदितस्तस्मिन् ॥ अभिसर्वत: उदतिशयेन इतं गतं प्रातस्तनंकर्मास्मात् । उदिते । प्रकाशिते ।

अभ्युद्यतम् । त्रि । अयाचितोपनीते ऽन्नादौ । आभिमुख्येन स्थापिते ।

अभ्युपगत: । त्रि । स्वीकृते । अभ्युपगम्यतेस्म । गम्लृ गतौ । क्त: । अभ्युदिते ।

अभ्युपगम: । पुं । स्वीकारे । अङ्गीकारे । समीपागमने । अन्तिकसमागमे । अभ्युपेत्युपसर्गद्वयपूर्वाद्गमे र्ग्रहवृदृनिश्चिगमश्चेत्यप् ।

अभ्युपगमसिद्धान्त: । पुं । न्यायाश्रयसिद्धान्तविशेषे ॥ यथा । अपरीक्षिताभ्युपगमात्तद्विशेषपरीक्षणमभ्युपगमसिद्धान्त: । १५ । ३१ । अपरीक्षितस्य साक्षादसूचितस्य विशेषपरीक्षणं विशेषधर्मकथनम् । अभ्युपगमादिति ज्ञापकत्वे पञ्चमी अभ्युपगमज्ञापकमित्यर्थ: । विशेषपरीक्षणाज्ज्ञायते सूत्रकृतोऽभ्युपगतमिदमिति । तथाच साक्षादसूचिताभ्युपगमोऽभ्युपगमसिद्धान्त: । यथा मनसइन्द्रियत्वमिति ।

अभ्युपपत्ति: । स्त्री । अनुग्रहे । विपत्सम्पादनाहितनिवारणप्रवृत्तौ ॥ अभ्युपपदनम् । पदगतौ । क्तिन् ।

अभ्युपाय: । पुं । स्वीकारे । इतिहेमचन्द्र: ॥ उपाये । यथा । ततस्वीकृतस्य तिलकेर कहत्वाभ्युपायइलिकाव्यप्रकाश: ।

अभ्युपायनम् । न । उपढौकनद्रव्ये । उपायने ॥ यथा । तावानयस्व गोपैर्नन्दाद्यै: साभ्युपायनैरितिविष्णुभागवतम् ।

अभ्युपेत: । पुं । उपगते । स्वीकृते ॥ ।

अभ्युष: । पुं । ईषत्पक्वे । भर्जिते ह

हरित्तयथादै। । पैालो । अभ्योषति । उषदाहे । इगुपधेतिकः । अभ्यूष्यतेवा । घञ् ॥

अभ्यूषः । पुं । आपक्के । अभ्युषे । अभ्यूषति अभ्यूष्यतेवा । अषरुजायाम् । इगुपधेतिकोघञ्वा ॥

अभ्यूष्तिः । त्रि । ज्ञाते । अभितः उष्तिः ॥

अभ्योषः । पुं । अभ्यूषे । पैालो ॥ अभ्योषति । उषदाहे । पचाद्यच् । गुणः ।

अभ्रम् । न । मेघे ॥ आपोविभर्त्ति । डुभृञ् । मूलविभुजादित्वात्कः ॥ यद्वा । नभ्रंश्यन्त्यापोऽस्मात् । भ्रंशुभ्रधःपतने । अन्येभ्योपीतिडः । अभ्रकधातै । काञ्चने । गगने । नविभर्त्ति किञ्चित् । मूलविभुजादित्वात्कः । यद्वा । आपोभ्रंश्यन्त्यस्मात् । अन्येभ्योपीतिडः । यद्वा । अभ्रतिस्थैर्यंगच्छति । अभ्रवभ्रमभ्रचरगत्यर्थाः । अच् । यद्वा नभ्राजते । भ्राजृदीप्तौ । अन्येभ्योपीतिडः ॥

अभ्रंलिहः । पुं । वायौ । त्रि । मेघस्पर्शिनि । उन्नतरे । अभ्रंलेढि । लिहआस्वादने । वहाभ्रेलिह इत्यभ्रोपपदाल्लिहेः कर्त्तरिखश् प्रत्ययः । अरुर्द्विषदितिमुमागमः ॥

अभ्रकम् । न । धातुभेदे । अभ्रे । गिरि



आमले । अस्योत्पत्त्यादिकं यथा । पुरावधायवृत्रस्य वज्रिणा वज्रमुद्धृतम् । विस्फुलिङ्गास्ततस्तस्य गगने परिसर्पिताः । तेनिपेतुर्घनध्वाना च्छिखरेषु महीभृताम् । तेभ्य एव समुत्पन्नंत त्तद्गिरिषु चाऽभ्रकम् । तद्वज्रं वज्रजातत्त्वादभ्रमभ्ररवोद्भवात् । गगनात् स्खलितंयस्माद्गगनंचततोमतम् । विप्रक्षत्रियविट्शूद्रभेदात्तच्या चतुर्विधम् । क्रमेणैवसितंरक्तंपीतंकृष्णंचवर्णतः । प्रशस्यतेसितंतारेरक्तंतत्तुरसायने । पीतंहेमनिकृष्णन्तुगदेषुद्रुतयेपिच । पिनाकंदर्दुरंनागं वज्रंचेतिचतुर्विधम् । मुंचत्यग्नौविनिःक्षिप्तं पिनाकं दलसञ्चयम् । अज्ञानाद्भक्षणात्तस्य महाकुष्ठप्रदायकम् । दर्दुरं त्वग्निनिः क्षिप्तंकुरुते दर्दुरध्वनिम् । गोलकानव हुशःकृत्वातस्यान्मृत्युप्रदायकः । नागन्तु नागव द्वह्नौफूत्कारंपरिमुंचति । तद्भक्षितमवश्यन्तु विदधातिभगन्दरम् । वज्रन्तुवज्रवत्तिष्ठे त्तन्नाग्नौविकृतिं व्रजेत् । सर्वाभ्रेषुवरंवज्रं व्याधिवार्द्धक्यमृत्युहृत । अभ्रकन्तु रसैर्लोहं वहुसत्त्वंगुणाधिकम् । दक्षिणाद्रिभवंस्वल्पसत्त्वमल्पगुणप्रदम् । प्रथमारिताभ्रस्यगुणाः । अभ्रंक

षायंमधुरं सुशीतमायुष्करंधातुविव र्द्धनंच। हन्यात्त्रिदोषंव्रणमेहकुष्ठप्ली होदरग्रंथिविषक्रमींश्च। रोगान् हन्तिदृढयतिवपुर्वीर्यवृद्धिंविधत्ते तारुण्याढ्यंरमयतिशतंयोषितांनित्य- मेव। दीर्घायुष्कानजनयति सुतान् विक्रमैः सिंहतुल्यान् मृत्योर्भीतिंह रतिसततंसेव्यमानंमृताभ्रमिति। अथाशोधिताभ्रस्यदोषाः। पीडांवि धत्ते विविधांनराणां कुष्ठंक्षयंपाण्डुग दंचशोथम्। हृत्पार्श्वे पीडांचकरो त्यसह्यामशुद्धमभ्रं गुरुवह्निहृत्स्यात्॥ अस्यशोधनविधिर्यथा। कृष्णाभ्र कंधमेद्वह्नौ ततः क्षीरेविनिः क्षिपेत्। भिन्नपत्रंतुतत्कृत्वातण्डुलीयाम्ल योर्द्रवैः। भावयेदष्टयामंतदेवमभ्रं विशुध्यति॥ मारणन्तु। कृत्वाधान्याभ्रकंतच्छोधयित्वाथमर्दयेत्। अर्क क्षीरैर्दिनंखल्वेचक्राकारंचकारयेत्। वेष्टयेदर्कपत्रैश्चसम्यग्गजपुटेपचेत्। पुनर्मर्द्यंपुनः पाच्यंसप्तवारान् पुनः पुनः॥ ततोवटजटाक्वाथैस्तद्वद्देयंपुटत्रयम्। म्रियतेनात्रसन्देहः प्रयोज्यंस र्वकर्मसु। तुल्यंघृतंमृताभ्रेणलोहपात्रेविपाचयेत्। घृतेजीर्णेतदभ्रन्तु स र्वयोगेषुयोजयेदिति भावप्रकाशः॥

अभ्रस्याकृतिर्वा। इवेप्रतिकृताविति कन्।

अभ्रङ्कषः। पुं। समीरणे। अभ्रंकषति हिनस्तीतिविग्रहे सर्वकूलाभ्रकरीषेषु कषइत्यनेनाकषेः खच्प्रत्ययः। मुमागमः।

अभ्रपिशाचः। पुं। राहौ। इतिशब्दरत्नावली। (*doubtful:* इतिचिव।) षडशेषः।

अभ्रपुष्पम्। न। जले। अभ्रस्यपुष्पमिव। पुं। वेतसे। अभ्रमिव अभ्रसमयेवा पुष्पमस्य।

अभ्रमांसी। स्त्री। आकाशमांसीलतायाम्॥ इतिराजनिर्घण्टः।

अभ्रमातङ्गः। पुं। ऐरावते। अभ्रंमेघस्तदात्मकोमातङ्गः। शाकपार्थिवादिः। अभ्रे आकाशे मेघेवा विद्यमानोमातङ्ग इतिवा।

अभ्रमुः। स्त्री। ऐरावतपत्न्याम्। अभ्रेखे माति मन्थरगामिनीत्वात्। बाहुलकादुः। अभ्रे आकाशएवमाति। माङ्माने। मितद्र्वादित्वाड्डुर्वा। न भ्राम्यति। भृमृचरीत्युः। मन्थरगामिनीत्यर्थ इतिवा।

अभ्रमुप्रियः। पुं। अभ्रमातङ्गे। अभ्रमोः प्रियः।

अभ्रमुवल्लभः। पुं। ऐरावते। अभ्रमोर्वल्लभः।

अभ्रति अभ्रतेवा। अभ्र॰। कुन्। अभ्ररोहम्। न। वैदूर्यमणौ। इति

राजनिर्घण्टः ।

अभ्रमिणी । स्त्री । अभ्रैरभ्रैर्भ्रिमितायांदिशि । अभ्रैरभ्रैर्भ्रमिता सा दृश्यास्यामितिङीष् ।

अभ्रवाटिकः । पुं । आम्रातके ॥ इतिराजनिर्घण्टः ॥

अभ्रावकाशकः । पुं । तापसान्तरे । यो वातातपवर्षेषु केवलाकाशे असंवृतप्रदेशे तपश्चरतिसोऽभ्रावकाशकः ।

अभ्रिः । स्त्री । काष्ठकुद्दाले । नौमलोत्सारके । पोतादेर्मलापनयनार्थं काष्ठघटितकुद्दाले । अभ्रति । अभ्र गतौ । सर्वधातुभ्यइन्निति इन् ।

अभ्रियम् । त्रि । मेघभवे । अभ्रेभवम् । समुद्राभ्राद्घः । छांदसत्वं प्रायिकम् ॥ स्त्रियामभ्रिया ।

अभ्री । स्त्री । काष्ठकुद्दाले ॥ अभ्रति । अभ्रगतौ । सर्वधातुभ्यइतिइन् । कृदिकारादितिङीष् ।

अभ्रेषः । पुं । न्याये । उचिते । भ्रेषणम् भ्रेषः । भ्रेषृचलने । घञ् । भ्रेषादन्यः ॥

अभ्रोत्थम् । न । कुलिशे । त्रि । अभ्रभवे ।

अम । ा । अल्पे । शीघ्रतायाम् । इतिशाब्दिकः ।

अमः । पुं । रोगे ॥ त्रि । अपक्कफलादौ ।

अमकृत्यः । पुं । रस्वकमृगे ॥ त्रि । मत्ताधीने । मयुभक्षकपक्के ।

अमक्कः । त्रि । मत्ताधीने ।

अमतः । पुं । मृत्यौ । काले । रोगे । त्रि । असंमते । अविज्ञाते । अतर्कितो । अमति । अमगत्यादिषु । भृमृदृशियजीत्यादिनाऽतच् ।

अमतिः । पुं । काले । दण्डे । चन्द्रे । त्रि । दुष्टे । अमति । अमगत्यादिषु । अमेरतिः ।

अमत्रम् । न । भाजने । भाण्डे । अमति अस्मिन्नत्र । अमगत्यादिषु । अभिनक्षियजिवधिपतिभ्योऽत्रन् ।

अमदनः । पुं । शिवे ।

अमना । त्रि । स्नेहशून्ये ।

अमनस्कः । त्रि । अप्रगृहीतमनस्के । पुं । योगग्रन्थविशेषे ।

अमनिः । स्त्री । वर्त्मनि । गतौ ॥ अमति । अमगत्यादिषु । अर्त्तिसृधृ इत्यादिनाऽनिः ।

अमन्दः । त्रि । धृष्टे ॥ मन्दभिन्ने ॥

अममः । पुं । भाविजिनविशेषे ॥ त्रि । ममताहीने ॥

अमरः । पुं । सुरे ॥ अष्टशाब्दिकान्तर्गतवैयाकरणविशेषे । येननामलिङ्गानुशासनंकृतम् ॥ विक्रमादित्यसभास्थनवरत्नान्तर्गतरत्ने ॥ अयंबौद्धइतिकश्चित् । स्नुहीवृक्षे । पारदे ।

अस्थिसंहारे। त्रि। मरणवर्जिते॥ नम्रियते इतिअमरः। मृङ्प्राणत्यागे तुदादिः। पचाद्यच्॥

अमरजः। पुं। खदिरवृक्षभेदे। काष्ठस्कन्धे। पद्मतरौ॥

अमरदारुः। पुं। देवदारुवृक्षे॥

अमरद्विजः। पुं। देवले। देवाजीवे। पुजारीति प्रसिद्धे॥ अमराणांद्विजः॥

अमरपुष्पकः। पुं। काशे। इक्षुगन्धायाम्॥ इतिरत्नमाला॥

अमरपुष्पी। स्त्री। अवाक्पुष्प्याम्। अधःपुष्प्याम्॥

अमरप्रभुः। पुं। विष्णौ॥ अमराणां प्रभुः॥

अमररत्नम्। पुं। स्फटिके॥ इतिराजनिर्घण्टः।

अमरवल्लरी। स्त्री। आकाशवल्ल्याम्॥

अमरा। स्त्री। गुडूच्याम्॥ अमरावत्याम्॥ दूर्वायाम्॥ स्थूणायाम्॥ जरायौ॥ इन्द्रवारुण्याम्॥ वटीवृक्षे॥ महानील्याम्॥ घृतकुमार्याम्॥ नाभिनालायाम्॥ नम्रियते। मृङ्प्राणत्यागे। पचाद्यच्। टाप्॥

अमराद्रिः। पुं। सुमेरौ॥ अमराणामद्रिः॥

अमरालयः। पुं। स्वर्गे॥ अमराणामालयः॥

अमरावती। स्त्री। इन्द्रपुर्याम्॥ यथा। नानारत्नप्रभाजालमण्डलाखण्डलालये॥ सिद्धसाध्यमरुद्रुद्राद्यमरैरमरावतीति॥ अमराः सन्त्यस्याम्। मतुप्। मतौबह्वचोनजिराद्वीनामिति दीर्घः॥

अमरेशः। पुं। अमरकण्टकतीर्थस्थदेवे॥ अमरेशोऽमरकण्टकइत्यागमोक्तः। अपिच। अमरेशमहापीठे ऊङ्कारसंज्ञकः। तत्रदुर्गाद्वयंनाम चण्डिकाचमहेश्वरीति॥

अमर्त्यः। पुं। त्रिदशे॥ नम्रियते। अमर्त्यः॥ नमर्त्यःइतिनञ्समासोवा॥

अमर्त्यनदी। स्त्री। गङ्गायाम्॥ अमर्त्यानांनदी॥

अमर्त्यभुवनम्। न। स्वर्गे॥ अमर्त्यानां भुवनम्॥

अमर्षः। पुं। कोपे। क्रुधि॥ परोत्कर्षासहनरूपेचित्तवृत्तिविशेषे॥ कृतापराधे ऽसमर्थस्यद्वेषे॥ मर्षणम्। मृषतितिक्षायाम्। भावेघञ्। नञ्समासः॥

अमर्षणः। त्रि। क्रोधने॥ नमर्षणशीलः युच्॥ असहने॥

अमलम्। न। अभ्रके॥ त्रि। निर्मले॥ रजस्तमोमलरहिते॥ अमति। अम गतौ। वृषादिभ्यश्चित्कलच्। अम

अमस्येतिवा ॥

अमला । स्त्री । लक्ष्म्याम् ॥ भूम्यामल-क्याम् ॥ सातलावृक्षे । नाभिमाला याम् ॥ टाप् ॥

अमलात्मा । पुं । निवृत्तरागादिमले ॥

अमस: । पुं । काले ॥ निर्बोधे ॥ रोगे ॥

अमहात्मा । पुं । क्षुद्रहृदये ॥ नमहा त्मा ॥

अमा । ।। सहार्थे ॥ निकटे ॥ नमाति मा माने । क्विप् ॥

अमा । स्त्री । दर्शे । अमावास्यायाम् ॥ नाम्नैकदेशेनामग्रहणात् ॥ चंद्रलोक स्सहूर्यदीधितौ ॥

अमांस: । त्रि । दुर्बले ॥ अल्पमांसयुक्ते ॥ मांसरहिते ॥ नमांसमस्य । अल्पा र्थे नञ् ॥

अमांसाशी । त्रि । निरामिषाशिनि । यथा । नभक्षयेत् वृथामांसममांसा शी भवत्यपीतिशास्त्री मोक्षधर्मे भीष्म: ॥

अमात्य: । पुं । मन्त्रिणि ॥ यथा ॥ शास्त्रो विनीत:कुशल: सत्कुलीन:शुभान्वि त: । शास्त्रार्थतत्त्वगोऽमात्योभवेद्भू मिभुजामिहेतियुक्तिकल्पतरु: ॥ त्रि । सहभवे ॥ अमासह समीपेवाभव: । अव्ययात्त्यप् ॥

अमाय: । त्रि । मायकारकभावशून्येतु-रीयेपरमात्मनि । मायापरिच्छि-त्ति: सावविद्यतेयस्यस: । निर्धने ।

अमानगम् । न । अनादरे ॥ नमानन म ॥

अमानस्यम् । न । पीडायाम् ॥ त्रि । पी डायुक्ते ॥ मानसाय हितम् मानसे-साधुवा । उगवादित्वात् तच्चसाध्वि ति यत् । नमानस्यममानस्यम् ॥

अमामसी । स्त्री । दर्शे । कृष्णपक्षान्त तिथौ ॥

अमामासी । स्त्री । अमावास्याम् ॥

अमावसी । स्त्री । अमामस्याम् ॥

अमावस्या । स्त्री । अमायाम् । अमास हवसतोऽस्याम् चन्द्रार्काविस्यमोपप दात्वसे रमावस्यदन्यतरस्यामित्यधि करणे यत् पाक्षिकोह्रस्वश्चनिपात-सिद्ध: ॥ सूर्याचन्द्रमसोर्य: पर:सन्नि कर्ष: सामावस्येतिगोभिल: । पर:स न्निकर्षश्चैकपर्यधोभावा पञ्चसमस्त्र न्यायेनैकराशय्यवच्छेदेन सहावस्था नरूपोबोध्य: ॥

अमावासी । स्त्री । दर्शे ॥ इतिशब्दर-त्नावली ॥

अमावास्या । स्त्री । दर्शे ॥ अमासहव-सतोऽस्यांचन्द्रार्कौ । अमावस्यदन्यत रस्यामितियत् । णित्वाद्वृद्धि: ॥

अमित: । त्रि । अपरिच्छिन्ने ॥ अपरि

च्छेदे ।

अमितौजाः । त्रि । अतिवीर्यशालिनि । अमितमपरिच्छेद्यमोजः सामर्थ्यं यस्य ।

अमित्रः । पुं । रिपौ ॥ अमति गच्छति । अमगतौ रोगेवा । अमेर्द्विषतिचिदिति इत्रः ॥

अमी । त्रि । रोगिणि । अमोरोगस्तद्वान् । इनिः ।

अमीवम् । न । क्रौर्ये ॥ पापे ॥ दुःखे ॥ अमीवदन्निति लक्ष्यम् ।

अमुकम् । न । छुरिकाविशेषे । शायकु रोति यस्य भाषा ॥ त्रि । मुक्तिरहिते । अमुक्ते ।

अमुतः । १ । अमुष्मादित्यर्थे । तसिल् ।

अमुत्र । १ । भवान्तरे । परलोके । अमुष्मिन् । अदसः सप्तम्यास्त्रल् ।

अमुर्हि । १ । अमुष्मिन्काले ।

अमुष्यपुत्रः । पुं । स्त्री । प्रख्यातवंशजे । कुलीने ।

अमूढः । त्रि । वेदान्तप्रमाणसञ्जातसम्यक्ज्ञाननिवारिताज्ञाने ।

अमूदृशः । त्रि । एवं प्रकारे । एतद्रूपे ॥

अमूर्त्तः । त्रि । निरवयवे । वाय्वन्तरीक्षयोः । यथा । सन्निवेशेनेन्द्रियो यस्तन्मूर्त्तमुच्यते । चित्त्यम्बित्यसंमूर्त्तममूर्त्तं त्वितरद्द्वयमिति वै-

शेषिकः । न्यायमते नानाप्रकारकाद्गात्मसु । एषां सामान्यगुणाः । सङ्ख्यापरिमितिपृथक्त्वसंयोगविभागाः । तत्राकाशस्य विशेषगुणः शब्दः । कालदिशोर्विशेषगुणो नास्ति । आत्मनो विशेषगुणास्तु । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नभावनाख्यसंस्काराधर्माधर्मा चेति ।

अमूर्त्तविद् । त्रि । शून्यवादिनि । अमूर्त्तः सर्वाकारशून्यो निस्स्वभावः परमार्थः इति शून्यवादिनां कल्पनैव । यतः परमार्थो निस्स्वभावश्चेति व्याघातः ।

अमूलः । त्रि । मूलहीने ।

अमूलकम् । त्रि । मूलरहिते । प्रमाणशून्ये । नास्ति मूलं यस्य । कप् ॥

अमूला । स्त्री । अग्निशिखा इव । ओषधिविशेषजातौ मूलाकारत्वात्-टाप् ।

अमृणालम् । न । नखदे । वीरणमूले । मृणालमिव । सादृश्येऽत्रनञ् ।

अमृतम् । न । यज्ञशेषे । हविर्भाववशिष्टाज्यपुरोडाशादौ । अमृतमिव- अमृतसाधनत्वात् । पीयूषे । सलिले । घृते । अयाचितागतवस्तुनि । अमृतं स्यादयाचितमिति मनुः । मोक्षे । अविद्यमानं मृतं मरणमस्मात् । अग्ने । अग्निर्यत्स्नेम । तन्निमज्जन्तौ

किञ्चेतितम् । राजनिर्घण्टे अमृत शब्देनविषसामान्यं वत्सनाभः पार हृश्योक्तः ॥ काञ्चने ॥ स्वादुनि ॥ आ नन्दे । रसायने ॥ स्वल्पिन् । दुग्धे । गोरसे ॥ देवानां सर्वप्राणिनाञ्च जीवने । पदेपदे स्वादुनि । सुरायाम् ॥ आभूतसम्प्लवस्थाने । योगविशेषे । सयथा । बुधमन्दगतः नन्दाकुजेभद्रा जयागुरौ । भृगौरिक्तामृतंप्रोक्तं पूर्णा शरविचंद्रयोरिति ॥ पञ्चमाधिकस्य द्वितीयपर्याये । पुं । धन्वन्तरौ । देवे ॥ मरणादिदेहेन्द्रियमनोधर्मवर्जिते आत्मनि । वाराहीकन्दे । वनमुद्गे ॥ त्रि । अविनाशिनि । अमरणधर्मिणि । देवतात्मभावे ।

अमृतगतिः । स्त्री । छन्दोविशेषे । यथा । यदिह्नमंगणविरचितं विशिखमित सुकविहितम् । अमृतगतिः फणिक थिता दलयतिकान्तपविहितेति ।

अमृतजटा । स्त्री । जटामांस्याम् ।

अमृततरङ्गिणी । स्त्री । ज्योत्स्नायाम् ।

अमृततिलका । स्त्री । वर्णवृत्ते । यथा । नगणपयोधरचिरा कुसुमविरा जितसुकरा । वसुलघुदीर्घयुगलका भवतिसखेऽमृततिलकेति । स्वरि-तगतिश्चनगमकः ।

अमृतत्वम् । न । अमरणभावे । स्वात्मन्यवस्थाने । मोक्षे ।

अमृतदीधितिः । पुं । चन्द्रे ॥

अमृतमालिका । स्त्री । कर्पूरमालिक प्रभेदेपक्वान्नविशेषे ।

अमृतफलम् । न । नासपातीति यवने षुप्रसिद्धे वृक्षफले । यथा । अमृत फलंलघुहृद्यंसुस्वादुवीतदोषान् । देशेषु सुखलानां बहुलंतद्भक्ष्यतेलोकैरिति । पारे वतद्रौ । पटोले ।

अमृतफला । स्त्री । द्राक्षायाम् । आमलक्याम् ॥

अमृतयोगः । पुं । पञ्चाङ्गते योगविशेषे ॥ अपिच । हस्तमूलोत्तरापुष्या रोहिणीरेवतीरवौ । सोमेभद्रांश्विनीहस्ताफलगुनीविधिविष्णुयुक् । कुजेश्विप्रपुष्याग्निसार्पपौष्णसमीर-णाः । बुधेऽनभिषाभैत्रकृत्तिकारोहिणी तथा ॥ गुरौपुष्यानुराधाच स्वातीचैवपुनर्वसुः । भृगौभगाजयुक्मित्रतरक्ष्मनवमानिच । शनौस्वातीरोहिणीचामृतयोगंविदुर्बुधाइति । पुनश्च । आदित्यभौमयोर्नन्दा-भद्राशुक्रशशाङ्कयोः । जयाबृहस्पतौरिक्तापूर्णार्के चामृताशुभाइति ॥ अपरञ्च । रवौमूला । सोमेश्रवणा । भौमेउत्तराभाद्रपदा । बुधेकृत्तिका । गुरौपुनर्वसु । शुक्रेपूर्वफाल्गुनी ।

ग्रनैास्वातिनचघश्चेत्तदाऽमृतयोगो भवतीति ॥

अमृतरसा । स्त्री । अंदरसाइतिभाषाख्ये पक्वान्नप्रभेदे । यथा । तृतीयभागखण्डेनमिश्रितंषष्टिपिष्टकम् । शुभ्रमीषद्दधियुतंमर्द्दयेद्दृढपाणिना ॥ एवंसमुदितंकृत्वास्थापयेद्रजनीमितम् । ततोऽन्यस्मिन्नहनितच्चिचिंतंनिस्त्वचैस्तिलैः ॥ विधायपूपकंतेनतन्निकायांघृतेपचेत् । ततोऽमृतरसाजातावातघ्नीबलवर्द्धिनी । अरोचकहराहृद्यासुशीतापित्तवृद्धिमेति ॥ कपिलद्राक्षायाम् ॥

अमृतवल्ली । स्त्री । गुडूच्याम् ।

अमृतसंयाव: । पुं । पक्वान्नविशेषे । स यथा । समितांमधुदुग्धेनमर्द्दयित्वासुशोभनम् । पचेद्घृतेनतमेतत्संन्यस्यत्वाकांनवेघटे । ततोमरिचचूर्णेनखण्डचूर्णावचूर्णितम् । कुर्यात्कर्पूरसंयुक्तंसंयावममृतोपमम् ॥ संयावममृतंस्वादुपित्तघ्नंमधुरंस्मृतम् । वृष्यंवातहरंहृद्यंविपाकेगुरुभाषितमिति ।

अमृतसम्भवा । स्त्री । गुडूच्याम् ॥

अमृतसारज: । पुं । गुडे । तवराजे । खण्डे ।

अमृतसिद्धियोग: । पुं । योगविशेषे । यथा । हस्तामृगशिरावाजीमैत्रं पुष्येचरेवती । रोहिण्यर्काहिषु ज्ञेयाऽमृतसिद्धिर्यथाक्रममिति ॥

अमृतसू: । पुं । विधौ ॥ स्त्री । अदितौ ॥ अमृतानांदेवानांसू: प्रसूति: ॥

अमृतसोदर: । पुं । घोटके ॥ इतिराजनिर्घण्ट: ॥

अमृतस्रवा । स्त्री । रुदन्त्याम् ॥ उपवल्लिकायाम् । घनवल्ल्याम् ॥

अमृता । स्त्री । मागध्याम् ॥ पथ्यायाम् ॥ कथितामांसलाऽमृतेतिवचनम् ॥ विरेचनेप्रशस्तेयम् । गुडूच्याम् ॥ ममृतमस्या: ॥ आमलक्याम् ॥ नम्रियतेऽनया । तन्निमृङ्भ्याकिश्वेतितन् ॥ मदिरायाम् ॥ इन्द्रवारुण्याम् ॥ ज्योतिष्मत्याम् ॥ गोरक्षदुग्धायाम् ॥ अतिविषायाम् । रक्तत्रिवृति ॥ दूर्वायाम् ॥ तुलस्याम् ॥

अमृतान्धा: । पुं । देवे ॥ अमृतमन्धोऽन्नंयस्य स: ॥

अमृताफल: । पुं । पटोले ॥ इतिद्रव्याभिधानम् ॥

अमृतायमान: । त्रि । अमृतरसभरिते । आनन्दसुधारसपुष्टे ।

अमृतांश: । पुं । विष्णौ । आत्मामृतरसमश्नाति इति तथा । अमृतवदमृतंस्वरूपानन्दलक्षणमश्नात्यनुभवति । अश्० । कर्मण्यण्वा ।

अमृताशनः। पुं। देवे॥ अमृतमशनमस्य॥

अमृतासङ्गम्। न। कर्परिकातुत्थे॥

अमृताहरणः। पुं। गरुडे॥ अमृतमाहरणं यस्यसः॥

अमृताह्वम्। न। लघुविल्वफलाकृतिखुरासानदेशजफलविशेषे। अमृतफले। नाशपातीतितरजनभाषाप्रसिद्धे॥

अमृतोत्पन्नम्। न। खर्परीतुत्थे।

अमृतोत्पन्ना। स्त्री। मक्षिकायाम्। इतिराजनिर्घण्टः।

अमृतोद्भवम्। न। खर्परीतुत्थे।तुत्थे।

अमृतोपमः। त्रि। प्रीत्यतिशयास्पदे। अमृतमुपमायस्य।

अमृष्यमाणः। त्रि। असहमाने।

अमेधाः। त्रि। मूढे।

अमेध्यम्। न। पुरीषे। अयज्ञार्हे। अशुचिमांसादौ। त्रि। अपवित्रे। नमेध्यमितिविग्रहः।

अमेयः। त्रि। अपरिच्छेद्ये। इयानितिमातुमशक्ये। नमेयः।

अमोघः। पुं। नदविशेषे॥ त्रि। सफले। अव्यर्थे। परमेश्वरे। सच्चिपूजितःस्तुतःसंस्मृतःसर्वफलंददातिनवृथाकरोतीत्यमोघः। नमोघः।

अमोघदृक्। त्रि। यथार्थवीर्ये।

अमोघा। स्त्री। हरीतक्याम्। विडङ्गे। पाटलावृक्षे॥

अम्नर्। । } शीघ्रे। साम्प्रतिके।
अम्नस्। । }

अम्बकम्। न। लोचने। ताम्रे॥ अम्बकःपितेतित्र्यम्बकेरामाश्रमः।

अम्बरम्। न। पतत्रिमेघसञ्चारप्रदेशादुपरिसिद्धविद्याधरसञ्चारप्रदेशे। आकाशे। स्वनामख्यातसुगन्धिद्रव्ये। वस्त्रे। कार्पासे। अभ्रधातौ॥ लग्नाद्दशमे। अम्बते शब्दायते। अविशब्दे। भावेघञ्। अम्बः शब्दः। तंराति। रातेःकः। अम्बरम्॥ अम्बते अम्ब्यतेवा। अविशब्दे। बाहुलकादरोवा।

अम्बरलेखि। न। अभ्रङ्कषे॥

अम्बरीषः। पुं। मान्धातुस्तनये। सूर्यवंशीयनाभागात्मजेपरमभागवते॥ नरकभेदे। किशोरे। भास्करे। विष्णौ। खण्डपरशौ॥ आम्रातके॥ अनुतापे॥ न। रणे॥ भ्राष्ट्रे। भर्जने॥ पचन्तितस्मिन्नम्बरीषम्। निपातनात्साधु॥ अम्ब्यतेऽत्रवा। अविशब्दे। अम्बरीषइतिसाधुः। मिण्डकपाकभाजने॥

अम्बष्ठः। पुं। देशभेदे। विप्राद्विवाहितवैश्यासुते। ब्राह्मणाद्वैश्यकन्या

यामम्बष्ठोनामजायते। अयंचिकित्सावृत्तिर्वैद्यइतिख्यातः॥ हस्तिपके। कायस्थजातिविशेषे। अम्बेतिष्ठति। ष्ठागतिनिवृत्तौ। सुपीतिकः। अम्बाम्बेतिषत्वम्॥

अम्बष्ठकी। स्त्री। पाठायाम्। पटींडू इतिहिमगिरि प्रसिद्धलतायाम्।

अम्बष्ठा। स्त्री। अम्ललोणयाम्। चाङ्गर्याम्। शठाम्बायाम्। पाठायाम्। यूथिकायाम्। जूहीतिख्यातपुष्पे। ब्राह्मणाद्वैश्यायामुत्पन्नायाम्। अम्बेव मातेवतिष्ठति। सुपिस्थइतिकः। अम्बाम्बेतिषत्वम्। ङ्यापोरितिह्रस्वः।

अम्बष्ठिका। स्त्री। अम्बष्ठायाम्। पाठायाम्। ब्राह्मणयाम्। वह्मनेटी इतिभाषा प्रसिद्धायाम्।

अम्बष्ठी। स्त्री। अम्बष्ठायाम्।

अम्बा। स्त्री। मातरि॥ दुर्गायाम्। नाट्योक्त्यापिमातरि। पाण्डुराज्ञो-मातुः स्वसायाम्। अम्बष्ठायाम्। शठाम्बायाम्।

-अम्ब्यते शब्द्यते। अविशब्दे। गुरोश्चहलइत्यः।

अम्बामखः। पुं। नवरात्रोत्सवे।

अम्बालिका। स्त्री। अम्बार्थे। काशिराजस्यसुतायाम्। पाण्डुराज्ञो मातरि।

अम्बासुतः। पुं। गणेशे।

अम्बिका। स्त्री। पार्वत्याम्। अम्बेवाम्बिका। जगन्मातृत्वात्। मातरि। धृतराष्ट्रजनन्याम्। काशिराजतनयायाम्। जैनदेव्यन्तरे। कटुक्याम्॥ अम्बष्ठायाम्।

अम्बु। न। जले। चतुर्थभवने। ह्रीवेरे। अम्बते। अविशब्दे। बाहुलकादुः।

अम्बुकण्टकः। पुं। कुम्भीरे। शृङ्गाटके।

अम्बुकिरातः। पुं। कुम्भीरे। इतित्रिकाण्डशेषः।

अम्बुकीशः। पुं। खूसइतिप्रसिद्धे जलजन्तुविशेषे। शिशुमारे। इतिहेमचन्द्रः।

अम्बुकूर्मः पुं। शिशुमारे। इतिहेमचन्द्रः

अम्बुकेशरः। पुं। छोलङ्गवृक्षे। इतिरत्नमाला।

अम्बुचामरम्। न। शैवले। इतिजटाधरः।

अम्बुजः। पुं। हिज्जले। निचुले। न। कमले। वज्रे। शंखे। अम्बुनिजातः। जनीप्रादुर्भावे। सप्तम्यां जनेर्डः।

अम्बुजन्म । न । पद्मे । इतिराजनिर्घण्टः । त्रि । जलोद्भवे ।

अम्बुताल: । पुं । शैवाले ॥ इतित्रिकाण्डशेषः ।

अम्बुदः । पुं । मेघे ॥ मुस्तायाम् ॥ अम्बुददाति । डुदाञ्° । कः ।

अम्बुधरः । पुं । मुस्तके । मेघे ।

अम्बुधि: । पुं । पारावारे ॥ अम्बूनिधीयन्तेऽत्र । डुधाञ्° । कर्मण्यधिकरणे चेतिकिः ॥

अम्बुधिस्रवा । स्त्री । गृहकन्यायाम् ।

अम्बुपः । पुं । चक्रमर्द्दे ॥ वरुणे ॥ शतभिषाख्येनक्षत्रे ॥

अम्बुपतिः । पुं । वरुणे ॥

अम्बुपत्रा । स्त्री । उच्चटायाम् ॥

अम्बुपर्णी । स्त्री । पृश्न्याम् ॥

अम्बुप्रसादः । पुं । कतकवृक्षे ॥

अम्बुप्रसादनम् । न । कतके । निर्मलीइतिख्याते फले ॥

अम्बुप्रायम् । न । अनूपे ॥ अम्बु प्रायंयत्र ॥

अम्बुभृत् । पुं । समुद्रे ॥ मेघे ॥ मुस्तके ॥ अम्बुबिभर्त्ति । डुभृञ् धारणपोषणयोः । क्विप्तुकौ ॥

अम्बुमान् । पुं । कच्छे ॥

अम्बुमात्रजः । पुं । शम्बूके । अम्बुमात्रेजायते जनी° । डः ॥



अम्बुरः । पुं । द्वाराधःकाष्ठे । गोवराटइतिगौडभाषा प्रसिद्धे ॥ इतिहेमचन्द्रः ।

अम्बुरुहम् । न । कमले ॥ अम्बुनि रोहति । रुहेःकः ॥

अम्बुरुहा । स्त्री । स्थलपद्मिन्याम् ॥

अम्बुरुहिणी । स्त्री । नलिन्याम् ॥

अम्बुवाची । स्त्री । रजस्वलायांभूमौ ॥ यथा । यद्वारे यत्काले मिथुनसङ्क्रमणं भूतं तद्वाराभ्यन्तरे तावत्कालावधिविंशत्यादि दण्डाधिकदिनत्रयमम्बुवाची । साचार्द्रानक्षत्रप्रथमपादावच्छेदेनतिष्ठति । तस्यादिनत्रयनिषिद्धमनुक्तं ज्योतिःशास्त्रे । यथा । मृगशिरसिनिवृत्ते रौद्रपादेम्बुवाची ऋतुमतीखलुपृथ्वीवर्ज्जयेत् बीजवापानि । यदिवपतिकृषाणः क्षेत्रमासाद्यबीजं न भवतिफलभागी शस्यघातकाः लापाकः॥ नस्वाध्यायोवषट्कारोनदेवपितृपूजनम् । नापिपाठोवीजवापोमवाभूखननादिकमित्यादि । विशेषः परिशिष्टे ॥ तत्रसर्पभयोपशमनाय दुग्धंपेयम् । यथोक्तं ज्योतिषे । रजोयुक्तक्ष्माम्बुवाचीचरौद्राद्यपादेगेरवौ । नास्त्यापाठोवीजवापोनाहिभीर्दुग्धपानतइति ॥ रजोयुक्तक्ष्मा ऋतुमतीपृथ्वीत्यर्थः ॥

अम्बुवासिनी । स्त्री । पाटलैा ॥

अम्बुवासी । स्त्री । पाटलाइत्ये ॥

अम्बुवाहः । पुं । अम्बुदे ॥ अम्बुवहति । वह० । कर्मण्यण् ॥ मुस्तके ॥

अम्बुवेतसः । पुं । जलवेतसे ॥ अम्बुनिजाता वेतसः । शाकपार्थिवादिः ।

अम्बुशिरीषिका । स्त्री । शिरीषिकायाम् । जलशिरीषे ॥

अम्बुसंरोधः । पुं । जलधैा ॥ अम्बुसंरुध्यतेऽनेन ॥

अम्बुसर्पिणी । स्त्री । जलौकायाम् ॥

अम्बूकृतम् । त्रि । सनिष्ठुवे । श्लेष्मकणानिर्गमसहितवचसि ॥ अम्बुशब्द उपचारात्तद्वति । अनम्बु अम्बुअकारि । च्विः । च्वौचेतिदीर्घः । क्तः ॥

अम्लः । पुं । अम्लरसे ॥ इग्युपधादिकोपः । अम्लते । अविशब्दे । मृशक्यम्विभ्यः क्तः ॥

अम्भ३ । न । जले ॥ आप्नोति आप्यते वा । आप्लृव्याप्तौ । उदकेनुम् भौचेतिह्रस्वोभान्तादेशो नुमागमश्च ॥ अम्भतेवा । अभिशब्दे । असुन् ॥ देवे ॥ मनुष्ये ॥ पितरि ॥ असुरे ॥ तानि ह वा एतानि चत्वार्यम्भांसि देवा मनुष्याःपितरोऽसुरा इतिश्रुतेः ॥ बाले । ह्रीवेरे । लग्नाच्चतुर्थराशौ ॥ नवविधतुष्टिषु प्रकृत्याख्यातुष्टि राध्यात्मिका अम्भउच्यते । यथा कस्यचिदुपदेशः विवेकसाक्षात्कारोहि प्रकृति परिणामभेदः तच्चप्रकृतिरेवकरोति इतिकृतं तेध्यानाभ्यासेन तस्मादेवमेवास्तु वत्सेतियेयमुपदिष्टस्यशिष्यस्यप्रकृतौतुष्टिःसाप्रकृत्याख्याअम्भउच्यते ॥

अम्भःसारम् । न । } मुक्तायाम् ॥ इतिराजनिर्घण्टः ॥
अम्भस्सारम् । न । }

अम्भःसूः । पुं । } धूमे ॥ इतिहेमचन्द्रः ॥
अम्भस्सूः । पुं । }

अम्भोजम् । न । अम्बुजे ॥ पुं । चन्द्रमसि । त्रि । जलोद्भवे । अम्भसिजातः । जनी० । सप्तम्यांजनेर्डः ॥

अम्भोजखण्डम् । न । अम्भोजानां समूहे ॥ कमलादिभ्यःखण्डः ॥

अम्भोजन्म । न । कमले ॥

अम्भोजयोनिः । पुं । वेधसि ॥ अम्भोजं योनिः प्रादुर्भावस्थानमस्य । नारायणनाभिकमलजत्वात् ॥

अम्भोजिनी । स्त्री । पद्मसमूहे । नलिन्याम् ॥ पद्मवतिदेशे ॥ अम्भोजानि सन्त्यत्र । पुष्करादिभ्यादिनिः ॥

अम्भोदः । पुं । जलदे ॥ मुस्तके ॥ अम्भो ददाति । दा० । कः ॥

अम्भोधरः । पुं । अम्बुधौ । मेघे ॥ मुस्तके ॥ धरति ॥ धृञ्धारणे । अच् । अ

आमाधर:।

अम्भोधि:। पुं। सिन्धौ। समुद्रे॥ अम्भांसि धीयन्तेऽत्र। धाञ: कर्मण्यधिकरणेचेति कि:। जलाशये॥

अम्भोधिवल्लभ:। पुं। प्रवाले। इतिराजनिर्घण्ट:।

अम्भोनिधि:। पुं। अब्धौ। समुद्रे। अम्भांसि निधीयन्तेऽस्मिन्। कर्मण्यधिकरणेचेति धाञ: कि:॥ अम्भसां निधिर्वा॥ हरौ॥ अम्भांसि देवादयो निधीयन्ते ऽस्मिन्निति। देवमनुष्य पितृसुरादेवादय:।

अम्भोरुहम्। न। अम्बुजे। अम्भसिरोहति। रुहप्रादुर्भावे। इगुपधेतिक:॥

अम्मयम्। त्रि। अम्बुमये। आप्ये। जलविकारे फेनादौ॥ अपांविकार:। एकाचोनित्यंमिति मयट्। स्त्रियाम म्मयी॥

अम्र:। पुं। आम्रवृक्षे। न। आम्रफले॥ इतिशब्दरत्नावली।

अम्रात:। पुं। आम्रातके॥

अम्रातक:। पुं। आम्रातके। अम्बाडा इतिख्याते। अम्लमतति। अतसातत्यगमने। कृञादिभ्योवुन्। रलयोरैक्यम्॥

अम्ल:। पुं। रसान्तरे। खट्टा इतिभाषा॥ तोयाग्निगुणबाहुल्यादम्लइतिस्मृत:। अस्यगुणावथा। अम्लोग्नि दीप्तिकृत् बल्य:शीतोबल्य:पित्तकफावह:। विदन्धानाहत्दृष्टिघ्नो इत्ताविभूनिको-चनइति॥ अम्लवेतसे। इतिराजनिर्घण्ट:॥ न। तक्रे॥ अम्यतेशब्दयते भोक्तृभि:। अमगत्यादिषु। सूत्रकपिम्य: क्त इतिबाहुलकादमेःक्त:॥ त्रि। अम्लरसवति। अर्शआद्यच्॥

अम्लक:। पुं। लकुचवृक्षे। इतिशब्दरत्नावली॥

अम्लकाण्डम्। न। लवणतृणे॥

अम्लकेशर:। पुं। मातुलुङ्गे। अम्ला: केशरा: अस्य।

अम्लचूड:। पुं। अम्लद्रव्यविशेषे। आकाम्ले। चिञ्चासारे। इतिराजनिर्घण्ट:॥

अम्लजम्बीर:। पुं। अम्लनिम्बूके।

अम्लद्रव:। पुं। बीजपूरादिरसे।

अम्लनायक:। पुं। अम्लवेतसे॥

अम्लनिशा। स्त्री। शट्याम्॥

अम्लपञ्चफलम्। न। अम्लरसयुतपञ्चप्रकारफले। तद्यथा। कोलम् १। दाडिमम् २। वृक्षाम्लम् ३। चुक्रिका ४। अम्लवेतसमिति ५। मतान्तरेतु। जम्बीरम् १ नारङ्गम् २ अम्लवेतसम् ३ तिन्तिडीकम् ४ बीजपूरमिति ५ राजनिर्घण्ट:

अम्लपत्रः । पुं । अश्मन्तकवृक्षे ।

अम्लपत्री । स्त्री । क्षुद्राम्लिकायाम् । पलाशीलतायाम् ।

अम्लपनसः । पुं । लिकुचे । अम्लश्चासौ पनसश्च ॥

अम्लपूरम् । न । वृक्षाम्ले ।

अम्लफलम् । न । अम्लो इ०म० वृक्षाम्ले । पुं । आम्रवृक्षे ॥

अम्लभेदनः । पुं । अम्लवेतसे ।

अम्लरुहा । स्त्री । मालवदेशजनागवल्ली प्रभेदे ॥

अम्ललोनिका । स्त्री । चाङ्गेर्य्याम् ॥

अम्लवती । स्त्री । क्षुद्राम्लिकायाम् । चाङ्गेर्य्याम् ।

अम्लवर्गः । पुं । आम्रादिगणे ॥ यथा । आम्र आम्रातकोधात्री लकुचंचकपित्थकम् ।नारङ्गं द्विविधाजम्बूः करमर्द्दं पियारकम् । दाडिमंपार्वतीद्राक्षाद्विधावदरतूदकम् । बीजपूरंचजम्बीरंनिम्बुम्लीकाम्लवेतसम्।वृक्षाम्लंकरिमन्यंचचाङ्गेरीत्यम्लवर्गकः । निम्बूकंदाडिमंधात्रीफलमम्लं प्रकाङ्क्षते । प्रदद्यादम्लसात्म्यायकाञ्जिकंवापुरातनमिति ॥ ज्वराधिकारस्थोयंश्लोकः ॥

अम्लवल्ली । स्त्री । त्रिपर्णिकानामकन्दविशेषे ।

अम्लवाटिका । स्त्री । नागवल्लीभेदे ॥

अम्लवातकः । पुं । आम्रातके ।

अम्लवास्तूकम् । न । चुक्रे । चूका इति प्रसिद्धेशाके ।

अम्लवीजम् । न । वृक्षाम्ले ।

अम्लवृक्षम् । न । वृक्षाम्ले । इम्लीति प्रसिद्धवृक्षे ।

अम्लवेतसः । पुं । स्वनामख्यातवृक्षे । सहस्रवेधिनि । चुक्रे । गुणा यथा । अम्लवेतसमत्यम्लंभेदनंलघुदीपनम्।हृद्रोगशूलगुल्मघ्नमपित्तलोहितदूषणम् । रूक्षंविण्मूत्रदोषघ्नंप्लीहोदावर्त्तनाशनम् । हिक्कानाहारुचिश्वासकासाजीर्णवमिप्रणुत् । कफवातामयध्वंसिच्छागमांसद्रवत्वकृत् । तथाकाम्लगुणं श्रेष्ठंलोहसूचीद्रवत्वकृदिति ॥ अम्लश्चासौवेतसश्चन म्रत्वात् ॥

अम्लशाकः । पुं । अम्लचूडे । न । चुक्रे ॥ वृक्षाम्ले ।

अम्लसारः । पुं । अम्लवेतसे । निम्बूके ॥ हिन्ताले । न । काञ्जिके ॥

अम्लहरिद्रा । स्त्री । शट्याम् । इतिराजनिर्घण्टः ।

अम्ला । स्त्री । चिञ्चायाम् ।

अम्लाङ्कुशः । पुं । अम्लवेतसे ।

अम्लातकः । पुं । अम्लादने ।

अम्लादनः। पुं। कुरंटके। अम्लाने। पीयाबांसा इतिप्रसिद्धे । बाणपुष्प इतिगौडेषु विख्याते। गुणा यथा। अम्लादनः कषायोष्णः स्निग्धः स्वादुस्तिक्तकइति।

अम्लानः। पुं। महासहायाम्। कठसरय्याइतिख्याते॥ त्रि। निर्मले॥ न म्लायतिस्म। म्लै० गत्यर्थाकर्मकेतिक्तः। संयोगा देरातोधातोर्यस्वत इतिनिष्ठानत्वम्॥

अम्लानिनी। स्त्री। पद्मिन्याम्। पद्मसमूहे।

अम्लिका। स्त्री। चिञ्चायाम्। अस्या गुणास्तु। अम्लिकामागुर्वातहरी पित्तकफास्रकृत्। पक्कातु दीपनी रूक्षासरोष्णाकफवातनुत्। अम्लिकायाः फलंपक्कं मर्द्दितं वारिणाद्दढम्। शर्करामरिचोन्मिश्रंलवङ्गेन्दुसुवासितम्॥ अम्लिकाफलसम्भूतंपानकंवातनाशनम्। पित्तश्लेष्मकरंकिंचिद्रुच्यंवह्निबोधकमिति॥ अम्लोद्गारे। चाङ्गेरिकायाम्॥ पलाशीलतायाम्॥ श्वेताम्लिकायाम्। अम्लोरसोऽस्यास्ति। अतइनिठना विति ठन्।

अम्लिकावटकः। पुं। ओरीबरा इति लोके। विधिर्यथा। अम्लिकास्वेदपिष्टात्जलेनसहमर्द्दयेत्। तन्नीरे कृतसंस्कारे वटकान्मज्जयेद्बुधः। अम्लिकावटकास्ते तुरुच्यावह्निप्रदीपनाः। वटकस्यगुणैः पूर्वैरेतेपिचसमन्विताः इतिभावप्रकाशः।

अम्ली। स्त्री। चाङ्गेर्याम्।

अम्लीका। स्त्री। तिन्तिड्याम्॥

अम्लोटकः। पुं। अम्लकुचाइ इति गौडदेशभाषाप्रसिद्धे अश्मन्तकवृक्षे। इतिरत्नमाला।

अयः। पुं। शुभावहविधौ। प्राक्तनशुभकर्मणि। कल्याणप्रापकेदैवे। एत्यनेनसुखम्। इण्गतौ। पुंसि संज्ञायामितिघः॥ पाशकस्यगमने। कस्मिंश्चिद्भागे। द्यूतकृतां प्रदक्षिणगमने॥ अयतेः कर्त्तरि पचाद्यच्॥

अयः पानम्। न। नरकविशेषे।

अयः प्रतिमा। स्त्री। सूर्म्याम्। अयसः प्रतिमा।

अयः शूलम्। न। तीक्ष्णउपाये।

अयक्षः। पुं। देवादियक्षभिन्ने। त्रि। यक्षरहिते।

अयज्ञियः। त्रि। यज्ञानर्हे। पुं। माषे।

अयत्नः। त्रि। चेष्टाशून्ये।

अयथा। अ। उचितस्यान्यथात्वे। मिथ्यार्थे।

अयथार्थानुभवः। पुं। तदभाववतित

त्प्रकारकानुभवे । सचसंशयविपर्ययतर्कभेदात्त्रिविधः । अयथार्थस्त्वासावनुभवश्च । नयथार्थानुभवोवा ।

अयथार्थस्मृतिः । स्त्री । अप्रमाजन्यायांस्मृतौ । अयथार्था चासौस्मृतिश्च ।

अयनम् । न । पथि । अयन्ते ईयन्तेवाऽनेन । करणेति ल्युट् युजवा ॥ भानोरुदग्दक्षिणतोगतौ । यथा । मृगकर्कटसङ्क्रान्तो । द्वे उदग्दक्षिणायनेइति ॥ अपिच । खुमणिसङ्क्रमतो मृगकर्किणोरयनके भवतइति । अयतेऽनेनाऽनेन । अयगतौ । ल्युट् । ऋतुत्रये । यथा । वैरर्तुभिस्त्रितयं प्रदिष्टमयनमिति । अयते याच्यनेन ऋतुत्रयेणसूर्योदक्षिणाशामुत्तराशांचेति । समरसमारंभकाले योधानां यथा प्रधानं युद्धभूमौपूर्वा परादिदिग्विभागेनावस्थिति स्थामानि यानि नियम्यन्ते तेषु मोरचाइतीतरभाषाप्रसिद्धेषु ॥ व्यूहप्रवेशमार्गे ॥ गतौ । आश्रये ॥ स्थाने । गेहे । शास्त्रे ॥ यथा । ज्योतिषामयनंनेत्रमिति ।

अयनांशः । पुं । सूर्यगतिविशेषस्य भागे । यथाहकालिदासः । शाकः शराम्भोधियुगोनितोहृतोमानंखतर्कैरयनांशकाः स्मृताइति ।

अयन्त्रितः । त्रि । अनर्गले । नयन्त्रितः ।

अयवान् । त्रि । भाग्यवति । मतुप् ।

अयशः । न । अधर्मनिमित्तायाः लोकनिन्दायाः प्रसिद्धौ । अकीर्तौ । नयशः ।

अयः । न । लोहे ॥ एति अयतिवा । इणगतौ । असुन् ।

अयस्कान्तः । पुं । चुम्बकाश्मनि । अयः कान्तोऽस्य । कान्तीसार इतिख्यातेकान्तलोहे । सचतुर्विधः । भ्रामकचुम्बकरोमकस्वेदकभेदात् । एते रसायने उत्तरोत्तरंगुणिनः । क्रमेण दार्ढ्याङ्गकान्तिकात्वनीरोगदायिनइतिराजनिघण्टुः ।

अयस्कारः । पुं । लोहकारे । अयःकरोति । डुकृञ् करणे । कर्मण्यण् ।

अयाचितम् । न । अमृतवृत्तौ । यथा । ऋतमुञ्छशिलंप्रोक्तममृतस्यादयाचित मितिमनुः । त्रि । याञ्चांविनालब्धेवस्तुनि । अनर्थिते । पुं । मुनिभेदे । उपवर्षे । मुनिविशेषे । नयाचितम् ।

अयाज्यः । त्रि । व्रात्ये । नयाज्यः ।

अयानम् । न । स्वभावे । इतिहाराविली ॥ अगमने ॥

अयामयम् । न । यूतिनांखगविशेषे ॥ तेषांगतिविशेषे ॥ अयतिइतमतं-

नयः ॥

अयानयीनः । पुं । शारे । अचोपकरणे । अयानयंस्थलविशेषंनेतव्यः । अनुपदसर्वान्नायानयमित्यादिनाखः । अचेयंद्यूतशास्त्रस्यमयादः । चतस्रो वीथयः प्रत्येकंद्वादशकोष्ठोपेताः । शारास्तुचिंशत् । तेच एकैकेनकितवेनपंचदशस्ववामपार्श्वस्थ प्रथमकोष्ठ पर्यंतंप्रदक्षिण प्रसव्यगतिभ्यांनेयाः । सर्वेप्यायानयीनाः । ससहायस्यशारस्यपरैर्नाक्रम्यते पदम् । असहायस्तु शारेण परकीयेणबाध्यते इत्यादि तच्छास्त्राद्बोध्यम् ।

अयाः । पुं । वह्नौ ॥ एति । इण्० । आसिः ।

अयि । ा । प्रश्ने । अनुनये । सम्बोधने । अनुरागे । ईयते अय्यतेवा । इः इन्वा ।

अयुक्छदः । पुं । सप्तपर्णवृक्षे ।

अयुक्तः । त्रि । अजितचित्ते । सर्वदाविषयापहृतचित्तत्वेन कर्त्तव्येष्वनवहिते । अनुचिते ॥ अमिश्रिते ॥ नयुक्तः ॥

अयुक्तम् । ा । अनर्थे ।

अयुग्मः । पुं । विषमे ।

अयुग्मच्छदः । पुं । सप्तपर्णवृक्षे । अयुग्माः छदायस्य ।

अयुतः । त्रि । असंयुक्ते । अयुक्ते । न । दशसहस्रे १०००० । नयुतम् ।

अयुतसिद्धौ । पुं । ययोर्द्वयोर्मध्ये एकमपराश्रितमेवतिष्ठते तावयुतसिद्धौ । यथा । अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्येचेति ।

अये । ा । क्रोधे । विषादे । सम्भ्रमे । स्मरणे । सम्बुद्धौ ।

अयेयः । त्रि । अयातव्ये । यान विनैव साध्ये । यातुंयोग्यः । या० । अचोयत् । ईयति । गुणः । नयेयः ।

अयोगः । पुं । विधुरे । कूटे । विश्लेषे । कठिनोद्यमे । वमनविरेचनादीनां प्रतिलोमप्रवृत्तौ अल्पप्रवृत्तौच । तदुक्तं वैद्यके । योगःसम्यक्प्रवृत्तिः स्या दतियोगोतिवर्त्तनम् । अयोगः प्रातिलोम्येननचाल्पंवाप्रवर्त्तनमिति । नयोगः ।

अयोगवः । पुं । आयोगवे । शूद्राद्वैश्यकन्यायामुत्पन्ने । इतिजटाधरः ।

अयोगुडः । पुं । लौहगुलिकायाम् । गोली इतिभाषा प्रसिद्धायाम् ।

अयोग्रम् । न । मुसले । अयोऽग्रेऽस्य ।

अयोग्रकम् । न । मुसले ॥

अयोघनः । पुं । लौहपुञ्जे । हथौडा इत्यादि भाषाप्रसिद्धे लौहमुद्गरे । अ

योहन्यतेऽनेन । हन° । करणेऽयो विद्व्धिस्थप् घमादेशश्च ॥

अयोध्या । स्त्री । सरयूतीरेद्वादशयोजनायतायां साकेतपुर्य्याम् । उत्तरकोशलायाम् ॥ त्रि । युद्धामर्हे ॥

अयोनिजः । पुं । हरौ ॥ योनैायोनिपदलक्षितायां अनन्यांनजायते । जनोप्रादुर्भावे । सप्तम्यांजनेर्डः ॥ स्त्री । सीतायाम् । जानक्याम् ॥

अयोमलम् । न । मण्डूरे । लोहकिट्टे ॥

अयोमुखः । पुं । असुरविशेषे ॥

अरम् । न । शीघ्रे ॥ चक्राङ्गे । चक्रस्य नाभिनेम्योन्तराजस्थकाष्ठे ॥ ऋच्छतिरयर्त्तिवा । ऋच्छगत्यादैा । ऋगतोवा । पचाद्यच् ॥ शीघ्रार्थेक्रियाविशेषणत्वादसत्वे वर्त्तमानोयंक्लीबः द्रव्यगामीतु त्रिलिङ्गः ॥ ब्रह्मलोकस्थेसमुद्रोपमे सरसि ॥ जिनानां कालचक्रस्य द्वादशांशे ॥ सतु अवसर्पिण्याः षष्ठोभागः ॥ जिनानामष्टादशतीर्थंकरे ॥ त्रि । शीघ्रगे ॥

अरकः । पुं । शैवले ॥ पर्पटे ॥

अरग्वधः । पुं । राजवृक्षे ॥ इत्यमरटीकायांभरतः ॥

अरघट्टः । पुं । महाकूपे ॥

अरघट्टकः । पुं । घटीयन्त्रे । पादावर्त्ते । महाकूपे ॥

अरजम् । वि । निर्मले ॥ नविद्यतेरजोरेणुर्यस्मिन् ॥ रजोगुणरहिते ॥

अरजाः । स्त्री । नष्टिकायाम् । अनागतार्त्तवायाम् । कुमार्य्याम् ॥ त्रि । रजोगुणरहिते ॥

अरणम् । न । शरणे ॥

अरणिः । पुं । वह्निमन्थे । गणिकारिकावृक्षे ॥ सूर्ये ॥ इतिकाशीखण्डम् ॥ पुं । स्त्री । निर्मन्थ्यदारुणि ॥ ऋच्छति । ऋगति प्रापणयोः । अर्त्तिसृधृधमीत्यनिः ॥

अरणिकः । पुं । श्रोपर्णे । अग्निमन्थे ॥

अरणी । स्त्री । अरण्याम् ॥

अरणीकेतुः । पुं । अग्निमन्थवृक्षे ॥

अरणीसुतः । पुं । अग्नौ ॥

अरण्यम् । न । वने ॥ स्त्रीजनासङ्कीर्णाश्रमे ॥ दण्डकारण्यादिनवसु ॥ यथा । दण्डकंसैन्धवारण्यंजम्बूमार्गञ्च पुष्करम् । उत्पलावर्त्तकारण्यं नैमिषंकुरुजाङ्गलम् । हिमवानर्बुदश्चैवनवारण्यंविमुक्तिदमितिवराहपुराणम् ॥ अर्य्यते मृगैः । ऋगतैा । अर्त्तेर्निच्चेत्यन्यः ॥ पुं । कट्फलवृक्षे इति शब्दचन्द्रिका ॥

अरण्यकदली । स्त्री । गिरिकदल्याम् ॥

अरण्यकार्पासी । स्त्री । वनकार्पास्याम् । भारद्वाज्याम् ॥ इयंहिमाकृत्या

वृक्षमस्त्वतनाम्निमीति राजनिघंण्टः ।

अरण्यकुलत्थिका । स्त्री । कुलत्थायाम् । वनकुलथी इतिभाषा ।

अरण्यकुसुम्भः । पुं । वनकुसुम्भे । अग्निसम्भवे । कौसुम्भे॥ पाके कटुः श्लेष्मनाशी जठराग्निविवृद्धिकृदित्यस्यगुणाः ।

अरण्यघोली । स्त्री । शाकविशेषे । वनघोल्याम् ।

अरण्यचटकः । पुं । धूसरे । वनचटके॥

अरण्यजार्द्रका । स्त्री । वनार्द्रकायाम् । ऐन्द्रे । वन अद्रक इतिभाषा ।

अरण्यजीरः । पुं । वनजीरे ।

अरण्यधान्यम् । न । नीवारे ।

अरण्यमक्षिका । स्त्री । दंशे । अरण्यस्यमक्षिका ।

अरण्यमुद्गः । पुं । मकुष्ठे ।

अरण्यवायसः । पुं । द्रोणकाके ।

अरण्यवासिनी । स्त्री । अत्यम्लपर्णीलतायाम् ॥

अरण्यवास्तूकः । पुं । कुणञ्जरे ॥

अरण्यशालिः । पुं । नीवारे । वनधान्ये॥

अरण्यशूरणः । पुं । वनशूरणे ॥

अरण्यश्वा । पुं । वृके ॥

अरण्यषष्ठी । स्त्री । ज्येष्ठशुक्लषष्ठ्याम् । यथा । ज्येष्ठमासिसिते पक्षे षष्ठी चारण्यसंज्ञिता । अजनैककरास्त्र्यामटन्तिविपिनेस्त्रियः । तांश्चिन्त्यवासिनीस्कन्दषष्ठीमाराधयन्तिच । कन्दमूलफलाहाराल्लभन्तेसन्ततिंशुभाम् । कन्दंशूरणादि । तदितरन्मूलम् । इतिराजमार्त्तण्डः ॥

अरण्यानी । स्त्री । महावने । महदरण्यमित्यस्मिन्नर्थे इन्द्रवरुणेतिसूत्रस्थेन हिमारण्ययोर्महत्त्वइतिवार्त्तिकेनाऽरण्यशब्दस्यनुगागमस्ततोङीष् ।

अरण्यायनम् । न । अरण्यवासे ॥

अरतत्रपः । पुं । शुनि । वक्रपुच्छे ॥

अरतिः । पुं । क्षुधि ॥ स्त्री । अनवस्थितचित्तत्वे । क्रोधाभावे । रतिविरहे । उद्वेगे । इष्टवियोगान्मनस्याकुलीभावे । यथा । स्वाभीष्टवस्त्वलाभेन चेतसोयाऽनवस्थितिः । अरतिःसेति । त्रि । रतिहीने । उच्छति । उ° । वह्निवस्यर्त्तिभ्यश्चिदित्यतिः । अर्त्तेश्चेत्यतिर्वा ।

अरत्निः । पुं । सप्रकोष्ठततांगुलिकरे । विस्तृतकनिष्ठवद्धमुष्टिहस्तपरिमाणे । कफोणौ । रत्निभिन्नः । नञ्समासः । यद्वा । ऋतन्यञ्जीत्यर्त्तेः कत्निच् । वद्धमुष्टिकरोऽरत्निः सोरत्निः प्रसृताङ्गुलिः । सहस्तइत्यर्थः ।

अरन्धनम् । न । वसोड । इतिप्रसिद्धे पाकाभावे । यथा । कर्काममघात

सिंहाहे सिंहाम्नं सिंहकन्ययोरि-
त्याचारमार्त्तण्ड: ॥

अरन्ध्र: । त्रि । निविडे ॥

अरपा: । त्रि । अपापे ॥ नविद्यते रप:
पापंयस्य ॥

अरम् । ा । असमर्थे । अलमित्यव्ययस्य
वालमूलेत्यादिना पक्षेरेफ: । अ-
ल्पे ॥

अररम् । त्रि । छदे ॥ कपाटे । इयर्त्ति ।
अर्त्तिकमीत्यरच् । अपिधाने ।

अररि: । पुं । न । कपाटे । ऋच्छति
। विच् । अर मृच्छति । सर्वधातुभ्यइ
तीनि: ॥

अररी । स्त्री । कपाट्याम् । इयर्त्ति ।
ऋगतौ । अर्त्तिकमीत्यरन् । गौ
रादिङीष् ।

अररु: । पुं । अलङ्कारे । शत्रौ । ऋच्छ
ति अर्यतेवा । ऋगतिप्रापणयो: ।
अर्त्तेररु: ॥

अररे । ा । आशुसंवुद्धौ । त्वरान्वितस
म्बोधने । इतिशब्दरत्नावली ।

अरलु: । पुं । श्योनाकवृक्षे । इयर्त्ति ।
ऋगतौ । अर्त्तेररु: । कपिलकादि: ।

अरविन्दम् । न । पद्मे । अराकाराणि
दलानितत्त्वात्सादृश्यादरा: तान्विन्दति
लभतइत्यर्थे गवादिषुविन्दे: संज्ञाया
मिति कर्मण्ययशो वाधक:श: । शेम
चादीनामितिनुम् । अरंशीघ्रंलिप्सां
विन्दतिवा । सारसपक्षिणि । नीलो
त्पले । रक्तकमले । ताम्रे । इतिराज
निर्घण्ट: ।

अरविन्दिनी । स्त्री । नलिन्याम् ॥ पद्म
खण्डे । तडागे । अरविन्दानि सन्त्य
त्र । पुष्करादिभ्यादिनि: । ङीप् ॥

अरसिक: । त्रि । अरसज्ञे । अविदग्धे ।
यथा । अरसिकेषु रसस्यनिवेदनं
शिरसि मालिख मालिख मालिखे
त्युद्भट: ।

अराजक: । त्रि । राजशून्यदेशादौ ॥
यथा । चौरप्रायं जनपदं हीनसत्त्व
मराजकमितिश्रीभागवतम् । अरा
जकेहिलोकेस्मिन् सर्वतोविद्रुतेभ
यात् । रक्षार्थमस्यसर्वस्यराजानम
सृजत् प्रभुरितिमनु: । !

अराति: । पुं । अरौ । नरातिसुखम् ।
रादाने । क्तिच् तिर्वा ।

अराल: । पुं । सर्ज्जरसे । समददन्तिनि
। त्रि । कुटिले । ऋच्छति । ऋगतौ
। विच् अर् । अरमालाति । मूलवि
भुजादित्वात्क: । अरा: आला
तिवा । नरातिदु:खम् । वाहुलका
न्नग्मा ॥

अराला । स्त्री । वेश्यायाम् ।

अरि: । पुं । शत्रौ । स्वकृतापकारमन-

पेक्ष स्वभावात् क्रौर्येणापकर्त्तरि । अरेर्मुखा यथा । मातंकुलीनंशूर मद्दातारमेव च । कृतघ्नंधृतिम न्तंचकष्टमाहुररिंबुधा इति । षड्ग्रहे । षट्सु । रथाङ्गे । चक्रे । खदिरप्रभेदे । खदिरपत्रिकायाम् । इयर्त्ति विरोधम् । ऋगतौ । अच इ: ।

अरित्रम् । न । कर्णे । निपातके ॥ ऋच्छत्यनेन । ऋगतौ । अर्त्तिलूधू इतिइत्र: ।

अरिन्दम: । पुं । पराभिभावके । अरिं दाम्यतीति विग्रहे संज्ञायां भृतृवृजिधारिसहितपिदम इत्यनेनदाम्यते: खचि पूर्वपदस्याजन्तत्वघ्नोमुमागम: । अरीन्कामादीन् दमयतीति वा ।

अरिमर्द्द: । पुं । कासमर्द्दे ॥

अरिमेद: । पुं । इरिमेदे । विट्खदिरे । अरिरिवमेद: स्नेहोऽस्य । अयंकषायउष्णास्तिक्तोभूतविनाशन: शोथातिसारकासविषवैसर्पनाशीचेतिराजनिर्घण्टे नरसिंहकौल: ॥

अरित्रा । स्त्री । मात्राहत्तभेदे । यथा । छन्दसिषोडशकलेविलासिनि प्रतिपदमन्त्यमकविलासिनि । अरिकानामपयोधरधारिणि शेषेनियतलघुद्वयधारिणि । यथा । किंकीमा-

शपाशधरगर्जसिमामुपगम्यहासभरमर्जसि । हरिचरणांशरणं नजिपशयसियमामख रखादपिनश्यसीति ।

अरिष: । पुं । अपानमांसजेरोगे । धाराप्रवर्षे ।

अरिषड्षृकम् । न । विवाहाद्युपयोगिनि गणमाविशेषे । यथा । मकर:करिकुलरिपुणा कन्यामेषेणसह भषस्तुलया । कर्किघटौ दृषधनुषी वृश्चिकमिथुनौषड्षृविधाविति ।

अरिषड्वर्ग: । पुं । कामक्रोधलोभमोहमदमात्सर्येषु । षण्णांवर्ग: षड्वर्ग: । अरीणामन्त:शत्रूणांषड्वर्ग: । यथा । दयाभावसरंकिंचित्कामादीनामनागपि । आसुरेरामते:कालंनयेद्दान्तचिन्तयेत्युपदेश: ॥

अरिष्ट: । पुं । लशुने । निम्बे । लङ्कानिकटवर्त्तिनि पर्वतविशेषे । काके । नरिष्टमस्य । कङ्के । फेनिलद्रुमे । रीठाइतिख्याते । अस्यगुणास्तु । अरिष्टकस्त्रिदोषघ्नोग्रहजिद्गर्भपातन इति । वृषभासुरे । न । अशुभे । तक्रे । सूतिकागारे । उत्पाते । आसवे । यथा । पक्वौषधाम्बुसिद्धंयन्मद्यंतत्स्यादरिष्टकम् । अरिष्टं मद्यमितिलोके । यथा । द्राक्षारिष्टम् दशमूलारिष्टम् । वब्बूलारिष्टमिति । अ-

रिष्टं लघुपाकेन सर्वतस्तु गुणाधिक
म। अरिष्टस्य गुणा ज्ञेया बीजद्रव्यगु
णैः समाः॥ मद्ये पुंल्लिङ्गोऽपीति सुश्रुत
टीका। शुभे। नास्ति रिष्टमत्र नरिष्य
तेऽस्मिन् हिंस्रैरिति वा। रिष हिंसायाम्।
क्तः। नञ् रिष्टमशुभमस्माद्वा। अनेक
मिति समासः। मरणचिह्ने। यथा।
रोगिणो मरणं यस्मादवश्यंभावि लक्ष
्यते। तल्लक्षणमरिष्टं स्याद्रिष्टमप्य
भिधीयत इति। न रिष्टम्। त्रि। अ
विनाशिनि।

अरिष्टकः। पुं। निम्बे। फेनिले। रीठा
इति ख्याते।

अरिष्टतातिः। त्रि। क्षेमङ्करे। शुभ-
ङ्करे।

अरिष्टदुष्टधीः। त्रि। विवशे। आसन्न
मरणसूचितलक्षणेनदूषितबुद्धौ। अ
रिष्टेन दुष्टा धीरस्य॥

अरिष्टनेमिः। पुं। मुद्गगणान्तरे। मुनि
विशेषे। जिनानां चतुर्विंशत्यन्तर्गत
द्वाविंशतितीर्थङ्करे।

अरिष्टसूदनः। पुं। विष्णौ। अरिष्टसू
दने। अरिष्टसंज्ञकमसुरं सूदितवा
न् सूदयति वा। सूद॰। नन्द्यादित्वा
ल्ल्युः॥

अरिष्टा। स्त्री। कटुकायाम्।

अरिष्टिः। स्त्री। अरेषणे। सकलाधि
व्याध्यभावे।

अरिष्टुः। त्रि। नाशने। अरिरिव तिष्ठति
। ष्ठा॰। कुः।

अरुचिः। पुं। अन्नानभिलाषरूपे रोग
प्रभेदे। अरोचके। रुच स्वाभि
लाषेऽप्य शब्दाः। सामर्थ्यरूपो बोधः।
रुच्यभावे।

अरुजः। पुं। आरग्वधे।

अरुणः। पुं। अर्के॥ अर्कसारथौ॥ अव्य
क्तरागे। कृष्णलोहिते। कृष्णमि
श्रितरक्ते॥ सन्ध्यारागे॥ निःशब्दे॥
कपिले। दानवान्तरे। कुष्ठभेदे।
पुन्नागपादपे॥ गुडे। न। कुङ्कुमे।
सिन्दूरे॥ त्रि। गुणिनि। ऋच्छति।
ऋगतौ। अर्त्तेश्चेत्युनन्। अरुणोव
र्णोऽस्यास्ति। अर्शआद्यच्।

अरुणकमलम्। न। रक्तोत्पले।

अरुणलोचनः। पुं। पारावते।

अरुणसारथिः। पुं। सूर्ये। अरुणः सूर
सूतः सारथिर्यस्य।

अरुणा। स्त्री। अतिविषायाम्। श्यामा
याम्॥ मञ्जिष्ठायाम्॥ त्रिवृतायाम्।
प्रचण्डोपस्वरयन्त्रे। इन्द्रवारुण्याम्
। गुञ्जायाम्। मुण्डितिकायाम्। क
दम्बपुष्प्यायाम्। ऋच्छति। ऋगतौ
। अर्त्तेश्चेत्युनन्। टाप्॥ अरुणोवर्णो
ऽस्त्यस्याः। अर्शआद्यच्। टाप्।

अरुणात्मजः । पुं । जटायुनामविहगे । अरुणस्यानूरोरात्मजः ।

अरुणावरजः । पुं । गरुडे ।

अरुणोदकम् । न । सरोविशेषे । मेरोः प्राच्यांदिशियो विष्कम्भपर्वतस्तस्य मूले सरोऽरुणोदकंनाम तच्चहेमाब्जमण्डितम् ।

अरुणोदयः । पुं । प्रातर्मुहूर्त्ते । सूर्योदयात् पूर्वमुहूर्त्तद्वये । यथा । रजनीशेषयामस्यशेषार्द्धमरुणोदयःइति । अपिच । चतस्रोघटिकाःप्रातररुणोदयउच्यते । यतीनांस्नानकालोयंगङ्गाम्भःसदृशःस्मृतःइति ॥ सप्तपञ्चारुणोदयइतिदेवीभागवतम् । अथसप्तपञ्चाशत् घटिकोत्तरमरुणोदयइतितदर्थः । अरुणस्योदयोयस्मिन्सः ।

अरुणोदयसप्तमी । स्त्री । माकर्य्याम् । भविष्योक्तविवरणायांतपःशुक्लसप्तम्याम् ॥

अरुणोदा । स्त्री । मन्दरगिरिशिखरान्निपतन्त्यांसरिति ॥ अरुणोयच्चाम्रफलरसःसएवउदकं यस्याः ॥

अरुणोपलः पुं । पद्मरागे । चुन्नीतिलोके ॥ अरुणोऽरुणवर्णश्चासावुपलःपाषाणश्च ।

अरुन्तुदः । त्रि । मर्मस्पृशि । मर्मपीडके । अरुंषि मर्माणितुदति । तुद व्यथने । विध्वरुषोस्तुदइतिखश् । अरुर्द्विषदितिमुमिकृतेसंयोगान्तस्येत्यरुषःसकारस्यलोपः ।

अरुन्धती । स्त्री । वशिष्ठपत्न्याम् । अक्षमालायाम् । कर्दममुनेः कन्यायाम् ।

अरुन्धतीजानिः । पुं । वशिष्ठे । अरुन्धती जायायस्यसः । जायायानिङ् ।

अरुन्धतीनाथः । पुं । वशिष्ठे । अरुन्धत्यानाथः स्वामी ।

अरुष्कः । पुं । भल्लातके । इतिशब्दरत्नावली ।

अरुष्करः । पुं । भल्लातकवृक्षे । न । भल्लातकफले । त्रि । व्रणकृति । अरुर्व्रणं करोति । दिवाविभेतिटः । नित्यंसमासेनुत्तरपदस्येतिषः ॥

अरुः । न । मर्मणि ॥ पुं । रक्तखदिरे । अर्के । पुं : न । व्रणे । चते । इयर्त्ति । ऋगतौ । अर्त्तिपवपियजीत्युसिः ॥

अरुषा । स्त्री । भूधात्र्याम् । भूमि आंवला इतिख्यातायाम् ॥

अरूपः । त्रि । रूपशून्ये ॥ कुत्सितरूपे ॥

अरूपः । पुं । रवौ । सर्पविशेषे ॥ ऋच्छति अर्यतेवा । ऋगतिप्रापणयोः

। त्रूहनिभ्यामूषन् ॥

अरे । । । नीचसम्बोधने । यथा । अरे यमभटाः शठाःकपटविग्रहेषूद्भटानि वेद्यतवोवचस्तवनचाधिकारोमयि । अहन्तु शिवसुन्दरीचरणचारुपङ्कजस्खलनमधुसुधासवंसमपिवंनजानीतरेइति । रुषाह्वाने । अपाकृतौ । असूयायाम् ॥

अरेरे । । । नीचसम्बोधने ॥ रुषाह्वाने । सक्रोधाह्वाने ॥

अरोकः । त्रि । निष्प्रभे । छिद्रवर्जिते । रोचनम् रोकः । रुचदीप्तौ । घञ् । नरोकोऽस्य ॥

अरोगः । त्रि । व्याधिरहिते ॥ पुं । दोषसाम्ये । रोगाभावः । नरोगोऽस्यवा ।

अरोचकः । पुं । रोगविशेषे । अरुचि रोग इतिभाषा ।

अर्कः । पुं । रक्तार्के । अर्कपर्णे ॥ अस्य गुणायथा । अर्कद्वयं सरंवातकुष्ठकण्डूविषव्रणान् । निहन्तिप्लीहगुल्मार्शः श्लेष्मोदरयकृत् क्रिमीन् । अर्क द्वयं रक्तार्कःश्वेतार्कश्च । शुक्लार्ककुसुमंहृष्यंलघुदीपनपाचनम् । अरोचक प्रसेकार्शकासश्वासनिवारणम् । रक्तार्कपुष्पंमधुरंसतिक्तं कुष्ठक्रिमिघ्नंकफनाशनञ्च । अर्शोविषंहन्तिचरक्तपित्तंसङ्ग्राहिगुल्मेश्वयथौहितंतत् ॥ क्षीरमर्कस्यतिक्तोष्णंस्निग्धंसलवणं-लघु । कुष्ठगुल्मोदरहरं श्रेष्ठमेतद्विरेचनमिति भावप्रकाशः । स्फटिके । रवौ । लघवायारविवारे । ताम्रे । दिवस्पतौ । विडौजसि । श्रीहरौ । ब्रह्मादिभिः पूज्यतमैरर्चनीयत्वात् । द्वादशांके । हस्तर्क्षे ॥ सर्वदर्शिनि । अर्च्यते । अर्चपूजायाम् कर्मणिघञ् । चजोरितिकुत्वम् । यद्वा । कृदाधारार्चिकलिभ्यःक इतिकः । अर्क्यतेवा । अर्कस्तवने । घञ् । अरकइतिप्रसिद्धे क्वाथविशेषे ॥ यथा । द्रव्यकल्पःपञ्चधास्यात्कल्कंचूर्णं रसस्तथा । तैलमर्कःक्रमाज्ज्ञेयंयथोत्तरगुणंप्रिये इतिरावणः ।

अर्ककान्ता । स्त्री । आदित्यभक्तायाम् ।

अर्कचन्दनम् । न । रक्तचन्दने ॥

अर्कजः । पुं । यमे । शनैश्चरे ॥

अर्कजौ । पुं । अश्विनीसून्वोः ॥ नित्यद्विवचनान्तोयम् ॥

अर्कतनयः । पुं । कर्णे । राधेये ॥ वैवस्वतमनौ । सावर्णिमनौ ॥ शनौ ॥ यमे ।

अर्कतनया । स्त्री । यमुनायाम् । तपत्याम् ।

अर्कनन्दनः । पुं । अर्कतनये । सुग्रीवे ॥

अर्कस्य नन्दनः ॥

अर्कनामा । पुं । रक्तार्के ॥

अर्कपत्रः । पुं । आदित्यपत्रवृक्षे ।

अर्कपत्रा । स्त्री । सुनन्दायाम् । अर्कमूलायाम् ॥

अर्कपर्णः । पुं । अर्काह्वे । मन्दारे ॥ अर्काभानि तीक्ष्णानि पर्णान्यस्य ॥

अर्कपादपः । पुं । निम्बे ॥ इति त्रिकाण्डशेषः ॥

अर्कपुष्पिका । स्त्री । सूर्यवल्ल्याम् ॥

अर्कपुष्पी । स्त्री । कुटुम्बिनीवृक्षे । अर्कपुष्पी कृमिश्लेष्ममेहपित्तविकारजिदिति भावप्रकाशः ॥

अर्कप्रिया । स्त्री । जवायाम् ॥

अर्कबन्धुः । पुं । गौतमे । बुद्धे ॥ स च इक्ष्वाकुकुलोद्भवशाक्यवंशीयोबोद्धव्यः ॥ अर्कस्यबन्धुः सूर्यवंशजत्वात् ॥ अम्बुजे ॥ अर्कोबन्धुर्यस्यसः ॥

अर्कबान्धवः । पुं । अम्बुजे ॥ अर्कोबान्धवोयस्यसः ॥ बुद्धे ॥ बुद्धभिदि ॥ अर्कस्यबान्धवः ॥

अर्कभम् । न । सूर्याक्रान्तनक्षत्रे ॥

अर्कभक्ता । स्त्री । आदित्यभक्तायाम् । हुलहुल् इति प्रसिद्धे शाके ॥

अर्कमूला । स्त्री । अर्कपत्रायाम् । ईश्वरमूलेतिगौडेषुप्रसिद्धायाम् ॥

अर्करेतोजः । पुं । सूर्यात्मजविशेषे । रेवन्ते ॥ इतिहेमचन्द्रः ॥

अर्कवल्लभः । पुं । बन्धूकवृक्षे ॥

अर्कवेधम् । न । तालीशपत्रे ॥

अर्कव्रतम् । न । राजोव्रतविशेषे ॥ यथा । अष्टौमासान् यथादित्यस्तोयं हरतिरश्मिभिः । तथाहरेत्करंराष्ट्रान्नित्यमर्कव्रतंहितदितिमनुः ॥ आरोग्यसम्पत्त्यादिसूर्यव्रते ॥

अर्कसूनुः । पुं । शनौ ॥ यमे ॥ सुग्रीवे ॥ कर्णे ॥ अर्कस्यसूनुः ॥ द्विवचनान्तः आश्विनेययोः ॥

अर्कसोदरः । पुं । ऐरावते ॥ इतिहेमचन्द्रः ॥

अर्कहिता । स्त्री । अर्कभक्तायाम् ॥

अर्काश्मा । पुं । अरुणोपले ॥ अर्कस्य अश्मा ॥ सूर्यकान्तमणौ ॥

अर्काह्वः । पुं । रक्तार्के । अर्कपर्णे ॥ अर्कआह्वायस्य ॥

अर्की । पुं । अर्कवति । शस्त्रसूपमन्त्रवति होतरि ॥

अर्कोपलः । पुं । सूर्यकान्तमणौ ॥

अर्गलम् । न । कपाटद्वयमध्यस्थदण्डे ॥ दुर्गापाठादौपाठ्येदेवीस्तोत्रविशेषे ॥ यथा । मार्कण्डेयउवाच । ब्रह्मन् केनप्रकारेणदुर्गामाहात्म्यमुत्तमम् । श्रोतव्यंसिद्धमितितत्सर्वंकथयस्वमहाप्रभो ॥ ब्रह्मोवाच । अर्गलंकीलक-

ब्रादौ पठित्वा कवचं पठेत् । जपेत् सप्तशतीं पश्चात् क्रमएषशिवोदितः इति । त्रि । कल्लोले ॥ अर्घ्यते । अर्ज अर्जने । दृषादित्वात् कलच् । न्यङ्क्वादिः ॥

अर्गला । स्त्री । आगल इतिभाषाप्रसिद्धे कपाटबन्धककाष्ठविशेषे । कपाटान्तरविष्कम्भदण्डे । त्रि । कल्लोले ॥ टाप् ॥

अर्गलिका । स्त्री । अर्गले । आगलीइतिभाषाप्रसिद्धायाङ्क्षुद्रार्गलायाम् ।

अर्गली । स्त्री । कपाटरोधनार्थं तन्मध्यस्थे क्षुद्रदण्डे ॥ गौरादित्वान् ङीष् ।

अर्ग्वधः । पुं । राजवृक्षे ।

अर्घः । पुं । मूल्ये । पूजाविधौ । पूजोपचारभेदे । अर्घ्यतेऽनेन । अर्घ पूजायाम् । हलश्चेति घञ् । न्यङ्क्वादिः । अर्घिधोर्त्वन्तरं वा । अयंशब्दः सामगानां सर्वत्राभिलापे सयकारो नपुंसकलिङ्गेनैवप्रयोज्यः । अन्यवेदिनां निर्यकारः पुल्लिंगेन प्रयोज्यः । इति आह्निकतत्वे रघुनन्दनः ।

अर्घीशः । पुं । ईश्वरे । शिवे । इतिशब्दरत्नावली ।

अर्घ्यम् । न । अरत्नकामुनेस्तपोवनतरुभूतमधुनि । उपचारभेदे । मस्तके दीयमाने अर्घजले । अर्घायेदम् । पादार्घाभ्याञ्चेतियत् । त्रि । पूजार्हे । अर्घस्य योग्ये । अर्घमर्हति । दण्डादिभ्यइतियत् । पुं । मूल्ये ॥ पूजाविधौ ।

अर्चकः । त्रि । पूजके । यथा । अर्चकस्यतपोयोगादर्चनस्यातिशायनात् आभिरूप्याच्चबिम्बानांदेवः सान्निध्यमृच्छतीतितिथ्यादितत्त्वम् । अर्चति । अर्च० । ण्वुल् ।

अर्चनम् । न । पूजायाम् । यथा । धनधान्यकरंनित्यं गुरुदेवद्विजार्चनमिति । अर्च पूजायामस्माच्चौरादिकात् ल्युट् । ल्युट्च । त्रि । पूजाद्रव्ये ।

अर्चना । स्त्री । पूजायाम् । टाप् ।

अर्चा । स्त्री । प्रतिमायाम् । यथाहश्रीकृष्णोव्यासादीन् प्रति । किंस्वल्पतपसांनृणामर्चायांदेवचक्षुषाम् । दर्शनस्पर्शनप्रश्नप्रह्वपादार्चनादिकमिति दशमस्कन्धे ८४ अध्यायः ॥ पूजायाम् । अर्चनम् अर्च्यतेवा । अर्च पूजायामस्माच्चौरादिकाद्गुरोश्चहलइत्यप्रत्ययः । टाप् ।

अर्चिः । स्त्री । ज्वालायाम् । इन्नन्तः । अर्च० । शिजन्तादयवर्वी ।

अर्चितम् । त्रि । पूजिते । अर्च्यतेस्म० । अर्च पूजायाम् । क्तः ।

अर्चिरादिमार्गः । पुं । उत्तरमार्गे ।

अर्चिरादावुपलक्षिते देवयानपथि ।

अर्चिष्मान् । पुं । वह्नौ । भास्करे । दीप्ते । अर्चिर्विद्यते ऽस्यास्मिन्वा । मतुप् ।

अर्चिः । न । स्त्री । मयूखे । वह्निशिखायाम् । दीप्तौ । अर्च्यते । अर्च पूजायाम् । अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः । अर्चिः सान्तः ।

अर्च्यः । त्रि । पूज्ये । अर्च्यते । अर्चस्तुतौ । ण्यत् । यजयाचरुचप्रवचर्चश्चेति कुत्वनिषेधः ।

अर्जकः । पुं । बावुई इतिभाषाप्रसिद्धे श्वेतपर्णासे । अस्यगुणाः । कटूष्णाः कफवातामयंनेत्ररोगनाशी रुचिकारी सुखप्रसवकारकश्चेतिराजनिर्घण्टः । अर्जयति । अर्जसर्जअर्जने । ऋगतिस्थानार्जनो पार्जनेषुवा । णयन्तः । ण्वुल् । त्रि । उपार्जनस्य कर्त्तरि ।

अर्जनम् । नं । अर्जयितृव्यापारे । स्वामित्वहेतुभूतव्यापारे । सङ्ग्रहे ॥ सम्पादने ॥ अर्ज० । ल्युट् ॥

अर्जुनः । पुं । ककुभद्रुमे । कौह इति ख्याते । अस्यगुणा यथा । क्षतभग्नरक्तस्तम्भनमूत्रकृच्छ्ररोगे पथ्यत्वमितिराजवल्लभः । कषायत्वमुष्णत्वंत्रणशोधनत्वम् कफपित्तश्रमतृष्णापित्तनाशित्वं वायुरोगप्रकोपकारित्वमिति राजनिर्घण्टः । सर्वसम्पत्तिपञ्चपराक्रमे तृतीयेपाण्डुतनये । कार्त्तवीर्ये । मयूरे । मातुरेकसुते । धवले ॥ करवीरे । न । तृणे ॥ नेत्रगदे । यथा । एकोयः शशरुधिरोपमस्तुबिन्दुः शुक्लस्थोभवतितदर्जुनंवदन्तीति । त्रि । धवलवर्णवति ॥ अर्ज्यते । अर्ज अर्जने । अर्जेर्णिलुक्चेत्युनन् । तृणाख्यायांचिद्वियितेमनम् ।

अर्जुनधनुः । न । गाण्डीवे । अर्जुनस्य धनुः ।

अर्जुनध्वजः । पुं । वायुपुत्रे । हनूमति ।

अर्जुननामा । पुं । ककुभद्रुमे ।

अर्जुनी । स्त्री । गवि । अर्जुनवर्णयोगात् । अन्यतोङीष् ॥ उषायाम् ॥ बाहुदानद्याम् ॥ कुट्टन्याम् ॥

अर्जुनोपमः । पुं । शाकद्रौ । महापत्रे । शागनइति गौड देश ख्याते ॥ अर्जुनउपमायस्य ।

अर्णः । पुं । अक्षरे । शाकद्रुमे ॥ अर्त्तेः क्तः ॥

अर्णवः । पुं । अम्बुनिधौ ॥ अर्णांस्यत्र सन्ति । अर्णसोलोपश्चेतिवः सलोपश्च ।

अर्णवजः । पुं । न । समुद्रफेने ।

अर्णवमन्दिरः । पुं । वरुणे । अर्णवेम

| अर्थः | अर्थम |
|---|---|
| न्दिरंमस्व । | प्रयोजने । अर्थ्यते । कर्मणि घञ् । |

अर्णवोद्भवः । पुं । अग्निजारद्रव्ये ।
अर्णः । न । जले । ऋच्छति । ऋग तौ । उदकेनुट्चेत्यर्त्तेरसुन् तस्य चनुट् ।
अर्णोदः । पुं । मुस्तके । मेघे ।
अर्णोभवः । पुं । शङ्खे । इतिराजनिर्घण्टः ।
अर्त्तगलः । पुं । नीलझिण्टाम् ।
अर्त्तनम् । न । जुगुप्सायाम् । घृणीयायाम् । ऋतिः सौत्रोधातुः । इयङभावेल्युट् ।
अर्त्तिः । स्त्री । पीडायाम् । धनुष्कोटौ । अर्द्दनम् । अर्द्द हिंसायाम् । क्तिन्बादिभ्यः । तितुत्रेतिनेट् ।
अर्थः । पुं । विषये । अर्थनायाम् । अर्यते गम्यते ऋच्छतिवा । ऋगतौ । उषिकुषिगार्त्तिभ्यस्थन्निति थन् । यद्वा । अर्थ्यते प्रार्थ्यते सुखरूपत्वात्सर्वैः । अर्थ उपयाच्ञायाम् । अकर्त्तरीतिघञ् । कारणे । वस्तुनि । वाच्ये । शब्दानामभिधेये । यथा । अर्थोवाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधामतः । वाच्योर्थोऽभिधया बोध्योलक्ष्योलक्षणयामतः । व्यङ्ग्योव्यञ्जनयाताः स्तुतिस्रः शब्दस्यशक्तय इतिसाहित्यदर्पणः । अर्थिनोऽनुकूले । निवृत्तौ ।

फले । धने । प्रकारे । द्वितीयभवने । अभिलाषे । अर्थनमर्थः । भावेघञ् ।
अर्थक्रमः । पुं । क्रमनिर्णये । यथा । यत्रप्रयोजनवशेन क्रमनिर्णयःस अर्थक्रमः । यथा ऽग्निहोत्रंजुहोतियवागूंपचतीत्यग्निहोत्रहोमयवागूपाकयोः । अत्र हि यवाग्वाहोमार्थत्वेनतत्पाकः प्रयोजनवशेन पूर्वमनुष्ठीयते । सचायं पाठक्रमाद्बलवान् । यथा पाठंह्यनुष्ठाने क्रमप्रयोजनबाधे ऽदृष्टार्थत्वंस्यात् । नहिहोमानन्तरं क्रियमाणस्य पाकस्य किञ्चिद्दृष्टं प्रयोजनमस्ति ।
अर्थदूषणम् । न । क्रोधजव्यसनेषुषष्ठे । अर्थानामपहरणे । देयानामदाने ।
अर्थना । स्त्री । याच्ञायाम् । अर्थयाच्ञायाम् । चुरादिः । ण्यासेतियुच् ।
अर्थपतिः । पुं । राज्ञि । कुबेरे । अर्थानांपतिः ।
अर्थप्रयोगः । पुं । कुसीदे ।। अर्थस्यप्रयोगः ।।
अर्थभावना । स्त्री । आर्थीभावनायाम् । स्वर्गयागेन प्रयाजादिभिरुपकृत्य साधयेदिति पुरुषप्रवृत्तिरर्थभावनोच्यते ।
अर्थमर्यादा । स्त्री । सम्यगाकारक्षमा

प्यांकार्थोत्पादे ।

अर्थवान् । त्रि । धनिनि । अर्थः सन्निहितोऽस्यास्य । मतुप् । असन्निहितेतु अर्थीत्येव । प्रयोजनवति ॥ पुं । पुरुषे इति राजनिर्घण्टः ॥

अर्थवादः । पुं । विधिशेषे । स्तुतौ । काल्पनिकफलश्रुतौ । अङ्गफलश्रुतौ । तल्लक्षणं यथा ॥ अभिधेयया गौण्या वा वृत्त्या भूतमर्थं वदन् स्वाध्यायविध्यापादित प्रयोजनवत्त्वलाभाय विधिसाकाङ्क्ष इति । स च षड्विधलिङ्गेषु पञ्चमम् । यथा । प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनमर्थवादः । यथा छान्दोग्ये षष्ठप्रपाठके उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञातमित्यद्वितीयवस्तुप्रशंसनमिति । अर्थस्य प्रयोजनस्य वदनं विध्यर्थप्रशंसापरं वचनम् । अर्थवादो हि स्तुत्यादिद्वारा विध्यर्थं शीघ्रं प्रवृत्तये प्रशंसतीति ॥ स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवाद इति न्याय सूत्रम् । स्तुतिः साक्षाद्विध्यर्थस्य प्रशंसार्थकं वाक्यम् । यथा । सर्वजिता वै देवाः सर्वमजयन् सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वं जयतीत्यादि । अनिष्टबोधनद्वारा विध्यर्थप्रवर्त्तकं निन्दा । यथा । एष वाव प्रथमो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वा अन्येन यजते स गर्त्ते पतत्ययमेवैतज्जीर्यते प्रवामीयत इत्यादि । पुरुषविशेषनिष्ठमिथो विरुद्धकथनं परकृतिः । यथा । हुत्वा वपामेवाग्रेऽभिघारयन्ति अथ पृषदाज्यं तदुह चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारयन्त्यग्नेः प्राणाः पृषदाज्यमित्यभिदधतीत्यादि । ऐतिह्यसमाचरिततया कीर्त्तनं पुराकल्पः । यथा । तस्माद्वा एते पुरा ब्राह्मणा बहिष्पवमानसामस्तोममस्तौषन् यज्ञं प्रतनवामह इत्यादीत्यर्थः ॥ प्राशस्त्यनिन्दान्यतरपरं वाक्यमर्थवाद इति लौगाक्षिभास्करः । यथा । विरोधे गुणवादः स्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मत इति । अस्यार्थः । विरोधे विशेष्यविशेषणयोः सामानाधिकरण्येनान्वयविरोधे गुणवादः अङ्गकथनरूपत्वात् । यथा यजमानः प्रस्तर इति । अत्र प्रस्तरः कुशमुष्टिः तस्य यजमानेऽभेदान्वयबाधात् यजमानस्य कुशमुष्टिधारणरूपार्थवादरूपत्वात् गुणवादः । अवधारिते प्रमाणान्तरसिद्धेऽर्थे यो वादः । यथा नान्तरीक्षेऽग्नि

स्थेतव्यः अग्निर्हिमस्य भेषजमित्यादि च। अन्तरीक्षेऽग्निश्चयनस्यासम्भवेन तदभावस्य अग्नेर्हिमनाशकत्वस्य च लौकिकप्रमाणसिद्धत्वादनुवादः। तद्भावे तयोर्विरोधावधारणयोरभावे भूतार्थवादः। यथा इन्द्रो वृत्रहत्यादि। सोऽपि त्रिविधः। स्तुत्यर्थवादो निन्दार्थवादश्च। यथा। सन्ध्यामुपासते येचेत्यादिस्तुत्यर्थवादः। स्त्रीतैलमांससम्भोगी पर्वस्वेतेषु वै पुमान्। विण्मूत्रभोजनं नाम प्रयाति नरकं मृतइत्यादिनिन्दार्थवाद इति। तत्त्वसम्बोधनीमतेतुसप्तविधः। यथा। स्तुत्यर्थवादः १ फलार्थवादः २ सिद्धार्थवादः ३ निन्दार्थवादः ४ परकृतिः ५ पुराकल्पः ६ मन्त्रः ७। एषामुदाहरणानि श्रौतानि ग्रन्थगौरवभिया न लिखितानि॥

अर्थविज्ञानम्। न। शुश्रूषाद्यष्टधीगुणान्तर्गतगुणविशेषे। शब्दार्थज्ञाने।

अर्थविप्रकर्षः। पुं। पूर्वपूर्वमपेक्ष्योत्तरोत्तरस्य विलम्बेनार्थोपपादकत्वे॥

अर्थव्यपाश्रयः। पुं। प्रयोजनसम्बन्धे।

अर्थव्ययज्ञः। त्रि। धनव्ययप्रकारविदि। मुकुले॥ अर्थव्ययौ जानाति। ज्ञा। कः॥

अर्थशास्त्रम्। न। अथर्ववेदस्योपवेदे चतुष्षष्टिकलासङ्ग्राहके शौनकसादिशास्त्रभेदे। दण्डनीत्याम्। यथा। बृहस्पतिप्रभृतिभिः प्रणीतमर्थशास्त्रकम्। तथैव दण्डनीतिःस्यादन्वेयौनयानयाविति। अर्यते गम्यते। ऋ गतौ। उषिकुषिगार्तिभ्यस्थन्। अर्थस्य भूमिधनादेः शास्त्रम्।

अर्थसमाहर्त्ता। त्रि। सम्यग्धनार्जनशीले॥

अर्थसिद्धकः। पुं। सिन्दुवारवृक्षे।

अर्थागमः। पुं। आये।

अर्थान्तरम्। न। प्रकृतानाकाङ्क्षितार्थे। यथाहगौतमः। प्रकृतादर्थादसम्बद्धार्थमर्थान्तरम्।५।५। प्रकृतात्कृतोपयुक्तात्। ल्यब्लोपे पञ्चमी। तेनप्रकृतोपयुक्तमर्थमुपेक्ष्य असम्बद्धार्थाभिधानमर्थान्तरम्। प्रकृतानाकाङ्क्षिताभिधानमिति फलितार्थः। यथा शब्दोऽनित्यः कृतकत्वादित्युक्ता शब्दोगुणः सचाकाशस्येत्यादि॥

अर्थान्तरन्यासः। पुं। अर्थालङ्कारभेदे। यथा। सामान्योवाविशेषोवा तदन्येन समर्थ्यते। यत्रसोऽर्थान्तरन्यासः साधर्म्येणेतरेणवा॥ साधर्म्येणवैधर्म्येण वासामान्यं विशेषेण यत्समर्थ्यं

तेषिमेषोवासामान्येनसोऽर्थान्तरन्यासः। क्रमेणोदाहरणम्। निजदोषावृतमनसा अतिसुन्दरमेवभाति विपरीतम्। पश्यतिपीतोपहतःशशिशुभ्रं शंखमपिपीतम्। सुर्ताततवसनालङ्कारायां कदाचन कौमुदीमहसि सुदृशिस्वैरंयान्त्यांगतोऽस्तमभूद्विधुः। तदनु भवतःकीर्तिः केनाप्यगीयत येनसा प्रियगृहमगान्मुक्ताशङ्का क्वनासिशुभप्रदः। गुणानामेवदौरात्म्याद्धुरिधुर्यो नियुज्यते। असञ्जातकिणस्कन्धः सुखंस्वपितिगौर्गलिः। अहोहिमेवलपराङ्मायुषा यदप्रियंवाच्यमिदंमयेदृशम्। तएवधन्याः सुहृदः पराभवंजगत्यदृष्ट्वैवहियेक्षयंगताइति।

अर्थापत्तिः। स्त्री। प्रमाणविशेषे। जीवतश्चैत्रस्यगृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पनायाम्। अनुपपद्यमानेनार्थेनोपपादककल्पने॥ यथा दृष्ट्यामेघज्ञानं वृष्ट्यासह मेघस्य वैयधिकरण्याव्याप्तिरिति नानुमाने ऽन्तर्भावः। उक्तेनानुक्तस्याक्षिपति यासा अर्थापत्तिः॥ अलङ्कारान्तरं। एकस्यवस्तुनोभावाद्यत्रवस्त्वन्यदापतेत्। कैमुत्यन्यायतः साऽस्यादर्थापत्तिरलङ्क्रिया॥ दण्डापूपिकया र्गिक्तरस्यापतनमर्थापत्तिरितिलक्षम्।

अर्थार्थी। त्रि। इहामुत्रवा यज्ञोनोपकरणंतदभीप्सौ। अर्थस्य अर्थी।

अर्थिकः। पुं। वैतालिके। निद्रावस्थराजादेः सुखादिना प्रातर्जागरयितरि।

अर्थितः। त्रि। याचिते। अर्थ्यंतेस्म। अर्थ०। क्तः।

अर्थी। त्रि। याचके। सेवके। विवादिनि। धनिनि। सहाये। अर्थोऽस्यविद्यतेऽस्यास्ति। अर्थाद्यास्यदितते इतिइनिः॥ अर्थयतेवा। अर्थ याचने। ग्रह्यादित्वाण्णिनिः। स्त्रियामर्थिनी।

अर्थ्यः। त्रि। पण्डिते॥ सम्प्रार्थ्ये। न्याय्ये॥ अर्थशालिनि। न। शिलाजतुनि। अर्थेसाधुः। तत्रसाधुरिति यत्॥ अर्थादनपेतः। धर्मपथ्यर्थेति यत्॥ अर्थ्यते। अर्थ उपयाच्ञायाम्। एयन्तः। अचोयत्॥

अर्हणम्। न। गमने। पीडने। याचने॥ हनने। अर्हभर्वेल्युट्।

अर्हणा। स्त्री। याच्ञायाम्॥ अर्हगतौयाचनेच। स्वार्थ एयन्तः। एयासेतियुच्। टाप्।

अर्हितम्। त्रि। याचिते। हिंसिते।

रोगिणि । गते ॥ न । वातव्याधिविशेषे ॥ तस्यलक्षणम् । वक्रीभवति वक्राह्वंग्रीवाचाप्यपवर्त्तते । शिरश्चलति वाक्संगे।नेत्रादीनांचवैकृतम् । ग्रीवाचिवुकदन्तानांतस्मिन् पार्श्वेचवेदना । तमर्द्दितमितिप्राहुर्व्याधिंव्याधिविशारदा इति । यस्मिन्पार्श्वे अर्द्दितंतस्मिन्पार्श्वे ग्रीवादीनांवेदनेत्यर्थः । अस्यौषधंयथा । रसोनकल्कंतिलतैलमिश्रंयोऽश्नातिनित्यार्द्दितरोगयुक्तः । तस्यार्द्दितंनाशमुपैतिशीघ्रंवृन्दंघनानामिववायुयोगादिति । विषमज्वरेप्येतद्देयम् ॥ अर्द्यते स्म । अर्द्दगतौयाचनेच । क्तः ।

अर्द्धः । पुं । भित्ते । खण्डे । न । समांशे । आधा इतिभाषा । स्थाने । ऋ पक्षार्द्धे । ऋध्नोत्यनेन । ऋधुवृद्धौ । हलश्चेति घञ् । अत्रायंविवेकः । अर्द्धशब्दः खण्डमात्रविवक्षायांपुल्लिङ्ग एव । असि अर्द्धे अर्द्धः । समखण्डविवक्षायांक्लीवएव । यदात्वर्द्धशब्दो धर्मिपरस्तदात्रिलिङ्गचयएवेति ।

अर्द्धगङ्गा । स्त्री । कावेर्याम् । अर्द्धंगङ्गायाः । अर्द्धंनपुंसकमितिसमासः ।

अर्द्धगुच्छः । पुं । चतुर्विंशतिलतिकहारे ॥ गुच्छार्द्धे । अर्द्धंगुच्छस्य ।

अर्द्धचन्द्रः । पुं । नखक्षते । गलहस्ते । बाणभेदे । चन्द्रार्द्धे । अर्द्धचन्द्राकारे स्त्रीणांललाटाभरणविशेषे ॥

अर्द्धचन्द्रा । स्त्री । कृष्णत्रिवृति । अर्द्धश्चन्द्रोयस्याः । एतद्विदलस्यार्द्धचंद्राकारत्वात् ।

अर्द्धचन्द्रिका । स्त्री । कर्णस्फोटाख्यतायाम् । चित्रपर्ण्याम् ।

अर्द्धचोलकः । पुं । कूर्पासे । काँचुली इति प्रसिद्धवस्त्रे । कुर्त्ती इतिच प्रसिद्धे । इतिहारावली ।

अर्द्धजाह्नवी । स्त्री । कावेर्य्याम् ।

अर्द्धतिक्तः । पुं । नेपालनिम्बे ॥

अर्द्धनारीश्वरः । पुं । शिवे । उमामहेश्वरे । अस्यध्यानंयथा । नीलप्रवालरुचिरंविलसत्त्रिनेत्रंपाशारुणोत्पलकपालकशूलहस्तम् । अर्द्धाम्बिकेशमनिशंप्रविभक्तभूषंबालेन्दुबद्धमुकुटंप्रणमामिरूपमिति ॥

अर्द्धनावम् । न । नावोर्द्धे । नावोऽर्द्धम् । अर्द्धंनपुंसकमितितत्पुरुषः । अर्द्धाच्चेतिनावष्टच् ॥

अर्द्धपारावतः । पुं । चित्रकण्ठे । तित्तिरिपक्षिणि ॥

अर्द्धपुलायितम् । न । अश्वस्यमण्डलगतिविशेषे । यथा । शताद्धाईक्रमाद्दूनैर्मण्डलायितवल्गितैः । उन्मुखस्याश्वमुख्यस्यगतिरर्द्धपुलायितमिति ।

अर्द्धभ्रमकः । पुं । कायबन्धप्रभेदे ।

अर्द्धमागधकः । पुं । हादशयष्टिकेहारे ।

अर्द्धमात्रा । स्त्री । विन्दुर्वचन्द्ररूपिण्याम् ब्रह्मरूपिण्याम् । अर्द्धमात्रापरं पदम् । यथा । अकारोभगवान्ब्रह्मा उकारोविष्णुरुच्यते । मकारोभगवानृद्रोप्यर्द्धमात्रामहेश्वरी । उत्तरोत्तरभावेनाप्युत्तमत्वंस्मृतंबुधैः । अतःसर्वेषुशास्त्रेषु देवीसर्वोत्तमास्मृता । अर्द्धमात्रास्थितानित्यायानुच्चार्याविशेषतइति ॥

अर्द्धयामः । पुं । वारवेलायाम् । यामार्द्धे । कालवेलायाम् । कुलिकवेलायाम् ।

अर्द्धरथः । पुं । रथान्यूने ।

अर्द्धरात्रः । पुं । निशीथे । रात्र्यर्द्धभागे । अर्द्धरात्रः । अर्द्धनपुंसकमिति समासः । अहः सर्वैकेत्यच् ।

अर्द्धर्चः । पुं । न । ऋचोऽर्द्धे ।

अर्द्धलक्ष्मीहरिः । पुं । विष्णौ । तद्ध्यानं यथा । उद्यत्प्रद्योतनशतरुचिंतप्तहेमावदातं पार्श्वद्वन्द्वेजलधिसुतया विश्वधात्र्याचजुष्टम् । नानारत्नोल्लसितविविधाकल्पमापीतवस्त्रं विष्णुंवन्देदरकमलकौमोदकीचक्रपाणिमिति ।

अर्द्धवीक्षणम् । न । कटाक्षे । अपाङ्गदर्शने ।

अर्द्धवैनाशिकः । पुं । वैशेषिके । वैशेषिकस्तावत् परिणामभेदेन देहादेराशुतरविनाशित्वाङ्गीकारादासमः-स्थायित्वाङ्गीकाराश्चार्द्धवैनाशिकत्वेनप्रसिद्धएव ।

अर्द्धशनम् । न । अर्द्धभुक्तौ । अर्द्धाशने ।

अर्द्धशफरः । पुं । क्षुद्रमत्स्यविशेषे । इचडपाठे । दाँडिकामाच इतिगौडानांभाषयाख्याते ।

अर्द्धहारः । पुं । चौंसठलडाहार इतिलोकभाषा प्रसिद्धे चतुष्षष्टियष्टिकहारे ।

अर्द्धाशनम् । न । अर्द्धभोजने ।

अर्द्धासनम् । न । स्नेहदाने । अभिनन्दने । इतिधरणिः ।

अर्द्धेन्दुः । पुं । अर्द्धचन्द्रे । चन्द्रार्द्धभागे । गलहस्ते । नखाङ्के । अतिप्रौढस्त्रीयोन्यङ्गुलियोजने । अर्द्धचन्द्रबाणे । अर्द्धम् इन्दोरितिविग्रहः ॥

अर्द्धोदयः । पुं । पर्वविशेषे । सचोक्तः कामधेनुतंत्रे । यथा । माघेमासिअमावास्या यदिश्रवणसंयुताभवेत् । मघेश्रवसोदेविव्यतीपातोभवेद्यदा । अर्द्धोदयःसविज्ञेयः कोटिसूर्यग्रहैः समइति । दिवैवयोगः शस्तोऽयंनतुरात्रौकदाचन । अर्द्धोदयेतुसम्प्राप्तेस

वंगङ्गासमं जलम् । शुद्रात्मानो विजाः सर्वेभवेयुर्ब्रह्मसन्निभाः । यत्किञ्चित्क्रियते दानं तद्दानंसेतुसन्निभमिति स्कन्दपुराणम् ।

**अर्द्धोरुकम्** । न । चण्डातके । ऊर्वोरर्द्धाच्छादनांशुके । उत्तमस्त्रीणाम र्द्धोरुपर्यंते चोलकाकारे परिधेयवस्त्रे । ऊरोरर्द्धम् । अर्द्धनपुंसकमितिसमासः । अर्द्धोरौ कायते । कागृदाप्नौ । अन्येभ्योपीतिडः ।

**अर्द्ध्यम्** । त्रि । अर्द्धभवे । अर्द्धभवः । अर्द्धाद्यत् ।

**अर्पणम्** । न । समर्पणे ॥ अर्प्यतेऽनेनेतिव्युत्पत्त्या जुह्वादौ । मन्त्रादौ । अर्प्यतेऽस्मैइतिव्युत्पत्त्या देवतादिरूपे सम्प्रदाने । अर्प्यतेऽस्मिन्निति व्युत्पत्त्याअधिकरणे देशकालादौ । हविरादौ । अर्प्यतेयत्तत् कर्मणि ल्युट् ।

**अर्पितः** । त्रि । सम्प्रवेशिते । स्थापिते ।

**अर्पिसः** । पुं । हृदये । अग्रमांसे ॥ अर्प्पयति । ऋगतौ । ऋतन्यञ्जीत्यादिना अर्पयतेरिसन् ।

**अर्ब्बुदः** । पुं । न । मांसकीले । रसौलीतिख्याते रोगविशेषे ॥ दशकोटिसंख्यायाम् । १००००००००॥ पुं । आबू इति प्रसिद्धे मर्त्त्याधरविशेषे । न । पर्णुखफलाद्रौ ।

**अर्भः** । पुं । बाले । उत्तानशये । ऋच्छति । इयर्त्तिवा । ऋ० । अर्त्तिगृभ्यां भन् ।

**अर्भकः** । पुं । बाले । मूर्खे । कृशे । सदृशे । अल्पे । अर्य्यते दृद्धिं माप्यते । ऋगतौ प्रापणेच । अर्भकपृथुकपाकावयसीतिसाधुः । यद्वा । इयर्त्तिचलतिदृद्धिं गच्छतिवा । अर्त्तिगृभ्यांभन् । स्वार्थेकः । यद्वा । ऋभाति । ऋधुवृद्धौ । अर्भकपृथुकेतिवुनभश्चान्तादेशः ॥

**अर्म्मः** । पुं । न । नेत्ररोगभेदे । सतपञ्चविधम् । प्रस्तार्य्यर्म्मशुक्लार्म्मरक्तार्म्ममांसार्म्मस्नाय्वर्म्मभेदात् । एषांलक्षणानितत्तच्छब्देद्रष्टव्यानि । ऋच्छति । ऋगतिप्रापणयोः । अर्त्तिस्तुस्विति मन् ।

**अर्म्मणः** । पुं । द्रोणपरिमाणे । इतिवैद्यकपरिभाषा ।

**अर्य्यः** । पुं । स्वामिनि ॥ वैश्ये ॥ त्रि । श्रेष्ठे । अर्य्यते । ऋगतौ । अर्यःस्वामिवैश्ययोरितियसाधुः ।

**अर्य्यमा** । पुं । सूर्ये । अर्कवृक्षे ॥ पितॄणांराज्ञि । उत्तरफल्गुन्याम् । इयर्त्ति अर्यः । ऋगतौ । श्वन्नुक्षनपूषन्नित्यादिनाअर्यपूर्वान् माङःकनि-

न निपातितः ।

अर्य्या । स्त्री । वैश्यजातीयायाम् ॥ स्वामिन्याम् । अर्यक्षत्रियाभ्यांवास्वार्थे इति आनुगागमाभावेटाप् ॥

अर्य्याणी । स्त्री । वैश्यजातीयायाम् । स्वामिन्याम् । अर्यक्षत्रियाभ्यांवास्वार्थे इतिपक्षे आनुगागमेङीष् च ।

अर्य्यी । स्त्री । वैश्यप्रियायाम् । अर्य्यस्य स्त्री । पुंयोगलक्षणोङीष् ।

अर्वती । स्त्री । कुम्भदास्याम् । वडवायाम् । घोटक्याम् । तुरग्याम् ।

अर्वा । पुं । तुरङ्गमे । ऋच्छति । ऋगतौ । अन्येभ्योपीति सामर्थ्यादिनावावनिप् । यद्वा । अर्वतिवा । अर्व गतौ । बाहुलकात् कनिप् । महेन्द्रे । हयकर्णपरिमाणे । त्रि । अधमे । ऋच्छतेः अवद्यावमाधमार्वरेफाः कुत्सितइतिवन्नन्तो निपातः ।

अर्वाक्तनः । त्रि । निर्मूले । अवेदमूले । स्वेच्छाकृते । अर्वाक्भवः । सायंचिरमित्यादिनाट्युः ॥

अर्वाक् । । अवरे । पूर्वकालतः पश्चादर्थे । अवरे अञ्चति । अस्तातिः । अञ्चेर्लुक् । पृषोदरादिः । अर्वन्तम् अञ्चति वा । विपर्यस्ते । इतिधरणिः ।

अर्वाचीनः । त्रि । अर्वाचि । पश्चाज्जाते । अर्वागेव । विभाषाञ्चेरदिक्-स्त्रियामितिखः ।

अर्शम् । न । गुदव्याधौ । इतिशब्दरत्नावली ।

अर्शस् । न । अर्शो । गुदव्याधिभेदे । दुर्नामके । गुदकीले । अस्यसामान्यलक्षणं यथा । दोषास्त्वङ्मांसमेदांसि सन्दूष्यविविधाकृतीन् । मांसाङ्कुरानपानादौ कुर्वन्त्यर्शांसितान् जगुरिति । अथास्यसामान्यतोनिदानं यथा । पृथग्दोषैःसमस्तैश्चशोणितात् सहजानिच । अर्शांसिषट्प्रकाराणि विद्याद्गुदवलित्रये ॥ सामान्यतोऽर्शसश्चिकित्सायथा । यद्वायोरानुलोम्याय यदग्निबलवृद्धये । अन्नपानौषधंसर्वंतत्सेव्यंनित्यमर्शसैरिति । ऋच्छति । ऋगतौ । व्याधौ शुट् चेत्यर्त्तेरसुन् ।

अर्शसः । त्रि । गुदव्याधियुक्ते । अर्शोरोगयुते । अर्शांस्यस्यविद्यन्ते ॥ अर्शआदिभ्योऽच् ।

अर्शसानः । पुं । अग्नौ । ऋच्छति । ऋ० । अर्त्तेर्गुणः शुट् चेत्यसानच् । अर्शसानाय शम्बर्यां किमिमे इतिवेदभाष्यम् ।

अर्शी । त्रि । गुदव्याधियुते । इतिशब्दरत्नावली ॥

अर्शोघ्नः । पुं । सूरणे । भल्लातके । अ-

शंसि हन्ति । असमुच्यकर्तृ बेमुचे तिडन्तेष्टक् ।

अर्शोघ्नी । स्त्री । तालमूल्याम् । भल्लातक्याम् । ठिस्वाम् ङीप् ।

अर्शोरोगयुत: । त्रि । अर्शसे । मूलव्याधिमति । अर्शोरोगेणयुत: ।

अर्शोऽर्दित: । पुं । अर्शोघ्ने । अर्शसोऽर्दित: ।

अर्हंत: । पुं । चपणे । बुद्धे । त्रि । मान्ये । इतिमेदिनीमुद्राङ्किता ।

अर्ह: । पुं । पूजाप्रशंसास्तुतिनमस्कारादिभि: पूजनीये परमेश्वरे । अर्ह्यते पूज्यतेषोडशभिरुपचारै रित्यर्ह: ।

अर्ह:कर्मणिघञ् । शक्रे । त्रि । योग्ये अर्हति । अर्हपूजायाम् । पचाद्यच् ।

अर्हण: । पुं । जिने । न । पूजने । उपायने । पुष्पादौ ।

अर्हणा । स्त्री । अर्हायाम् । योग्यायां पूजायाम् । अर्हपूजायां चुरादि: । ण्यासश्रन्थोयुच् । टाप् ।

अर्हणीय: । त्रि । पूज्ये ।

अर्हन् । पुं । जिने । जिनभेदे । अनादिसिद्धजीवास्तिकाये । चपणे । बुद्धे । कोङ्कवेङ्ककुट कानांराजिन्ऋषभदेवे । त्रि । पूज्ये । अर्हति । अर्ह० । अर्ह: प्रशंसायामिति शतृप्रत्यय: ।

अर्हत्तम: । त्रि । अत्याचाराभिजनादिभि: पूज्यतमे ।

अर्हन्त: । पुं । सुगते । चपणे । अर्हति । अर्ह० । बाहुलकात्झच् ।

अर्हा । स्त्री । पूजायाम् । अर्ह० । गुरोश्चहल इत्यकारप्रत्यय: । टाप् ।

अर्हितम् । त्रि । अर्चिते । अर्ह्यतेस्म । अर्हपूजायाम् क्त: ।

अलम् । न । वृश्चिकपुच्छकण्टके । हरिताले ।

अलक: । पुं । न । चूर्णकुन्तले । अलति भूषयति मुखम् अल्यतेवा । अलभूषादौ । क्वुनादित्वात्कुन् ।

अलकनन्दा । स्त्री । कन्यायाम् । गङ्गायाम् । यथा । तथैवालकनन्दापिदक्षिणे नैतिभारतम् । मयातिसागरंभूत्वासप्तभेदामहामुने इति । तथासोतावत ।

अलकप्रभा । स्त्री । यत्तेशपुर्याम् ।

अलकप्रिय: । पुं । पीतसालके । विजयसार इतिख्याततरौ ।

अलका । स्त्री । कुबेरपुर्याम् । अष्टवर्षावधिदशवर्षपर्यन्तवयस्कायांकन्यायाम् । अलति भूषयति । अलभूषणादिषु । कुनशिल्पिसंज्ञयोरपूर्वस्यापि । चिपकादित्वात्कत्वम् ।

अलकाधिप: । पुं । धनपतौ । अलकाया अधिप: ।

नि निश्चयः। पद्मरागश्चवज्रञ्चविज योगोविद्रोस्तथा। मुक्तावैदूर्यनीलानितथामरकतंक्रमात्। आदित्यादिग्रहाणां सर्वसम्पत्तिदाम-ताः। सुवर्णेनापिघटनासर्वेषामुपयुज्यते। प्रधानभूषणेष्वेवमप्रधाने न निश्चयः। प्रधानभूषणंप्रायः शिरसोह्यभिधीयते। तस्यप्रधानभूषत्वा दित्याहभृगुनन्दनः॥ सुखदामणयः शुद्धादुःखदादोषशालिनः। अतोमणीनांवस्यामिलक्षणानि यथाक्रम-मितियुक्तिकल्पतरुः॥मणिविशेषलक्षणानितत्तच्छब्देद्रष्टव्यानि॥ काव्यालङ्कारे। उपमादौ॥ सद्विविधः। शब्दालङ्कारोऽर्थालङ्कारश्च। तल्लक्षणोदाहरणान्युपमादितत्तच्छब्देव-लोकनीयानि। चतुष्कलेशेषगुरोः॥ ऽसंज्ञायाम्। अलंक्रियतेऽनेन। डुकृञ्०। घञ्॥

अलङ्कृतः। त्रि। भूषिते। अलंक्रियते-स्म०। क्तः॥

अलङ्क्रिया। स्त्री। भूषायाम् अलङ्कारसाध्यशोभायाम्॥ अलंकरणम्। कृञः शच। टाप्॥

अलन्धूमः। पुं। धूमसंहतौ॥

अलब्धः। त्रि। अप्राप्ते॥

अलब्धभूमिकत्वम्। न०। कुतश्चिन्निमि-त्तात् समाधिभूमेरलाभे॥

अलम्। ा। भूषणे। पर्याप्तौ। वारणे। निषेधे॥ निरर्थके। शक्तौ। अत्यर्थे॥ अवधारणे। अलति अलनं वा। अलभूषणादौ। बाहुलकादम्॥

अलमपुरुषीणः। त्रि। प्रतिमल्लादौ। अलंपुरुषायेत्यर्थे अषडक्षेतिखः।

अलम्बुषः। पुं। प्रहस्ते। छर्दे। राक्षसान्तरे॥

अलम्बुषा। स्त्री। मुण्डीर्य्याम्। स्वर्वेश्याभेदे। लज्जालुप्रभेदे। गलायाम्॥ अलम्बुषालघुःस्वादुः कृमिपित्तकफापहेत्यस्यागुणाः॥

अलम्बुसाः। पुं भूम्नि। देशविशेषेषु।

अलर्कः। पुं। प्रतापसे। धवलार्के। यथा। अलर्ककुसुमं हृष्यंलघुदीपन पाचनम्। अरोचकप्रसेकार्शः कासश्वासनिवारणमिति॥ उन्मत्तशुनि। विक्षिप्तकुक्कुरे। नृपान्तरे। अलति। अलभूषणादौ। क्विप्। अल् चासावर्कश्च। यद्वा। अलमर्क्यते अर्च्यते वा। अर्कस्तवने अर्चपूजायां वा। घञ्। शकन्ध्वादिः। अन्नुविशेषे॥

अलर्कक। पुं। अलर्कार्थे॥

अलले। ा। पिशाचभाषयासंबोधने॥

अलवालम्। न०। आलवाले। लवमा-

लाति । लाआदाने । मूलविभुजादि त्वात्कः । नञ्समासः ॥

अलसः । त्रि । अवश्यकर्त्तव्येप्यप्रवृत्ति शीले । क्रियामन्दे । क्रियाजडे । शीतके । यथा । स्त्रीभिःश्ल्वश्यश्री भिरलसः परिभूयते । इतिकामंद के । श्रियंहिसततोत्थाःशीदुर्बलोपि समश्नुते इतिच ॥ पुं । ।ादरोगेप्रभे दे । यथा । क्लिन्नाङ्गुल्यंतरौपादौक ण्डूदाहरुजान्वितौ । दुष्टकर्दमसंस्प र्शादलसंतंविभावयेदिति । द्रुमभेदे ॥ नलसति । लसश्लेषणे । पचाद्यच् ।

अलसकः । पुं । उदररोगविशेषे । अ स्यस्वरूपन्तु । कुक्षिरानह्यते ऽत्य र्थंप्रताम्येत् परिकूजति । निरुद्धोमा रुतश्चैवकुक्षावुपरिधावति । वातव र्चोनिरोधश्चयस्यात्यर्थंभवेदपि । त स्यालसकमाचष्टेतृष्णोद्गारौचयस्य- तु । इति ॥

अलसा । स्त्री । हंसपद्याम् । टाप् ।

अलसीका । स्त्री । शरीरजोदकविशेषे । उक्तंचचरकेण । आमगंधियत्सुर्मा .सत्वगन्तरे व्रणगतमुदकंतदलसीका शब्दंलभते इति ।

अलसेक्षणा । स्त्री । स्त्रीविशेषे । अल से ईक्षणेयस्याः ।

अलातः । पुं । न । अङ्गारे । उल्मुके । अर्द्धदग्धकाष्ठे ॥ लानम् । लाआदाने । क्तः । नलातमस्य ॥

अलाबुः । स्त्री । तुम्ब्याम् ।

अलाबूः । स्त्री । तुम्ब्याम् । नलम्बते लविअवस्रंसने । मनिलम्बेर्नलोप श्चेत्यूणित । अलाबूः कथितातुम्बी द्विधादीर्घाचवर्त्तुला । मिष्टतुम्बीफ लंहृद्यं पित्तश्लेष्मापहंगुरु । वृष्यंरु चिकरंप्रोक्तंधातुपुष्टिविवर्द्धनम् । अ लाबुका फलंदीर्घंघृतेपक्वं सजीरक म् । दुग्धसैन्धवचूर्णेनसंसिक्तंत्वनुशो षितम् ॥

अलाबूकटम् । न । तुम्बीरजसि । अ लाबूनांरजः । अलाबूतिलोमाभङ्गा भ्यो रजस्युपसंख्यानमितिकटच् ।

अलारम् । न । कपाटे ।

अलिः । पुं । स्त्री । सुरायाम् ॥ पुष्पलि हि । कोकिले । काके । वृश्चिके । अलति दंशसमर्थो भवति । अलभू षणादौ । सर्वधातुभ्यइन् ।

अलिकम् । न । ललाटे ॥ अलति अ स्यतेवा । अल० । वाहुलकादिकन् ।

अलिकुलसङ्कुलः । पुं । कुब्जकवृक्षे ।

अलिङ्गः । त्रि । सर्वसंसारधर्मवर्जिते परमात्मनि । लिङ्गंबुद्ध्याद्यविद्यमान मस्येति । सन्निहितमपिनलिंग्यतइ- तिवा ॥ धर्मध्वजित्वरहिते ॥ अव्यक्त

लिङ्गेच ।

अलिजिह्वा । स्त्री । अध्यरसने । जिह्वोपरिक्षुद्रजिह्वायाम् ॥

अलिञ्जरः । पुं । मणिके । माँट इति ख्याते ॥ अलनम् । अलभूषणादौ । इकक्रुष्यादिभ्यः । इन्वा । अलिंताम र्थ्यंजरयति जृञ्यातिवा । अलयोरिहा मौ जृषयोङमोवा । अथ अथवा । पृषोदरादिः ॥

अलिदूर्वा । स्त्री । मालादूर्वायाम् ॥

अली । पुं । वृश्चिके ॥ भ्रमरे । अलमर्थोऽस्यास्ति । ब्रीह्यादित्वादिनिः । अथवा भ्रमापेटिलोपः । यद्वा । अलोवृश्चिकलाङ्गूलम् । तदिवास्त्यस्य । अतइनिः ।

अलिन्दः । पुं । प्रघाणे । वहिर्द्वारप्रकोष्ठे । द्वारप्रकोष्ठा द्वहिर्द्वाराग्रवर्त्तिचतुष्के ॥ द्वारवहिर्भागे । अल्यतेभूष्यते । अलभूषणादौ । बाहुलकात् किन्दच् ॥

अलिपकः । पुं । पिके ॥ भृङ्गे । कुक्कुरे ॥

अलिपत्रिका । स्त्री । वृश्चिकासञ्ज्ञके क्षुपे ।

अलिपर्णी । स्त्री । वृश्चिकाल्याम् ।

अलिप्रियम् । न । कोकनदे । रक्तोत्पले ॥ अलेः प्रियम् ।

अलिप्रिया । स्त्री । पाटलावृक्षे ।

अलिमकः । पुं । भेके । पिके ॥ अलौ । भ्रमरे । पद्मकेशरे । मधूके । इति मेदिनिकरः ।

अलिमोदा । स्त्री । मधिकारीकृते ।

अलिम्पकः । पुं । पिके । अलौ । पद्मकेशरे । मधूके । भेके । इतिहेमचन्द्रः ॥

अलिवत् । पुं । सततंगगनचारिणि प्रसिद्धे पक्षिविशेषे । तथाचोदाहरन्ति वेदान्तेषु वार्त्तिककाराः । अलिवः पक्षिणःपुत्रोगगनाञ्चातिभूतलम् । स्ववोधाभावतः स्वस्थोध्येयान्यकरंपुनरिति ॥

अलिवल्लभा । स्त्री । पाटलौ । कलेवराख्याम् ।

अलिवाहिनी । स्त्री । केवरइतिकोकनदेशप्रसिद्धे केविकापुष्पे ।

अलीकम् । न । अप्रिये । दिवि । भाले । अलति अल्यतेवा । अलभूषणादौ । अलीकादयश्चेतिसाधुः । असत्ये । अतन्त्यनेना ऽधोगतिम् । अल० अलीकादिः ।

अलीकमत्स्यः । पुं । रिकवचइतिख्याते ॥ यथा । माषपिष्टिकयालिप्तं नागवल्लीदलंभवेत् । तस्तुसंस्वेदयेद्युक्त्या स्थाल्यामास्तारकोपरि ॥ ततोनिष्कासितंसज्यंकतसैलेन भर्जयेत ॥

अशीकमत्स्य उक्तोयंप्रकारः याकप-
तैः । तंहमाकभटिकेन वास्तूकेन
चभक्षयेत् । अशोकमत्स्यकोद्यो
ह्यावल्योऽतिपुष्टिदः । वातहृच्छ
कदःप्रोक्तःकिञ्चित्पित्तं प्रकोपयेदि-
ति ।

अलुब्धः । त्रि । निर्लोभे । लोभहीने ।

अले । । पिशाचोक्त्यास्फुट्टो ।

अलेपकम् । न । निरवद्ये ।

अलेले । । पिशाचोक्त्यासम्पुट्टो ॥

अलोकः । पुं । अतलादिसप्तसु । नलो
क्यते अस्माभिः । लोकृ० । घञ् ।

अलोकाकाशास्तिकायः । पुं । लोका-
नां वहिर्भूताकाशे ।

अलोभः । पुं । लोभाभावे । त्रि । तद्व
ति । यथा । अलोभीस्यात् प्रजावि
त्तेगृह्णीयात् सञ्चितंकरम् । रक्ष
न्नङ्गीकृतंधर्मं पुत्रवत्पालयेत् प्रजा
इतिराजधर्मः ।

अलोभी । त्रि । लोभरहिते । अलो
भोस्यास्तिइनिः ।

अलोलुपः । त्रि । इन्द्रियाणां विषयस
न्निधानेप्यविक्रियपुरुषे ।

अलौकिकः । त्रि । लोकातीते । लौ
किकप्रत्यक्षाविषये । अमानुषिके ।
नलौकिकः ।

अल्पम् । त्रि । किञ्चिदर्थे । ईषत् । मना-
क् । स्तोके । अल्पतेवार्यते । अल
भूषणादौ । बाहुलकात्पः । ह्रस्वे ।
स्वल्पे । मर्त्ये ॥

अल्पकम् । त्रि । अल्पार्थे । क्षुपके ।
पुं । यवासे । अल्पमेवस्वार्थेकः ।

अल्पकेशी । स्त्री । भूतकेश्याम् ॥

अल्पगन्धम् । न । रक्तकैरवे ।

अल्पतनुः । त्रि । स्वल्पदेहवति । पृश्नौ
। खर्वे । दुर्बले । अल्पास्थियुक्ते ।
अल्पातनुःशरीरमस्य ।

अल्पप्रज्ञः । त्रि । अल्पमेधसि । अल्पा
प्रज्ञायस्यसः ।

अल्पप्रमाणकः । पुं । चेलाने । चेलो । चे
लातरमूज इतिगौडभाषाप्रसिद्धे
फललताविशेषे । त्रि । अल्पमाने ॥
अल्पंप्रमाणमस्य ।

अल्पबुद्धिः । त्रि । मन्दे । अल्पाबुद्धिरस्य॥

अल्पमारिषः । पुं । तण्डुलीये । चंउरा
ई इतिप्रसिद्धशाके । अल्पश्चासौमा
रिषश्च ॥

अल्पमेधाः । पुं । मन्दप्रज्ञत्वेनवस्तुवि
वेकासमर्थे । अल्पप्रज्ञे । अल्पामेधा
यस्य । नित्यमसिच् प्रजामेधयोः ।

अल्पशमी । स्त्री । शमीरे ।

अल्पसरः । न । वेशन्ते । अल्पंचतत्सर
श्च ॥

अल्पायुः । पुं । छागे । त्रि । मितायुषि

। अल्पम् आयुर्यस्य ।

अल्पिका । स्त्री । मुद्गपर्ण्याम् । अल्प माषायाम् ।

अल्पिष्ठः । त्रि । स्वल्पे । अत्यल्पे ॥ अय मेषामतिशयेनाल्पः । अजादीगुणव चनादेवेतीष्ठन् ।

अल्पीयान् । त्रि । स्वल्पे । अणीयसि । अयमनयोरतिशयेनाल्पः । अजादी गुणवचनादेवेतीयसुन् ।

अल्ला । स्त्री । मातरि । अम्बायाम् । अ थर्वशाहू तोक्तार्थापरदेवतायाम् ॥

अव । अ । व्याप्तौ । निश्चये । अनादरे । असाकल्ये ।

अवकटः । त्रि । अवाचीने । अवकुटारे । अवाचीनः । अवात् कुटारश्चेति चात्कटच् । न । वैरूप्ये ।

अवकम्पितः । त्रि । कम्पिते । पुं । वृद्धा न्तरे ।

अवकरः । पुं । सम्मार्जन्याद्दिक्षिप्ते धूल्यादौ । सङ्करे । अवकीर्यते । कृ विक्षेपेहिंसायां वा । ऋदोरप् ।

अवकर्षः । पुं । अनुकर्षे । अवकृष्यते । कृष० । घञ् ।

अवकलितम् । त्रि । दृष्टे । इतिधरणिः ।

अवकल्कनम् । न । मिश्रीकरणे । चिन्तने ।

अवकाशः । पुं । अन्तरे ॥ कर्मरहित काले । अवसरे । यथा । अवकाशेषु चोक्षेषु नदी तीरेषु चैवहीतिम नुः । अवपूर्वात् काशतेर्घञ् ।

अवकीर्णः । त्रि । अवध्वस्ते । विक्षिप्ते । अव कृ० । क्तः ।

अवकीर्णी । त्रि । क्षतब्रह्मचर्यादिनियमे । क्षतव्रते । स्त्रीसंपर्कात् विप्लुत ब्रह्मचर्यं प्रथमाश्रमिणि यतौ च । ब्रह्मचार्यवकीर्णीस्यात् कामतस्तु- स्त्रियंव्रजन्निन्युक्तः । अवकरणम् । कृ विक्षेपे हिंसायांवा । भावेक्तः । अवकीर्णं विक्षिप्तं व्रतं हिंसनं वा अनेन । इष्टादिभ्यश्चेतीनिः ।

अवकुटारः । त्रि । अवकटे । अवाचीनः । अवात् कुटारश्च ।

अवकृष्टः । त्रि । बहिष्कृते । निष्कासिते । अवकृष्यतेस्म । कृषविलेखने । क्तः ।

अवकेशी । त्रि । कालानुत्पन्नफलद्रुमे । वन्ध्ये । अफलेवृक्षे । अवसन्नाः केशायस्यसोवकेशो निष्फलः । सोस्तिदृष्टान्तत्वेन अस्य । अतइनिः । सयथानिष्फलः एवमयं निष्फलः । अवकंशून्यमीष्टेतच्छीलः । सुप्यजातावितिणिनिर्वा ।

अवक्रः । त्रि । अकुटिले ॥

अवक्रचेताः । पुं । परमात्मनि । अवक्रम

हित्वप्रकाशवन्निश्चयमेव अवचित मेकरूपंचेतो विज्ञानमस्येति । त्रि । अकुटिलचित्ते । अवक्रंसरलंचेतो यस्य ॥

अवक्रयः । पुं । मूल्ये । वस्ने । राजग्राह्यद्रव्ये । वणिग्भिः शुल्कस्थानेप्रतिभाण्डमधिपतयेदेये । एतावत् कालमुपयोगार्थं भाण्डवस्त्राश्वादि मेयादीयते मह्यंच युष्माभिरेतावद्धनंदेय मित्येवंविधेभाटके । भाडा इति प्रसिद्धे ॥ अवक्रीयते ऽनेन । क्रीञ्द्रव्यविनिमये । पुंसीतिघः । एरजित्यच्तुन ल्युटावाधात ॥

अवक्लेदनम् । न । किंचिदार्द्रत्वे ॥

अवच्युतम् । न । उपरिकृतच्युते ॥

अवक्षेपः । पुं । निन्दायाम् ॥

अवक्षेपणम् । न । भर्त्सने ॥

अवक्षेपणी । स्त्री । वल्गायामितिहैम चन्द्रः ॥

अवगणितम् । त्रि । तिरस्कृते । परिभूते । अवगण्यतेस्म । गणसंख्याने । क्तः ॥

अवगण्डः । पुं । गण्डस्थव्रणे । वरण्डे । अवगच्छति । गम्लृ गतौ । समन्ताड्डः ॥

अवगतः । त्रि । ज्ञते । ज्ञाते । विदिते । अवगम्यतेस्म । गम्लृ गतौ । क्तः ॥

अवगतिः । स्त्री । ज्ञानमात्रे । ज्ञानस्थाने । अवगम्यतेऽनया । गम्लृ । क्तिन् ॥

अवगथः । त्रि । प्रातःस्नाते । अवगीयते । दृश्य° । निशीथगोपीथा वगथा इतिथक् गाङोह्रस्वश्च निपातनात् ॥

अवगमः । पुं । ज्ञाने । अवगम्यतेऽनेन । फले । अवगम्यते प्राप्यते । गम्° । अप् ॥

अवगाढः । त्रि । निविडे । अन्तः प्रविष्टे । निमग्ने । अवपूर्वाद्गाहेः कर्त्तरि क्तः ॥

अवगाहः । पुं । जलद्रोण्याम् । नौका जलसेचनकाष्ठपात्रे । इतिहलायुधः ॥

अवगाहः । पुं । स्नाने । स्नानगृहे ॥

अवगाहनम् । न । अवलोडने ॥ निमज्जने । अवगाहे । गोताभारके न हाना इतिभाषा ॥

अवगीतः । त्रि । निर्वादे । जनापवादे । मुहुर्दृष्टे । दुष्टे । गर्हिते । ख्यातगर्हणे । अवगीयतेस्म । गैशब्दे । क्तः । घुमास्थेतीत्वम् । मुहुर्गीते ॥

अवगीर्णः । त्रि । वर्णिते । अवगीर्यतेस्म । गशब्दे । क्तः । अपानाक्निर्गते द्रव्ये ॥

अवगुणः । पुं । दोषे ॥

अवगुण्ठनम् । न । योषाशिरः प्रावरणक्रियायाम् । घूंघट कर्मा इतिभाषा ॥

योषाननावरकसरन्ध्रवस्त्रे। स्त्रीमुखाच्छादनवस्त्रे। आच्छादनंसमुद्दिष्टमवगुण्ठनमीश्वरि। धूल्यादिम्रक्षणे॥ वेष्टने। मुद्राविशेषे॥

अवगुण्ठिका। स्त्री। योषाप्रावरणक्रियायाम्। अवगुण्ठने। जवनिकायाम्॥

अवगुण्डितम्। त्रि। चूर्णिते॥

अवगृह्यम्। न। प्रातिशाख्यादिषु पदविशेषे। यस्यपदस्यावग्रहः क्रियते तत्त्वेत्यर्थः॥ अवगृह्यते ग्रहउपादाने। विच्छेदानग्रहेरर्थः। पदास्वैरिबाह्यापक्ष्येषुचेतिक्यप्। ग्रहिज्येति सम्प्रसारणम्। कुगतीतिसमासः॥

अवगोरणम्। न। ताडनार्थंयष्ट्यादीनामुद्यमे। मारणेकूं लट्ठउठावना इतिभाषा॥

अवग्रहः। पुं। दृष्टिरोधे। ज्ञानभेदे॥ प्रतिबन्धे। गजालिके। हस्तिललाटे। अवगृह्यतेऽङ्कुशेन। ग्रहेरप्॥ विच्छेदे। अवान्तरपदसंज्ञांज्ञापयितुं पदपाठकाले किञ्चित्कालमवसाने। अवग्रहणमवग्रहः। ग्रहउपादाने। अवपूर्वात्ग्रहेर्घञोभावे ग्रहवृदृनिश्चिगमश्चेत्यप्। स्वभावे

अवग्रहणम्। न। प्रतिरोधे। तिरस्कृतौ। अनादरे।



अवग्राहः। पुं। दृष्टिरोधे॥ अवग्रहणमवग्राहः। अवेग्रहोवर्षप्रतिबन्धे इति अवपूर्वात् ग्रहेर्वाघञ्॥ शापे। आक्रोशेऽवन्योर्ग्रहइतिघञ्। अवग्राहस्ते भूयात् अभिभवइत्यर्थः॥

अवघट्टः। पुं। गर्त्ते। भूरन्ध्रे।

अवघातः। पुं। अवहनने। तण्डुलादिकण्डने॥ अवहननम्। हनहिंसागत्योः। घञ्। हनस्तोचिण्णलोः। होहन्तेरितिकुत्वम्।

अवचयः। पुं। पुष्पफलादीनांछेदने॥

अवचूडः। पुं। अवचूले॥ अधोलम्बिकलापे॥

अवचूर्णितम्। त्रि। पेषिते। अवध्वस्ते। चिपसुधादिचूर्णस्यलेखादौ॥ फल्गुचूर्णैराचिते। अवचूर्ण्यतेस्म। सत्यापेतिणयन्तात् क्तः। यद्वा। चूर्णपेषणुरादिः

अवचूलः। पुं। अवाग्ध्वजकञ्चुके। ध्वजाग्रवस्त्राधो मुखवस्त्रे। झण्डेका पटका इतिभाषाप्रसिद्धे।

अवचूलकम्। न। चामरे।

अवच्छिन्नः। त्रि। सङ्कुचिते॥ अवच्छेदकतानिरूपके। विशिष्टेअवच्छेदाश्रये॥ अवच्छिद्यतेस्म। छिदिर०। क्तः।

अवच्छुरितम्। न। अट्टहासे। अवच्छु

रणम्। छुरच्छेदने। भावेक्तः॥

अवच्छेदः। पुं। विरामे॥ सङ्कोचे॥ विशेषणत्वे॥ एकदेशे। परिच्छेदे।

अवच्छेदकम्। त्रि। न्यायमतेन अव्याप्य वृत्त्यधिकरणसम्बन्धैकदेशे॥ इतर व्यावर्तके। विशेषणे॥

अवच्छेदकावच्छेदः। पुं। व्यापकत्वे॥

अवच्छेद्यम्। त्रि। अवच्छेदाऽवच्छेदकोभयनिरूपणीये।

अवज्ञा। स्त्री। अनादरे॥ अवज्ञानम्। ज्ञातश्चोपसर्ग इत्यङ्। टाप्।

अवज्ञातम्। त्रि। अवमानिते॥ अवज्ञायतेस्म। ज्ञा अवबोधने। क्तः।

अवज्ञानम्। न। तिरस्कारे।

अवटः। पुं। खिले। गर्त्ते। यथा। रक्षसांगतसत्त्वानामेषधर्मः सनातनः। अवटेयेनिधीयन्ते तेषांलोकाः सनातना इतिरामायणम्। कूपे। कुहकजीविनि॥ अवन्त्यस्मात् अवरक्षणादौ। शकादिभ्योऽटन्।

अवटनिरोधनः। पुं। नरकविशेषे॥

अवटिः। स्त्री। गर्त्ते। इतिहलायुधः॥

अवटीटः। त्रि। नतनासिके। अवनाटे। अवनमनं नासिकायाः। नते नासिकायाः संज्ञायां टीटच् नाटच् भ्रटचः। अवटीटच्चनासिकायानतमस्य स्याः। अर्श आद्यच्। अवटीटानासिका सा अस्त्यस्यपुरुषस्य। अर्श आद्यच्॥

अवटुः। पुं। वृक्षभेदे। गर्त्ते॥ कूपे॥ पुं। स्त्री। घाटायाम्। ग्रीवापश्चाङ्गागे। ग्रीवायामुन्नतभागे। अवटलति। टलवैक्लव्ये। अवटीकतेवा। टीकृगतौ। मितद्वादित्वात् डुः॥ यद्वा। अवटति। वटवेष्टने वटभाषणेवा। बाहुलकादुः।

अवटोदा। स्त्री। भारतवर्षस्थनद्यन्तरे।

अवडीनम्। न। पक्षिणामवरोहणे। पक्षिणामधोगमने॥

अवतंसः। पुं। न। कर्णपूरे॥ शेखरे। शिरोभूषाभेदे। उत्तंसे। अवतंसयति अवतंस्यतेऽनेनवा। तसि: सौत्रोभूषार्थः। पचाद्यच् हलश्चेति घञ्वा।

अवतमसम्। न। क्षीणान्धकारे। अवक्षीनं तमः। अवसमन्धेभ्यस्तमस इत्यच्।

अवतरणम्। न। अवतारे।

अवतारः। पुं। अवतरणे। अवरोहे। पुष्करिण्यादौ। देवानांविशेषतो विष्णोर्मूर्त्यन्तरेण पूर्णांशावेशरूपेण पृथिव्यां प्रादुर्भावे। अवतारास्त्वं सङ्ख्यातास्तेष्वेते विशेषतःप्रसिद्धाः

। मत्स्यः कूर्मोवराहश्चनरसिंहोथवा मनः। रामोरामश्चरामश्चबुद्धःकल्की चतेदश ॥ अपिच । प्रकृतिर्विष्णुरूपाचपुंरूपश्चमहेश्वरः । एवंप्रकृतिभेदेनभेदास्तुप्रकृतेर्दश ॥ कृष्णरूपाकालिकास्याद्रामरूपाचतारिणी । बगलाकूर्ममूर्त्तिःस्यान्मीनोधूमावतीभवेत् ॥ छिन्नमस्तानृसिंहःस्याद्वराहश्चैवभैरवी। सुन्दरीजामदग्न्यः स्याद्वामनोभुवनेश्वरी। कमलाबौद्धरूपास्यान्मातङ्गीकल्किरूपिणी। स्वयंभगवतीकालीकृष्णस्तुभगवान्स्वयम्। स्वयञ्चभगवान्कृष्णःकालीरूपोभवेद्ध्रुवम्। इतिमुण्डमाला। विशेषोलिङ्गोपाख्यानेद्रष्टव्यः। पुनश्चश्रीभागवते १ स्कन्धे ३ ऽध्याये सप्तप्रथमं देवः कौमारंसर्गमाश्रितइत्यादिनाद्रष्टव्यः । तीर्थे । नद्यादितीर्थे ॥ अवतरत्यनेनाश्विन्वा । तृप्रवनसन्तरणयोः । अवेतृस्त्रो र्घञ् ।

अवतारणम् । न । भूतादिग्रहे । वस्त्राञ्चले । अर्चने । अवरोहणे ॥

अवतीर्णः । त्रि । अवतरणविशिष्टे । प्रादुर्भूते । जलादौकृतावरोहे । प्रविष्टे ।

अवतोका । स्त्री । स्रवद्गर्भायाम् । पतितगर्भागवि । अवगलितं तोकम-पत्यं यस्याः ॥

अवदंशः । पुं । दंशने । भर्जितद्रव्यचर्वणे । मद्यपानरुचिजनकभक्ष्यद्रव्ये। अवदंश्यते पानरुच्यर्थम् । दंशदशने । कर्मणिघञ् भावेवा ।

अवदातः । पुं । सिते। गौरे । त्रि । विशुद्धे । शुक्लगुणविशिष्टे । पीतवर्णवति ॥ मनोज्ञे । अवदायतेस्म । दैप् शोधने । क्तः ।

अवदानम् । न । खण्डने । पराक्रमे ॥ अतिक्रमे । शुद्धकर्मणि । यथा । विपञ्चीगायन्तीविविधमवदानंपुररिपोरिति । उशीरे ॥ देःअवखण्डने दैप्शोधनेवा । भावेल्युट् ।

अवदारकः । पुं । खनित्रे । त्रि । विदारणकर्त्तरि ।

अवदारणम् । न । खनित्रे ॥ अवदार्यतेऽनेन । दृविदारणे । णयन्तः । ल्युट् ।

अवदाहः । पुं । अवदहने । न । वीरणमूले । अवनीयते दाहोऽस्मात् ।

अवदीर्णम् । त्रि । खण्डिते । द्रुते । द्रवीभूते घृतादौ । अवदीर्यतेस्म । दविदारणे क्तः ।

अवदोहः । पुं । दुग्धे ॥ अवदुह्यते । दुह० । कर्मणि घञ् ।

अवद्यम् । त्रि । अधमे । पापे । निन्द्ये । नवदति परंगुणम् नउद्यते नउच्यते

वा। अवद्यावमाधमार्वरेफा: कुत्सितेइतिवदेर्नञिकर्त्तरियत्। अवद्यप वद्येतितु कर्मणियत्॥

अवद्योतनम्। न। प्रकाशे। णि। तन इति।

अवद्रङ्ग:। पुं। हट्टे।

अवधानम्। न। मनोयोगे॥ अवडुधाञो ल्युट्।

अवधारणम्। न। निश्चये। अवधृतौ। इयत्ताहिपरिच्छेदे। परिमाणनिश्चये।

अवधारित:। त्रि। निश्चिते। कृतावधारणे॥

अवधार्य्य:। त्रि। अवधारणीये। निर्धार्य्ये।

अवधि:। पुं। अवधाने। सीम्नि। परस्यां काष्ठायाम्। काले। बिले। अवधानम्। डुधाञ्०। उपसर्गे घो: कि:।

अवधीरित:। त्रि। अवज्ञाते।

अवधूत:। त्रि। अभिभूते। निवर्त्तिते। यथा। अवधूतभय:। वायौ। अवधुनोति धूञ्०। क्त:॥ अनादृते। योगेश्वरे। सन्न्यासाश्रमिणि॥ तन्निरुक्तिर्यथा। अक्षरत्वाद्वरेण्यत्वाद्धूतसंसारसङ्कटात्। तत्त्वमस्यर्थसिद्धत्वादवधूतोभिधीयत इति। अपि च। योविलङ्घ्याश्रमान् वर्णान् आत्मन्येवस्थित: पुमान्। अतिवर्णाश्रमीयोगी अवधूत:सकथ्यतइति। यथा रवि:सर्वरसान् प्रभुङ्क्ते हुताशनश्चापिहि सर्वभक्ष:। तथैवयोगी विषयान् प्रभुङ्क्ते नलिप्यते पुण्यपापैश्चशुद्ध:स्त्वपि। अत्रन्यो विशेषो हंसेद्रष्टव्य:।

अवधूननम्। न। तिरस्कारणे।

अवधूलनम्। न। अवचूर्णने।

अवधृत:। त्रि। आकर्षिते। निश्चिते।

अवधृति:। पुं। अवधारणे।

अवध्य:। त्रि। मारणायोग्ये। यथा। अवध्यास्त्रियं प्राहुस्तिर्यग्योनिगता स्वपीति। अपिच। किंत्वयान श्रुतं लोके अवध्या: प्रभुयोषितइति। अवध्यवधे पापमुक्तंमनुना। यावानवध्यस्यवधेतावान् वधस्य मोक्षणे। अधर्मोनृपतेर्दृष्टोधर्मस्तुविनियच्छत इति। ९ ऽध्याये २४९ श्लोक:।

अवध्वंस:। पुं। परित्यागे। निन्दने। अवचूर्णने।

अवध्वस्त:। त्रि। परित्यक्ते। निन्दिते। अवचूर्णिते॥ अवध्वस्यतेस्म। ध्वंसुगतौच। क्त:।

अवनम्। न। प्रीतौ। रक्षणे। प्रीणने। अवरक्षणादौ। ल्युट्।

अवनतम्। त्रि। अवाग्भूते। आनते।

अवनमतिस्म । णमप्रह्वत्वे । नमस्य र्थे तिक्तः । अनुदात्तोपदेशेत्यनुना सिकलोपः ॥

अवनतिः । स्त्री । विनये । अनौद्धत्ये ॥

अवनद्धः । त्रि । मण्डपे ॥

अवनाटः । त्रि । नतनासिके । नासि कायाःनतम् । नतेनासिकाया इति नाटच् । तद्योगान्नासिकाऽवनाटा । साम्यस्य । अर्शआद्यच् ॥

अवनामः । पुं । प्रणामे । अवनमनम् । अवणमोघञ् ॥

अवनायः । पुं । अधोनयने । निपातने । अवनयनम् । णीञ् प्रापणे । अवो दोर्नियइति घञ् ।

अवनिः । स्त्री । भुवि । अवति अव्यते वा । अवरक्षणादैा । अर्त्तिसृधृधमी त्यनिः ॥

अवनिक्तः । त्रि । क्षालिते ॥

अवनी । स्त्री । स्थिरायाम् । भूमैा । ना यमानायाम् । कृदिकारादिति वा ङीष् ॥

अवनीपतिः । पुं । राजनि । अवन्याः पतिः ॥ अवनीं पातिवा । पारक्षणे, पातेर्डतिः ॥

अवनेजनम् । न । प्रक्षालने । हस्तसंस्का रे । अव णिजिर० । ल्युट् । पिण्ड प्रदानार्थमास्तृतकुशोपरिजलसे - चने ॥

अवन्तयः । पुं । देशभेदे । मालवेषु ॥ अवति । अवरक्षणादैा । बाहुलकात् झिच् ॥

अवन्तिका । स्त्री । उज्जयिन्याम् ॥

अवन्तिसोमम् । न । काञ्जिके । अवन्ति षु अभिषुतं सोमम् । शाकपार्थि वादिः ॥

अवन्ती । स्त्री । देशभेदे ॥ यथा । ताम पर्णी समासाद्य सैकाद्रिशिखरोद्गतः । अवन्तीसंज्ञकोदेशः कालिकावनवर्ति प्रतीति ॥

अवपातः । पुं । विले । निपाते । अधः पतने । अवपतनम् । पत्लृ० । घञ् । गजग्रहणगर्ते । अवपातस्तुहस्त्यर्थे गर्त्तेछन्नेतृणादिनेतियादवः । अै घी इतिभाषा ।

अवपाचितः । त्रि । भिन्नोदकीकृते अ पपाचिते ॥

अवपाशितः । त्रि । बद्धे ॥

अवप्लुतः । त्रि । अवतीर्णे । सक्तसैवाव तीर्णे ॥

अवबुद्धः । त्रि । अनुभूते ॥

अवबोधकः । पुं । परिदीपके ॥ अवबो धयति । बुध । णवुल् ॥

अवभर्जितः । त्रि । दग्धे ॥

अवभासः । पुं । साक्षात्कारे ॥

अवभासकः। त्रि। प्रकाशके।

अवभृथः। पुं। दीक्षान्तयज्ञे। मुख्ययज्ञ शेषकर्त्तव्यविशेषे। प्रधानकर्म्मसमाप्तौ क्रियमाणेष्टिविशेषे॥ यज्ञाङ्गभूत स्नानविशेषे॥ अवभ्रियते ऽनेन। हृ भृञ्धारणपोषणयोः भृञ्भरणेवा। अवेभृञइतिकथन्॥

अवभ्रटः। त्रि। नतनासिके॥ अवनतं नासिकायाः। नतेनासिकायाः संज्ञायामितिभ्रटच्। अवभ्रटंच नासिकायानतमस्त्यस्याः। अर्शआद्यच्। अवभ्रटानासिकास्त्यस्य पुरुषस्य। अर्श आद्यच्॥

अवमः। त्रि। कुत्सिते। अवरत्यस्मादात्मानम्। अवरक्षणादौ। अवचेति ह्रस्वेयावतेरमः प्रत्ययोनिपातितः॥ अवेोभवेोवा। अवेोधस्तेोर्लोपश्चेतिमः। न। अवमदिने।

अवमतम्। त्रि। अवमानिते॥ अवमन्यतेस्म। समवज्ञाने। क्तः॥

अवमतिथिः। स्त्री। स्युक्तिस्त्रतिथ्यो वारे एकस्मिन्नवमातिथि रिति लक्षिततिथौ॥

अवमदिनम्। न। अवमे। यथा। तिथ्यन्तद्वयमेकोदिनवारःस्पृशतियत्र तत्स्यादवमदिनम्। अस्यार्थः। दिनेतावद्वारद्वयंभवति वारप्रवृत्तिकालात् पूर्व्वमेकोवारस्तत्परंचान्यः। तथादिनस्याहोरात्रस्य एकोवारस्तिथ्यन्तद्वयं तिथिद्वयंवायत्रदिनेस्पृशति तदवमदिनम्। वारप्रवृत्तिकालात् परंपरदिनसूर्य्योदयावध्येकवारेण तिथ्यन्तद्वयस्पर्शे तिथित्रयस्पर्शेवा अवमदिनंस्यादित्यर्थः।

अवमन्ता। त्रि। अवमानस्यकर्त्तरि। अवमन्यते। अवपूर्व्वान्मनेस्तृच्।

अवमर्दः। पुं। पीडने। अवमर्द्दनम्। मृदक्षोदे। घञ्॥

अवमर्शः। पुं। नाटकसन्ध्यन्तरे।

अवमानना। स्त्री। अवज्ञायाम्॥ अवमाननम्। मनेर्ण्यन्तात्युच्।

अवमानितम्। त्रि। अवज्ञाते। अवमान्यतेस्म। मानपूजायाम्। क्तः।

अवमूर्द्धशयः। त्रि। अधोमुखशायिनि॥ अवनतो मूर्द्धायस्य सः। अवमूर्द्धाशेते शीङ्स्वप्ने। पार्श्वादिषूपसंख्यानादच्।

अवमोटनम्। न। परिवर्त्तने।

अवमोटनी। स्त्री। परिवर्त्तनशीलायाम्।

अवयवः। पुं। अङ्गे। प्रतिज्ञाहेतूदाहरणोपनयनिगमनाख्य ऽनुमानावयवाः। अवयौति। युमिश्रणे। अप्राप्य...

अवरः। त्रि। चरमे। पश्चाज्जाते। अधमे।

कार्ये । न । गवाक्षवन्नादिरेचे ।

अवराति । राहाने । कातश्चोपसर्ग इतिकः । यथा । महद्योतिश्रियतेवा । इत्यवरत्वे । अच् ग्रहवृद्धिश्चवा ।

अवरजः । पुं । कनिष्ठभ्रातरि । यवीयसि । शूद्रे । अवरस्मिन् काले जातः । सप्तम्यांजनेर्डः ॥

अवरजा । स्त्री । कनिष्ठायांभगिन्याम् ।

अवरतः । ा । पश्चादर्थे । अवरस्मात् । तसिल् । अवरस्मादर्थे । विभाषापरावराभ्यामित्यतसुच् । अवरतोवसत्यागतोरमणीयंवा ॥

अवरतिः । स्त्री । विरतौ । उपरामे ॥ अवरमणम् । रमक्रिडायाम् । क्तिन् ।

अवरप्रोक्तः । त्रि । प्राकृतबुद्धिनोक्ते । हीनमतिनाप्रोक्ते । अवरेणप्रोक्तः ।

अवरवर्णः । पुं । स्त्री । शूद्रे । वृषले । अवरोऽधमोवर्णोऽस्य । अवरश्चासौवर्णश्चेतिवा ।

अवरवर्णकः । पुं । स्त्री । शूद्रे । अवरवर्णएव ।

अवरव्रतः । पुं । अर्के ॥ त्रि । हीनव्रते ।

अवरस्तात् । ा । अवरे । अवरस्मादर्थे । अवरस्मिन् अवरस्याम् अवरस्मात् अवरस्याः अवरोऽवरावावसत्यागतोरमणीयंवा । दिक्शब्देभ्यस्तस्ताति: तत्रस्त्रियोमेनविभाषामरस्पति

अवरस्यपचश्चादेशाभावः ।

अवरा । स्त्री । भवान्याम् । पार्वत्याम् ।

अवरार्द्धम् । त्रि । अवरार्द्धभवे । अवरार्द्धेभवम् । परावराधमोत्तमपूर्वाच्चेतियत् ।

अवरीणम् । त्रि । धिक्कृते । अवरीणते स्म । रीङ्क्षरणे । क्तः ।

अवरुग्णः । त्रि । भग्ने ।

अवरुद्धः । त्रि । स्थगिते । आच्छादिते ।

अवरुद्धा । स्त्री । अन्तःपुरचारिण्यांभोग्यायांकर्मकर्याम् ।

अवरूढः । त्रि । अवतीर्णे ।

अवरोधः । पुं । तिरोधाने । राजदारेषु । शुद्धान्ते । राजस्त्रीगृहे ॥ अवरुध्यतेऽत्र । रुधिर्आवरणे । घञ् ।

अवरोधकः । त्रि । रोधकारके । अवरोधकर्त्तरि । अवरोधयति । अवपूर्वात् रुधेर्ण्वुल् ।

अवरोधनम् । न । राज्ञामन्तःपुरे । अवरुध्यतेऽत्र । रुधिर् आवरणे । ल्युट् । अवरोधकरणे रोकना इति भाषा । यथा । कलहावरोधनमिति ।

अवरोधायनम् । न । अन्तः पुरे ।

अवरोधिकः । पुं । अन्तःपुराध्यक्षे ॥ अवरोधेनियुक्तः । तत्रनियुक्तइतिठक् । संज्ञापूर्वकत्वाद्वृद्ध्यभावः । अवरोधास्यास्तीतिवा । ठन् ।

अवरोपितः । त्रि । उद्वासिते ।

अवरोप्यमाणः । त्रि । अवतार्यमाणे । वृक्षेषु संतानमनर्मविशठः श्वासम् । व-श्चः पोन्यतरस्यामितिपः ।

अवरोहः । पुं । अवतारे । आरोहणे । आरोहे । तरुमूलातप्रभृतिशाखाग्रपर्यन्तं गतायां गुडूच्यादिलतायाम् । लतोद्गमे । अधोगतौ । स्वर्गे । अवरोहतिजन्मनि । वटवीजजन्मनि । पादापश्च ।

अवरोहशाखी । पुं । प्रक्षवृक्षे ।

अवरोहिका । स्त्री । अश्वगन्धालतायाम् ।

अवरोही । पुं । वटद्रुमे ।

अवर्णः । पुं । निन्दायाम् । परिवादे । अवर्ण्यते । वर्ण वर्णने । घञ् । वर्णः प्रशंसा । तद्विरुद्धोऽवर्णः ।

अवलग्नः । पुं । न । देहमध्ये । त्रि । लग्नमात्रे । संलग्ने । लग्यतेस्म । लगेसंगे । क्षुभ्नस्वान्तेतिसाधुः । यद्वा । लज्जतेस्म । ओलस्जी व्रीडने । गत्यर्थेतिक्तः । स्कोरितिसलोपः । ओदितश्चेतिनत्वम् । स्वीदितइतिनेट् । अवकृष्टमवलग्नं वा लग्नम् । प्रादयो गतेतिसमासः ।

अवलम्बः । पुं । आधारे । अवलम्बने ।

अवलम्बनम् । न । आश्रये । यथा । प्रतिकूलतामुपगतेहि विधौ विफलत्वमेतिबहुसाधनता । अवलम्बनायदिनभर्तुरभून्न पतिष्यतः करसहस्रमपीतिमाघे ९ सर्गः । पुं । हृदयस्थकफे ।

अवलम्बितम् । त्रि । अविलम्बिते । आश्रये । संश्रिते । आश्रिते । वस्त्रादिनारुद्धे । अधोलम्बमाने । अवलम्बतेऽस्म । लवि० । क्तोधिकरणे चेतिक्तः ।

अवलिप्तः । त्रि । गर्वेणाविवेकवीने ।

अवलिप्तता । स्त्री । अहङ्कारे ।

अवलिमा । पुं । अबलभावे । देहस्यरोगादिनिमित्ते जरादिनिमित्तेवाकृशीभावे ।

अवलीढः । त्रि । भक्षिते । कृतावलेहे ।

अवलीला । स्त्री । अवज्ञायाम् । अनायासे ।

अवलुण्ठनम् । न । लुण्ठने । लोटनाइतिभाषा ।

अवलेपः । पुं । गर्वे । लेपने । दूषणे । सङ्गे । अवलेपनम् । लिपउपदेहे । घञ् ।

अवलेपनम् । न । प्रक्षणे । विलेपने । मलना । इतिभाषा ।

अवलेहः । पुं । लेह्यौषधे । अवलिह्यते । लिहआस्वादने । तल्लक्षणं पर्यायाश्च

रोऽवरावा वसन्यागतोऽरमणीयंवा । पूर्वाधरावराणां मिथ्यसिस्तस्मिन् योगेनावरस्यावादेशश्च ॥

अवसः । पुं । अर्के । भूपे । अवति । अवरक्षणादै । अत्यविचभ्योऽस्यादिमाऽसच ॥

अवसक्तः । त्रि । लग्ने ।

अवसक्थिका । स्त्री । पर्यङ्कबन्धे । पर्यङ्के ॥

अवसड्डीनम् । न । पक्षिणोऽधःपतने शोभनवन्तायाम् ।

अवसन्नः । त्रि । प्राप्तावसादे । विद्रते । अवासदत् । षद्ऌ० । गत्यर्थेति क्तः ।

अवसन्नता । स्त्री । खेदे । भावे तल् ।

अवसरः । पुं । प्रस्तावे ॥ शिष्यजिज्ञासानिवृत्त्यावश्यवक्तव्यत्वरूपे सङ्गतिविशेषे । अनन्तरवक्तव्यत्वमवसरः । यथोपमानेऽवसरसङ्गतिरितिजगदीशतर्कालङ्कारः । वत्सरे । मन्त्रभेदे । वर्षणे । अवसरणम् । सृगतौ । वाहुलकादप् ॥ अधिकरणेपुंसिसंज्ञायामितिघोवा । योग्यकाले ।

अवसरालयः । पुं । अर्द्धरात्रे ।

अवसर्गः । पुं । निरवग्रहे । स्वतन्त्रे ॥ अवसर्जनम् अवसृज्यतेवा । सृज० । घञ् ॥

अवसर्पः । पुं । चारे ॥ अवसर्पति । सृप्लृ गतौ । पचाद्यच् ॥

अवसर्पिणी । स्त्री । बौद्धकल्पे । समुद्रदशकोटिकोटिसागरवर्षमानसमाप्यते ।

अवसादः । पुं । अवसन्नत्वे । विषादे । अवसदनम् । षद्ऌ० । भावे घञ् ।

अवसादनम् । न । नाशे । शैथिल्यापादने ।

अवसानम् । न । समापने । विरामे । पर्य्यन्ते । सन्धौ । सीमायाम् । षोऽन्तकर्मणि । ल्युट् ॥

अवसायः । पुं । शेषे । समाप्तौ । निश्चये ॥

अवसायकः । पुं । अवसानकरे । स्यते र्य्यन्तात् ण्वुल् ।

अवसितम् । त्रि । ऋद्धे । परिपक्कमर्द्दितधान्ये । ज्ञाते । गतौ । अवसाने । अवसानगते । समाप्ते । सम्बद्धे । षिञ् बन्धने इत्येतस्यावपूर्वस्यनिष्ठायांरूपम् । अवस्यतिस्म अवसीयतेस्मवा । षोऽन्तकर्मणि । क्तः । द्यतिस्यतीतीत्वम् ।

अवसृष्टम् । त्रि । निःसृते ।

अवसेकिमः । पुं । वटके । वक्राऽऽनिरस्यते । इति हेमचन्द्रः ।

अवस्कन्दः । पुं । शिविरे । विजिगीषूणां निवेशस्थाने । अवस्कन्दति । स्कन्दि-

र॰। पचाद्यच्। अवगाहने॥

अवस्कन्दनम्। न। अवतरणे। अवगाहने॥

अवस्करः। पुं। विष्ठायाम्। अपाने। गुह्ये। उपस्थे॥ गोप्ये। अवकीर्यते क्षिप्यते। ह्यविक्षेपे। ऋदोरप्। कस्कादिः। वर्चस्केऽवस्कर इतिवासाधुः॥

अवस्तात्। । अपरे। अवोर्थे। अवरस्मिन् अवरस्याम् अवरस्मात् अवरस्याः अवरो ऽवरावा वसत्यागतोरमणीयंवा। दिक्छब्देभ्य इत्यस्तातिः। विभाषावरस्येतिपक्षेऽवादेशः॥

अवस्तारः। पुं। जवनिकायाम्। कनात इति चिक इति प्रसिद्धायाम्। आस्तरणे॥ अवस्तृणात्यऽनेनास्मिन्वा। स्तञ् आच्छादने। अवेतस्तोर्घञ्॥

अवस्तु। न। अज्ञानादिसकलजडसमुदायस्वरूपे महाप्रपञ्चे। वस्तुनोऽन्यस्मिन्। असद्वस्तुनि॥

अवस्था। स्त्री। दशायाम्। कालकृतविशेषे। कालकृतोधर्मोवपुषोबैाघनादिविशेषस्तस्मिन्॥ यथाहुः। कौमारं पञ्चमाब्दान्तंपौगण्डंदशमावधि। कैशोरमापञ्चदशाद्यौवनंतु ततः परमिति॥ अपिच। आषोडशाद्भवेद्बालस्तरुणस्तत उच्यते। वृद्धस्सप्ततेरूर्ध्वंवर्षीयान्नवतेःपर इति। अवस्थाने॥ अवतिष्ठति। अवपूर्वात् स्थाधातोर्व्यवस्थायामितिप्रापकात् साधुः॥ अवतिष्ठतेऽनयावा। आतश्चोपसर्गइत्यङ्। टाप्॥

अवस्थाचतुष्टयम्। न। वैद्यकमतेकालकृतचतुर्विधदशायाम्। यथा। आपञ्चदशवर्षं बाल्यम्। आर्चिंशद्वर्षं कौमारम्। आपञ्चाशद्वर्षं यौवनम्। पञ्चाशतऊर्ध्वं वृद्धत्वमिति॥

अवस्थानम्। न। स्थितौ। वासे। प्रतिष्ठायाम्। अवपूर्वात्स्थाधातोर्ल्युट्॥

अवस्थितः। त्रि। प्रतिफलिते॥ आसीने। कृतावस्थाने। स्थिते। अवपूर्वः ष्ठागतिनिवृत्तौ। क्तः। द्यतिस्यतीतीत्वम्॥

अवस्थितिः। स्त्री। अवस्थाने॥

अवस्यन्दनम्। न। मान्द्ये॥

अवस्रंसनम्। न। अधःपतने॥

अवस्रंसितः। त्रि। लम्बिते॥

अवहः। पुं। वायोस्तृतीयेस्कन्धे॥ यथा। ततःसप्तोभुवोधर्त्ताविधर्त्ताच विधारणः। वरुणश्चतृतीयोयमाच स्राद्दवहोगणः ३ इति॥

अवहननम्। न। अवघाते॥

अवहस्तः। पुं। हस्तपृष्ठे॥

अवहारः। पुं। चौरे॥ द्यूतयुद्धादिवि-

सुश्रुतेतु । "कण्टकारी सरा तिक्ता कटुकादीपनी लघुः । रूक्षोष्णापाचनीकासश्वासज्वरकफानिलान् ॥ निहन्ति पीनसं पार्श्वपीडाकृमिहृद्रामयान्। तयोःफलं कटुरसं पाकेच कटुकं भवेत् ॥ शुक्रस्यरेचनं भेदि तिक्त पित्ताग्निकृल्लघु । हन्यात् कफमरुत्कण्डूकासमेदकृमिज्वरान् ॥ कण्टकारीकृतः क्वाथः सकृष्णः सर्वकासहा ॥ तद्वत् प्रोक्तासिता क्षुद्राविशेषाद्गर्भकारिणी ॥ शाल्मल्याम् ॥ कण्टकान् ऋच्छति । ऋगतौ । कर्मण्यण् । ङीप् ॥

कण्टकारीफलम् । न । कण्टकार्याः फले ॥ कण्टकारीफलं तिक्तं कटुकं दीपनं लघु । रूक्षोष्णांश्वासकासघ्नं ज्वरानिलकफापहम् ॥ शाकप्रकारस्तु । तोयाम्लस्विन्नवृहतीफलं मार्द्रकञ्च दण्डाहतं चिरविपाचितमाज्यकेन । चूर्णेन सैन्धवभवेन विमिश्रितञ्च वह्निं प्रबोधयति कासनिषारयतीति ॥

कण्टकालुकः । पुं । यवासे । यासे ॥

कण्टकाशनः । पुं । उष्ट्रे ॥ कण्टकानि अशनं यस्य ॥

कण्टकाष्ठीलः । पुं । मत्स्यविशेषे । कुलिशे ॥

कण्टकिमः । त्रि । पुलकिते ॥

कण्टकी । पुं । मत्स्ये ॥ खदिरवृक्षे ॥ विकङ्कते । मदनवृक्षे ॥ गोक्षुरे ॥ वंशे ॥ वदरवृक्षे ॥ कण्टकाः सन्त्यस्मिन् । इनिः ॥

कण्टकिनी । स्त्री । वार्त्ताक्याम् ॥ श्रोणाभिरण्ट्याम् ॥ मधुखर्जूर्याम् ॥

कण्टकिफलः । पुं । कटहल इतिप्रसिद्धे वृक्षविशेषे । पनसे ॥ कण्टकाःसन्त्यस्य । अत इनिठनाविती इनिः। कण्टकि फलमस्य ॥ समष्ठिलावृक्षे ॥

कण्टकिलः । पुं । वेडुवाँश इति गौडभाषाप्रसिद्धे वंशविशेषे ॥

कण्टकिलता । स्त्री । त्रपुष्याम् । खीरा इति भाषा । कण्टकिनी चासौ लताच ॥

कण्टकी । स्त्री । वार्त्ताकीविशेषे । कांटीवावैंगन इति भाषा ॥

कण्टकुरण्टः । पुं । झिण्ट्याम् ॥

कण्टतनुः । स्त्री । बृहत्याम् ॥

कण्टदला । स्त्री । केतक्याम् ॥

कण्टपत्रः । पुं । विकङ्कतवृक्षे ॥

कण्टपत्रफला । स्त्री । ब्रह्मदण्ड्याम् ॥

कण्टपादः । पुं । विकङ्कतवृक्षे ॥

कण्टफलः । पुं । क्षुद्रगोक्षुरे ॥ पनसे ॥ धुस्तूरे ॥ लताकरञ्जे ॥

कण्टफला । स्त्री । देवदालीलतायाम् ॥

कण्टलः । पुं । बाबले । बबूलइति भाषा ॥ इतिशब्दचन्द्रिका ॥

कण्टवल्ली । स्त्री । श्रीवल्लीवृक्षे ॥

कण्टवृक्षः । पुं । तेजःफलवृक्षे ॥

कण्टाफलः । पुं । कण्टकिफले । कटहल इति भाषा ॥ विशेषात् पनसं वर्ज्यं गुल्मिभिर्मन्दवह्निभिः ॥

कण्टाऽगला । स्त्री । नीलझिण्ट्याम् ॥

कण्टालुः । पुं । वंशे ॥ वृहत्याम् ॥ वार्त्ताक्याम् ॥ वर्बूरे ॥

कण्ठाह्वयम् । न । पद्मकन्दे ॥

कण्ठी । पुं । कलाये ॥ अपामार्गे ॥ खदिरे ॥ गोक्षुरे ॥

कण्ठः । पुं । मदनद्रुमे ॥ होमकुण्डाद्बहिरङ्गुलिपरिमितेस्थाने ॥ यथा । खाता द्वाह्योऽङ्गुलः कण्ठः सर्वकुण्डेष्वयंविधिरिति ॥ त्रि । गले । ग्रीवाग्रभागे ॥ अत्र विशुद्धनामषोडशदलपद्ममस्ति ॥ सन्निधाने । निकटे ॥ ध्वनौ ॥ कणति । कणशब्दे कणः ठः ॥ यद्वा । कण्ठते । कठिशोके । अच् ॥

कण्ठकूणिका । स्त्री । वीणायाम् ॥

कण्ठतलासिका । स्त्री । अश्वग्रीवावेष्टकरज्जुचर्म्मादौ ॥ इति शब्दमाला ॥

कण्ठनीडकः । पुं । चिल्लपक्षिणि । चील इति भाषा ॥ इतित्रिकाण्डशेषः ॥

कण्ठनीलकः । पुं । उल्कायाम् । मसाल इतिभाषा ॥ इतिशब्दमाला ॥

कण्ठपाशकः । पुं । हस्तिकण्ठवेष्टकरज्जौ ॥

कण्ठभूषा । स्त्री । ग्रैवेयके । कण्ठी गोपसकरी इतिचभाषा ॥ भूष्यतेऽनया । भूष अलङ्कारे । गुरोश्चेत्यः । कण्ठस्यभूषा ॥

कण्ठमणिः । पुं । ग्रैवेयकमणौ । काकले ॥ कण्ठस्य मणिः ॥

कण्ठशुद्धिः । स्त्री । गलस्य कफाद्यलिप्तत्वे ॥

कण्ठसूत्रम् । न । स्तनालिङ्गने ॥ यथा । यत् कुर्वते वक्षसि वल्लभस्य स्तनाभिघातं निविडोपगूह्य । परिश्रमार्थं शनकैर्विदग्धास्तत्कण्ठसूत्रं प्रवदन्ति सन्त इति ॥

कण्ठाग्निः । पुं । पक्षिणि ॥ कण्ठे अग्निरस्य ॥ इति त्रिकाण्डशेषः ॥

कण्ठालः । पुं । शूरणे ॥ युद्धे ॥ गोणीप्रभेदे । खुर्जी इतिभाषा ॥ क्रमेलके ॥ नौकायाःखनित्रे ॥

कण्ठाला । स्त्री । जालगोणिकायाम् ॥

कण्ठिका । स्त्री । कण्ठाभरणे । एकलडीकण्ठी इति भाषा ॥ इतिहेमचन्द्रः ॥

कण्ठी । स्त्री । गले ॥ अश्वकण्ठवेष्टनर

ज्जुचर्म्मादौ ॥

कण्ठीरवः । पुं । सिंहे ॥ मत्तमातङ्गे ॥ पारावते ॥

कण्ठीरवी । स्त्री । वासकवृक्षे ॥

कण्ठेकालः । पुं । महादेवे ॥ कण्ठेकालोऽस्य । हलदन्तादित्यलुक् ॥

कण्ठ्यः । त्रि । कण्ठभवे शब्दादौ ॥ कण्ठहिते ॥ उभयत्र शरीरावयवत्वात् यत् ॥

कण्डनम् । न । निस्तुषीकृतौ । उदूखलादिना तण्डुलादेर्निर्मलीकरणे । कुटना इतिभाषा ॥

कण्डनी । स्त्री । उलूखले ॥ मुषले ॥

कण्डरा । स्त्री । महास्नायौ । महानाडयाम् ॥

कण्डिका । स्त्री । वेदैकदेशे ॥

कण्डुः । स्त्री । कण्डूयायाम् । गात्रविघर्षणे ॥ कण्डते । कडिमदे । मृगय्वादित्वात् कुप्रत्ययः ॥

कण्डुरः । पुं । कारवेल्ललतायाम् ॥ कुन्दरवृक्षे ॥

कण्डुरा । स्त्री । आत्मगुप्तायाम् । शूकशिम्ब्याम् ॥ अस्यास्त पर्यायाः ॥ कण्डूं राति । रादाने । आतोऽनुपसर्गे कः । पृषोदरादित्वात् ह्रस्वः ॥

कण्डूः । स्त्री । खाज इतिप्रसिद्धे रोगे । खर्ज्वाम् । कण्डूयायाम् ॥ कण्डूय



नम् । कण्डूञ् गात्रविघर्षणे । सम्पदादित्वात् क्विप् ॥

कण्डूकरी । स्त्री । शूकशिम्ब्याम् ॥

कण्डूघ्नः । पुं । आरग्वधे ॥ गौरसर्षपे ॥

कण्डूतिः । स्त्री । कण्डूयाम् । खाज इति भाषा ॥ कण्डूयतेः क्तिन् ॥

कण्डूयनम् । न । कण्डूयाम् ॥

कण्डूयमानः । त्रि । कण्डूयितरि । कण्डूयमाने ॥

कण्डूया । स्त्री । कण्डूयने । खर्ज्वाम् ॥ कण्डूयनम् । कण्डूञ्० । कण्ड्वादिभ्यो यक् । अप्रत्ययात् ॥

कण्डूयिता । त्रि । कण्डूयमाने ॥

कण्डूरा । स्त्री । प्रावृषायण्याम् । मर्कट्याम् ॥ कण्डूं राति । रा० । आत इति कः ॥

कण्डूलः । पुं । शूरणे ॥ त्रि । कण्डूयुक्ते ॥

कण्डोलः । पुं । उष्ट्रे ॥ गोणीप्रभेदे ॥ पिटे । वंशादिनिर्मिते धान्यादिस्थापनभाण्डे ॥ कण्डते । कडिमदे । बाहुलकादोलच् ॥ यद्वा । कपिगण्डिगण्डीतिसूत्रे कण्डेः पाठादोलच् ॥

कण्डोलकः । पुं । कण्डोले ॥

कण्डोलवीणा । स्त्री । कोंदरा इति

गौडभाषा प्रसिद्धे वाद्ययन्त्रे। चण्डा लवल्लक्याम्। किङ्करीति प्रसिद्धे वाद्ये॥ कण्डते। कडि०। बाहुलका दोलच्। कण्डोलस्य वीणा॥

कण्डोली। स्त्री। कण्डोलवीणायाम्॥

कण्डूघः। पुं। शूककीटे। शूयापोका इतिगौड भाषा॥

कण्वः। पुं। मुनिविशेषे॥ पुरुवंशजाताप्रतिरथनामचत्रियपुत्रे॥यथा।सुमतिर्ध्रुवोऽप्रतिरथः कण्वोऽप्रतिरथात्मजः। तस्य मेधातिथिस्तस्मात् प्रस्कण्वाद्याद्विजातयः। इतिश्रीभागवतम्॥ न। पापे॥ कणनम्। कणशब्दे। उल्वादयश्चेतिसाधुः॥ कणति। अशूप्रुषिलटिकणीत्यादिनाक्वन्वा॥

कतः। पुं। मुनिविशेषे॥ कतकवृक्षे॥

कतकः। पुं। तिक्तफले। पयःप्रसादिनि। निर्मली इतिभाषा॥ कतकस्य फलं नेत्र्यं जलनिर्मलकारकम्। वातश्लेष्महरं शीतं मधुरं तवरं गुरु॥

कतफलः। पुं। कतकवृक्षे॥

कतमः। पुं। बहूनां जातिपरिप्रश्ने॥ किमो डतमच्॥

कतमालः। पुं। वह्नौ॥

कति। त्रि। कियति। सङ्ख्यापरिमाणप्रश्ने॥ का सङ्ख्यापरिमाणमेषाम्। किमः सङ्ख्यापरिमाणे डतिचेति डतिः। नित्यंबहुवचनान्तोयम्॥

कतिथः। त्रि। कतीनां पूरणे॥ षट्कतिकतिपयचतुरांथुगिति डटिथुगागमः॥

कतिपयः। त्रि। कतिशब्दार्थे। कितनेक इतिभाषा॥

कतिपयथः। त्रि। कतिपयानां पूरणे। षट्कतीत्यादिना कतिपयस्याऽसङ्ख्यात्वेपि अतएवज्ञापकाड्डट् तस्मिन् थुगागमः॥

कतृणम्। न। रामकर्पूर इतिगौडभाषाप्रसिद्धे सुगन्धितृणविशेषे। पौरे। सौगन्धिके। रौहिषे॥ अस्यगुणाः। कटुत्वम् तिक्तत्वम् कफशस्त्रशल्यादिदोषवालग्रहविनाशित्वमिति राजनिर्घण्टः॥ चाकुलिया इति गौडभाषाप्रसिद्धे पृश्नौ॥ पृश्निकायाम्। कुम्भिकायाम्॥ कुत्सितं तृणम्। तृणेच जाताविति कोः कत्॥

कत्तोयम्। न। मद्ये। मैरेये॥

कत्थनम्। न। श्लाघायाम्॥ कत्थ०। ल्युट्॥

कत्सवरम्। न। स्कन्धे

कथकः। त्रि। कथोपजीविनि॥ एकनटे। नाटकवर्णनकर्त्तरि॥ वक्तरि॥ यथा। वाग्युक्तसाध्यनियमच्युतो

पिकथके कंदाधिरुक्काथ्य इतिचिन्ता मणिः ॥ कथयति । कथवाक्यप्रबन्धे । बहुलमन्यत्रापीति कुन् ॥

कथङ्कथिकः । त्रि । प्रश्नकर्त्तरि । प्रष्टरि ॥

कथङ्कथिकता । स्त्री । पृच्छायाम् ॥ इति हेमचन्द्रः ॥

कथङ्कारम् । अ । केन प्रकारेण कृत्वेत्यर्थे । कथमित्यर्थे ॥ अनर्थकादेव करोतेः कथम्पूर्वाण्णमुल् ॥

कथञ्चन । अ । केनाप्यंशेनेत्यर्थे ॥

कथञ्चित् । अ । अतिप्रयत्नेनेत्यर्थे ॥

कथनम् । न । कथायाम् । कहना इति भाषा ॥ इतिहलायुधः ॥

कथम् । अ । हर्षे ॥ गर्हायाम् ॥ प्रकारार्थे ॥ सम्भ्रमे ॥ प्रश्ने ॥ सम्भावनायाम् ॥ केन प्रकारेण । किमश्चेति थमुः ॥

कथमपि । अ । यत्नगौरवे ॥ वाढमित्यर्थे ॥ कथमादितथाप्यन्तं यत्नगौरवभेदयोः ॥

कथम्भूतः । त्रि । किम्प्रकारे ॥ कं प्रकारं किंवा प्रकार मापन्नः । द्वितीयान्तादपिथमुः ॥

कथा । स्त्री । प्रबन्धकल्पनायाम् ॥ प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां विदुः । परस्पराश्रया या स्यात् सा माख्यायिका क्वचिदिति कोलाहलाचार्यः ॥ पक्षप्रतिपक्षोपन्यासेन विचारणायाम् ॥ नैयायिकमते हि नानावक्तृकपूर्वपक्षसिद्धान्तवान् वाक्यसन्दर्भः कथा । तद्भेदास्त्रयः । वादो जल्पो वितण्डा चेति ॥ कथा कादम्बर्यादिस्वरूपा सैव गद्यपद्यमयी चम्पूरिति ग्रन्थान्तरे ॥ कथयति । कथवाक्यप्रबन्धे । चितिपूजिकथिकुम्बिचर्चश्चेत्यङ् । टाप् ॥

कथाप्रसङ्गः । त्रि । वातूले ॥ वार्त्तायाम् । गोष्ठीवचने ॥ विषवैद्ये ॥

कथाप्राणः । त्रि । कथके । कथोपजीविनि । नाटकवक्तरि ॥ कथायां प्राणाः यस्य ॥

कथितः । त्रि । उक्ते । कहा इतिभाषा ॥ कथ० । क्तः ॥

कदः । पुं । मेघे ॥ कं जलं ददाति । डुदाञ् । कः ॥

कदकः । पुं । उल्लोचे । विताने ॥

कदध्वा । पुं । कापथे । निन्द्यमार्गे ॥ कुत्सितोऽध्वा । कुगतीतिसमासः । कोः कत् तत् पुरुषेऽचीति कदादेशः ॥

कदनम् । न । मर्हे । युद्धे ॥ पापे ॥ बाधायाम् ॥ मारणे ॥

कदन्नम् । न । कुत्सितान्ने ॥

कदम्बः । पुं । नीपे । प्रियके ॥ कदम्बो मधुरः शीतः कषायो लवणो गुरुः । सरो विष्टम्भकृद्रूक्षः कफस्तन्यानिलप्रदः ॥ अन्यसाञ्च । नीपो महाकदम्बःस्याद्धाराकदम्बइत्यपि । द्वितीयोऽल्पप्रसरश्च हस्तपुष्पः कदम्बकद्रूपस्तद्भेदः । तथाऽन्योऽपि । हारिद्रस्तुरसीवलः । धूलीकदम्बको धाराकदम्बः षट्पदप्रियः ॥ हस्तपुष्पः केशराढ्यः प्रावृषेण्यः कदम्बकः । नीपोमहा कदम्बोपि तथा बहुफलो मतः ।इत्यमरटीकायां भरतः॥ सर्षपे ॥ देवताडकतृणे ॥ न । निकुरम्बे । सङ्घे । समूहे ॥ कदति ।कदः सौत्रोधातुः । कृकदिकडिकटिभ्योम्बच् ॥

कदम्बकः । पुं । हरिद्रौ ॥ कदम्बार्थेषु ॥ स्वार्थेकन् ॥ यद्वा । कदति कन्दयतिवा । कदर्हिंसायाम् । कदिआह्वाने रोदने च । कृकदीत्यम्बच् । अनित्यत्वान्नुम् । स्वार्थेकः ॥ न । निकुरम्बे । समूहे ॥

कदम्बगोलकन्यायः । पुं । कदम्बगोलकस्य सर्वावयवेषु युगपदेव पुष्पाणामुत्पत्तिरूपे दृष्टान्तविशेषे ॥

कदम्बपुष्पा । स्त्री । मुण्डितिकायाम् । मुण्डी इतिभाषा ॥

कदम्बपुष्पी । स्त्री । महाश्रावणिकायाम् । मुण्डीर्याम् ॥

कदम्बी । स्त्री देवदाल्याम्॥

कदरः । पुं । सोमवल्के श्वेतखदिरे ॥ कदरो विशदो वर्ण्यो मुखरोगकफास्रजित ॥ क्रकचे । करपत्रे । करवत करौत आरा इतिच भाषा ॥ कडाजामुडा इति गौडभाषाप्रसिद्धे व्याधिभेदे ॥ तल्लक्षणम् । शर्करोन्मथिते पादे क्षते वा कण्टकादितः । ग्रन्थिः कोलवदुत्सन्नो जायते कदरस्तु सइति ॥ अङ्कुशे ॥ दृणाति । दृविदारणे । पचाद्यच् । कस्यजलस्य दरः ॥

कदर्थितः । त्रि । विडम्बिते । दूषिते॥ कुत्सितोर्थः कदर्थः । कोःकत् । कदर्थः कृतः कदर्थितः ॥

कदर्य्यः । त्रि । क्षुद्रे । कृपणे । सतिविभवे अदातरि ॥ यथा । आत्मानं धर्मकृत्यञ्च पुत्रदारांश्च पीडयन् । यो लोभात सञ्चिनोत्यर्थान् सकदर्य इतिस्मृतः ॥ कुत्सितो ऽर्यः स्वामी ॥ कुगतीतिसमासः । कोः कत् तत्पुरुषे ॥

कदलः । पुं । रम्भावृक्षे ॥ पृश्नीलतायाम् ॥ कन्दते कन्द्यते वा । कदिआह्वानेरोदनेच । वृषादित्वात् कलच्

कदलक: । पुं । कदलार्थे ॥ स्वार्थेक: ॥

कदला । स्त्री । पृश्निपर्णाम् ॥ डिम्बिकायाम् ॥ शाल्मलीवृक्षे ॥ अजादेराकृतिगणत्वाट्टाप् ॥

कदली । स्त्री । वारणबुसायाम् । रम्भायाम् ॥ यथा । माणिक्यमर्त्त्यामृतचम्पकाद्या भेदा: कदल्या बहवोऽपि सन्ति । उक्तागुणास्ते ष्वधिकाभवन्ति निर्दोषता स्याल्लघुताचतेषाम् ॥ गुणान् पश्य मोचाफले ॥ पताकायाम् ॥ करिवैजयन्त्याम् ॥ मृगविशेषे ॥ के दलति । दलविशरणे । अच् । ङीष् ॥ कन्दते कन्द्यते वा कदिश्चा० । इ षादित्वात् साधु: । गौरादि: ॥

कदलीकन्द: । पुं । रम्भामूले । केराकन्द केलाकन्द इतिच भाषा ॥ शीतल: कदलीकन्दो बल्य: केश्योऽम्लपित्तजित् । वह्निकृद्दाहहारीच मधुरो रुचिकारक: ॥ कन्द: कदल्या दलितो नितान्तं संस्वेदितो हिङ्गुघृतेन राढ़: । उद्धूलित: सैन्धवरेणुनाथ मरीचसम्पर्कितएवरुच्य: ॥

कदलीकुसुमम् । न । रम्भापुष्पे ॥ कदल्या: कुसुमं स्निग्धं मधुरं तुवरंगुरु । वातपित्तहरं शीतं रक्तपित्तक्षयप्रणुत् ॥

कदलीदण्ड: । पुं । थोड इति गौडभाषाप्रसिद्धेमोचामध्यस्थदण्डे ॥ कृत्त: स्विन्न: सलिलविधृत: कृत्ततन्तु: प्रभिन्न: कम्बुभृत्याजलविरचित: क्षारजम्बीरपुष्टा: । मध्ये मध्ये तनुशकलितेनार्द्रकेणातिपूर्ण: स्वादुस्तूर्णं भवतिमुतरांगर्भदण्ड: कदल्या: ॥ योनिदोषहरोदण्ड: कादल्योऽसृकदरंजयेत् । रक्तपित्तहर: शीत: सुरुच्योऽग्निप्रवर्द्धन: ॥

कदा । अ । कस्मिन् काले । कब इति भाषा ॥ सर्वैकान्यकिंयत्तद: काले-दा ॥

कदाकार: । त्रि । कुत्सितावयवे ॥ कुत्सित: आकारोऽस्य । को: कदादेश: ॥

कदाख्यम् । न । कुष्ठौषधौ ॥ त्रि । कुत्सितनामनि ॥ कुत्सिता आख्यायस्य । को: कत् तत्पुरुषेचीतिकदादेश: ॥

कदाचन । अ । कस्मिनकाले । किसी समयमे इतिभाषा ॥

कदाचार: । त्रि । कुव्यवहारे ॥ कुत्सित: आचारोयस्य । को: कत् आदेश: ॥

कदाचित् । अ । जातु । कस्मिंश्चित्काले प्रस्तावे ॥ कदाच चिद्भ्यमयो:समाहार: ॥

कदुष्णम् । न । कोष्णे ॥ ईषदुष्णम् । कवञ्चोष्णे इतिपक्षे कदादेशः ॥ त्रि । तद्वति ॥

कद्रथः । पुं । कुत्सितरथे ॥

कद्रुः । पुं । पिङ्गलवर्णे ॥ त्रि । तद्वति । स्वर्णपिङ्गे ॥ कन्दति । कदि आह्वाने । मृगय्वादित्वात् साधुः ॥

कद्रुपुत्रः । पुं । नागे ॥ कद्र्वाःपुत्रः ॥

कद्रूः । स्त्री । नागमातरि ॥ संज्ञायामित्यूङ् ॥

कद्वदः । त्रि । गर्ह्यवादिनि । दुर्वाचि ॥ कुत्सितंवदति । वदेः पचाद्यच् । रथवदयोश्चेति कोः कत् ॥ कुत्सितस्य वदोवा ॥

कनकम् । न । स्वर्णे । हेम्नि ॥ पुं । किंशुकवृक्षे ॥ नागकेशरवृक्षे ॥ कृष्णधत्तूरे ॥ धूस्तूरे ॥ काञ्चनालवृक्षे ॥ कालीये । कृष्णचन्दने ॥ चम्पकवृक्षे ॥ कासमर्दवृक्षे ॥ कणगुग्गुलुवृक्षे ॥ लघ्वक्ष्ये । ॥ कनति । कनीदीप्तौ । कृञादिभ्योवुन् ॥ स्वाक्षाद्रुमे ॥

कनकक्षारः । पुं । टङ्कणे सुहागा इति भाषा ॥

कनकदण्डः । पुं । राजछत्रे । राजच्छत्रे ॥ कनकस्यदण्डोऽस्मिन् ॥

कनकदण्डकम् । न । राजछत्रे । राजच्छत्रे ॥ स्वार्थेकन् ॥

कनकपलः । पुं । सुवर्णादिपरिमाणक षोडशमाषके । पलपरिमाणे । कुवविल्वे ॥ इतिहारावली ॥

कनकप्रभा । स्त्री । महाज्योतिष्मत्याम् ॥

कनकप्रसवा । स्त्री । स्वर्णकेतक्याम् ॥

कनकरम्भा । स्त्री । सुवर्णकदल्याम् ॥

कनकरसः । पुं । हरिताले ॥

कनकलोद्भवः । पुं । राले ॥

कनकाचलः । पुं । सुमेरुपर्वते ॥ दानविशेषे ॥ कनकमयःअचलः ॥

कनकाध्यक्षः । पुं । भैरिके । सुवर्णाधिकृते ॥ कनकस्य अध्यक्षः ॥

कनकारकः । पुं । कोविदारवृक्षे ॥

कनकालुका । स्त्री । भृङ्गारे । सौवर्णकलशे ॥ कनकस्य आलुः । संज्ञायां कन् ॥

कनकाह्वम् । न । नागकेशरपुष्पे ॥

कनकाह्वयः । पुं । धत्तूरे ॥ कनकमाह्वयोऽस्य । भक्तोऽस्मिन् कनकवर्णपृष्पोद्दर्शनात् ॥ नागकेशरे ॥

कनखलः । पुं । उग्रादेव्याःस्थाने तीर्थविशेषे ॥ उग्राकनखलेस्मृते तिपुराणम् ॥

कननः । त्रि । काणे । एकदृशि ॥ इति हेमचन्द्रः ॥

कनिक्या । स्त्री । समितायाम् ॥

कनिष्ठः । त्रि । अतियूनि ॥ अत्यल्पे ॥

जघन्यजे । अनुजे । पश्चाज्जाते ॥ अयमेषा मतिशये युवा अल्पो वा । अजादीगुणवचनादेवेति तीष्ठ-न् । युवाल्पयोःकनन्यतरस्यामिति कनादेशः ॥

कनिष्ठकम् । न । तृकतृणे ॥

कनिष्ठा । स्त्री । दुर्बलाङ्गुल्याम् ॥ पश्चाज्जातायाम् । अनुजायाम् ॥ कनिष्ठस्य भार्यायाम् ॥ कनिष्ठस्य स्त्री । पुंयोगलक्षणं ङीषं बाधित्वा अजादित्वा टाप् ॥ नायिकाभेदे ॥

कनी । स्त्री । दुहितरि । कन्यायाम् ॥

कनीनिका । स्त्री । अक्ष्णस्तारके ॥ कनिष्ठाङ्गुल्याम् ॥ कनति । कनीदीप्तौ । बाहुलकादीनः । स्वार्थेकन् । टाप् । ह्रस्वम् ॥

कनीयान् । त्रि । कनिष्ठार्थे ॥ अयमनयोरतिशयेन युवा अल्पोवा । द्विवचनविभज्योपपदेतरबीयसुनौ ।अजादीगुणवचनादेवेति ईयसुन् । युवाल्पयोरितिकनादेशः ॥

कनीयसम् । न । ताम्रे ॥

कन्तुः । त्रि । सुखविशिष्टे । सुखिनि ॥ कं सुखम् अस्ति अस्य ॥ कं शंभ्यां बभयुस्तितुतयसः इति तुः ॥ कामदेवे ॥ कुसूले ॥ कामयते । कमु कान्तौ । अर्जिदृशिकम्यमीतिकुः प्रत्ययोधातोस्तुणागमस्य ॥ कमिमनीतितुर्वा ॥ हृदये ॥



कन्था । स्त्री । मन्मथभित्तौ । काँध इतिभाषा ॥ प्रावरणान्तरे । स्यूतजीर्णपटनिर्मिताच्छादनवस्त्रे । कथरी गुदरी इतिच भाषा ॥ यथा । भिक्षा प्राणस्य रक्षार्थं कन्था शीतनिवारणी । अचला केशवे भक्तिर्विभवैःकिम्प्रयोजनमिति ॥ कम्यते । कमु० । बाहुलकात् थन् । टाप् ॥

कन्थारी । स्त्री । कन्थरी दुर्द्धर्षातीक्ष्णकण्टका तीक्ष्णगन्धा दुष्प्रवेशा इत्यादिपर्यायवति वृक्षे ॥

कन्दः । पुं । न । सूरणे ॥ ग्राम्य कन्दस्तु दोषलः ॥ सस्यमूले ॥ सलगम इति प्रसिद्धे मूलविशेषे । गृञ्जने ॥ पुं । मेघे ॥ योनिरोगविशेषे । तस्यनिदानलक्षणे यथा । दिवास्वापादतिक्रोधा द्व्यायामा दतिमैथुनात् । क्षताच्च नखदन्ताद्यैर्वाताद्याः कुपिता यदा । पूयशोणितसङ्काशं लकुचाकृतिसन्निभम् । उत्पाद्यते यदा योनौ नाम्ना कन्दस्तु योनिजः इति ॥ सचतुर्विधः । लक्षणभेदात् । यथा । रूक्षंविवर्णं स्फुटितं वातिकं तंविनिर्दिशेत् । दाहरागज्वरयुतं विद्यात पित्तात्मकन्तु तम् ॥ नीलपुष्पप्र

सीकाशं कण्डूमन्तं कफात्मकम् । सर्वैर्लिङ्गसमायुक्तं सन्निपातात्मकं विदुः ॥ सन्निपातात्मकोऽसाध्यः शेषाः कृच्छ्रप्रसाधनाः इति ॥ कन्दति कन्दयति कन्द्यते वा । कदि आह्वाने रोदने च । अच् घञ् वा ॥

कन्दगुडूची । स्त्री । गुडूचीविशेषे । कन्दामृतायाम् । पिण्डालुनि । सुयनी इति काश्यादिदेशप्रसिद्धे कन्दे ॥

कन्दटम् । न । शुक्लोत्पले । कोंभी-इति भाषा ॥

कन्दफला । स्त्री । क्षुद्रकारवेल्याम् ॥

कन्दमूलम् । न । मूलके ॥

कन्दरः । पुं । अङ्कुशे ॥ पुं । स्त्री । गुहायाम् ॥ न । आर्द्रके । शृङ्गवेरे ॥ केन जलेन दीर्यते । दृविदारणे । अप्देरप् ॥

कन्दरा । स्त्री । दर्याम् । कृत्रिमाकृत्रिमे गुहाकारे गिरिविवरे ॥ कन्दर । टाप् ॥

कन्दराकरः । पुं । शिलोच्चये । पर्वते ॥ कन्दराणामाकरः ॥

कन्दरालः । पुं । गर्दभाण्डवृक्षे ॥ कन्दरां लाति । ला आदाने । आत इति कः ॥ प्लक्षद्रुमे ॥ कपराले । आखोटवृक्षे ॥ कन्दरा मलाति । अलभूषणादौ । कर्मण्यण् ॥ कन्दराऽस्यास्ति मा । सिध्मादित्वाल्लच् ॥

कन्दरालकः । पुं । कन्दराले ॥

कन्दरी । स्त्री । गुहायाम् ॥

कन्दरोद्भवा । स्त्री । क्षुद्रपाषाणभेदिनि वृक्षे ॥

कन्दर्पः । पुं । कामदेवे ॥ पुत्रोत्पत्त्यर्थो यः कामानां मध्ये कामः सच भगवतो विभूतिः ॥ कमित्यव्ययं कुत्सायाम् । कुत्सितो दर्पोऽस्य अस्माद्वा ॥ यद्वा । कं सुखं तत्र तेन वा दृप्यति । दृप हर्षमोहनयोः । पचाद्यच् ॥ अथवा । के ब्रह्मणि दृप्तवान् कं ब्रह्माणं दर्पितवान् वा । पृषोदरादिः ॥ ध्रुवकप्रभेदे ॥ यथा । एषो विंशतिवर्णाङ्घ्रिर्भवेः कन्दर्पसंज्ञकः । वीरे वा करुणे वा स्यात् खण्डताले विधीयते इति सङ्गीतदामोदरः ॥

कन्दर्पकूपः । पुं । भगे । योनौ ॥

कन्दर्पजीवः । पुं । कामवृद्धिनामवृक्षे ॥

कन्दर्पमुषलः । पुं । मेढ्रे । शिश्ने ॥ इति त्रिकाण्डशेषः ॥

कन्दर्पशृङ्खलः । पुं । शृङ्गारबन्धविशेषे ॥ तल्लक्षणम् । नारी पादद्वयं स्थाप्य कान्तस्योरुद्वयोपरि । कटिञ्चालयेद्यत्र बन्धः कन्दर्पशृङ्खलः इति ॥

कन्दलम् । न । कलापे ॥ उपरागे ॥ नवाङ्कुरे ॥ करध्वनौ ॥ अपवादे ॥ पुं ।

कनके ॥ युद्धे ॥ कपाले ॥ भूमिकन्दल्याः पुष्पे ॥

कन्दलता ।.स्त्री । मालाकन्दे ॥

कन्दली । स्त्री । मृगविशेषे ॥ गुल्मप्रभेदे ॥ पताकायाम् ॥ पद्मबीजे ॥ कन्देस्यमूले लीयते । लीङ् श्लेषणे । अन्येष्वपीतिडः ॥ यद्वा । कन्दते । कदि° । इषा°कलच् । गौ°ङीष् ॥ भूमिकन्दल्याम् ॥

कन्दलीकुसुमम् । न । शिलीन्ध्रे ॥

कन्दवर्द्धनः । पुं । शूरणे ॥

कन्दवल्ली । स्त्री । वन्ध्याकर्कोटक्याम् ॥

कन्दबहुला । स्त्री । त्रिपर्णिकायाम् ॥

कन्दशूरणः । पुं । श्वेतोल्ले । शूरणे ॥

कन्दसंभवम् । न । योन्यर्शसि । योनिरक्तरोगविशेषे ॥ तस्यनिदानादि कन्दे द्रष्टव्यम् ॥

कन्दसारम् । न । नन्दनवने ॥

कन्दाढ्यः । पुं । धरणीकन्दे ॥

कन्दार्हः । पुं ।·शूरणे ॥

कन्दालुः । पुं । कासालौ ॥धरणीकन्दे ॥ त्रिपर्णिकायाम् ॥

कन्दी । पुं । शूरणे ॥

कन्दिरी । स्त्री । लज्जालुवृक्षे ॥

कन्दुः । पुं । स्त्री । कड़ाही इति भाषाप्रसिद्धे भर्ज्जनपात्रे । स्वेदन्याम् ॥ स्कन्दति । स्कन्दिर् गतिशोषणयोः । स्कन्देः सलोपश्चेत्युः ॥

कन्दुकः । पुं । गेन्दुके । गेंद इति भाषा ॥ कन्द्यते । कदि° । बाहुलकादुः । कंसुखं ददाति दयते द्यति यच्छति वा मितद्रुः । स्वार्थेकन् ॥ कंशिरो दुनोति दवति वा । टुदु उपतापे दुगतौ वा । प्राग्वत् ॥

कन्दुपक्वम् । न । जलोपसेकं विना कें वलपात्रे यदग्निनापक्वं भृष्टतण्डुलादि तस्मिन् ॥ यथा । कन्दुपक्वानि तैलेन पायसं दधिसक्तवः । द्विजैरेतानि भोज्यानि शूद्रगेहकृतान्यपीति तिथ्यादितत्त्वे कूर्मपुराणम् ॥

कन्दोटः । पुं । शुक्लोत्पले ॥ न । नीलोत्पले ॥

कन्दोतः । पुं । कुमुदे । निशाह्वसे ॥

कन्धः । पुं । मेघे । वारिदे ॥

कन्धरः । पुं । वारिवाहे ॥ मारिषवृक्षे । कम् जलस्य धरः ॥

कन्धरा । स्त्री । ग्रीवायाम् ॥ कंशिरो धारयति । संज्ञायां भृतॄवृजीति खच् । खचिह्रस्वः ॥ यद्वा । धरति । धृञ्° । पचाद्यच् । कंशिरसोधरा ॥

कन्धिः । स्त्री । ग्रीवायाम् ॥ पुं । समुद्रे ॥

कन्नम् ॥ न । पातके ॥ मूर्च्छायाम् ॥

कन्यका । स्त्री । दशवर्षीयाङ्कुमार्यां

म॥ अज्ञाता कन्या। अज्ञातादौ कः। क्षिपकादित्वान्नेत्वम्॥.

कन्यकाजातः। त्रि। अनूढापत्ये। कानीने॥

कन्यकापतिः। पुं। जामातरि॥

कन्या। स्त्री। कुमार्याम्॥ दशवर्षायां बालिकायाम्॥ नार्याम्॥ यथाष्टकन्याम्॥ यथा। यक्षगन्धर्वसिद्धानां कन्यका नरनागयोः। विद्याधरकिम्पुरुषपिशाचाना मर्प्येत्ततादृति॥ अह ल्याद्रौपदीताराकुन्तीमन्दोदरीष्व-पि॥*॥ कन्यायांजातमात्रायामुपहासं च कुर्वते। नवराचादिपूजार्थं जातातेऽयकुमारिका॥ कन्यादानप्रसिद्ध्यर्थं वंशद्वयविवृद्धये। इतिसेनापिजनमाद्यमाख्यातितद्भवेत्॥ कन्याविक्रयेदोषो यथा। यः कन्यापालनं कृत्वाकरोति यदि विक्रयं। विक्रेता धनलोभेन कुम्भीपाकं सगच्छति॥ कन्यामूत्रपुरीषञ्चतत्रभक्षति पातकी। कृमिभिर्दंशितः काकैर्यावदिन्द्राश्चतुर्दश॥ मृतश्च व्याधयोनौच सलभेज्जन्मनिश्चितम्। विक्रीणीते मांसभारं वहत्येव दिवानिशमिति ब्रह्मवैवर्त्तपुराणम्॥ * ॥ अथ कन्या लक्षणम्। तत्रपादलक्षणम्। स्निग्धावनतायतमृतानखौ



कुमार्याः पादौ समोपचितचारुनिगूढगुल्फौ। श्लिष्टाङ्गुलीकमलकान्तितलौचयस्यास्तामुद्वहेद्यदि भुवोधिपतित्वमिच्छेत्॥ १॥ पादजङ्घाजानूरुगुह्यमणीनां लक्षणानि॥ मत्स्याङ्कुशाब्जयववज्रहलासि चिन्हा वस्वेदनौमृदुतलौ चरणौ प्रशस्तौ। जङ्घे च रोमरहिते विसिरे सुवृत्ते जानुद्वयं सममनुल्वणसन्धिदेशम्॥ २॥ ऊरू घनौ करिकरप्रतिमाववरोमा वश्वत्थपत्रसदृशं विपुलञ्चगुह्यम्। श्रोणीललाटमुरुकूर्मसमुन्नतञ्च गूढोमणिश्च विपुलां श्रियमादधाति॥ ३॥ नितम्बनाभ्योर्लक्षणम्। विस्तीर्णमांसोपचितो नितम्बोगुरुश्चधत्ते रशनाकलापम्। नाभिर्गभीराविपुलाङ्गनानां प्रदक्षिणावर्त्तगताचशस्ता॥ ४॥ मध्यस्तनोरुवक्षोग्रीवाल०। मध्यं स्त्रिया स्त्रिवलिनायमरोमशञ्च वृत्तौघनावविषमौकठिनावुरस्यौ। रोमप्रवर्जितमुरोमृदुचाङ्गनानां ग्रीवाचकम्बुनिचितार्थसुखानिधत्ते॥ ५॥ अधरदन्तयोर्ल०। वन्धुजीवकुसुमोपमोधरोमांसलो रुचिरविम्बरूपभृत्। कुन्दकुड्मलनिभाः समाद्विजायोषितां पतिसुखामिता

र्थदाः ॥ ६ ॥ वचननासिकादृशां-
लº । दाक्षिण्ययुक्तमशठं परपुष्टहंस
स्वलगुप्रभाषितमदीनमनल्पसौ
ख्यम् । नासा समा समपुटा रुचिरा
प्रशस्ता दृङ्नीलनीरजदलद्युति-
हारिणीच ॥ ७ ॥ भ्रूललाटलº ।
नोसङ्गते नातिपृथूचरम्ये शस्तेभ्रु-
वौबालशशाङ्कवक्रे । अर्द्धेन्दु संस्था
नमरोमशञ्च शस्तं ललाटं न नतं न
तुङ्गम् ॥ ८ ॥ कर्णकेशशिरोलº ।
कर्णयुग्ममपि युक्तमांसलं शस्यते मृ
दुसमाहितं समम् । स्निग्धनील
मृदुकुञ्चितैकशोमूर्द्धजाः सुखक-
राः समंशिरः ॥ ९ ॥ हस्तपादयो-
र्लेखालº । भृङ्गारासनवाजिकुञ्ज-
ररथश्रीवृक्षयूपेषुभिर्मालाकुण्ड-
लचामराङ्कुशयवैः शैलैर्ध्वजैस्तोर
णैः । मत्स्यस्वस्तिकवेदिकाव्यज-
नकैः शङ्खातपत्राम्बुजैः पादे पा
णितलेथवा युवतयो गच्छन्ति रा-
ज्ञीपदम् ॥ १० ॥ हस्तलº । नि-
गूढमणिबन्धनौ तरुणपद्मगर्भोप-
मौ करौन्नृपतियोषित स्तनुविकृ
ष्टपर्वाङ्गुली । न निम्नमतिनोन्नतं
करतलं सुरेखान्वितं करोत्यविध
वांचिरं सुतसुखार्थं सम्भोगिनीम्
॥ ११ ॥ मध्याङ्गुलिं या मणिबन्धनो

कन्या

त्था रेखा गतापाणितले ऽङ्गनायाः
। ऊर्द्धस्थितापादतलेथवायं पुंसो
यवाराज्यसुखायसास्यात् ॥ १२ ॥
कनिष्ठिकामूलभवा गता या प्रदेशि
नी मध्यमिकान्तरालम् । करोति
रेखा परमायुषः सा प्रमाणमूना
तुतदूनमायुः ॥ १३ ॥ अथापत्य
ज्ञानम् । अङ्गुष्ठमूले प्रसवस्यरेखाः
पुत्रा वृहत्यः प्रमदास्तुतन्व्यः । अ
च्छिन्नमध्या वृहदायुषांताः स्वल्पा
युषां छिन्नलघुप्रमाणाः ॥ १४ ॥ शुभ
लक्षणान्युक्ता अशुभलक्षणान्याह । इ
तीदमुक्तं शुभमङ्गना नामतोविपर्य
स्तमनिष्टमुक्तम् । विशेषतो ऽनिष्ट
फलानि यानि समासतस्तान्यनुकी
र्त्तयामि ॥ १५ ॥ पादयो रनिष्ट
लक्षणम् । कनिष्ठिकावातदनन्तरा
वा महीं नयस्याःस्पृशतिस्त्रियाःस्यात्
। गतायथाङ्गुष्ठमतीत्ययस्याःप्र दे
शिनीसा कुलटातिपापा ॥ १६ ॥ ज
ङ्घागुह्योदराणां लº । उद्बद्धाभ्यां पि
ण्डिकाभ्यां सिरालेशुष्के जङ्घे लो-
मशेचातिमांसे । वामावर्त्तं निम्नमल्प
ञ्चगुह्यं कुम्भाकारंचोदरं दुःखितानां
म् ॥ १७ ॥ ग्रीवालº । ह्रस्वयातिनिः
स्वतादीर्घया कुलक्षयः । ग्रीवया
पृथुलया योषितः प्रचण्डता ॥ १८

॥ नेत्रगण्डयोर्ल० । नेत्रे यस्याः केक रे पिङ्गलेवा साद्रुः शौला श्यावलो लेचनाच । कूपौयस्या गण्डयोश्च स्मितेषु निम्नन्दिग्धं बन्धकों तांवद न्ति ॥ १९ ॥ अन्यदप्याह । प्रविल म्बिनिदेवरं ललाटे श्वशुरंहन्त्युद रे स्फिजोः पतिञ्च । अतिलोमच- याञ्चितोत्तरौष्ठी नशुभाभर्त्तुरती वयाचदीर्घा ॥ २० ॥ स्तनकर्णदन्त ल० । स्तनैा सरोमैा मलिनोल्बणौ चक्षेयंददाते विषमैाचकर्णैा । स्थू लाः करालाः विषमाश्चदन्ताः क्लेशा य चैार्य्यायच कृष्णमांसा ॥ २१ ॥ ह स्तल० । क्रव्यादरूपैर्वृककाककङ्कैः सरीसृपोलूक समानचिह्नैः । शु- ष्कैः सिरालैर्विषमैश्चहस्तै र्भवन्ति नार्यः सुखवित्तहीनाः ॥ २२ ॥ अ न्यदप्याह । यातूत्तरोष्ठेन समुन्नतेन रूक्षाग्रकेशी कलहप्रियासा । प्रा- यो विरूपासु भवन्तिदोषायत्रा कृ तिस्तत्रगुणावसन्ति ॥ २३ ॥ अधुना शरीरावेवविभागमाह । पादैासगु ल्फैा प्रथमं प्रदिष्टं जङ्घे द्वितीयं तु सजानुचक्रे । मेढ्रोरूमुष्कञ्चततस्तृ तीयं नाभिंकटिंचैवचतुर्थमाहुः ॥ २४ ॥ उदरंकथयन्तिपञ्चमं हृदयंष ष्ठमथस्तनान्वितम् । अथसप्तममां- स्यजत्रुणी कथयन्त्यष्टममोष्ठकन्धरे ॥ २५ ॥ नवमंनयनेचसभ्रुणी सल लाटं दशमंशिरस्तथा । अशुभेष्वशु भंदशाफलं चरणाद्येषुशुभेषु शोभ नम् ॥ २६ ॥ इतिवाराह्यां कन्यालक्ष णं नामाध्यायः । ६७ ॥ * ॥ घृतकु मार्याम् । सहायाम् ॥ स्थूलैलाया- म् ॥ वाराहीकन्दे ॥ वन्ध्याकर्कोट क्याम् ॥ षष्ठराशौ ॥ जन्मकालीन चन्द्राश्रितैतद्राशिफलम् । युवति गे शशिनि प्रमदाजनप्रबलकेलि विलासकुतूहलैः । विमलशीलयु- तोजननोत्सवैः सुविधिनांविधिना सहितः पुमान् ॥ कन्यालग्नोद्भवो मर्त्त्यो नानाशास्त्रविशारदः । सो- भाग्यगुणसम्पन्नः सुन्दरः सुरतप्रि यः ॥ चतुरचराहत्तिभेदे । मगैा चेत् कन्या । भास्वत्कन्या सैकाधन्या । यस्याः कूले कृष्णोऽखेलत ॥ कन ति । कनदीप्तैा । अघ्न्यादिः । क न्यायाः कनीनचेतिनिर्देशादयसि- प्रथम इतिनङीप् ॥ दक्षिणार्णवस मीपेदुर्गादेव्याम् ॥

कन्याकुब्जः । पुं । कान्यकुब्जदेशे ॥ इ तिहेमचन्द्रः ॥

कन्याटः । पुं । वासमग्नि ॥ इतित्रिका एडशेषः ॥

कन्याधिपः । पुं । बुधग्रहे ॥

कन्यापतिः । पुं । जामातरि ॥

कन्यापालः । पुं । कनैत इति हिमगिरिप्रसिद्धे शूद्रजातिविशेषे । पालवशिजि ॥

कन्यारामः । पुं । बुद्धभेदे ॥

कन्युषम् । न । हस्तपुच्छे । हथेली का अंगौछा इति भाषा ॥

कपः । पुं । वरुणे ॥

कपटः । पुं । न । व्याजे । दम्भे । छद्मनि ॥ के मूर्द्धनि पटइव आच्छादकः ॥ यद्वा । पटति । पट० । अच् । कस्य ब्रह्मणोऽपि पटो व्यापकः ॥

कपटधारी । त्रि । छलाख्ये ॥

कपटिकः । त्रि । कपटविशिष्टे । कपटिनि ॥ मत्वर्थे ठन् ॥

कपटी । त्रि । अयथार्थव्यवहारवति । दम्भविशिष्टे ॥ कपटोऽस्ति अस्यास्मिन्वा । इनिः ॥

कपटिनी । स्त्री । गौडभाषया चीडा नामनि गन्धद्रव्ये ॥

कपटेश्वरी । स्त्री । श्वेतकण्टकार्याम् ॥

कपर्द्दः । पुं । शिवस्यजटाजूटे ॥ वराटके ॥ पर्दपूरणे । सम्पदादित्वात् भावे क्विप् । रालोपः । केन सुखेन जलेन वा परं पूर्त्तिं ददाति । सुपीति योगविभागात्कः ॥ कस्य जलस्य परा पूरणेन दापयतीति वा । दैप् शोधने । आत इति कः ॥

कपर्द्दिका । स्त्री । वराटिकायाम् ॥

कपर्द्दकः । पुं । हरजटाजूटे ॥ वराचरे । वराटके ॥ अस्याः प्रभेदाः । सुवर्णवर्णा सिंही १ । धूम्रवर्णा व्याघ्री २ । पीतपृष्ठासितोदरा मृगी ३ । श्वेतवर्णा हंसी ४ । नातिदीर्घिका विदग्धा ५ ॥ इति राजनिर्घण्टः ॥

कपर्द्दी । पुं । शिवे । ईशे ॥ कपर्दोजटाजूटोऽस्यास्ति । इनिः ॥

कपाटम् । त्रि । अररे । कवाटे । किंवाड इति भाषा ॥ कं वातम् शिरो वा पाटयति प्रविशते । पटगतौ । कर्मण्यण् ॥ अर्द्धर्चादि ॥

कपाटिका । स्त्री । क्षुद्रकपाटे । किवाँडी इति भाषा ॥ कपाटेन । स्वार्थे कः । टाप् ॥

कपाटी । स्त्री । कपाटे ॥ अल्पार्थे ङीप् ॥

कपालः । पुं । न । शिरोस्थिनि । कर्परे ॥ घटादेःशकले । खपरा इति भाषा ॥ व्रजे । समूहे ॥ यतीनां स्नानमयकर्पराद्दिभिक्षापात्रे ॥ यथा । कपालं वृक्षमूलानि कुचेलमसहायता । समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणमिति ॥ कुष्ठरोगविशेषे ॥ तस्य

लक्षणं यथा । कृष्णारुणकपालाभं यद्रूक्षं परुषं तनु । कपालं तोदबहुलं तत् कुष्ठं विषमं स्मृतमिति ॥ कं पालयति । कर्मण्यण् ॥ यद्वा । कम्पते । कपि चलने । तमिविशिविडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन् । कपेरेतिनिर्देशान्नलोपः । आगमशास्त्रस्यानित्यत्वं वा ॥

कपालनालिका । स्त्री । तर्क्कुाम् । तर्क्कौ । तकुआ इति भाषा ॥ इति त्रिकाण्डशेषः ॥

कपालभृत् । पुं । शिवे ॥ कपालं ब्रह्मकपालं वा बिभर्त्ति । डुभृञ० । क्विप् ॥

कपालमाली । पुं । भूतेशे । शिवे ॥ कपालानां माला विद्यतेऽस्य । व्री० इनिः ॥

कपालिका । स्त्री । भग्नमृन्मयभाजनशकले ॥ दन्तरोगविशेषे ॥ तल्लक्षणं यथा । कपालेष्विव दीर्यत्सु दन्तानां सैव शर्करा । कपालिकेति पठिता सदा दन्तविनाशिनीतिमाधवः ॥

कपाली । पुं । महादेवे । न्तकपालशालिनि ॥ कपालोऽस्ति अस्य । अतइनिः ॥ स्वनामाख्याते जाति वि० ॥ सतु ब्राह्मणकन्यायां तीवराज्जात इति पराशरपद्धतिः ॥

कपालिनी । स्त्री । दुर्गायाम् ॥ इन्नन्तान् ङीप् ॥

कपिः । पुं । सिल्हके ॥ शाखामृगे । वानरे ॥ एकैकस्योपकाराय प्राणान् दास्यामि ते कपे । इति हनूमन्तं प्रति श्रीरामवाक्यम् ॥ मधुसूदने ॥ रक्तचन्दने ॥ कम्पते । कपि चलने । कुण्डिकम्प्योर्नलोपश्चेति इप्रत्ययः ॥ वराहे ॥ कादुदकात् भूमिं पाति रक्षतीति कपिर्वराहः । पातेर्वा हुलकात् किप्रत्ययः ॥

कपिकच्छुः । स्त्री । मर्कट्याम् । शूकशिम्ब्याम् । कौँच किवाँच इति च भाषा ॥ कपिकच्छु र्भृशं वृष्या मधुरा बृंहणी गुरुः । तिक्ता वातहरी बल्या कफपित्तास्रनाशिनी ॥ तद्बीजं वातशमनं स्मृतं वाजीकरं परम् ॥ कपीनां कच्छुः कण्डूहेतुत्वात् ॥

कपिकच्छुफलम् । न । शूकशिम्ब्याः फले ॥ कोमलं रोमसहितं स्विन्नमाज्ये विपाचितम् । सोपस्करं सवाह्लीके सिन्धुजेन समन्वितम् ॥ कपिकच्छुफलं हृद्यं मधुरं बृंहणं गुरु । स्निग्धं शीतानिलहरं दुष्टव्रणविनाशनम् ॥

कपिकच्छुफलोपमा । स्त्री । जतुकालतायाम् ॥

कपिकच्छुकम् । न । शिरोऽस्थिनि ॥

कपिका । स्त्री । नीलसिन्दुवारवृक्षे ॥

कपिकेतनः । पुं । अर्जुनाख्यपाण्डवे ॥ कपिः केतनं चिह्नमस्य ॥

कपिकोलिः । पुं । कोलिविशेषे ॥

कपिचूडा । स्त्री । आम्रातकवृक्षे ॥

कपिचूतः । पुं । आम्रातके । आमडा इतिभाषा ॥

कपिजः । पुं । तुरुष्के । सिह्लके । शिलारस इति गौडभाषा । नागौरी गूंद इति भाषा ॥

कपिजाङ्घिका । स्त्री । तैलपिपीलिकायाम् ॥

कपिञ्जलः । पुं । तित्तिरौ ॥ कपिञ्जल इतिप्राज्ञैः कथितो गौरतित्तिरः ॥ कपिञ्जल इतिख्यातो लोके कपिश तित्तिर इतिच ॥ चातकखगे ॥ ते जलेपक्षिणि ॥

कपितैलम् । न । तुरुष्कनामगन्धद्रव्ये । सिह्लके । नागौरीगूंदइतिभाषा ॥

कपित्थः । पुं । कैंथ इति प्रसिद्धे वृक्षे । कुचफले ॥ कपित्थोथ दधित्थस्तु ग्राही फलसुगन्धकः । अच स्पन्दोदधिफलश्चिरपाकी कपिप्रियः ॥ कपित्थमामं सङ्ग्राहि कषायं लघु लेखनम् । पक्वं गुरु तृषाहिक्काशमनं वातपित्तजित् ॥ स्वाद्वम्लं तुवर कण्ठशोधनं ग्राहि दुर्जरम् ॥ अपिच ॥ कपित्थमामं कण्ठघ्नं विषघ्नं ग्राहि वातलम् । मधुराम्लकषायत्वात् सौगन्ध्याच्च रुचिप्रदम् ॥ कपयस्तिष्ठन्त्यत्र । कपिरिव तिष्ठतिवा । सुपिस्थ इतिकः । पृ० ॥

कपित्थत्वक । पुं । एलवालुके ॥

कपित्थपर्णी । स्त्री । कपित्थानीति गौडभाषाप्रसिद्धे वृक्षविशेषे । विरजायाम् । चित्रपर्ण्याम् ॥

कपित्थास्यः । पुं । वानरविशेषे । गोलाङ्गूले । दधिशोणे । नगाटने ॥

कपिध्वजः । पुं । हनुमता महावीरेण ध्वजरूपतयाऽनुग्रहीते अर्जुने ॥ कपिर्हनूमान् ध्वजे यस्य ॥

कपिनामा । पुं । सिह्लके ॥ कपिर्नामास्य ॥

कपिपिप्पली । स्त्री । रक्तापामार्गे । वशिरे ॥ सूर्य्यावर्त्तवृक्षे ॥

कपिप्रभा । स्त्री । कपिकच्छ्वाम् ॥

कपिप्रभुः । पुं । रघुनाथे । श्रीरामे ॥ कपीनां सुग्रीवादीनां प्रभुः ॥ कपिराजे ॥

कपिप्रियः । पुं । आम्रातके ॥ कपित्थे ॥ कपीनां प्रियः ॥

कपिप्रिया । स्त्री । चिञ्चायाम् । तिन्तिडीकायाम् ॥ कपीनां प्रिया ॥

कपिरथः । पुं । श्रीरामे ॥ अर्जुने ॥

कपिः रथः रथे वा यस्य ॥

कपिलः । पुं । अनले ॥ वासुदेवे । सिद्धेशे भगवतो विभूतिविशेषे देवहूत्याङ्कर्दमप्रजापते राविर्भूते ॥ सिद्धानाङ्कपिलो मुनिरिति भगवदुक्तेः ॥ ॥ अयञ्च ज्ञानभक्तिसेश्वरसाङ्ख्ययोगप्रचारार्थो भगवदवतारः ॥ अनीश्वरसाङ्ख्यमतप्रवर्त्तके च मुनिविशेषे ॥ कुक्कुरे ॥ दानवविशेषे ॥ पिङ्गले वर्णविशेषे ॥ नीलपीतः कपिलः इति रभसः ॥ कपिलोरोचमाछविरित्यन्ये ॥ त्रि । पिङ्गलवर्णयुक्ते ॥ कवते । कद्वर्णो । कवेः पञ्चेति इलच् प्रत्ययः ॥ मत्वर्थे सिध्मादित्वाल्लजवा ॥

कपिलद्युतिः । पुं । सूर्य्ये ॥

कपिलद्राक्षा । स्त्री । गोस्तन्याम् । दारहारायाम् ॥

कपिलद्रुमः । पुं । सुगन्धिकाष्ठविशेषे ॥

कपिलधारा । स्त्री । गङ्गायाम् । स्वर्गयाम् ॥ तीर्थविशेषे ॥

कपिलपुराणम् । न । कापिले उपपुराणे ॥

कपिलशिंशपा । स्त्री । शिंशपाद्रुमविशेषे । पीतायाम् । कुशिंशपायाम् ॥

कपिला । स्त्री । गोविशेषे । स्वर्णवर्णायाङ्गवि ॥ कपिलवर्णयोगात् । अनुदात्तत्वाभावात् वर्णादितिमङीपा । भस्मगर्भायाम् । कपिलवर्णपुष्पायां शिंशपायाम् ॥ भस्मगन्धिन्यौषधौ । रेणुकायाम् ॥ कपिलो वर्णोऽस्त्यस्याः । अर्श आद्यच् ॥ पुण्डरीकादिग्गजकरिण्याम् ॥ नदीविशेषे ॥ यथा । कज्जलाचलशैलात्तु पूर्वस्मिन् शुभ्रपर्वतः । यत्रा सह पुरा रेमे वज्र शक्रः सुरेश्वरः ॥ तत्पूर्वस्यां महादेवी नदीकपिलसंज्ञिता । तस्यां स्नात्वा नरो गङ्गास्नानजं फलमाप्नुयादिति कालिकापुराणे ८१ अध्यायः ॥

कपिलाक्षी । स्त्री । कपिलशिंशपायाम् ॥ मृगेर्वारौ ॥

कपिलाचार्य्यः । पुं । वासुदेवे ॥ कपिलस्था वौ साङ्ख्यस्य गुणात्मतत्त्वविज्ञानस्य आचार्य्यश्च ॥

कपिलाश्वः । पुं । विडौजसि । इन्द्रे ॥

कपिलोमफला । स्त्री । कपिकच्छ्वाम् ॥

कपिलोमा । स्त्री । रेणुकायाम् ॥

कपिलोहम् । न । पित्तले ॥

कपिल्लिका । स्त्री । गजपिप्पल्याम् ॥

कपिवक्त्रः । पुं । नारदे ॥

कपिवल्लभः । पुं । आम्रातके ॥

कपिवल्ली । स्त्री । करिपिप्पल्याम् । कोलवल्ल्याम् ॥ कपिरिव वल्ली तत्तुल्यरोमत्वात् ॥

कपिशः । पुं । [illegible] ॥

श्यावे । कृष्णपीतमिश्रितवर्णे ॥ त्रि । तद्वर्णयुक्ते ॥ कपिर्वर्णविशेषोऽस्यास्ति । लोमादित्वात् शः ॥ विरक्तसन्ध्याकपिशमित्यत्र कपिशं ताम्रमिति मल्लिनाथः ॥

कपिशा । स्त्री । माधव्याम् । माधुरीसुरायाम् ॥ नदीविशेषे ॥ टाप् ॥

कपिशाञ्जनः । पुं । शिवे ॥

कपिशापुत्रः । पुं । पिशाचे ॥

कपिशी । स्त्री । माधव्याम्मदिरायाम् ॥

कपिशीका । स्त्री । मदिरायाम् ॥ इति त्रिकाण्डशेषः ॥

कपिशीर्षम् । न । क्रयशीर्षे । प्राकाराग्रे ॥

कपिशीर्षकम् । न । हिङ्गुले ॥ खोडकशीर्षके । प्राकाराग्रे ।

कपिष्ठलः । पुं । ऋषिविशेषे ॥ कपिष्ठलोगोत्र इतिनिपातनात् षत्वम् ॥

कपीज्यः । पुं । क्षीरिकावृक्षे ॥

कपीतः । पुं । श्वेतशुक्षावृक्षे ॥

कपीतनः । पुं । गर्द्दभाण्डे ॥ शिरीषवृक्षे ॥ आम्रातके ॥ अश्वत्थे ॥ पूगवृक्षे ॥ मालूरवृक्षे । बिल्वे ॥ तनोति । तनुविस्तारे । पचाद्यच् । कपीनाम् कपेर्वर्णस्य वा तनः । अन्येषामपीति दीर्घः ॥ यद्वा । याः लक्ष्म्याः तनः ईतनः । कपीना कुत्सिते वा ईतनः ॥

कपीन्द्रः । पुं । हनुमति ॥ सुग्रीवे ॥ राघवे ॥ वराहमूर्त्तौ ॥ कपिश्चासाविन्द्रश्च । कपीनामिन्द्रो वा ॥

कपीशः । पुं । हनुमति ॥ कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ कपीनामीशः ॥

कपीष्टः । पुं । राजादनवृक्षे ॥ कपित्थे ॥

कपूयः । त्रि । कुत्सिते ॥ कुत्सितं पूयते । पूयी विसरणे । पचाद्यच् । पृषोदरादिः ॥

कपूयचरणः । त्रि । दुष्कृतिनि । कुत्सितकर्म्मणि ॥ कपूयं निन्दितं चरणं कर्मास्य ॥

कपोतः । पुं । पारावते । कलरवे ॥ कपोतको गुरुः स्निग्धो रक्तपित्तानिलापहः । सङ्ग्राही शुक्रलः शीतः सुस्वादुश्चविकारकः ॥ घुघुती इति प्रसिद्धे चित्रकाण्ठविहङ्गमे । धूसरे । धूम्रलोचने ॥ कस्य वायोः पोत इव । कोवायुः पोतो नौरिवास्य वा ॥ यद्वा । कवते । कद्रुवर्णे । कवेरोतच् प्रत्ययः ॥ पश्चिमाचे ॥

कपोतकम् । न । सौवीराञ्जने ॥

कपोतचरणा । स्त्री । नलीनामगन्धवस्तुनि ॥

कपोतपालिका । स्त्री । स्तम्भाग्रप्रसारिते दारुविशेषे ॥ सौधादिप्रान्तेकाष्ठा ।

दिरचिते पक्षिस्थाने । विटङ्के ॥ पालयति । पालरक्षणे । ण्वुल् । कपोतानां पालिका ॥ कपोतान् पालयति वा । कर्मण्यण् । संज्ञायां कन् इति कन् ॥

कपोतपाली । स्त्री । विटङ्के ॥ कपोतान् पालयति । कर्मण्यण् । ङीप् ॥

कपोतवङ्का । स्त्री । ब्राह्मीवृक्षे ॥

कपोतवर्णी । स्त्री । सूक्ष्मैलायाम् ॥

कपोतवाणा । स्त्री । नलीनामगन्धद्रव्ये ॥

कपोतसारम् । न । स्रोतोऽञ्जने ॥

कपोताङ्घ्रिः । पुं । कपोतपादे ॥ स्त्री । नल्याम् । गन्धद्रव्यविशेषे ॥ कपोतस्याङ्घ्रिरिव ॥

कपोताभः । पुं । कपोतवर्णे ॥

कपोतारिः । पुं । श्येनपक्षिणि ॥ कपोतानाम् अरिः ॥

कपोलः । पुं । गण्डे । गल्ले । चक्षुषी तिर्यक्सन्निधिभागे । गाल इतिभाषा ॥ कम्पते । कपिचलने । कपिगडिगण्डोलच् । कपीतिनिर्देशात् नलोपः ॥ कं सुखं पोलति वा । पुल महत्त्वे । कर्मण्यण् ॥

कप्याख्यः । पुं । सिह्लके ॥

कप्यासः । पुं । वानरगुदे । कपिपृष्ठान्ते ॥

कफः । पुं । शरीरस्थधातुविशेषे । श्ले-



ष्मणि । सौम्यधातौ ॥ कफस्यकोपः कुसुमागमेभवति । अस्यप्रकोपहेतुः । गुरुमधुररसातिस्निग्धदुग्धेक्षुभक्ष्यद्रवदधिदिननिद्रापूपसर्पिःप्रपूरैः । तुहिनपतनकाले श्लेष्मणः सम्प्रकोपः प्रभवति दिवसादौ भुक्तमात्रे वसन्ते ॥ अपिच । गुरुपटुमधुराम्लस्निग्धमाषैस्तिलैश्च द्रवदधिदिननिद्राशीतनिश्चेष्टताभिः । प्रथमदिवसभागे रात्रिभागे पिधाये भवति हि कफकोपो भुक्तमात्रे वसन्ते इति ॥ विधाविभक्तस्य दिवसस्य प्रथमे भागे एवं रात्रेश्चाद्ये भागे ॥ फाल्गुनचैत्रमासेष्वजम्बूपीडाकरोमतः । सर्वशास्त्रविचारणैः श्लेष्मा राजाप्रकीर्त्तितः ॥ केन जलेन फलति । फलनिष्पत्तौ । अन्येष्वपीति डः ॥ यद्वा । केशिरसि फलति वा पूर्ववत् डः ॥

कफकूर्चिका । स्त्री । लालायाम् । सृणीकायाम् । आस्रासवे । लाल थूक इत्यादिभाषा ॥

कफघ्नी । स्त्री । क्षुपाप्रभेदे ॥

कफणिः । पुं । स्त्री । कफोणौ ॥ केन सुखेन फणति स्फुरति वा । फण गतौ स्फुरसञ्चलने वा । इन् । पृषोदरादिः ॥

कफणी । स्त्री । कफोणौ ॥ कूर्दिका

राद्विति पञ्चेकीय ॥

कफप्रकृतिकः । त्रि । क स्वभावे ॥ त ल्लक्षणं यथा । गम्भीरबुद्धिः स्थूलाङ्गः स्निग्धकेशो महाबलः । स्वप्ने जलाशयालोकी श्लेष्मप्रकृतिको नर इति ॥

कफवर्द्धनः । पुं । पिण्डीतगरवृक्षे ॥ त्रि । श्लेष्मवृद्धिकारके ॥

कफविरोधि । न । मरिचे ॥

कफाश् । पुं । कफनाशके ॥ कफमश्नि । अश० । क्विप् ॥

कफान्तकः । पुं । बर्बुरवृक्षे ॥ इतिराजनिर्घण्टः ॥

कफारिः । पुं । शुण्ठ्याम् ॥

कफी । पुं । गजे । हस्तिनि ॥ त्रि । श्लेष्मणे । श्लेष्मले । श्लेष्मयुक्ते ॥ कफोऽस्यास्ति । इन्नोपतापेतीनिः ॥

कफेलूः । पुं । श्लेष्मातके ॥ कफं लाति । ला आदाने । अम्बूदम्भूजम्बूकफेलूकर्कन्धूदिधिषूरिति कूप्रत्ययो निपातनादित्त्वम् ॥

कफोणिः । पुं । कूर्परे । भुजमध्यग्रन्थौ । कोहनी इति भाषा ॥ कं सुखं स्फोरयति । स्फुरस्फुरणे सञ्चलनेच । स्थम्भः । अषदः ॥ पृ० । यद्वा । केन सुखेन फणति स्फुरतिवा । फण० । स्फुर० । इन् । पृ० ॥

कफोणी । स्त्री । कूर्परे ॥

कफोलक्षेगः । पुं । कफस्य वमनायोपस्थितौ ॥

कबन्धः । पुं । उदरे ॥ धूमकेतौ ॥ राहौ ॥ रक्षोविशेषे ॥ न । जले । उदके ॥ पुं । न । क्रियायुक्तशिरश्शून्यकलेवरे ॥ कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम् ॥ यथा । मनुष्याणां सहस्रेषु हतेषु हतमूर्द्धसु । तदावेशात्कबन्धः स्यादेकोऽमूर्द्धाक्रियान्वितः ॥ अपिच । नागानामयुतं तुरङ्गनियुतं सार्द्धं रथानां शतं पत्तीनां दशकोटयोनिपतिता एकः कबन्धो रणे । तादृक्कोटिकबन्धनर्त्तनविधौ खेलत्सहस्रेश्वरस्तेषाङ्कोटिनिपातनेरघुपतेः कोदण्डघण्टारवः । इति प्राचीनाः ॥ कं सुखं बध्नाति । बन्धबन्धने । कर्मण्यण् ॥ कं बध्यते छिद्यते अस्मात् । घञ् ॥ केन वायुना बध्यते वा । कोवायुरेवबन्धःआश्रयोयस्यवा ॥

कबन्धी । पुं । ऋषिविशेषे ॥

कवित्थः । पुं । कपित्थवृक्षे ॥ कपयः तिष्ठन्त्यत्र स्था० । सुपिस्थ इतिकः । पृ० ॥

कविलः । पुं । कपिलवर्णे ॥ त्रि । कपिलवर्णाढ्ये ॥

कभम् । न । रोहिणीनक्षत्रे ॥

कम् । अ । पादपूरणे ॥ जले ॥ मस्तके ॥ सुखे ॥ मङ्गले ॥ निन्दायाम् ॥

कम्यते । कम्° । णिङभावे विच् ॥

कमठः । पुं । कच्छपे ॥ दैत्यविशेषे ॥ मुनिभाजने ॥ शल्लक्याम् ॥ भगवतोऽवतारविशेषे ॥ न । मुनीनांजलपात्रविशेषे । बन्नी यतकी लोटइति चभाषाप्रसिद्धे ॥ काम्यते । कम्° । कमेरठः ॥ के जलेमठतिवा । मठमदनिवासयोः । पचाद्यच् ॥

कमठी । स्त्री । कच्छप्याम् । दुल्याम् ॥ स्वल्पकूर्मजातौ ॥ शल्लक्याम् ॥ पुंयोगादिति जातेरितिवा ङीष् ॥

कमण्डलुः । पुं । न । करके । कुण्डयाम् । सन्यासिनां मृत्काष्ठादिमयेपात्रे ॥ अलाबुं दारुपात्रञ्च मृन्मयं वैदलं तथा । एतानि यतिपात्राणि मनुः स्वायम्भुवो ऽब्रवीत् ॥ पुं । प्लक्षपादपे ॥ चतुष्पाज्जातिविशेषे ॥ कस्य प्रजापते र्जलस्य वा मण्डःसारः । तं लाति । ला° । भितद्र्वादित्वात्डुः ॥ यद्वा । मण्डनम् । मडिभूषायाम् ॥ । घञ् । कस्य मण्डंभूषां लाति । डुः ॥

कमनः । पुं । कामे ॥ अशोकवृक्षे ॥ ब्रह्मणि ॥ त्रि । कामुके ॥ कामयते कम्° । कर्त्तरिल्युट् ॥ अभिरूपे । कमनीये । मनोहरे ॥ अनुदात्तश्चेतिकमेर्युच् ॥

कमनच्छदः । पुं । कङ्कपक्षिणि ॥

कमनी । स्त्री । कामयित्र्याम् । ङीप् ॥

कमनीयः । त्रि । कामनायोग्ये । वल्गुनि । मनोहरे । रुचिरे । कान्ते । शोभने ॥ कमेरनीयर् ॥

कमरः । त्रि । काममोहिते । कामिनि ॥ कामयते । कम्° । अर्त्तिकमिभ्रमीत्यरश्चित ॥

कमलः । पुं । मृगविशेषे । कुरङ्गे ॥ न । जले । ताम्रे ॥ क्लोमनि ॥ भेषजे ॥ सारसपक्षिणि । जलजे । पद्मे ॥ अस्यगुणाः । कमलं शीतलं वर्ण्यं मधुरं कफपित्तजित् । तृष्णादाहास्रविस्फोटविषवीसर्पनाशनम् ॥ विशेषतः सितंपद्मं पुण्डरीकमिति स्मृतम् । रक्तं कोकनदं ज्ञेयं नीलमिन्दीवरं स्मृतम् ॥ धवलंकमलं शीतंमधुरङ्कफपित्तजित् । तस्मादल्पगुणा किञ्चिदन्यद्रक्तोत्पलादिकमिति ॥ षण्मात्रस्यसप्तम ऽ।ऽ। प्रभेदे ॥ कामयतेकाम्यते वा । कम्° । णिङभावे वृषा°कलच् ॥ कञ्जलम् अलति । अलभूषणादौ । मू° कोवा ॥ ध्रुवकप्रभेदे ॥ यथा । उक्तोमलयताले न लघुमध्ये स्फुरेद्गुरुः । समद्वाचरैर्युक्तः कमलोऽयं भयानके इति ॥

कमलखण्डम् । न । कमलानांसमूहे । कमलादिभ्यःखण्डः ॥

कमलच्छदः । पुं । पद्मदले । पद्मपत्रे ॥

कमलजः । पुं । अब्जयोनौ । धातरि ॥ कमले जातः । जनी । डः ॥

कमला । स्त्री । लक्ष्म्याम् । श्रियि ॥ कमलालयस्थायां देव्याम् ॥ वरस्त्रियाम् ॥ कालकूटादिपत्तने कमलानीबू इति ख्याते फलविशेषे । यथा । रम्भाफलं तिन्तिडीकं कमलानागरङ्गकम् । फलान्येतानि भोज्यानि पथ्योऽन्यानि विवर्जयेदिति तन्त्रसारे पुरश्चरणप्रकरणम् ॥ काम्यते । कमु० । वृषा० कलच् ॥ कमलम् अस्ति अस्याः । अर्श आद्यच् वा ॥ छन्दोविशेषे । यथा । द्विगुणमगणसहितः सगण इह विहितः । फणिपतिमतिविमला क्षितिपभवति कमलेति ॥ सवैयान्तर्गता कमला यथा । वसुभिः प्रमिताः सगणा विहिताः पुनरेकमितो निहितो गुरुरन्ते । यदि सत्कवयो विबुधसम्मतयोऽभिधया कमलेति तदाकलयन्ते । विदधत्कमगारमणीयतया रसनापरिखेलितया कुतुकान्ते । यतयस्तनरेशविशेषाभिधशेषाधिकशोभितसान्विदधातु मुदन्ते इति ॥

कमलालयः । पुं । सिद्धस्थानविशेषे ॥ यथा । कमलालये महास्थाने कमलाख्यो महेश्वरः । कमलापमहेशानी सकलार्थप्रदायिनीत्यागमोक्तिः ॥

कमलालया । स्त्री । लक्ष्म्याम् ॥ कमलमालयो यस्याः ॥

कमलासनः । पुं । धातरि ॥ कमलमासनमस्य ॥ न । आसनविशेषे ॥

कमलासनस्थः । पुं । पृथिवीपद्ममध्ये मेरुकर्णिकासनस्थे भगवन्नाभिकमलासनस्थे विधातरि ॥

कमलिनी । स्त्री । पद्मिन्याम् ॥ पद्मसमूहे । पद्माकरे ॥ कमलानि सन्त्यत्र । पुष्करादिभ्यो देशे इति इनिः ॥

कमलोत्तरम् । न । कुसुम्भपुष्पे ॥ कमलादुत्तरम् ॥

कमा । स्त्री । शोभायाम् ॥ इति राजनिर्घण्टः ॥

कमिता । त्रि । कामुके ॥ कमेर्णिङ्भावे तृच् ॥

कम्पः । पुं । गात्रादिचलने । वेपथौ । वेपने ॥ कम्पनम् । कपि किञ्चिच्चलने । भावे घञ् ॥

कम्पनः । पुं । शिशिरर्तौ ॥

कम्पनम् । त्रि । कम्प्रे । लोले । चञ्चले ॥ न । कम्पे ॥ कम्पनशीलः । कपि० चलनशब्दार्थादिति युच् ॥

कम्पलक्ष्मा । पुं । वायौ ॥

कम्पाकः । पुं । वायौ ॥

कम्पितम् । न । कम्पने । वेपने । कम्पे

॥ त्रि । कम्पयुक्ते ॥ कम्प्यतेऽस्म । कपि॰ । क्तः ॥

कम्पिल्लः । पुं । कम्पिल्लके । रक्ताङ्गे । कबीला कामल इतिच भाषा प्रसिद्धे वृत्ते ॥ देशविशेषे ॥

कम्पिल्लकः । पुं । कम्पिल्ले ॥

कम्प्रः । त्रि । कम्पयुक्ते । अतिचञ्चले ॥ कम्पनशीलः । नमिकम्पीतिरः ॥

कम्बरः । पुं । चित्रवर्णे । कर्बुरवर्णे ॥ त्रि । चित्रवर्णवति ॥

कम्बलः । पुं । नागराजे ॥ सास्नायाम् ॥ प्रावारे ॥ कृमौ ॥ वैकक्ष्ये ॥ स्वनामख्यातेमेषादिलोमरचिते वस्त्रासनादौ । रल्लके ॥ मृगविशेषे ॥ न । जले । सलिले ॥ कम्यते । कम्॰ । कमेर्बुकचेतिकलः ॥ कंकुत्सितं शिरोऽम्बु वा वलते । वलसंवरणे सञ्चरणेच । अच् ॥ कम्बति कम्ब्यते वा । कम्बगतौ । वृषादित्वात् कलच् ॥

कम्बली । पुं । वृषे ॥ त्रि । कम्बलवति ॥ कम्बलोऽस्ति अस्य । इनिः ॥

कम्बलिवाह्यकम् । न । गन्त्र्याम् ॥ वृषवाह्ये शकटे ॥ कम्बलः सास्ना । सास्त्येषाम् । इनिः । कम्बलिभिर्वृषै रुह्यते । वह॰ ण्यत् । स्वार्थेकन् ॥

कम्बलीया । स्त्री । ऊर्णायाम् ॥ कम्बलायहिता । असंज्ञायांत्वाम्नयत् । तस्मैहितमिति छः ॥



कम्बल्यम् । न । ऊर्णापलशते ॥ कम्बलाच्चसंज्ञायामिति प्राकक्रीतीयेष्वर्थेषु यत् ॥

कम्बिः । स्त्री । खजाकायाम् । दर्व्याम् ॥ वंशांशे ॥ कम्यते । कम्॰ । बाहुलकात् विन् ॥

कम्बुः । पुं । न । शङ्खे ॥ पुं । शम्बूके ॥ वलये ॥ हस्तिनि । गजे ॥ कर्चूरे ॥ ग्रीवायाम् ॥ नलके । पोलाहाडइति भाषा ॥ काम्यते । कम्॰ । जत्वादयश्चेतिनिपातितः ॥ कम्बति । कम्बगतौ । मृगय्वादिर्वा ॥

कम्बुकः । पुं । कम्बुशब्दार्थे ॥

कम्बुकण्ठी । स्त्री । कम्बुग्रीवायाम् ॥

कम्बुकाष्ठा । स्त्री । अश्वगन्धायाम् ॥

कम्बुग्रीवा । स्त्री । शङ्खाकृतित्रिरेखाढ्यग्रीवायाम् ॥ कम्बुः शङ्ख इवग्रीवातिस्रो रेखा यस्याः ॥

कम्बुपुष्पी । स्त्री । शङ्खपुष्प्याम् ॥

कम्बुमालिनी । स्त्री । शङ्खपुष्प्याम् ॥

कम्बूः । पुं । वलये ॥ शङ्खे ॥ त्रि । परद्रव्यापहारिणि ॥ जम्बूहम्बूजम्बूकम्बूहरयुज्ज्वलदत्तोक्तपाठात्साधुः ॥

कम्बोजः । पुं । हस्तिविशेषे ॥ शङ्खविशेष ॥ देशविशेषे ॥ सयथा । पश्चन

दंसमारभ्यंतं कुलाङ्घ्रिणपूर्वतः। कम्बोजदेशो देवेशि ५। शिराशिपरा यणः ॥ इतितन्त्रशास्त्रम् ॥

कम्बातायी । पुं । शङ्खचिल्ले ॥

कम्भारी । स्त्री । गम्भार्याम् ॥ कं जलं बिभर्त्ति । डुभृञ्० । कर्मण्यण् । ङीप् ॥

कम्भु । न । उशीरे ॥ इतिराजनिर्घण्टः ॥

कम्रः । त्रि । कामुके । मैथुनेच्छाविशिष्टे ॥ कमनीये ॥ कामयते । कमु० । नमिकम्पीतिरः ॥

करः । पुं । वर्षोपले ॥ रश्मौ ॥ पाणौ ॥ प्रत्याये । भागधेये । कर्षकादि द्वारा प्रत्येकस्यावरजङ्गमादादेयेरा जग्राह्यभागे ॥ शुण्डायाम् ॥ हस्तनक्षत्रे ॥ चतुष्कालेशेषगुरोः ॥ऽ संज्ञायाम् ॥ कीर्य्यते । क्षुविक्षेपे । ऋदोरप् ॥ करोति वा । अच् ॥ कर्मोपपदेसति कर्त्तृवाचकोयंशब्दः । यथा । आनन्दकरः ॥

करकः । पुं । करकवृक्षे ॥ पक्षिविशेषे ॥ दाडिमवृक्षे ॥ करे ॥ खट्वायाम् ॥ पलाशवृक्षे ॥ कोविदारवृक्षे ॥ बकुलवृक्षे ॥ करीरवृक्षे ॥ नारिकेलास्थनि । माला इतिगौड भाषा । नरेली कपाली इतिचभाषा ॥ पुं । न । करङ्के ॥ कमण्डलौ ॥ पुं । स्त्री । वर्षोपले ॥ कृणोति । कृञ् हिंसायाम् । करोति दोषाभावं वा । कृञादिभ्यः संज्ञायांवुन् ॥

करकङ्कणन्यायः । पुं । कङ्कणशब्देनैव करभूषणविशेषबोधसम्भवेऽपि करशब्दपूर्वकः कङ्कणशब्दः करसंलग्नकङ्कणबोधार्थकइत्यर्थपरे दृष्टान्ते॥

करकचः । पुं । योगविशेषे ॥ यथा । शनिभार्गवजीवश्चकुजसोमार्कवासरे । षष्ठ्यादितिथयः सप्तक्रमात् करकचाः स्मृता इति ॥

करकच्छपिका । स्त्री । कूर्ममुद्रायाम् ॥

करकण्टकः । पुं । नखे ॥

करका । स्त्री । वर्षोपले । मेघोपले । ओलाइतिभाषा ॥ कृणोतेर्वुन्स्त्रीत्वेऽपि क्षिपकादित्वात् प्रत्ययस्थादित्वंन ॥

करकाजलम् । न । दिव्यपानीयप्रभेदे ॥ दिव्यवाय्वग्निसंयोगात्संहताःखात्पतन्तियाः । पाषाणखण्डवच्चापस्ताःकारक्योऽमृतोपमाः ॥ करकाजलंरूक्षंविशदंगुरुचस्थिरम् । दारुणं शीतलं सान्द्रंपित्तहृत कफवायुकृत॥

करकाम्भाः । पुं । नारिकेलवृक्षे ॥

करग्रहः । पुं । विवाहे ॥ करग्रहणे ॥

करग्रहारम्भः । पुं । नववर्षसम्बन्धिनः करस्याराज्ञा प्रजाभ्यः प्रथमादाने । पुण्याहमिति प्रसिद्धे ॥ तद्दिननिर्णयो यथा । तीक्ष्णोग्रवर्ज्जितरभेषु लग्ने शीर्षोदये भानुदिने शुभाह्ने । कुर्यादमुकानि समीहितानि करग्रहारम्भमपि प्रजाभ्य इति ॥

करग्राहः । पुं । पाणिग्राहे ॥ करं गृह्णाति । ग्रह० । अण् ॥

करघर्षणः । पुं । दधिमन्थनदण्डे । तक्राटे ॥ न । हस्तघर्षणे ॥

करघर्षी । पुं । क्षुद्रमन्थानदण्डे । छोटीरयी इतिभाषा ॥

करङ्कः । पुं । मस्तके ॥ अस्थिनारिकेलफलास्थनि । नारियलखोला इतिभाषा । पोलानारियल इतिच ॥ शरीरास्थि ॥ इक्षुविशेषे ॥

करङ्कशालि । पुं । करङ्काभिधेक्षौ ॥

करच्छदः । पुं । शाखोटवृक्षे । सिहोड़ा इतिभाषा ॥

करच्छदा । स्त्री । सिन्दूरपुष्प्याम् ॥

करजः । पुं । नखे ॥ करञ्जवृक्षे ॥ न । व्याघ्रनखाख्यगन्धद्रव्ये । करजं नखं तद्दिव ॥ करेण जन्यते । जनी० । अन्येष्वपीतिडः ॥ कं सुखं जलं वा रञ्जयति । रञ्ज रागे । कर्मण्यण् । न्यास इत्यतिनिर्देशादकिञ्च्यपि नलोपः । संज्ञापूर्वकत्वान्न वृद्धिः ॥

करज्योतिः । पुं । हस्तज्योतिर्वृक्षे । हाथाजोड़ी इतिभाषा ॥ इति राजनिर्घण्टः ॥

करञ्जः । पुं । वृक्षविशेषे । करंजुआ इतिभाषाप्रसिद्धे ॥ स षड्विधः । तत्र गौडभाषायां डहरकरञ्जस्य पर्यायाः । चिरबिल्वो नक्तमालः करजश्च करञ्जके ॥ नाटाकरञ्जस्य पर्यायाः । प्रकीर्यः पूतिकरजः पूतिकः कलिकारकः ॥ गौडभाषया काँटाकरञ्ज गाँठियाकरञ्ज इति प्रसिद्धस्य । षड्ग्रन्थः ॥ माँकडाकरञ्जस्य । मर्कटी ॥ विषकरञ्जस्य । अङ्गारवल्लरी ॥ इति ॥ अन्यकरञ्जस्य पर्यायास्तु । करमर्द्दी वनेक्षुद्राकराम्लः करमर्द्दकः । इति ॥ कं सुखं जलं वा रञ्जयति । रञ्जः कर्मण्यण् ॥

करञ्जकः । पुं । करञ्जे ॥ स्वार्थे कन् ॥ करञ्जः कटुकस्तीक्ष्णो वीर्योष्णो योनिदोषहृत् । कुष्ठोदावर्त्तगुल्मार्शोव्रणकृमिकफापहः ॥ तत्पत्रं कफवातार्शःकृमिशोथहरम्परम् । भेदनं कटुकम्पाके वीर्योष्णं पित्तलं लघु ॥ तत्फलं कफवातघ्नं मेहार्शःकृमिकुष्ठजित् । घृतपूर्णकरञ्जोऽपि करञ्जसदृशो गुणैः ॥ भृङ्गराजे ॥

करञ्जफलः । पुं । कपित्थवृक्षे ॥

करञ्जी । स्त्री । उद्कार्ये । मण्डाकरञ्जे ॥ करञ्जी स्तम्भिनी तिक्ता तुवरा कटुपाकिनी । वीर्योष्णा वमिवाताशीः कृमिकुष्ठप्रमेहजित् ॥

करटः । पुं । गजगण्डे ॥ कुसुम्भवृक्षे ॥ निन्द्यजीवने ॥ एकादशाहादिश्राद्धे ॥ दुर्दुरूटे ॥ वायसे ॥ वाद्यविशेषे ॥ करोति शकुनम् । शकादिभ्यो ऽटन् ॥ केति रटतिवा । रटशब्दे । पचाद्यच् ॥

करटकः । पुं । करटार्थे ॥ स्वार्थेकन् ॥

करटा । स्त्री । दुःखदोह्यायांगवि ॥ अजाद्यतष्टाबिति अदन्त लक्षणष्टाप् ॥

करटी । पुं । हस्तिनि ॥

करटिनी । स्त्री । हस्तिन्याम् ॥

करटुः । पुं । कर्करेटौ । करकटियाइतिगौडभाषाप्रसिद्धपक्षिविशे० ॥

करणम् । न । हेतौ । साधकतमे । क्रियासिद्धौ प्रकृष्टोपकारके ॥ यद्व्यापारानन्तर मव्यवधानेन फलोत्पत्तिस्तत्करणमित्यर्थः । तेनदात्रेण धान्यं लुनातीत्यत्र हस्तादेः करणत्वेपि दात्रस्यैव करणत्वम् । तथाचोक्तम् । कारकाव्यवधानेपि क्रियानिष्पत्तिकारणम् । यद्विवक्षितं तेषु करणं प्रकीर्त्तितमिति ॥ साधने ॥ कर्मणि ॥ तिथ्यर्द्धपरिमितेषु ववाद्येकादशसु ॥ यथा । ववाख्यबालवकौलवतैतिलगरवणिजविष्टयः सप्त । अगदुरचेति चराणि तिथिखण्डात्मकानि करणानि ॥ अचराण्युत्तरशकलादमावास्याश्चतुर्दशीतश्चः । शकुनिचतुष्पदनागकिंस्तुघ्नानि भवन्ति करणानि ॥ सिताद्देः करणंशेकोयाततिथ्यर्द्धसङ्ख्यः । सप्तभक्तोवशेषेणमितंस्याद्ववतोगतम् ॥ चराणि विष्टिं करणान्यृतेषसा भवन्ति सौम्याखिलकर्मसिद्धये । तथैवधीराणिचपितृकर्मणो विष्टिर्विघातादिनिधौवराभवेदिति ॥ क्षेत्रे ॥ नृत्यप्रभेदे ॥ नृत्यविषयकाङ्गोपरशतकरणविशेषेषु ॥ यथा । करणानान्तुसर्वेषां सामान्यं लक्षणं त्विदम् । प्रायोवामकरोवक्षः स्थितोन्यः पुरतोनुगः ॥ पादाभ्यांकरणंप्रेयं तदिशाष्टोत्तरंशतम् । निकुञ्चितंपार्श्वकात्रमतिक्रान्तंविवर्त्तकम् ॥ विद्युद्भ्रान्तं गजक्रीडं कान्तञ्च गरुडप्लुतमित्यादिसङ्गीतदामोदरः ॥ गीतप्रभेदे ॥ क्रियाप्रभेदे ॥ व्रतबन्धे ॥ कायस्थसंहतौ ॥ कृतादौ ॥ क्षेत्रे ॥ गात्रे । काये ॥ संवेशने ॥ कायस्थे ॥ इन्द्रिये ॥ वर्णानांस्पष्टतादौ ॥ योगिनामासनादौ ॥ व्याव

मते व्यापारवदसाधारणं कारणङ्करणम्। समवाय्यसमवायिनिमित्तकारणमध्ये यदसाधारणंकारणं तदेव करणमिति॥ साङ्ख्य नये इन्द्रियेषु ॥ यथा। करणं त्रयोदशविधम्। इन्द्रियाण्येकादश बुद्धिरहङ्कारश्चेति त्रयोदशप्रकारं करणम्। त्रयोदशविधेकरणेऽवान्तरविभागंकरोति। अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्यविषयाख्यम्। साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरङ्करणम्॥ ३२॥ अस्यार्थः। अन्तः करणंत्रिधम्। बुद्धिरहङ्कारोमनइति। शरीराभ्यन्तरवृत्तित्वादन्तःकरणम्॥ दशधाबाह्यमिन्द्रियम् त्रयस्यान्तःकरणस्य विषयाख्यम्। विषयमाख्यातीति विषयाख्यम्। सङ्कल्पाभिमानाध्यवसायेषु कर्त्तव्येषु द्वारीभवति। तत्र बुद्धीन्द्रियाण्यालोचनेन कर्मेन्द्रियाणि यथास्वंव्यापारेण। बाह्याभ्यन्तरयोः करणयोर्विशेषमाह। साम्प्रतकालमित्यादि। साम्प्रतकालं वर्त्तमानकालंबाह्येन्द्रियम्। वर्त्तमानसमीपमनागतमपिवर्त्तमानम् अतीतानागपिवर्त्तमानविषयाभवति। त्रिकालमाभ्यन्तरं करणम्। तद्यथा। पूरभेदादभूतवृष्टिः अस्ति धूमाद्गिरिहनगनिकुञ्जे असत्युपघातके पिपीलिकाण्डसञ्चरणादिहभविता वृष्टिरिति तदनुरूपाश्चसङ्कल्पाभिमानाध्यवसाया भवन्तीति ॥ श्रोत्रादिपञ्चज्ञानेन्द्रियाणि वागादि पञ्चकर्म्मेन्द्रियाणि मनोबुद्धिश्चेति द्वादशसंख्याके ॥ करणवर्गेमनोबुद्धिश्चेतिद्वित्तिविशेषौ वृत्तिमांस्त्वहङ्कारः कर्त्तैव। चिदाभासस्तुसर्वत्रैवाऽविशिष्टः। अनात्माभौतिकः कल्पितश्च ॥ सेतिकर्त्तव्यताके साधने ॥ धात्वर्थे ॥ पुं। वैश्याच्छूद्रासुते। अर्थलिखनवृत्तिः कायस्थइतिख्यातः। इति भरतः॥ धनधान्याध्यक्षताच राजसेवार्थमेव च। द्विजातेः परिचर्याच दुर्गान्तः पुररक्षणम्॥ एषा पारशवस्योक्ताउग्रस्य करणस्य च। प्रोक्ता उपशमता इत्ति वभयत्रसुखप्रदा॥ व्रात्यात्तुजन्नियात् सवर्णाया मुत्पनेझल्लमल्लादिसंज्ञके ॥ यथा। झल्लोमल्लश्चराजन्याद्व्रात्याल्लिच्छिविरेवच। नटश्च करणश्चैव खसोद्रविडएवचेतिमनो १०ऽध्यायः ॥ वानरादौ ॥ किरति कीर्यते ऽनेनवा। कृ०। वहुलमन्यत्रापीतिवृच्। कृत्यल्युटो बहुलमिति ल्युट्॥ करणकार्य्यम्। न। इन्द्रियाणाङ्कार्ये॥ आ

हरणादिक्रियाणां सकर्मकत्वात् किं कर्म कतिविधञ्चेत्यत आह ॥ कार्यञ्चतस्य दशधा हार्यं धार्यं प्रकाश्यञ्च । तस्य त्रयोदशविधस्य करणस्य दशधाकार्यम् । आहार्यम् धार्यम् प्रकाश्यञ्च । आहार्यं व्याप्यम् कर्मेन्द्रियाणां वचनादानविहरणोत्सर्गानन्दाः ज्ञानेन्द्रियाणां शब्दस्पर्शरूपरसगन्धमया यथास्वं व्याप्याः । ते च दिव्यादिव्यतया दशधा । एवंधार्यमपि अन्तःकरणत्रयस्य प्राणादिलक्षणया वृत्त्या शरीरम् तच्च पार्थिवादि पाञ्च भौतिकम् शब्दादीनां पञ्चानां समूहः पृथिवीति । तेच दिव्यादिव्यतया दशधेति धार्यमपि दशधा । एवं बुद्धीन्द्रियाणां प्रकाश्यं दशधेति शब्दादीनां पञ्चानां दिव्यादिव्यभेदात् । करणानाञ्च कार्यम् ॥

**करणत्राणम्** । न । मस्तके ॥

**करणव्यापारः** । पुं । करणानां व्यापारे ॥ कारकविशेषः करणम् । न च व्यापारावेशंविना कारकत्वमिति व्यापारमाह । तदाहरणधारणप्रकाशकरम् । तत्र कर्मेन्द्रियाणि वागादीनि आहरन्ति स्वस्वविषयं यथा स्वमुपादद्दते स्वव्यापारेण व्याप्नुवन्तीतियावत् । बुद्ध्यहङ्कारमनांसि तु स्ववृत्त्या प्राणादि लक्षणया धारयन्ति । बुद्धीन्द्रियाणि तु प्रकाशयन्ति ॥

**करणाधिपः** । पुं । जीवे । हृषीकेशे ॥ श्रोत्रादिचतुर्दशेन्द्रियाणामधिपा यथा । श्रोत्रस्य दिक् । त्वचोवातः । चक्षुषः सूर्यः । रसनायाः प्रचेताः । घ्राणस्याश्विनौ ॥ वाचो वह्निः । हस्तस्य इन्द्रः । पादस्य विष्णुः । पायो मित्रः । उपस्थस्य प्रजापतिः ॥ मनसश्चन्द्रः । बुद्धेस्तुर्मुखः । अहङ्कारस्य शङ्करः । चित्तस्याच्युत इति ॥

**करणाधिपाधिपः** । पुं । जीवस्येश्वरे ॥ करणाधिपस्य अधिपः ॥

**करणी** । स्त्री । वैश्याच्छूद्रायामुत्पन्नायाम् ॥ ल्युडन्तात् ङीप् ॥

**करणीयः** । त्रि । कर्त्तव्ये । कार्ये ॥ कृञोऽनीयर् ॥

**करण्डः** । पुं । मधुकोषे ॥ असौ । खड्गे ॥ कारण्डवे खगे ॥ दलाढके ॥ वंशादिरचिते भाण्डविशेषे । करंडी- करण्डी इतिचभाषा प्रसिद्धे पुष्पादिधारणार्थं भाण्डे ॥ समुद्गे । सम्पुटे ॥ करोति । कृञ्ण० । अण्डन्कृसृभृवृभ्यइत्यण्डन् ॥

**करण्डा** । स्त्री । वाजखण्डे । यकृति ॥

करपत्ती । पुं । मत्स्ये ॥ इत्यमरः ॥

करतलः । पुं । हस्ततले । हथेली इतिभाषा ॥ गर्वन्त ॥ ऽ चतुर्मोचे ॥

करतालम् । न । वाद्यविशेषे । खड़ताल इतिभाषा ॥ यथा । शिवागारे झल्लकञ्च सूर्यागारे च शङ्खकम् । दुर्गागारे वंशिवाद्यं मधुरीञ्च न वादयेत् ॥ झल्लकं कांस्यनिर्मितकरतालकमिति रघुनन्दनभट्टाचार्येण व्याख्या तम् ॥ पुं । टगणे । ।ऽ आदिगुरुत्रिकले ॥

करतालो । स्त्री । करतलध्वनौ ॥ तत्राच । यथा मल्लाटालीकपटकरतालीपटुरवः । इत्युद्भटः ॥ करतालच उताल इतिचभाषा प्रसिद्धे वाद्यविशेषे । करस्थाम् ॥

करतोयम् । न । वर्षोपलजले ॥

करतोया । स्त्री । कामरूपदेशप्रसिद्धनद्याम् । सदानीरायाम् ॥ कर्म्मनाशाजलस्पर्शात् करतोयाविलङ्घनात् । गण्डकीबाहुतरणाद्धर्मः क्षयतिकी र्त्तनात् ॥ गौरीविवाह समये शङ्करकरगलितसम्प्रदानतोयप्रभवत्वात् करस्य तोयम् तद्वत्ति । अर्शआद्यच् ॥ अपस्मृतिः । अवाह्वे कर्कटे देवी त्र्यहं गङ्गारजस्वला । सर्वारक्तवहानद्यः करतो

यांम्बुवाहिनीति ॥

करद्रीकृतः । त्रि । वशीकृते ॥ करम्भागं ददाति । डुदाञ्० । कः । ततः च्विः । अकरदः करदः सम्पद्यमानः कृतः करद्रीकृतः । अस्य च्वावितीत्वम् ॥

करद्रुमः । पुं । कारस्करवृक्षे ॥

करपत्रम् । न । क्रकचे । करवत करौत इतिचभाषा ॥ अम्बुक्रीडायाम् ॥ करेण कराद्वा पतति । पतॢ० । सर्वधातुभ्यः ष्ट्रन् ॥

करपत्रवान् । पुं । तालतरौ ॥ त्रि । करपत्रयुते ॥ करपत्रमस्यास्ति मतुप् ॥

करपत्रिका । स्त्री । अम्बुलीलायाम् ॥

करपर्णः । पुं । भिण्डीतिप्रसिद्धेफलशाकवृक्षे । भिण्डायाम् ॥ रक्तैरण्डे ॥

करपल्लवः । पुं । अङ्गुलौ ॥

करपात्रम् । न । }
करपात्रिका । स्त्री । } जलक्रीडायाम् ॥

करपालः । पुं । खड्गे ॥ करम्पालयति । पालरक्षणे । कर्मण्यण् ॥

करपालिका । स्त्री । ह्रस्वेगदाकारे हस्तदण्डे । सोंठाइतिप्रसिद्धे । इतिभरतः ॥ एकधाराखड्गे । इतिस्वामी ॥ ईल्याम् ॥ अगण्यानङीप् । कन् ॥

करपीडनम् । न । विवाहे ॥

करप्रचेयः । त्रि । पाणिग्राह्ये ॥ करेण

प्रभेयः ॥

करभः । पुं । मणिबन्धा द कनिष्ठे करस्य बहिर्भागे ॥ करिशावके ॥ उष्ट्रमुखे । बोताइतिभाषा ॥ उष्ट्रे ॥ नखनाम गन्धद्रव्ये ॥ कृणाति किरत्यनेन की र्यतेवा । कृविक्षेपे कृञ्‌हिंसायांवा । कृगृशृलिकलिगर्दिभ्योऽभच् ॥ करे भातिवा । भादीसौ । सुतिकः ॥

करभकाण्डिका । स्त्री । उष्ट्रकाण्डवीरु चे ॥

करभञ्जिका । स्त्री । उदकीर्ये । करञ्ज्याम् ॥

करभप्रिया । स्त्री । क्षुद्रदुरालभायाम् ॥

करभवल्लभः । पुं । कपित्थवृक्षे ॥ पीलुवृक्षे ॥

करभादनी । स्त्री । क्षुद्रदुरालभायाम् ॥

करभी । पुं । हस्तिनि ॥

करभी । स्त्री । उष्ट्रयोषायाम् । वाम्याम् ॥

करभीरः । पुं । सिंहे ॥ इतिशब्दरत्नावली ॥

करभूषणम् । न । कङ्कणे ॥ करंभूषयति । करो भूष्यतेऽनेनवा । भूषअलङ्कारे । ल्युट् ॥ हस्ताभरणमात्रे ॥

करभोरूः । स्त्री । उत्तमस्त्रीविशेषणे ॥ करभइव ऊरूयस्याःसा । ऊरूत्तरपदादौपम्येइत्यूङ् ॥

करमट्टः । पुं । गुवाकवृक्षे । तन्तुसारे ॥

करमरी । पुं । बंदुआइतिप्रसिद्धे । वन्दिनि ॥ इतित्रिकाण्डशेषः ॥

करमर्द्दः । पुं । करमर्द्दके । करौंदाइतिभाषा ॥ करंमृद्नाति । मृदक्षोदे । कर्मण्यण् ॥ लघुदीर्घफलाभ्यान्तु करमर्द्दद्वयं मतम् । करमर्द्दद्वयं स्वाम मम्लं गुरुतृषापहम् ॥ उष्णं रुचिकरं प्रोक्तं पित्तरक्तकफप्रदम् । तत्पक्वं मधुरं रुच्यं लघु पित्तसमीरजित् ॥

करमर्द्दकः । पुं । कृष्णपाकफले । करौंदाइतिभाषा । सुषेणे । अविग्ने ॥ करमर्द्दएव । स्वार्थेकन् ॥

करमर्द्दिका । स्त्री । वनकरमर्द्दके ॥ करमर्द्दोल्लघुफला सा ज्ञेया करमर्द्दिका ॥

करमर्द्दी । पुं । करञ्जवृक्षे ॥

करमर्द्दी । स्त्री । करमर्द्दकवृक्षे ॥

करमालः । पुं । स्तमाले । धूमे ॥ इतिहेमचन्द्रः ॥

करमाला । स्त्री । करपर्वरूपमालायाम् ॥

करमुक्तम् । न । बरछी भाला इतिभाषाप्रसिद्धे अस्त्रविशेषे ॥

करम्बः । त्रि । व्यामिश्रे । मिश्रिते ॥ करोति । डुकृञ् । कृकदिकडीभ्य म्बच् ॥

करम्बितः । त्रि । सम्पृक्ते । मिश्रिते ॥

करम्भः । पुं । दधिमिश्रितसक्तुषु ॥ केन जलेन रम्यते मिश्रीक्रियते । केन वायुना वा रभ्यते । रभिरनेकार्थः । अकर्त्तरिचेति घञ् । रभेरशब्लिटोरितिनुम् ॥

करम्भकम् । न । कर्कसारे । करम्भे ॥

करम्भा । स्त्री । प्रियङ्गौ ॥ शतावर्य्याम् ॥

करहः । पुं । नखे ॥ करेरोहति । रुहेरिगुपधेति कः ॥

करर्द्धिः । स्त्री । करताल्याम् ॥ करसम्पद्दि ॥ करस्य ऋद्धिः ।

करवालः । पुं । कृपाणे ॥ करंवलति । करेण वलति वा । वलप्राणने । कर्मण्यण् । ज्वलादिभ्योणो वा । यद्वा । वलनंवालः । वलवेष्टने । घञ् । करेवालोस्य करेण वल्यते वा । कर्मणि घञ् ॥

करवालिका । स्त्री । ईल्याम् । करपालिकायाम् ॥ करंवलते । वलहिंसादानयोः । अच् । करेण वाल्यते वा । णिजन्तादच्यइः । कन् ॥

करवी । स्त्री । हिङ्गुपत्रे ॥

करवीरः । पुं । कृपाणे । खड्गे ॥ दैत्यविशेषे ॥ ब्रह्मावर्त्ते दृषद्वतीनदीतीरे चन्द्रशेखरराजपुरे ॥ श्मशाने ॥ विषप्रभेदे । करवीरमूले ॥ कनेर इतिप्रसिद्धे वृक्षे । प्रतिहासे । हयमारके ॥ करवीरद्वयंतिक्तं कषायं कटुकञ्च तत् । व्रणलाघवकृन्नेत्रकोपकुष्ठव्रणापहम् ॥ वीर्योष्णं कृमिकण्डूघ्नं भक्षितं विषवन्मतम् ॥ रक्तश्वेतप्रभेदेन करवीरद्वयं मतम् ॥ करं वीरयति । वीरविक्रान्तौ । कर्मण्यण् ॥ न । अश्वपुष्पे ॥ करवीरस्य विकारो वा पुष्पम् । पुष्पमूलेषु बहुलमित्यणो लुक् ॥

करवीरकः । पुं । अर्जुनवृक्षे ॥ करवीरार्थे ॥

करवीरकन्दसंज्ञः । पुं । तैलकन्दे ॥

करवीरभूषा । स्त्री । आढक्याम् । अरहड इतिभाषा ॥

करवीरी । स्त्री । अदितौ । देवमातरि ॥ सद्गव्याम् । श्रेष्ठगव्याम् ॥ पुत्रवत्याम् ॥

करशाखा । स्त्री । अङ्गुलौ ॥ करस्यशाखाइव ।

करशीकरः । पुं । वमथौ । हस्तिशुण्डानिर्गतेजलकणे ॥ करस्यशीकरः ॥

करशूकः । पुं । नखे ॥ इतित्रिकाण्डशेषः ॥

करसूत्रम् । न । विवाहादौ मङ्गलार्थं मृणालादिमये हस्तसूत्रे ॥ ग्रामादौमणिबन्धसूत्रंतूपचारात् ॥

करहाट:। पुं। पद्मादिमूले। शिफाकन्दे॥ मदनद्रुमे॥ पञ्चापिण्डीतरौ॥ देशविशेषे॥ करंहाटयति। हटदीप्तौ। णयन्त:। कर्मण्यण्॥

करहाटक:। पुं। मदनपादपे। मयनफल इति भाषा॥ स्वार्थेकन्॥ न। हस्तसम्बन्धिस्वर्णे॥

कराट:। त्रि। विकटे। भयानके॥

करामर्द:। पुं। करमर्दे॥

काराम्बुक:। पुं। अविघ्ने। सुषेणे॥

काराम्लक:। पुं। करमर्दे॥

करायिका। स्त्री। कूटपूर्ण्याम्। करांकी इति गुकसल इतिच भाषा॥

करारोट:। पुं। अङ्गुरीयके॥

कराल:। पुं। गर्जनतैल इति गौडभाषाप्रसिद्धे सर्जरसयुक्ततैले। धूनतैले॥ भल्लाततैले॥ राक्षसविशेषे॥ दन्तरोगविशेषे। यथा। शनै: शनै: प्रकुरुते वायुर्दन्तसमाश्रित:। करालान् विकृतान् दन्तान् करालोन स सिध्यति॥ न। कृष्णकुठेरके। श्यामतुलसी इतिभाषा॥ बेसवारप्रभेदे॥ यथा। तप्तस्नेहे पचेत् पूर्वं वेसवारकसंज्ञकम्। पाकप्रापितशौरभ्यं करालं सूदके मतमिति॥ त्रि। दन्तुरे॥ तुङ्गे। उच्चे॥ विकृते। भीषणे॥ करेण लाति। ला॰। आतश्चोपसर्गे इति सुपीति योगविभागाद्वा क:॥ यद्वा। अलम्भूषणादौ। कर्मण्यण्॥

करालक:। पुं। करालार्थे॥

करालत्रिपुटा। स्त्री। काञ्चिकायाम्। लङ्काधान्ये॥

कराला। स्त्री। शारिवायाम्॥

करालास्य:। त्रि। दन्तुरवदने॥ करालं दन्तुरमास्यं यस्य॥

करालिक:। पुं। वृक्षे॥ इतिहेमचन्द्र:॥

करालित:। त्रि। भीषिते। पीडिते॥

कराली। स्त्री। वह्ने: सप्तजिह्वान्तर्गतजिह्वाविशेषे॥ देवीविशेषे॥ बह्वादिभ्यश्चेति पाक्षिको ङीष्॥

करास्फोट:। पुं। आस्फोटिते। वक्षस्यस्य बाहो द्वितीयहस्तेनताडने॥

करिक:। पुं। अरिमेदवृक्षे। विटखदिरे॥

करिकणावल्ली। स्त्री। चविकावृक्षे॥

करिका। स्त्री। नखव्रणे॥ करिका नखरेखिकेति वैजयन्ती॥

करिकुसुम्भ:। पुं। नागकेशरचूर्णके॥

करिगर्ज्जितम्। न। वृंहिते। हस्तिगर्ज्जने॥

करिणी। स्त्री। देवताभेदे॥ धेनुकायाम्। हस्तिन्याम्॥ इकन्ताध्रात् बाहुलको ङीप्॥

करिदारक: । पुं । सिंहे ॥

करी । पुं । हस्तिनि ॥ कर: शुण्डा अस्ति अस्य । इनि: ॥ लक्ष्मीकामो युद्धादन्यत्र करिवधं कुर्यात् इयंहि श्रीर्यत्करिण इतिचाक्षुष: ॥

करिनासिका । स्त्री । यन्त्रविशेषे ॥

करिपत्रम् । न । तालीशपत्रे ॥

करिपिप्पली । स्त्री । गजपिप्पल्याम् । चविकाफले ॥ करीवपिप्पली इव स्वात् ॥

करिपोत: । पुं । करिशावके ॥

करिबन्ध: । पुं । प्रारब्धौ । गजबन्धन स्तम्भे ॥ इतिहारावली ॥

करिमाचल: । पुं । सिंहे ।

करिमुख: । पुं । गणेशे । विनायके ॥ करिणोमुख मिवमुख मस्य ॥

करिरतम् । न । रतबन्धान्तरे ॥ भुगत स्तनभुजास्यमस्तका मुन्नतां स्वयम धोमुखीं स्त्रियम् । क्रामति स्वकर कृष्टमेहने वल्लभे करिरतंत दुच्यते ॥ करिपदमिति पाठान्तरम् ॥

करिशावक: । पुं । कलभे । हस्तिशिशौ ॥ करिण: शावक: ॥

करिष्ठ: । त्रि । अतिशयेन कर्त्तरि ॥ अतिशायने इष्ठन् । तुरिष्ठेमेयस्सु ॥

करिस्कन्ध: । पुं । करीणां समूहे ॥ न रकरितुरगाणांस्कन्धच् ॥ गजांसे ॥

करीर: । पुं । घटे ॥ ककरे । ग्रन्थिले । करील इतिभाषाप्रसिद्धे वृक्षे ॥ करीर: कटुकस्तिक्त: स्वेद्युष्णोभेदन: स्मृत: । दुर्नामकफवातामगरशोथव्रणापहृत् ॥ पुं । न । वंशाङ्कुरे ॥ कृणाति किरति कीर्यते वा । कृहिंसायाम् कृविक्षेपेवा । कृशॄपृकटीति ईरन् ॥ करिणमीरयति वा । ईर० । कर्मण्यण् ॥

करीरफलम् । न । कारीरे । टींटइति ख्याते ॥

करीरा । स्त्री । हस्तिदन्तमूले ॥ चीरिकायाम् । झिल्ल्याम् । झींगुर इतिभाषा । बनझींगर नींदराइति चख्याते कीटे ॥ अजाद्यतष्टाप् ॥

करीरिका । स्त्री । } दन्तिनान्दन्तमूले ॥
करीरी । स्त्री । } चीरिकायाम् ॥

करीष: । पुं । न । शुष्कगोमये । छगणे । छाणा करसी इतिभाषा ॥ कीर्यते । कृविक्षेपे । शॄपृभ्यामीषन् ॥

करीषङ्कषा । स्त्री । वात्यायाम् ॥ करीष ङ्कषति । कषहिंसायाम् । सर्वकूलाभ्रकरीषेषुकषइतिकषे:खच् । मुमागम: ॥

करीषाग्नि: । पुं । छागणे । गोमयानले ॥

करुण: । पुं । करणा नींबू इतिभाषाप्र

सिद्धे दृक्षविशेषे ॥ शृङ्गाराद्यष्टरसान्तर्गततृतीये रसे। इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत् ॥ बुद्धभेदे ॥ सर्वभूताभयदातरि परमहंसपरिव्राजके ॥ त्रि। दीने ॥ सदये। दुःखितेषु दया करुणा तद्वति ॥ अर्श आद्यच् ॥ करोति मनः। डुकृञ्। कृवृदारिभ्य उनन् ॥

करुणमल्ली। स्त्री। नवमल्लिकायाम् ॥

करुणविप्रलम्भः। पुं। पूर्वरागादिचतुर्भेदविप्रलम्भशृङ्गारमध्ये विप्रलम्भविशेषे ॥

करुणा। स्त्री। कृपायाम्। दयायाम्। परदुःखप्रहाणेच्छायाम् ॥ दुःखितेषु करुणा नामैषां दुःखनिवृत्तिः स्यादिति कृपामेव भावये नोपेक्षां न वाहर्षम् ॥ करणम्। कृवृदारिभ्य उनज्। टाप् ॥

करुणापरः। त्रि। दयालौ। करुणे ॥

करुणामयः। त्रि। कृपाप्राचुर्यवति ॥

करुणी। स्त्री। ग्रीष्मपुष्प्याम्। रक्तपुष्प्याम्। ककरखिरुणी इति कोकणभाषा ॥

करूषः। पुं। देशविशेषे ॥

करेटः। पुं। नखे ॥

करेटव्या। स्त्री। धनच्छूपक्षिणि ॥

करेटुः। पुं। स्त्री। कर्करेटौ। करकटिया इति गौडभाषाप्रसिद्धे विहगे ॥ के जले वायौ वा रेटति। रेटृभाषणे। मृ० कुः ॥

करेणुः। पुं। इभे। मतङ्गजे। गजे ॥ कर्णिकारवृक्षे ॥ स्त्री। हस्तिन्याम् ॥ करोति। कृञ्भ्यामेणुः ॥ के रेणुरस्येति वा ॥

करेणुभूः। पुं। पालकाप्यमुनौ ॥

करेणुसुतः। पुं। मुनिविशेषे ॥ इभशावके। कलभे ॥ करेणोः सुतः ॥

करेन्दुकः। पुं। भूतृणे ॥

करेवरः। पुं। तुरुष्के। सिल्हके ॥

करोटः। पुं, न। शिरोस्थनि ॥ कं वायुं रोटते। रुट०। अच् ॥

करोटिः। स्त्री। शिरोस्थि ॥ कं वायुं रोटते। रुटदीप्तौ प्रतिघाते च। केन रुध्यते वा। इन् ॥ रोटयति वा। कटिप्रभृत्यादिः। अच इः ॥

करोटिका। स्त्री। शिरोस्थि। कपाले ॥ करोटिरेव। स्वार्थे कन् ॥

करोटी। स्त्री। करोटौ ॥ ङीष् ॥

कर्कः। पुं। कर्कतने ॥ वह्नौ ॥ शुक्लाश्वे ॥ दर्पणे ॥ घटे ॥ चतुर्थराशौ ॥ कर्कटवृक्षे ॥ कुलीरे ॥ करोति कृणोति क्रियते वा। कृदाधारार्चिकलिभ्यः कः ॥

कर्कचिर्भिटी। स्त्री। चिर्भिटायाम्।

कर्कटीभेदे ॥

**कर्क्कटः** । पुं । वृक्षविशेषे । चुद्रामलकसञ्ज्ञे । कर्कफले ॥ पक्षिवि० । करेटौ ॥ जलजन्तुविशेषे । कुलीरे । काँकडा इतिभाषा ॥ मेषादिराश्यन्तर्गतचतुर्थराशौ ॥ जन्मकालीनचन्द्राश्रितैतद्राशिफलम् । श्रुतकला मलनिर्मलवृत्तयः सुकृशगन्धजलाशयकेलयः । किल नरास्तु कुलीरगते विधौ वसुमतः सुमतोऽर्थिलब्धयः ॥ कर्किलग्ने समुत्पन्नो भोगी सर्वजनप्रियः । मिष्टान्नपानभोगी च जायते स्वजनप्रियः ॥ वालुङ्क्याम् ॥ शाल्मलीफले ॥ स्त्रीणां करणे ॥ कृणाति । कृ हिं० । अन्येभ्योऽपीतिविच् । कटति । कटे० । पचाद्यच् । कर्चासौ कटश्च । अहरादित्वाद्रेफः ॥ कर्क इति सौत्रो धातुः । शकादिभ्योऽटन् वा ॥ कर्कं श्वेतवर्णं टलति । टलगतौ । डो वा ॥

**कर्क्कटकः** । पुं । इक्षुविशेषे ॥ कुलीरे ॥ कर्कटएव । स्वार्थे कन् ॥

**कर्क्कटशृङ्गिका** । स्त्री । } अजशृङ्ग्याम् ॥ महाघोषायाम् । कुलीरशृङ्ग्याम् । काँकडासींगी इतिख्यातायाम् ॥
**कर्क्कटशृङ्गी** । स्त्री । }

**कर्क्कटाख्या** । स्त्री । कर्कटशृङ्ग्याम् ॥

**कर्क्कटाधिपः** । पुं । चन्द्रे ॥

**कर्क्कटाह्वः** । पुं । विल्ववृक्षे ॥

**कर्क्कटाह्वा** । स्त्री । कर्कटशृङ्ग्याम् ॥

**कर्क्कटिः** । स्त्री । वालुङ्क्याम् । इर्वार्वौ ॥ शाल्मलीफले ॥ करङ्कटति । कटे० । सर्वधातुभ्य इन् । शकन्ध्वादिषु पररूपं वाच्यम् ॥

**कर्क्कटिनी** । स्त्री । दारुहरिद्रायाम् ॥

**कर्क्कटी** । स्त्री । एर्वारौ । वालुङ्क्याम् । ककडी इतिभाषा ॥ कर्कटी शीतला रूक्षा ग्राहिणी मधुरा गुरुः । रुच्या पित्तहरा सामा पक्वा मन्दाग्निपित्तकृत् ॥ अस्याः पाकप्रकारस्तु । त्वग्बीजरहिता प्रौढा गुलिकाकारखण्डिता । तलिता सुघृते तप्ते कर्कटीवाप्रलेहिता ॥ विपाण्डुखण्डं घृतदुग्धसाद्धं विभावितं वस्त्रजशर्कराभ्याम् । कृतैलवासञ्चकटुष्ण मेतत् प्रतिप्रचणं रोचनमातनोति ॥ शाल्मलीफले ॥ देवदालीलतायाम् ॥ कर्कटशृङ्गीवृक्षे ॥ घोटिकावृक्षे ॥ करङ्कटति । कटे० । इन् । पक्षेङीष् । शकन्ध्वादिः ॥

**कर्क्कटुः** । पुं । करेटुपक्षिणि ॥

**कर्क्कन्धूः** । पुं । स्त्री । कोलिपादपे । वदरीवृक्षे ॥ वदरीफले । वेर इति भाषा । कर्कन्धूः क्षुद्रवदरं कथितम्

पूर्बसूरिभिः। अम्लं स्यात् चुद्रबदरं कषायं मधुरं मनाक्। स्निग्धं गुरु च तिक्तञ्च वातपित्तापहं स्मृतम्। शुष्कं भेदग्निकृत् सर्वं लघुतृष्णाक्लमास्र जित्॥ दैत्यान्तरे॥ कर्कटकं दधाति। डुधाञ्॰। अन्दूदृम्भूजम्बिति निपातितः कू प्रत्ययान्तः। कर्कं दधाति वा। निपातनान्नुम्॥

कर्क्करः। पुं। दर्पणे। मुकुरे॥ न। चूर्णाजनकचुद्रपाषाणखण्डे। चूर्णखण्डे। कङ्कर काँकर इतिचभाषा॥ मङ्गरे॥ त्रि। कठिने। दृढे॥ कर्कनम्। कर्कहासे। घञ्। कर्कं राति। रा॰। आतोनुपेति कः॥

कर्क्कराङ्गः। पुं। कालकण्ठविहङ्गमे। खञ्जने॥

कर्क्कराटुः। पुं। कटाचे॥ इतिकश्चित् जटाधरः॥

कर्क्कराटुकः। पुं। कर्करेटुपचिणि॥

कर्क्करान्धुकः। पुं। अन्धकूपे॥

कर्क्करालः। पुं। चूर्णकुन्तले॥

कर्क्करिका। स्त्री। घर्षे। नेत्रखर्ज्वाम्॥

कर्क्करी। स्त्री। गलन्तिकायाम्। सनालजलपात्रे। झारी इति भाषा॥ कठिनायाम्॥ कन्दोष्टेतपक्वनिष्का सनेसाधने। झनो झारा इति च भाषा॥ गौरादित्वात् ङीष्॥



कर्क्करीका। स्त्री। गलन्तिकायाम्। कर्कर्याम्॥ फर्फरीकादित्वात् साधुः॥

कर्क्करेटम्। न। अर्द्धचन्द्रे। अङ्गुलितोरणे। गलेहस्ताधाने॥

कर्क्करेटुः। पुं। करेटो। करकठिया- इति गौडभाषा प्रसिद्ध खगे॥ कर्केतिरेटति। रेटृभाषणे। मृगय्वादिः॥

कर्क्कशः। पुं। काम्पिल्लवृचे॥ कासमर्दे॥ इचौ॥ खड्गे॥ त्रि। साहसिके॥ क्रूरे॥ दृढे॥ असमृणे। खरस्पर्शे। दुस्पर्शे॥ निर्दये॥ कृणोति। कृञ् हिंसायाम्। अन्येष्वपीतिविच्। कशति। कशशब्दे। पचाद्यच्। कर् चासौ कशश्च॥ यद्वा। करं कशति। कशः पचाद्यच्। अन्तर्भावितण्यर्थो वा॥ शकन्ध्वादिः। कर्कोन्मत्वर्थे लोमादित्वात् शोवा॥

कर्क्कशच्छदः। पुं। शाखोटवृचे॥ पटोले॥

कर्क्कशच्छदा। स्त्री। कोशातक्याम्। तोरञ्जी इतिभाषा॥ दग्धरुहायाम्॥

कर्क्कशदलः। पुं। पटोले॥

कर्क्कशदला। स्त्री। दग्धारुहे॥

कर्क्कशवाक्यम्। न। निष्ठुरवचने। परुषवाचि॥

कर्कशा । स्त्री । वृश्चिकालीवृक्षे ॥ क्रूरायाम् ॥

कर्कसारम् । न । करम्भे । दधिसक्तुषु ॥

कर्कारुः । पुं । कुष्माण्डे ॥ स्त्री । कुष्माण्ड्याम् ॥ कर्कारुग्राहिणी शीता रक्तपित्तहरा गुरुः । पक्वा तिक्ताग्निजननी सक्षारा कफवातनुत् ॥ कर्कं शुक्लवर्णम् ऋच्छति । ऋ गतौ । बाहुलकादुण् ॥

कर्कारुकः । पुं । कालिङ्गवृक्षे ॥

कर्कारूः । स्त्री । कुष्माण्ड्याम् ॥

कर्किः । पुं । कर्कटराशौ ॥

कर्की । पुं । कर्कटे ॥

कर्केतनः । पुं । न । रत्नविशेषे ॥ अस्योत्पत्त्यादिकमुक्तं गारुडे ७५ ध्याये । सूत उवाच । वायुर्नखान् दैत्यपतेर्गृहीत्वाक्षिप्त्वे पसम्यगयवनेषु हृष्टः । ततः प्रसूतं पवनोपपन्नं कर्केतनं पूज्यतमं पृथिव्याम् ॥ वर्णेन तद्रुधिरसोमसमधुप्रकाशमाताम्रपीतदहनोज्ज्वलितं विभाति । नीलं पुनः खलुसितं परुषं विभिन्नं व्याध्यादिदोषकरणेन न तद् विभाति ॥ स्निग्धा विशुद्धाः समरागिणश्च आपीतवर्णा गुरवो विचित्राः । त्रासव्रणव्याधि विवर्जिताश्च कर्केतनास्ते परमाः पवित्राः ॥ पत्रेण काञ्चनमयेन तु वेष्टयित्वा हस्ते गले ऽथ धृतमेतदति प्रकाशम् । रोगप्रणाशनकरं कलिनाशनञ्च आयुष्करं कुलकरञ्च सुखप्रदञ्च ॥ एवंविधं बहुगुणं मणिमावहन्ति कर्केतनं शुभमलङ्कृतये नरा ये । ते पूजिता बहुधना बहुबान्धवाश्च नित्योज्ज्वलाः प्रमुदिता अपि ते भवन्ति ॥ एके ऽपनह्यविकृताकुलनीलभासः प्रम्लानरागलुलिताः कलुषा विरूपाः । तेजोऽतिदीप्तिकुलपुष्टिविहीनवर्णाः कर्केतनस्य सदृशं वपुरुद्वहन्ति ॥ कर्केतनं यदि परीक्षितवर्णरूपं प्रत्ययप्रभा स्वरदिवा करसुप्रकाशम् । तस्योत्तमस्य मणिशास्त्रविदां महिम्ना तुल्यन्तु मूल्यमुदितं तुलितस्य कार्य्यमिति ॥

कर्कोटः । पुं । नागराजविशेषे ॥

कर्कोटकः । पुं । विल्ववृक्षे ॥ इक्षौ ॥ काँकरोल इति गौडभाषा प्रसिद्धे फललताविशेषे । किलासघ्ने । तिक्तपत्रे ॥ काद्रवेये । कर्कोटको नाम सर्पो येन दृष्टो विषउच्यते । तस्य सर्पस्य सर्पत्वं तस्मै सर्पनमोऽस्तु ते । इति स्मृति प्रसिद्धे नागराजे ॥ अपि च । कर्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनमिति ॥

कर्कोटकी । स्त्री । पीतघोषायाम् । महाजाल्याम् । खेखसा इति ख्याते फले ॥ कर्कोटकीफलं कुष्ठहृल्लासारुचिनाशनम् । श्वासकासज्वरान् हन्ति कटुपाकञ्च दीपनम् ॥ ईषच्छिन्नमरिचैःपरिपूर्णगर्भं तैलेन रन्धितमुसैन्धवपातयोगम् । वार्त्ताकयुक्तपयसा विहिताभिषेकं कर्कोटकीफलमिदं रुचिकृत्तकथ्यम् ॥

कर्कोटिका । स्त्री । ककोड़ा इतिभाषा प्रसिद्धे । कर्कोटके । कूष्माण्ड्याम् ॥

कर्कोटी । स्त्री । कर्कोटिकायाम् ॥

कर्चरिका । स्त्री । कचौरीतिख्याते पिष्टकप्रभेदे ॥ इतिपाकराजेश्वरः ॥

कर्चरी । स्त्री । कचरीतिख्यातेफले ॥ चीराम्लकृतसंस्कारा शुष्का स्नेहविपाचिता । अरोचकादिरोगाणां कर्चरी कष्टकर्त्तरी ॥ कर्चरी रुचिकृद्बल्या सुस्वादुरतिलेखनी । उष्णा पित्तकरी प्रोक्ता कफकृत् सारिका स्मृता ॥

कर्चूरः । पुं । कचूर इतिभाषा प्रसिद्धे गन्धसारे । द्राविडे ॥ कर्चूरो दीपनो रुच्यः कटुकस्तिक्त एवच । सुगन्धिः कटुपाकः स्यात् कुष्ठार्शोव्रणकासनुत् ॥ उष्णो लघुर्हरेच्छ्वासगुल्मवातकफक्रिमीन् ॥ [illegible] ॥

न । स्वर्णे ॥ कर्चति । कचबन्धने । खर्जूरादित्वादूरः । पृ० ॥

कर्चूरकः । पुं । द्राविडके । कचूर इति भाषा ॥ स्वार्थे कन् ॥

कर्णः । पुं । पृथायाज्येष्ठसुते । वसुषेणे । चम्पापतौ ॥ सुवर्णालिहच्चे ॥ श्रवणेन्द्रिये । श्रोत्रे ॥ गुरुयुगले ऽऽ ॥ अरित्रे ॥ कीर्यते शब्दग्रहणाय क्षिप्यते यद्वा कीर्यते शब्दोऽस्मिन् किरतिशरीरे सुखं वा । कृविक्षेपे । कृवृजृसीतिनन् । बाहुलकाद्गुणः ॥ यद्वा । कर्णयति । कर्णभेदने । अदन्तः । अच् ॥ यद्वा । करोति शब्दज्ञानम् । डुकृञ्० । कृवृइत्यादिना नन् ॥

कर्णकण्डुः । पुं । कर्णरोगविशेषे ॥ तन्निदानं यथा । मारुतः कफसंयुक्तः कर्णकण्डुं करोतिचेति ॥

कर्णकीटी । स्त्री । कर्णजलौकायाम् । शतपद्याम् । कानसलाई इतिभाषा ॥

कर्णक्ष्वेडः । पुं । कर्णरोगविशेषे ॥ वायुः पित्तादिभिर्युक्तो वेणुघोषसमं स्वनम् । करोतिकर्णयोः क्ष्वेडंकर्णक्ष्वेडः सउच्यते ॥ इति माधवः ॥

कर्णगूथम् । न । कर्णमले ॥ कर्णगूथकम् ॥

कर्णगूथकः । पुं । कर्णरोगविशेषे ॥ पित्तोष्मशोषितः श्लेष्मा जायते कर्णगूथकस्तस्य निदानम् ॥

कर्णचापः । पुं । कालपृष्ठाख्यधनुषि ॥ कर्णस्य राधेयस्य चापः ॥

कर्णजलौकाः । पुं । शतपद्याम् । गोजर कानखजूरा इतिभाषा ॥

कर्णजलौका । स्त्री । शतपद्याम् । चित्राङ्ग्याम् । कानसलाई इतिभाषा ॥

कर्णजाहम् । न । कर्णस्यमूले ॥ तस्य पाकमूलइत्यादिना जाहच् प्र० ॥

कर्णजित् । पुं । अर्जुने । गुडाकेशे ॥ कर्णं जयति । जि० । सत्सूद्विषेत्यादिनाक्विप् । तुक् ॥

कर्णदर्पणः । पुं । ताडङ्कनामनि कर्णभूषणे । कानतडङ्का इतिभाषा ॥

कर्णदुन्दुभिः । स्त्री । शतपद्याम् ॥

कर्णधारः । पुं । नाविके । काण्डारि इतिगौडभाषा । मल्लाह मांझी इतिभाषा ॥ कर्णमरित्रम् धरति । धृञ् ० । कर्मण्यण् ॥

कर्णपाली । स्त्री । कर्णभूषणे । कान्वाला वाली इत्यादिभाषा प्रसिद्धे ॥ कर्णपङ्क्तिप्रदेशयोः ॥

कर्णपिशाची । स्त्री । देवीविशेषे ॥

कर्णपूः । स्त्री । कर्णपुरे । चम्पायाम् ॥

कर्णपुरम् । न । चम्पानगर्याम् । मालिन्याम् ॥

कर्णपुष्पः । पुं । मोरटलतायाम् ॥

कर्णपूरः । पुं । शिरीषवृक्षे ॥ नीलोत्पले ॥ अवतंसे । कर्णाभरणे ॥ अशोकवृक्षे ॥ कर्णम्पूरयति । पूरी० । कर्मण्यण् ॥

कर्णपूरकः । पुं । कदम्बवृक्षे ॥ न । शिरीषे ॥ नीलोत्पले ॥ वतंसे ॥

कर्णप्रतिनाहः । पुं । कर्णरोगविशेषे ॥ तस्य सम्प्राप्तिरूपे यथा । सकर्णगूथो द्रवतां यदा गतो विलायितो घ्राणमुखम्प्रपद्यते । तदा स कर्णप्रतिनाहसंज्ञितो भवेद्विकारः शिरसोर्द्धभेद कृदिति ॥

कर्णफलः । पुं । कामखि माच् इति गौड प्रसिद्ध मत्स्यविशेषे ॥

कर्णभूषणम् । न । कर्णाभरणे ॥

कर्णमलम् । न । कर्णगूथे ॥

कर्णमुकुरः । पुं । ताटङ्कनाम्नि कर्णभूषणे ॥

कर्णमोटिका । स्त्री । } चामुण्डादेव्याम् ॥
कर्णमोटी । स्त्री । }

कर्णरोगः । पुं । श्रोत्रव्याधौ ॥

कर्णलतिका । स्त्री । पाल्याम् । कानकापत्ता इति भाषा इतिहेमचन्द्रः ॥

कर्णवंशः । पुं । मञ्चे ॥ इतिहारावली ॥

कर्णवर्जितः । पुं । सर्पे ॥ त्रि । बधिरे ॥

कर्णवेधः । पुं । कर्णषटकर्णदोषनिवारणार्थं कर्णयोर्वेधने ॥ षोडशभाक्तर्णा संस्काराणाञ्च पौर्वापर्यक्रमः । कर्णवेधस्याऽसंस्कारत्वात् न तथा नियमः । यथा । यदापत्यद्वयं तिष्ठेत् सम्भवोप्यपरस्य च । कर्णषटकं विजानीयाच्छिन्नं मम त्रयस्य च ॥ इत्याशङ्क्य तयो मध्ये शुद्धिर्यस्याथ वत्सरे । कर्णवेधोचितस्तस्य नान्यज्येष्ठविचारणा ॥ षटकर्णोत्पत्तिमाशङ्क्य भानोः शुद्ध्यासमेपि च । कर्णौ वेध्यौ न दोषः स्यादन्यथा मरणम्भवेत् ॥ इतिमार्कण्डः ॥

कर्णवेधनी । स्त्री । हस्तिकर्णवेधनास्त्रे । कर्णारायाम् ॥ इतित्रिकाण्डशेषः ॥

| | |
|---|---|
| कर्णवेष्टः । पुं ।<br>कर्णवेष्टकम् । न ।<br>कर्णवेष्टनम् । न । | कुण्डले ॥ कर्णस्य वेष्टनम् ॥ |

कर्णशष्कुली । स्त्री । वेष्टने । कर्णगोलके ॥ कर्णमध्यवर्त्याकाशे ॥

कर्णशूलः । पुं । कर्णरोगविशेषे ॥

कर्णसंस्रावः । पुं । कर्णरोगविशेषे ॥ तस्य निदानसम्प्राप्तिरूपाणि यथा । शिरोभिघातादथवा निमज्जतो जले प्रपाकादथवापि विद्रधेः । स्रवेद्धि पूयं श्रवणोऽनिलार्दितःसकर्णसंस्राव इति प्रकीर्त्तित इतिमाधवः ॥

कर्णस्फोटा । स्त्री । कानफाटा इतिगौड भाषा प्रसिद्धे लताविशेषे । कृष्णतण्डुलायाम् ॥

कर्णाटः । पुं । देशविशेषे ॥ यथा । रामनाथं समारभ्य श्रीरङ्गाख्यं विलेश्वरि । कर्णाटदेशो देवेशि साम्राज्यभोगदायकः ॥ इतिशक्तिसङ्गमतन्त्रम् ॥

कर्णाटी । स्त्री । रागिणीविशेषे । मालवरागस्य भार्य्याम् ॥ हंसपदीवृक्षे ॥

कर्णानुजः । पुं । युधिष्ठिरे नृपे । अजातशत्रौ । कर्णस्य अनुजः ॥

कर्णान्दुः । स्त्री । कर्णपाल्याम् । कानतडका इति भाषा ॥ उत्तब्धिनिकायाम् । कानकडा इतिगौडभाषा प्रसिद्धे कर्णाभरणविशेषे ॥

कर्णान्दूः । स्त्री । कर्णपाल्याम् ॥

कर्णाभरणकः । पुं । आरग्वधवृक्षे ॥

कर्णारा । स्त्री । नाल्याम् । कर्णवेधन्याम् ॥

कर्णारिः । पुं । अर्जुनपाण्डवे ॥ नदीसर्जवृक्षे ॥

कर्णास्फालः । पुं । करिणः कर्णचालने । भालमक्षणायाम् ॥

कर्णिः । पुं । कर्णाकारफलके वाणे ॥

कर्णिक: । त्रि । कर्णिले ॥ विवृद्धौक र्णौ यस्य । तुन्दादिषु स्वाङ्गाद्विवृद्धा विति ठक ॥

कर्णिका । स्त्री । करिहस्ताग्रे । पुष्करे ॥ करमध्या ङ्गुलौ ॥ कामुकादिस्तटाग्रे । बोँटा इतिगौड भाषा ॥ पद्म वराटे । बीजकोषे ॥ कर्णाभरण विशेषे । तालपत्रे । ढेठी इतिभा ॥ लेखन्याम् ॥ कुट्टन्याम् ॥ अग्नि मन्यवृक्षे ॥ अजशृङ्गीवृक्षे ॥ कर्ण स्या लङ्कार: कर्णभवो लङ्कारो वा । कर्णललाटादित्विकन ॥

कर्णिकाचल: । पुं ।
कर्णिकाद्रि: । पुं । } सुमेरुपर्वते ॥

कर्णिकार: । पुं । आरग्वधविशेषे । प्रग्र हे । कृतमालके । छोटा धनबहेडा इतिभाषा ॥ कर्णिकार: कटुस्तिक्त स्तुवर: शोधनो लघु: । रञ्जन: सु खद: शोथश्लेष्मास्रव्रणकुष्ठजित् ॥ द्रुमोत्पले । कणिआर इतिगौडभा षा ॥ कर्णिकाभिवर्णि । ऋगतौ । कर्मणयण ॥

कर्णिकारक: । पुं । द्रुमोत्पले ॥ कृत माले । सुवर्णके ॥ स्वार्थे क: ॥

कर्णिकी । पुं । हस्तिनि ॥ न । अम्बुजे ॥ कर्णिका अस्ति यस्य । ब्री० इनि: ॥

कर्णी । पुं । वर्षपर्वतसप्तकान्तर्गतपर्व तविशेषे ॥ आरग्वधे ॥ कर्णिके ॥ विवृद्धौकर्णौयस्य । तुन्दादिभ्यश्चेल श्चेति चकारादिनि: ॥

कर्णिल: । पुं । कर्णिनि । कर्णिके ॥ वि वृद्धौ कर्णौयस्य । तुन्दादित्वात् पक्षे इलच् ॥

कर्णीरथ: । पुं । स्कन्धवाह्ये याने । प्रव हणे । खर्खरिया चौपाला डोला पीनस पालकी तामयान इत्यादि भाषा प्रसिद्ध ॥ कर्णसाध्या प्रवण क्रिया उपचारात् कर्ण: । कर्णोऽस्या स्ति । इनि: । कर्णीचासौरथश्च । शब्दमात्रयोर्नवलतोरथ: ॥ य द्वा । सामीप्यात्कर्णशब्देन स्कन्धोल क्ष्यते । सोऽस्त्यस्य वाहकत्वेन । इनि: । कर्णीचासौरथश्च । अन्येषाम पीतिदीर्घ: ॥

कर्णीवान् । पुं । आरग्वधे ॥

कर्णीसुत: । पुं । कंसासुरे । मूलदेवे ॥

कर्णेजप: । त्रि । सूचके । पिशुने । दु र्जने । खले ॥ कर्णे जपति । जप० । स्तम्बकर्णयोरिच्छच । इलदन्ता दित्वलुक ॥

कर्णेन्दु: । पुं । उत्सविसिकायाम् । अर्ध चन्द्राकृतिकर्णा भरणे ॥ कर्णपाल्या म् ॥

कर्णेजम् । त्रि । कर्णजिते ॥ कर्णेपरिजित

त्वाभूतकार्योऽहङ्कारोऽन्तःकरणंबुद्धिविज्ञानमित्याद्विपर्यायशब्दवाच्यस्तत्तादात्म्याध्यासेनात्मनि कर्तृत्वादिधर्माध्यारोपहेतुः अनात्मा भौतिको मायाकल्पितश्च सः ॥ क्रियाश्रये । इतरकारकाप्रयोज्यत्वेसति सकलकारकाणां प्रयोक्तरि क्रियायाः निर्वर्त्तके चिदचिद्ग्रन्थिरूपे फलकामनावति पुरुषे ॥ सच सात्त्विकादिभेदात् त्रिविधउक्तो भगवता । तत्र सात्त्विको यथा । मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः । सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्तासात्त्विकउच्यते इति ॥ राजसोयथा । रागी कर्मफलप्रेप्सुर्लुब्धोहिंसात्मकोऽशुचिः । हर्षशोकान्वितः कर्त्ता राजसः परिकीर्त्तितः इति ॥ तामसोयथा । अयुक्तः प्राकृतः स्तब्धः शठोनैकृतिकोलसः । विषादी दीर्घसूत्रीच कर्त्ता तामसउच्यते इति ॥ अन्तः करणोपहिते चिदाभासे ॥ करणोपहितस्यकर्तृत्वात् ॥ करोति । डुकृञ्० । तृच् तृन्‌वा ॥

कर्त्तृका । स्त्री । क्षुद्रखङ्गे ॥

कर्त्तृत्वम् । न । कर्त्तृधर्मे ॥ भावेकर्मणिवा त्वः ॥

कर्त्त्री । स्त्री । कारिकायाम् ॥ करोति । डुकृञ्० । गवुल्तृचाविति तृच् । ऋन्नेभ्योङीप् ॥ छुरिकायाम् ॥

कर्दः । पुं । कर्दमे ॥ कर्दति । कर्दकुत्सिते शब्दे । पचाद्यच् ॥

कर्दटः । पुं । करहाटे ॥ पङ्के ॥ पङ्कारे ॥

कर्दनम् । न । कुक्षिशब्दे ॥

कर्दमः । पुं । ब्रह्मणश्छायाया मुत्पन्ने प्रजापतिविशेषे । कपिलमुनेर्जनके ॥ पापे ॥ पङ्के । कीचकादा इतिभाषा ॥ न । मांसे ॥ कर्दति । कर्द० । कलिकर्दिभ्योऽमः ॥ त्रि । कर्दमवति ॥ अर्श० अच् ॥

कर्दमकः । पुं । शालिविशेषे ॥

कर्दमाटकः । पुं । विष्ठादिनिक्षेपस्थाने । उल्लाव इ०भा० ॥ इतिशब्दरत्नावली ॥

कर्दमी । स्त्री । मुद्गरे । मोगरा इति भाषाप्रसिद्धे पुष्पे ॥ इतिवैद्यकम् ॥

कर्पटः । पुं । न । लक्तके । जीर्णवस्त्रे । लत्ता इतिभाषा ॥ प्रस्वेदादिमार्जनार्थं हस्तस्थवस्त्रखण्डे । द्रवद्रव्यं येन पूयते तत्रहस्ते लक्तककर्पटशब्दौ तत्तुल्येवस्त्रेपिवर्त्तेते इति स्वामी । मुकुटस्तु मलिनत्वादिदुष्टजीर्णवस्त्रखण्डेवर्त्तेते इत्याह ॥ किरति कृणाति वा । कृविक्षेपे कृहिंसायां वा । करोति वा । विच् । करश्चासौपटश्च ॥ यद्वा । करस्यपटः । शकन्ध्वादिः ॥

पर्वतविशेषे॥

कर्पटधारी। त्रि। मलि . जीर्णवस्त्रधारिणि भिक्षुके॥

कर्पटिकः। त्रि। कर्पटान्विते। कर्पटधारिणि॥

कर्पटी। त्रि। कर्पटान्विते॥ म० इनिः॥

कर्परः। पुं। मृद्भाण्डेऽरिष्म। कपाले। खोपरी इति भाषा॥ शस्त्रविशेषे॥ कटाहे॥ कल्पते। कृपसामर्थ्ये। वाहुलकादरो लत्वाभावश्च॥

कर्परांशः। पुं। भग्नकपालखण्डे॥

कर्परालः। पुं। अक्षोटे। कन्दराले॥ कर्परम् अलति। अलभू०। कर्मण्यण्॥

कर्परिकातुत्थम्। न। तुत्थविशेषे। कर्परीयम्॥ गुडूचीयोगजाञ्जने॥

कर्परी। स्त्री। दार्विकायाम्। क्वाथोद्भवतुत्थे। दारुहरिद्रायाः क्वाथस्य तुत्थे। आवर्त्तननिष्पन्ने कृत्रिमरसाञ्जने। कल्पते। कृप०। वाहुलकादट् लत्वाभावश्च। टित्वान् ङीप्॥

कर्परीतुत्थकम्। न। रसके। खपरिया थोथा इति ख्याते॥ कर्परीतुत्थकं तुत्थादन्यत् तद्रसकं स्मृतम्। ये गुणास्तुत्थके प्रोक्तास्ते गुणा रसके स्मृताः॥

कर्पासः। पुं। न। तुण्डिकेर्याम्। वस्त्रयोनौ॥ क्रियते। डुकृञ्०। कृञः पासः॥

कर्पासफलम्। न। कार्पासे। विनौला इति भाषा॥ कर्पासफलमित्युक्तं कषायं मधुरं गुरु। वातश्लेष्महरं रुच्यं विशेषेणास्थिवर्जितम्॥

कर्पासी। स्त्री। कार्पास्याम्। कपासका वृक्ष इति भाषा॥ कर्पासात् जातित्वात् गौरादित्वाद्वा ङीष्॥

कर्पूरः। पुं। न। घनसारे। चन्द्रसंज्ञे। सिताभ्रे। कपूर इति भाषा॥ कर्पूरः शीतलो वृष्यश्चक्षुष्यो लेखनो लघुः। सुरभिर्मधुरस्तिक्तः कफपित्तविषापहः॥ दाहतृष्णास्यवैरस्यमेदोदौर्गन्ध्यनाशनः॥ कर्पूरो द्विविधः प्रोक्तः पक्वापक्वप्रभेदतः। पक्वात् कर्पूरतः प्राहुरपक्वं गुणवत्तरम्॥ अपिच। कर्पूरो नूतनस्तिक्तः स्निग्धश्चोष्णास्त्रदाहदः। चिरस्थो दाहशोषघ्नः स शीतः शमकृत् परः॥ पोतासभीमसेनाद्यो ऽस्य भेदाः प्रसन्ति। तेचर्भोससे तहुभ्याः। किरति क्रमाति वा। करति करोति वा। कृविक्षेपे हिंसायां वा। कृञ० डुकृञ० वा। विच्। पृषोदरादित्वात्। पृषो०। इगुपधेति कः। कस्याम्रो पश्च॥ यद्वा। कल्पते। कृप०। ख० ऊरः। वाहुलकाल्लत्वाभा-

वो वा ॥

कर्पूरकः । पुं । कर्पूरे ॥ कर्च्चूरके । कर्चूरके ॥

कर्पूरतिलका । स्त्री । उमायाः सखीभेदे । जयायाम् ॥

कर्पूरतैलम् । न । कर्पूरस्नेहे । हिमतैले ॥

कर्पूरनालिका । स्त्री । कपूरनारीति ख्याते पक्वान्नविशेषे ॥ यथा । घृताढ्यया समितया कृत्वा लम्बपुटं ततः । लवङ्गोषणकर्पूरयुतया सितया-न्वितम् ॥ पचेदाज्येन सिद्धैषा ज्ञेया कर्पूरनालिका । संयावसदृशी ज्ञेया गुणैः कर्पूरनालिका ॥

कर्पूरमणिः । पुं । पाषाणप्रभेदे । कर्पूराश्मनि ॥ कर्पूरमणिनामायं युक्त्या वातादिदोषनुत् ॥

कर्पूररसः । पुं । रसकर्पूरे ॥

कर्पूरहरिद्रा । स्त्री । कपूरहलदीति ख्यातायाम् । सर्वकण्डूविनाशिन्याम् ॥

कर्पूराश्मा । पुं । उपरत्नविशेषे । कपूरचीनियेति ख्याते ॥

कर्फरः । पुं । दर्पणे ॥ इतिजटाधरः ॥

कर्बरः । पुं । व्याघ्रे ॥ रक्षसि ॥ कृणाति । कृन्हिं० । कृगॄशॄवृञ्चतिभ्यः ष्वरच् ॥

कर्ब्बरी । स्त्री । शिवायाम् ॥ षित्त्वान् ङीष् ॥

कर्ब्बुदारः । पुं । कोविदारे ॥ नीलझिण्टाम् ॥ श्वेतकाञ्चने ॥

कर्बुदारकः । पुं । श्लेष्मातकवृक्षे ॥

कर्बुरः । पुं । पापे ॥ राक्षसे ॥ नानावर्णे । चित्रे । किर्म्मीरे ॥ नदीनिष्पावधान्ये ॥ न । जले ॥ काञ्चने ॥ धुस्तूरवृक्षे ॥ त्रि । चित्रवर्णवति ॥ कर्बति । कर्बहिं० । कर्बत्यनेन वा । कर्बगतौ वा । ओष्ठ्योपधः । मद्गुरादयश्चेति उरच् ॥ कर्बुरोवर्णेन वा । बवयोरभेदादन्तस्थ मध्योपि ॥

कर्बुरफलः । पुं । साकुरुण्डवृक्षे ॥

कर्बुरा । स्त्री । कृष्णवृन्तायाम् । पारुल इति गौड भाषाप्रसिद्धे वृक्षे ॥ वर्वरायाम् । वाबुइतुलसी इति गौड भाषा ॥ उरजन्ता टाप् ॥

कर्बुरी । स्त्री । दुर्गायाम् ॥ इतित्रिकाण्डशेषः ॥

कर्बूरः । पुं । शट्याम् ॥ द्राविडके । कर्चूरः ॥ कोहलदी इतिभाषा ॥ राक्षसे ॥ न । स्वर्णे ॥ हरिताले ॥ त्रि । चित्रिते ॥ कर्बति । कर्बगतौ । खर्जादित्वादूरः ॥

कर्बूरकः । पुं । कर्बूरार्थे ॥ स्वार्थेकः ॥

कर्म्मकरः । पुं । कीनाशे । यमे ॥ त्रि ।

भृत्ये ॥ वेतनाजीविनि । भरण्यभु जि । मूल्येन कर्मकुर्वति । कमेरा इति भाषा ॥ कर्म करोति । कृञ्० । कर्मणिभृताविति टः ॥

कर्म्मकरी । स्त्री । मूर्वालतायाम् ॥ विम्बिकालतायाम् ॥ मूल्येन कर्मकुर्वन्त्याम् । दास्याम् ॥ टित्वान् ङीप्॥

कर्म्मकर्त्ता । पुं । कर्मात्मककर्त्तरि ॥ यथा । क्रियमाणन्तुयत् कर्म स्वयमेव प्रसिध्यति । सुकरैः स्वैर्गुणैः कर्त्तुः कर्मकर्त्तेति तद्विदुरिति ॥ त्रि । कर्मणः कर्त्तरि ॥

कर्म्मकाण्डः । पुं । यावज्जीवमग्निहोत्रं जुहुयादित्यादिरूपेण चित्तशोधके कर्मप्रतिपादके वेदभागे ॥ संसारफलके ज्योतिष्टोमादिकर्मकलापे ॥ कर्मणांसमूहः । दूर्वादिभ्यः काण्डः ॥

कर्म्मकारः । पुं । वर्णसङ्करजातिविशेषे । लोहकारे । लुहार इतिभाषा ॥ गोपालात तन्त्रवाय्यां वै कर्मकारोबभूव सुतः । ब्रह्मवैवर्त्ते तु शूद्रायां विश्वकर्मणोजातइत्युक्तम् ॥ वृषे ॥ त्रि । भृतिंविना भारवहनादिकर्म्मकारके । वेगारी इतिभाषा ॥ कर्म करोति । कर्मण्यण् ॥

कर्म्मकीलकः । पुं । रजके ॥ इतित्रिका ण्डशेषः ॥

कर्म्मक्षमः । पुं । अलङ्कर्मीणे । कर्म करणसमर्थे ॥ कर्मसु क्षमः । सप्तमीतियोगविभागात् समासः ॥

कर्म्मक्षेत्रम् । न । भारतवर्षे ॥

कर्म्मचोदना । स्त्री । कर्मविषयायां प्रेरणायाम् ॥ कर्म क्रिया पुरुषव्यापाररूपाऽर्थभावना तद्विषयाचोदना प्रेरणा विधिरूपा शाब्दीभावनेत्यर्थः ॥

कर्म्मजः । पुं । कलियुगे ॥ स्वर्गादौ ॥ अदृष्टे ॥ वटद्रुमे ॥ त्रि । कर्मसम्भवे । कायिकवाचिकमानसकर्मोद्भवे ॥ कर्मणोजातः । जनी० । पञ्चम्यामजाताविति डः ॥

कर्म्मजगुणः । पुं । क्रियाजन्यगुणे ॥ स च संयोगः । विभागः । वेगः । इति भाषापरिच्छेदः ॥

कर्म्मठः । त्रि । कर्मशूरे । प्रयत्नेन प्रारब्धं कर्मसमापयति यः सतथोच्यते ॥ कर्मकुशले ॥ कर्मणि घटते । कर्मणिघटोऽठच् ॥

कर्म्मण्यः । त्रि । कर्मयोग्ये ॥ कर्मणि प्रवीणे ॥ कर्मणि साधुः । तत्रसाधुरितियत् ॥

कर्म्मण्यभुक् । त्रि । भरण्यभुजि । कर्मकारे । वेतनोपजीविनि ॥ कर्मण्यं वेतनं भुङ्क्ते । भुज० । क्विप ॥

कर्मण्या । स्त्री । वेतने । मूल्ये ॥ कर्मणा सम्पद्यते । कर्मवेशाद्यत् ॥ कर्मणि साधुर्वा । तत्रसाधुरित्तियत् ॥

कर्म्मदेवः । पुं । यज्ञेन स्वर्गं प्राप्ते ॥ यथा । ज्योतिष्टोमादिना स्वर्गम्प्राप्ताःस्युःकर्मदेवताःइति॥अदित्याहुः । अस्मिन्कल्पेऽश्वमेधादिकर्म कृत्वा महत् पदम् । अवाप्याजानदेवैर्याः पूज्यास्ताःकर्मदेवताः इति ॥

कर्म्मधारयः । पुं । समानाधिकरणे तत् पुरुषे ॥

कर्म्म । न । क्रियायाम् । देहेन्द्रियादिव्यापारे ॥ संयोगवियोगयोरसमवायिकारणजातीयकर्मेति लक्षिता क्रिया । उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्चकर्माणिभवन्ति । नित्यनैमित्तिककाम्यप्रायश्चित्तप्रतिषिद्धभेदाच्चापिपञ्चविधं भवति । तत्रचत्वारिधर्म्याणिअन्त्यमधर्म्यमितिनिश्चयः ॥ निष्फलं क्लेशबहुलं सन्दिग्धफलमेवच । न कर्मकुर्ण्मतिमान् सदा वैरानुबन्धिच ॥ सञ्चितक्रियमाणप्रारब्धभेदात् कर्मत्रिविधं भवति ॥ कायिकवाचिकमानसिकभेदात् पुनस्तत् त्रिविधं भवति ॥ विधिप्रतिषेधलक्षणं शास्त्रप्रसिद्धं कर्म । तत्र नित्यनैमित्तिकप्रायश्चित्तभेदात् त्रिविधम्भवति ॥ यागदानहोमात्मके वेदविहिते ॥ भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः । भूतानां भवनधर्माणां सर्वेषां स्थावरजङ्गमानां भावमुत्पत्तिम् उद्भवं वृद्धिञ्च करोति यो विसर्गस्त्यागः तत्तच्छास्त्रविहितो यागदानहोमात्मकः सएव कर्म संज्ञितः ॥ सात्त्विकादिभेदात् पुनस्तत्त्रिविधम् । तत्रसात्त्विकं यथा । नियतं सङ्गरहितमरागद्वेषतः कृतम् । अफलप्रेप्सुना कर्म यत् तत् सात्त्विकमुच्यते ॥ राजसं यथा । यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः । क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ तामसं यथा । अनुबन्धं क्षयं हिंसा मनपेक्ष्यच पौरुषम् । मोहादारभ्यते कर्म यत् तत् तामसमुच्यते ॥ तत्तद्वर्णाश्रमाभिमानानिमित्ते ऽदृष्टजनकः शास्त्रविहितक्रियाकलापे नित्यनैमित्तिक- काम्यात्मके ॥ शुक्लं कृष्णं शुक्लकृष्णञ्चेति त्रिविधभेदभिन्ने ॥ तच्चत्रिविधं जन्मप्रयच्छति । तदाहुर्विश्वरूपाचार्याः । शुभैराप्नोति देवत्वं निषिद्धैर्नारकीं गतिम् । उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभते ऽवशः ।

इति ॥ क्रियते तत्तत्फलार्थिभिरि
ति कर्म्म । तस्य चानादित्वम् आद्य
कोटेरनुपलभ्यमानत्वात् । यतः
शरीरवतः कर्म्मकरणम् तच्च शरीरं
कर्म्मारब्धम् । तान्यपि शरीरान्तरेण
कृतानि । तच्च कर्म्मधर्म्ममिति सोयं तृ
तीयः पादः ॥ जन्मनिमित्ते अदृष्ट
विशेषे ॥ उक्तमत्र वार्त्तिककारैः ।
सकर्म्मकारणं मुक्ते र्नास्मिन्नापलभे
षजम् । कर्म्मभ्योजन्म नियतं जन्म
चेन्निर्वृतिः कुतः । इति ॥ वासना
कर्म्म विद्या च त्रयं जन्मप्रयोजकम् ।
उक्तं तत्र प्रधानत्वं कर्म्मणः श्रूयते
पुनः ॥ उत्तमाधमदेहाख्यं वैषम्यं
कर्म्मणा भवेत् । देहे विद्यावासना
भ्यां भवेद्भोगस्य कौशलम् ॥ कर्म्म
साध्वेव कर्त्तव्यमिच्छताभ्युदयांश्चि
रम् । पापन्तु सर्व्वदा ह्येवं दुःखेभ्यस्त्व
स्यताभृशम् ॥ पूर्व्वकाण्डपरा इत्थं
कर्म्मप्राधान्यमूचिरे । अथ वेदान्तशा
स्त्रज्ञाः प्राहुः कामप्रधानताम् ॥ पु
मानादौ काममय एवभूत्वाथ कर्म्म
कृत् । यतोयं कर्म्मणो हेतुः कामो
तोस्य प्रधानता ॥ अकामस्य क्रिया
काचिद्दृश्यते नेह कर्हिचित् । यद्य
द्धि कुरुते जन्तु स्तत्तत्कामस्य चेष्टि
तम् ॥ यथाद्विरूपं नित्यं काम्यविधा



। संस्कारकं विविदिषाजनकञ्च । त
त्र विहितत्वमात्रबुद्ध्या क्रियमाणं
संस्कारकम् । ईश्वरार्पणबुद्ध्या क्रि
यमाणं विविदिषाजनकम् । यत्क
रोषीत्यादि भगवद्वचनादितिवि
वेकः ॥ षट्कारकान्तर्गतकारकवि
शेषे ॥ अत्र द्वितीया विभक्तिर्भवति
। उक्ते कर्म्मणि प्रथमा भवति । धातू
पात्तव्यापारजन्यफलाश्रयं कर्म्मेति त
ल्लक्षणम् । यत् क्रियते फलार्थि
भि स्तत् कर्म्मेति प्रसिद्धम् । करो
तेर्निखिलक्रियावाचकत्वात् कर्त्तु
र्व्यापारैर्यत् साध्यते तदित्यर्थः । अ
तएव क्रियाव्याप्यं कर्म्मेति क्रमदीश्वरः
। तच्चतुर्व्विधम् । निर्व्वर्त्त्यम् १ यथा
घटं करोति पुत्रं प्रसूते ॥ विकार्य्य
म् २ तच्च द्विविधम् । प्रकृतेरुच्छेद
कम् प्रकृतेर्गुणान्तराधायकञ्च । आ
द्यं यथा काष्ठं भस्म करोति । अन्त्यं
यथा । सुवर्णं कुण्डलं करोति । त
थाचोक्तं भर्त्तृहरिणा । यदसज्जायते
पूर्व्वं जन्मना यत् प्रकाशते । तन्निर्व्व
र्त्त्यं विकार्य्यञ्च कर्म्म द्वेधा व्यवस्थित
म् ॥ प्रकृत्युच्छेदसम्भूतं विकार्य्यं का
ष्ठभस्मवत् । अन्यद्गुणान्तरोत्पत्त्या
सुवर्णादिविकारवत् ॥ प्राप्यम् ३ य
था ग्रामङ्गच्छति चन्द्रम् पश्यती

त्यादि ॥ अनीप्सितञ्च ४ यथा पापं त्यजती त्यादि ॥ सम्माहयमभवने ॥ ज्ञानसाधनविशेषे ॥ यथाहुः । कषायपक्तिःकर्माणि ज्ञानन्तुपरमा गतिः । कषाये कर्मभिः पक्के ततो ज्ञानंप्रवर्त्तते इति ॥ क्रियते फलार्थिभिः । डुकृञ्० । कृञः भावे कर्मणिच सर्वधातुभ्योमनिन इतिमनिन् ॥ अर्द्धर्चादिः ॥ आरभेतैव कर्माणि श्रान्तः श्रान्तः पुनः पुनः । कर्माण्यारभमाणं हि पुरुषं श्रीर्निषेवते ॥

कर्म्मन्दी । पुं । भिक्षौ । परिव्राजि ॥ कर्मन्देन प्रोक्तम् भिक्षुसूत्र मधीते । कर्मन्दकृशाश्वादिनिः ॥

कर्म्मफलम् । न । कमरङ्गफले ॥ कर्मविपाके ॥ संसारे ॥ सर्वकर्म्मणाम् फलं व्याकृतसंसार एवेति भाष्योक्तेः ॥ कर्मणः फलम् ॥

कर्म्मफलप्रेप्सुः । त्रि । कर्मफलार्थिनि ॥

कर्म्मफलासङ्गः । त्रि । कर्मणि फलेच आसङ्गः कर्त्तृत्वाभिमानो भोगाभिलाषश्च यस्य तस्मिन् ॥

कर्म्मभूः । स्त्री । आर्य्यावर्त्ते ॥ कृष्टभूमौ । कर्म्मान्ते ॥

कर्म्मभूमिः । स्त्री । आर्य्यावर्त्ते । पुण्यभूमौ ॥ अथकालिकयायुद्धा दूरेति स्थ इति भिभेदीः । सर्वभयात्म पर्य्यन्ति कर्मभूमिमचेतसः ॥ कर्मणो भूमिः ॥ भारतवर्षे ॥ यथा । तत्रापि भारतं श्रेष्ठं जम्बुद्वीपे महामुने । यतोहिकर्मभूरेषा अतोऽन्या भोगभूमय इतिविष्णुपुराणम् ॥

कर्म्ममीमांसा । स्त्री । पूर्वमीमांसायाम् । कर्मकाण्डवेदविचारग्रन्थे जैमिनिप्रणीते ॥

कर्म्ममूलम् । न । कुशे । दर्भे ॥ कर्मणो हेतौ ॥ कर्मणो मूलम् ॥

कर्म्मयुगम् । न । कलियुगे ॥ इतित्रिकाण्डशेषः ॥

कर्म्मयोगः । पुं । ईश्वरार्पणबुद्ध्या क्रियमाणे फलाभिसन्धिरहिते तत्तद्वर्णाश्रमोचिते वेदविहिते कर्मकलापे मन्दानां ज्ञानसाधन भूते ॥ चित्तशुद्धिजनके वैदिके कर्मणि ॥

कर्म्मरङ्गः । पुं । न । कमरख इति प्रसिद्धे फलवृक्षे । पीतफले । कर्मारे । त्र्युजे ॥ कर्मरङ्गं हिमं ग्राहिस्वाद्वम्लं कफ वातहृत ॥

कर्म्मरी । स्त्री । वंशरोचनायाम् ॥

कर्म्मवज्रः । पुं । शूद्रे ॥ इतिमहाभारतम् ॥

कर्म्मवाटी । स्त्री । तिथौ ॥

कर्म्मविपाकः । पुं । कर्मजन्यफलपरिपाके ॥ कालान्तरभुगमरनोऽपि [illegible]

रोगप्रायश्चित्तानां विवरणग्रन्थे ॥

**कर्म्मव्यतिहारः** । पुं । क्रियाविनिमये ॥ परस्परकरणे ॥

**कर्म्मशीलः** । त्रि । कार्म्मे । कर्मकृति ॥ कर्मशीलं यस्य ॥

**कर्म्मशूरः** । त्रि । कर्मठे । प्रयत्नेन प्रारब्धकर्मपरिसमापके ॥ फलपर्यन्तकर्मकर्त्तरि ॥ कर्मणिशूरः सप्तमीसमासः ॥

**कर्म्मशेषः** । त्रि । उत्पाद्यविकार्य्याप्यसंस्कार्येषु पुरोडाशसोममन्त्रव्रीह्यादिषु ॥

**कर्म्मसङ्गः** । पुं । कर्मसु दृष्टादृष्टार्थेषु अहमिदङ्करोमि एतत् फलम्भोक्ष्ये इत्यभिनिवेशविशेषे ॥

**कर्म्मसङ्गी** । त्रि । श्रुतिस्मृतिविहितप्रतिषिद्धकर्मफलाधिकारिणि । कर्तृत्वाभिमानेन फलाभिसन्धिना च कर्मण्यभिनिविष्टे ॥

**कर्म्मसङ्ग्रहः** । पुं । कर्मसङ्गृह्यते समवैत्यनेनेति व्युत्पत्त्या कर्माश्रये ॥ कर्मणः पुंव्यापाररूपस्य अर्थभावनायाः सङ्ग्रहे सङ्क्षेपे ॥

**कर्म्मसचिवः** । पुं । कर्मोपयुक्तसचिवे । धीसचिवातिरिक्ते मन्त्रिविशेषे ॥ कर्मणि सचिवः सहायः ॥

**कर्म्मसन्न्यासिकः** । पुं । यतौ । सन्न्यासिनि ॥

**कर्म्मसन्न्यासी** । पुं । यतौ ॥ द्विविधः कर्मसन्न्यासः फलसाधनभेदतः । फलाय चाग्निनस्त्यागो जिज्ञासोर्ज्ञानसिद्धये ॥ फलवत् कर्मणोपि स्यात्त्याज्यत्वे कर्मण्येवाधिकारस्ते इत्यादिस्मृतिविरोध इत्याशङ्क्य तस्याविरक्तविषयत्वान्नैवमित्याह । अविशुद्धधियः कर्मण्यधिकारो विशुद्धधीः । सत्यां विविदिषोत्पत्तौ तदर्थं कर्म सन्त्यजेत् ॥ तदर्थं शुद्ध्यर्थम् ॥ कर्मणः सन्न्यासः कर्मसन्न्यासः । सोऽस्यास्ति । इनिः ॥ कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥

**कर्म्मसाक्षी** । पुं । सूर्य्ये ॥ सूर्यादिनवसु ॥ सूर्यः सोमो यमः कालो महाभूतानि पञ्च च । एते शुभाशुभस्येह कर्मणो नव साक्षिणः ॥ कर्मणः साक्षी ॥

**कर्म्मसिद्धिः** । स्त्री । इष्टानिष्टलक्षणायां फलप्राप्तौ ॥

**कर्म्माध्यक्षः** । त्रि । क्रियासाक्षिणि ॥

**कर्म्मान्तः** । पुं । कर्मभुवि । कृष्टभूमौ ॥ इक्षुधान्यादिसङ्ग्रहस्थाने ॥ शुचीनाकरकर्मान्ते इक्षुकृतः ॥ कर्मावसाने ॥ कर्मान्ते दासभृत्याश्चेत्यु

ते: ॥

कर्मारः । पुं । कर्मकारे । लौहकारे । लुहार इतिप्रसिद्धे जातिविशेषे ॥ वंशे । त्वचिसारे । बाँस इतिप्रसिद्धे वृक्षे । कर्मरङ्गे । कमरख इतिभाषा ॥

कर्म्मार्हः । पुं । पुरुषे ॥ त्रि । क्रियायोग्ये ॥

कर्म्मशौचः । पुं । अनहङ्कारे ॥

कर्म्मी । पुं । दक्षिणासहितज्योतिष्टोमादिकर्मानुष्ठायिनि । यजमाने । देवानामन्ने ॥ केवलकर्मी हि चन्द्रमण्डलाधिकारी परलोके देवानामन्नभूतः इति श्रौतीप्रसिद्धिः ॥ त्रि । कर्मविशिष्टे ॥ कर्मास्ति अस्य । व्री० इनिः ॥

कर्म्मिष्ठः । त्रि । क्रियावति ॥

कर्म्मीरकः । पुं । शाखोटे ॥

कर्म्मेन्द्रियम् । न । कर्मसाधकेइन्द्रिये । पाय्वादिपञ्चके व्यस्ते समस्ते च ॥ पायूपस्थम् पाणिपादौ वाक्चैवेन्द्रियसङ्ग्रहः । उत्सर्गानन्दनादानगत्यालापाश्च तत्क्रियाः ॥ वागादीनीन्द्रियाण्याकाशादीनां रजोंशेभ्यो व्यस्तेभ्यः पृथक्पृथक् क्रमेणोत्पन्नानि भवन्ति । यथोक्तं भागवते । तेषां रजोंशैर्जातानि क्रमात् कर्मेन्द्रियाणि च । प्रत्येकमिति ॥ कर्मसाधकमिन्द्रियं कर्मेन्द्रियम् ॥ कर्म्मेन्द्रियदेवताः अग्नीन्द्रोपेन्द्रयमप्रजापतयः । कर्मेन्द्रियाणां वागादीनां क्रमेणाग्न्यादयो देवता भवन्ति ॥ कर्मेन्द्रियाणां विषयास्तु वचनादानगमनविसर्गानन्दाः क्रमेण वागादीनां विषयाः ॥

कर्व्वः । पुं । कामदेवे ॥ आखौ ॥ कृणाति । कृञ् हिंसायाम् । किरति वा । कृ विक्षेपे । कृगृशॄद्भ्यो वः ॥

कर्व्वटः । पुं । न । द्विशतग्राममध्ये मनोरमस्थाने ॥ ग्रामशतस्थजनाः क्रयविक्रयादिना सेवादिना वा येन ग्रामेण जीवन्ति तस्मिन् ॥ इति केचित् ॥ चतुः समग्रामे ॥ चतुः समेग्रहस्थाने ॥ चतुः शतग्रामसङ्ग्रहस्थाने ॥ न । नगरे । पुरे ॥

कर्व्वुरः । पुं । राक्षसे ॥ पापे ॥ भेषजविशेषे ॥ व्याघ्रे ॥ कृणाति । कृञ्० । कृगॄद्भ्यः वनिस्यः करच् ॥

कर्व्वुरी । पुं । उमायाम् । शिवायाम् ॥ शिवपत्न्याम् ॥

कर्श्यः । पुं । कर्चूरे । कचूर इतिभाषा ॥ इति राजनिर्घण्टः ॥

कर्षः । पुं । न । अक्षे । माषषोडशके माने । अशीतिरक्तिकासु ॥ भिषजां व्यवहारेत कर्षः स्यात् तोलकद्वयम् । सुवर्णे । बिडालपदके ॥ राज

निर्घाटक्रमते कर्षः स्याद्भूयमाषकः ॥ पुं । कर्षणे ॥ विभीतक वृक्षे ॥ कर्षति । कृषविलेखने । पचाद्यच् । भावे घञ्वा ॥

कर्षकः । त्रि । क्षेत्राजीवे । कृषीवले ॥ आकर्षणकर्त्तरि ॥ पुं । अयस्कान्ते ॥ कर्षति । कृष० । ण्वुल् ॥

कर्षणम् । न । वैश्यवृत्तिविशेषे । कृषिकर्मणि । लाङ्गलादिना भूमिखनने । खेती इतिभाषा ॥ आकर्षणे ॥ शोषणे ॥ पीडने ॥ कृषेर्ल्युट् ॥

कर्षणी । स्त्री । चीरिणीवृक्षे ॥

कर्षफलः । पुं । विभीतकवृक्षे । कलिद्रुमे ॥ कर्षम् फलमस्य ॥

कर्षफला । स्त्री । आमलक्याम् ॥

कर्षार्द्धम् । न । तोलकपरिमाणे ॥

कर्षिणी । स्त्री । कविकायाम् । अश्वमुखबन्धनरज्जुस्थितलोहे ॥ चीरिकावृक्षे ॥

कर्षितः । त्रि । पीडिते ॥ यथा । अधर्मकर्षितः वृत्तिकर्षितइति ॥

कर्षूः । पुं । करीषाग्नौ ॥ तुषाग्नौ ॥ वार्त्तायाम् । जीविकायाम् ॥ ऋषिविशेषे ॥ स्त्री । कुल्यायाम् ॥ कुल्ये । कीकसे ॥ नदीमात्रे ॥ हस्तिखाते । चतुरङ्गुलखातविशेषे ॥ कर्षणम् कृष्यते कर्षति वा कृषवि० । कृषिच



मितनिधनिसर्जिखर्जिभ्य ऊः ॥

कर्हि । अ । कदा ॥ कस्मिन्काले । अनद्यतनेर्हिलन्यतरस्याम् ॥

कर्हिचित् । अ । कस्मिंश्चित्काले ॥ कस्याञ्चिदप्यवस्थायाम् । जातु ॥ कर्हिच चित् चेति विग्रहः ॥

कलः । पुं । मधुरध्वनौ । अव्यक्त मधुरध्वाने ॥ सालवृक्षे ॥ न । शुक्रे । रेतसि ॥ त्रि । अजीर्णे ॥ कडति माद्यति अनेन । कडमदे । डलयोरैक्यमिति घञ् । संज्ञापूर्वकत्वाद्वृद्ध्यभावः । डलयोरेकत्वम् ॥

कलङ्कः । पुं । शकुलमत्स्ये ॥

कलकण्ठः । पुं । कलध्वाने ॥ हंसे ॥ पारावते ॥ पिके ॥ कलः कण्ठोऽस्य ॥

कलकलः । पुं । कोलाहले । बहुभिः कृते उच्चैः शब्दे ॥ यथा । विशालाभ्या माभ्यां किं मिह नयनाभ्यां खलुफलं न याभ्या मालीढा परमरमणीया तव तनुः । अयंहि न्यक्कारो जननिमनुजस्य श्रवणयो र्ययोर्नान्तर्यातं स्तव लहरिलीलाकलकल इति- जगन्नाथत्रिशूली ॥ सर्जनिर्यासे ॥ कलशब्दे । कलनम् । घञ् । संज्ञापूर्वकत्वाद्वृद्ध्यभावः । कलादपि कलः ॥

कलघोषः । पुं । कोकिले ॥ कलो घो

षो यस्य ॥

कलङ्कः । पुं । अङ्के । चिह्ने ॥ अपवादे ॥ कालायसमले । लौहकिट्टे ॥ कम् शुभ्राबी लङ्कयति दीनतां गमयति प्रापयति वा । लकिगतौ । कर्मण्यण् । यद्वा । कलति । कलशब्दसंख्यानयोः । क्विप् । कल् चासावङ्कश्च ॥

कलङ्कलेखा । स्त्री । मालिन्यरेखायाम् ।

कलङ्कषः । पुं । सिंहे ॥

कलङ्कषा । स्त्री । करताल्याम् ॥

कलङ्की । त्रि । अपवादग्रस्ते ॥ सचिह्ने ॥ लौहमलविशिष्टे ॥ मत्वर्थीय इनिः ॥

कलङ्कुरः । पुं । आवर्त्ते । जलभ्रमे ॥ इतिचिकाण्डशेषः ॥

कलञ्जः । पुं । सविषास्त्रेण हतयो र्मृगपक्षिणोः ॥ ताम्रकूटे । तामाकू सुरती इति भाषा ॥ यथा । चिकित्सितसारावल्यां वैद्यके । अथ धूमपत्रीधूमपानगुणाः । कलञ्जसंवेष्टनधूमपानात् स्याद्दन्तशुद्धिर्मुखरोगहानिः । कफप्रणामज्वरहानिकृद्ध गान्धर्वविद्याप्रवणैकसेव्यम् ॥ संख्याविशेषे ॥ यथा । सप्ताशी प्रोच्यते गुञ्जा सातिस्त्रो रूपकं भवेत् । रूपकैर्दशभिः प्रोक्तः कलञ्जोनामना

मत इतियुक्तिकल्पतरुः ॥

कलतूलिका । स्त्री । कामुकायाम् । वाञ्छिन्याम् । लञ्जिकायाम् ॥

कलत्रम् । न । श्रोणौ ॥ भार्य्यायाम् ॥ नृपादीनां दुर्गस्थाने ॥ गडति गच्यते वा । गडसेचने । गडेराद्देश्च क इति अत्रन् । डलयोरैक्यम् ॥ कं त्रायते वा । त्रैङ् पालने । कः ॥ कडति कड्यते वा । कडमदने । बाहुलका त्रन् ॥

कलधूतम् । न । रूप्ये ॥ इतिराजनिर्घण्टः ॥

कलधौतम् । न । स्वर्णे । हेम्नि ॥ रजते । रूप्ये ॥ पुं । कलध्वनौ ॥ कलोऽमलो धौतोऽस्य ॥

कलध्वनिः । पुं । पारावते ॥ पिके । । कोकिले ॥ मयूरे ॥ गम्भीरशब्दे ॥ कलोध्वनिर्यस्य । कर्मधारयो वा ॥

कलध्वानः । पुं । पारावते ॥ परभृते ॥ वर्हिणि ॥ कलोध्वानोऽस्य ॥

कलनः । पुं । वेतसवृक्षे ॥ न । चिह्ने । लक्षणे ॥ दोषे ॥ लङ्कने ॥ ग्रसने ॥ यथा । कलनात् सर्वभूतानां-महाकालः प्रकीर्त्तितः । महाकालस्य कलनात् त्वमाद्याकालिका परेति ॥ एकमासिकगर्भे ॥ गर्भे मिश्रिते शुक्रशोणिते । तत्तु एकरात्रे

षा भवतीति श्रीभागवतम् ॥ सङ्ख्याने । गणने ॥

कलमा । स्त्री । वशतायाम् ॥ गणनायाम् ॥

कलन्दरः । पुं । सङ्कीर्णजातिविशेषे । सत् लेटात् तीवरकन्यायां जातः । इति ब्रह्मवैवर्त्ते पुराणम् ॥

कलन्दिका । स्त्री । सर्वविद्यायाम् ॥ इति हेमचन्द्रः ॥

कलन्धुः । स्त्री । पत्रशाकविशेषे । कुवकालुकायाम् । घोलिकायाम् ॥

कलभः । पुं । पञ्चवर्षपर्यन्ते करिशावके ॥ इतिसुभूतिः ॥ त्रिंशद्वर्षस्तु कलभ इतिवैजयन्ती ॥ धत्तूरवृक्षे ॥ कलयति । कल विक्षेपे गतौ सङ्ख्याने वा । कलते वा । कलशब्दसङ्ख्यानयोः । कृशृशलिकलिगर्दिभ्योऽभच् । कलेभाषते वा । भाष व्यक्तायां वाचि । अन्येभ्योपीतिडः ॥

कलभवल्लभः । पुं । पीलुवृक्षे ॥

कलभी । स्त्री । चञ्चुवृक्षे ॥

कलभैरवः । त्रि । मधुरभीषणे ॥

कलमः । पुं । लेखन्याम् । वर्णतूल्याम् ॥ शालिधान्यप्रभेदे ॥ चौरे । पाटच्चरे ॥ कलते । कल श० । कलिकर्थोरमः ॥

कलमोत्तमः । पुं । गन्धशालौ ॥

कलम्बः । पुं । नालिकाशाके ॥ पृषत्के । शरे ॥ कल्यते । कल विक्षेपे । उभयोरेकत्वात् कृकदिकडिकटिभ्योऽम्बजित्यम्बच् ॥ कदम्बे । नीपपादपे ॥ कडम्बे । शाकनाड्याम् ॥ कडति । कड मदे । अम्बच् ॥ केन जलेन लम्बते वा । लबि अवस्रंसने । पचाद्यच् ॥

कलम्बकः । पुं । कलम्बार्थे ॥ धाराकदम्बे ॥

कलम्बिका । स्त्री । कलम्बीशाके । नाली इतिभाषा ॥ ग्रीवापश्चान्नाड्याम् । मन्यायाम् ॥ इतिहेमचन्द्रः ॥

कलम्बी । स्त्री । जलजलताशाकविशेषे । कलम्बिकायाम् । कलमीशाक इतिगौडभाषा । करेमु इतिभाषा ॥ कडति । कड मदे । कृकदीत्यम्बच् । डलयोरेकत्वम् ॥ के जले लम्बते वा । लबि० । अच् । गौरादित्वान्ङीष् । कलम्बी स्तन्यदा प्रोक्ता मधुरा शुक्रकारिणी ॥

कलम्बुः । पुं । कलम्बिकायाम् ॥

कलम्बुटम् । न । नवनीते । हैयङ्गवीने ॥ इतिहारावली ॥

कलम्बूः । स्त्री । कलंब्याम् । करेंवू इति प्रसिद्धशाके ॥

कलरवः । पुं । कपोते । पारावते ॥ कोकिले ॥ कलध्वनौ ॥ त्रि । कल

ध्वनिविशिष्टे ॥ कलो रवोऽस्य ॥

कलल: । पुं । न । गर्भवेष्टनचर्मणि । जरायौ ॥ कलने । शुक्रशोणितसङ्घाते ॥ कल्यते । कलसङ्ख्याने । वृषादिभ्यश्चिदितिकलः ॥

कललज: । पुं । राले । सालनिर्य्यासे ॥

कललजोद्भव: । पुं । सालवृक्षे ॥

कलविङ्कः । पुं । चटके ॥ कलिङ्गकवृक्षे । इन्द्रयवे ॥ कलं वङ्कते । वकि गतौ । अच् । पृषो० ॥

कलश: । पुं । न । घटे । कूटे । कलसा इतिभाषा ॥ कलं शवति । शु गतौ । अन्येभ्योपीतिडः ॥

कलशि: । स्त्री । पृश्निपर्ण्याम् । पिठवनीति भाषा । चाकुलिया इतिगौडभाषा ॥ गर्गर्याम् । मन्थपात्रे ॥ कलं श्यति । शोतनूकर्णे । इन् । वाहुलकादाकारलोपः । कलशि मुदधिगर्गरीं वल्लवा लोडयन्तीतिमाघः॥

कलशी । स्त्री । पृश्निपर्ण्याम् ॥ गर्गर्याम् ॥ जाति लक्षणोङीष् ॥

कलस: । पुं । द्रोणपरिमाणे ॥ त्रि । घटे ॥ यथा । कलां कलां गृहीत्वा तु देवानांविश्वकर्मणा । निर्मितो यं सबै यस्मात कलसस्तेन कथ्यत इति श्रीमहानिर्वाणतन्त्रम् ॥ अपि च । सागरे मथ्यमाने तु पीयूषा र्थं सुरासुरैः । पीयूषधारणार्थाय निर्मितो विश्वकर्म्मणा ॥ कला: कलास्तु देवानामसिता स्ता: पृथक् पृथक् । यत: कृतास्तु कलसा स्ततस्ते परिकीर्त्तिता: इत्यादि कालिकापुराणे ८७ अध्याये द्रष्टव्यम् ॥ केन जलेन लसति । लसश्लेषणक्रीडनयो: । पचाद्यच् ॥

कलसि: । स्त्री । } पृश्निपर्ण्याम् ॥ गर्गर्याम् ॥
कलसी । स्त्री । }

कलसीसुत: । पुं । अगस्त्यमुनौ ॥

कलसोदधि: । पुं । समुद्रे ॥ कलस इव उदधि: मन्थानाधारत्वात् ॥ इतिमहाभारतम् ॥

कलह: । पुं । खड्गकोषे ॥ भण्डने ॥ पुं । न । युद्धे । समरे । लडाई इतिभाषा ॥ पुं । राढे ॥ कलस्य मधुरध्वनेर्हननम् । अन्येभ्योपीतिडः ॥

कलहंस: । पुं । कादम्बे । वालिहाँस इतिगौडभाषाप्रसिद्धे हंसविशेषे । कलनादे ॥ राजहंसे ॥ नृपोत्तमे ॥ परात्मनि ॥ चयोदशाक्षराछन्दः प्रभेदे ॥ सजसा: सगौचकथित: कलहंस: । इति ल० । यमुनाविहारकुतुके कलहंसो व्रजकामिनीकमलिनीकृतकेलि: । जनचित्तहारिकलकण्ठनिनाद: प्रमुदं तनोतु तवनं

न्द्रतनूजः ॥ अस्य सिंहनादसंज्ञाप्यस्ति ॥ कलोमधुरवाक् हंसः ॥

कलहनाशनः । पुं । पूतिकरञ्जे ॥

कलहप्रियः । पुं । नारदे ॥ इतिमहाभारतम् ॥

कलहप्रिया । स्त्री । सारिकायाम् ॥

कलहान्तरिता । स्त्री । नायिकाभेदे ॥ अस्यालक्षणं यथा । पतिमवमन्य पश्चात् परितप्ता । यथा । कोपात् कान्तं पराणुद्य पश्चात् तापसमन्विता । कलहान्तरिताप्रोक्ता नायिका नयशालिभिरिति ॥

कला । स्त्री । मूलधनवृद्धौ । सूद इतिभाषा ॥ शिल्पादौ ॥ अंशमात्रे ॥ चन्द्रस्यषोडशांशे ॥ कालमाने । त्रिंशत् काष्ठात्मकेकाले ॥ स्त्रीरजसि ॥ नौकायाम् ॥ कपटे । छद्मनि ॥ विभूतौ ॥ शक्तौ ॥ कलनायाम् ॥ मरीचिपत्न्याम् । कर्दमात्मजायाम् ॥ राशेस्त्रिंशद्भागांशस्तस्य षष्टिभागः कलेतिज्योतिर्विदः । यथा । विकलानां कलाषष्ट्या तत्षष्ट्याभाग उच्यते । तत्त्रिंशता भवेद्राशि र्भगणो द्वादशैवते । इति ॥ अथ चतुःषष्टिकला लिख्यन्ते ॥ गीतम् १ । वाद्यम् २ । नृत्यम् ३ । नाट्यम् ४ । आलेख्यम् ५ । विशेषकच्छेद्यम् ६ । तण्डुलकुसुमबलिविकाराः ७ । पुष्पास्तरणम् ८ । दशनवसनाङ्गरागाः ९ । मणिभूमिका कर्म्म १० । शयनरचनम् ११ । उदकवाद्यम् १२ । उदकघातः १३ । चित्रायोगाः १४ । माल्यग्रथनविकल्पाः १५ । शेखरापीडयोजनम् १६ । नेपथ्ययोगाः १७ । कर्णपत्रभङ्गाः १८ । गन्धयुक्तिः १९ । भूषणयोजनम् २० । इन्द्रजालम् २१ । कौचुमारयोगाः २२ । हस्तलाघवम् २३ । चित्रशाकपूपभक्ष्यविकारक्रिया २४ । पानकरसरागासवयोजनम् २५ । सूचीवापकर्म्माणि २६ । सूत्रक्रीडा २७ । प्रहेलिका २८ । प्रतिमाला २९ । दुर्व्वचकयोगाः ३० । पुस्तकवाचनम् ३१ । नाटिकाख्यायिकादर्शनम् ३२ । काव्यसमस्यापूरणम् ३३ । पट्टिकावेत्रवाणविकल्पाः ३४ । तर्कुकर्म्माणि ३५ । तक्षणम् ३६ । वास्तुविद्या ३७ । रूप्यरत्नपरीक्षा ३८ । धातुवादः ३९ । मणिरागज्ञानम् ४० । आकरज्ञानम् ४१ । वृक्षायुर्व्वेदयोगाः ४२ । मेषकुक्कुटलावक युद्धविधिः ४३ । शुकसारिकाप्रलापनम् ४४ । उत्सादनम् ४५ । केशमार्ज्जनकौशलम् ४६ । अ

चरमुष्टिकाकथनम् ४७ । म्लेच्छित कविकल्पा: ४८ । देशभाषाज्ञानम् ४९ । पुष्पशकटिकानिमित्तज्ञान म् ५० । अत्र निमित्तज्ञान मिति पृथक् केचित् पठन्ति ॥ यन्त्रमातृका ५१ । धारणमातृका ५२ । सम्पाठ्यम् ५३ । मानसीकाव्यक्रिया ५४ । क्रिया विकल्पा: ५५ । छलितकयोगा: ५६ । अभिधानकोषच्छन्दोज्ञानम् ५७ । वस्त्रगोपनानि ५८ । द्यूतविशेष: ५९ । आकर्षक्रीडा ६० । बालकक्रीडनकानि ६१ । वैनायिकीनां विद्यानांज्ञानम् ६२ । वैजयिकीनां विद्यानां ज्ञानम् ६३ । वैतालिकीनां विद्यानां ज्ञानम् ६४ ॥ इतिश्रीभागवतटीकायां श्रीधरस्वामिन: ॥ क्वचित् पुस्तके सूचीवापकर्मसूत्रक्रीडेत्येकं पदम् । तदुत्तरं वीणाडमरुकवाद्यानि । वैतालिकीनामित्यत्र वैयासिकीनामितिच पाठो दृश्यते ॥ कलति कलयति कलते वा । कलशब्दसङ्ख्यानयो: । पचाद्यच् ॥ कल्यते वा । पुंसीतिघ: ॥ यद्वा कंलाति । आतोनुपे तिक: ॥

कलाकूलम् । न । विषे ॥ इति राजनिर्घण्ट: ॥

कलाकेलि: । पुं । कामदेवे ॥ कलासु केलिर्यस्य ॥

कलाङ्कुर: । पुं । सारसे पक्षिणि ॥ कंसासुरे । मूलदेवे ॥

कलाचिका । स्त्री । }
कलची । स्त्री । } प्रकोष्ठे । कफोणेरधोमणिबन्धपर्यन्ते । कलाई इति भाषे तिकश्चित् ॥ इति हेमचन्द्र हारावल्यौ ॥

कलाजाजी । स्त्री । सुषव्याम् । कारव्याम् । कलौंजी मंगरैला इतिच ख्यातद्रव्ये ॥

कलाद: । पुं । स्वर्णकारे ॥ कलामादत्ते । डुदाञ्० । मू० क: ॥

कलादक: । पुं । स्वर्णकारे ॥

कलानिधि: । पुं । चन्द्रे ॥ कला निधीयन्ते ऽत्र । डुधाञ्० । कर्मण्यधिकरणे चेति कि: ॥

कलानुनादी । पुं । रोलम्बे । भ्रमरे ॥ कलविङ्के ॥ कपिञ्जले ॥

कलान्तरम् । न । वृद्धौ । लाभे । सूद इतिभाषा ॥

कलाप: । पुं । संहतौ । समूहे ॥ मयूरपिच्छे । बर्हे ॥ काञ्च्याम् ॥ भूषणसामान्ये ॥ तूणे ॥ चन्द्रे ॥ विदग्धे ॥ कातन्त्रव्याकरणे ॥ ग्रामविशेषे ॥ यथा ॥ देवापि र्योगमास्था

य कलापग्राममाश्रितः । सोमवंशे कलौनष्टे कृतादौ स्थापयिष्यति ॥ कलामाप्नोति । आप्नृ० । कर्मण्यण् ॥ कलाआप्यतेऽनेन वा । हलश्चे ति घञ् ।

कलापकः । पुं । हस्तिकण्ठबन्धे ॥ कलापार्थे ॥ स्वार्थेकः ॥ न । ऋणविशेषे ॥ यस्मिन् काले मयूराः कलापिनो भवन्ति तदुपचारात् कलापी कलापिनि देयमृणम् । कलाप्यस्त्ययवबुसादुन् ॥

कलापी । पुं । प्लक्षवृक्षे ॥ बर्हिणि । मयूरे ॥ कोकिले ॥ कलापोऽस्यास्ति । इनिः ॥

कलापिनी । स्त्री । रात्रौ ॥ नागरमुस्तायाम् ॥

कलापूर्णः । पुं । चन्द्रमसि ॥ कलाभिः पूर्णः ॥

कलाभृत् । पुं । चन्द्रे ॥

कलामकः । पुं । व्रीहिविशेषे । कलमधान्ये ॥

कलाम्बिका । स्त्री । अर्थानाम्प्रयोगे । ऋणदाने ॥ इतित्रिकाण्डशेषः ॥

कलायः । पुं । सतीनके । हरेणौ । मटर इतिभाषा ॥ कलायस्त्रिकटःप्रोक्तः । कलायोमधुरःस्वादुः पाकेरूक्षश्चशीतलः ।कषायो वातलो ग्राही कफपित्तहरो लघुः ॥ कलमय ते । अय० । कर्मण्यण् ॥

कलायनः । पुं । नर्त्तकभावे ॥

कलायशाकम् । न । केराउशाक इति ख्याते ॥ कलायशाकं भेदि स्याल्लघु तिक्तं त्रिदोषजित् ॥

कलाया । स्त्री । गण्डदूर्वायाम् ॥

कलालापः । पुं । भ्रमरे । चञ्चरीके ॥

कलावान् । पुं । विधौ । चन्द्रे ॥ त्रि । कलाविशिष्टे ॥

कलावती । स्त्री । तुम्बुरोर्गन्धर्वविशेषस्य वीणायाम् ॥ श्रीराधामातरि । वृषभानुपत्न्याम् ॥ अप्सरोविशेषे ॥ आगमोक्तदीक्षाविशेषे ॥

कलाविकः । पुं । कुक्कुटे ॥

कलाविकलः । पुं । चटके ॥

कलाहकः । पुं । वाद्यविशेषे । काहलायाम् ॥

कलिः । पुं । शूरे ॥ आजौयधि ॥ कलहे ॥ विभीतकवृक्षे ॥ अन्त्ययुगे । तिष्ये । कलियुगे ॥ यत्र कान्तागिरो वेदा यत्र धर्मोर्थसाधनम् । यत्र स्वप्रतिभामानं तस्मै श्रीकलयेनमइति कलिविडम्बनम् ॥ अत्र वर्ज्यानाह । देवरेणसुतोत्पत्ति र्वानप्रस्थाश्रमग्रहः । दत्ताक्षतायाः कन्यायाःपुनर्दानं परस्य च ॥ समुद्रयानस्वीकारः

काकोलमुखेतेजःस्यात् कृष्णच्छविमहाविषम् ॥ ईषत् कोलति । कुल संस्त्याने । अच् । ईषदर्थे चेति कोः कादेशः ॥

काकोली । स्त्री । अष्टवर्गीयौषधिविशेषे । वायसोल्याम् । स्वादुमांस्याम् ॥ जायते क्षीरकाकोली महामेदोद्भवस्थले । यत्रस्यात् क्षीरकाकोली काकोलीतत्रजायते ॥ पीवरीसदृशः कन्दः सक्षीरः प्रियगन्धवान् । साप्रोक्ता क्षीरकाकोली काकोलीलिङ्गमुच्यते ॥ यथास्यात् क्षीरकाकोली काकोल्यपितथाभवेत् । एषाकिञ्चिद्भवेत् कृष्णा भेदोयमुभयोरपि ॥ काकोलीयुगलं शीतं शुक्रलं मधुरं गुरु । बृंहणं वातदाहास्रपित्तशोषज्वरापहम् ॥ काकानोलण्डयति । ओलडि उत्क्षेपणे । अन्येभ्योपीतिडः । शकन्ध्वादिः ॥ अस्याः स्थाने अश्वगन्धामूलम् ॥

काकोलूकिका । स्त्री । काकोलूकयोर्वैरभावे ॥

काक्षः । पुं । कटाक्षे ॥ कुत्सितोऽक्षः कुत्सितोक्षोस्य वा । कापथ्यक्षयोरिति कादेशः ॥

काक्षसेनिः । पुं । अभिप्रतारिनामनृपविशेषे ॥ कक्षसेनस्यापत्यम् । अत इञ् ॥

काक्षी । स्त्री । तुवरिकायाम् । अरहड इति भाषा ॥ सौराष्ट्रमृत्तिकायाम् ॥ कक्षेभवा । तत्रभवइत्यण् । ङीप् ॥

काक्षीवः । पुं । } शोभाञ्जनवृक्षे ॥
काक्षीवकः । पुं । }

कागः । पुं । काके ॥ इति जटाधरः ॥

कागदः । पुं । न । कागज इत्याख्यो भाषाप्रसिद्धे शणपत्रे ॥ यथोक्तं मन्त्रकल्पद्रुमोक्त हनुमत्कवचे । भूर्जेवा वसने रक्ते क्षौमे वा तालपत्रके । कागदे वाष्टगन्धेन पञ्चगन्धेनवा पुनः ॥ त्रिगन्धेनाथ वैकेन विलिख्य धारयेन्नर इति ॥

काङ्क्षा । स्त्री । इच्छायाम् ॥ काक्षि इच्छायाम् । गुरोश्चेत्यः । टाप् ॥

काङ्गा । स्त्री । वचायाम् ॥ इति शब्दचन्द्रिका ॥

काचः । पुं । शिक्ये । छींका इतिभाषा ॥ मणौ ॥ नेत्ररोगविशेषे ॥ तस्य लक्षणम् । अस्मिन्नपितमोभूतेनातिरूढे महागदे । चन्द्रादित्यौ सनक्षत्रावन्तरीक्षे च विद्युतः ॥ निर्मलानि च तेजांसि भ्राजिष्णूनीव पश्यति । सएवलिङ्गनाशस्तु नीलिका काचसंज्ञित इति ॥ क्षारे । मृत्तिकाविशे

षे । काच इतिभाषा ॥ न । सिक्थके । सीसा मैण मोम इतिच भाषा ॥ काचलवणे ॥ कच्यते कथ्यते ऽनेनात्र वा । कचवन्धने दीप्तौच । घञ् । नकादेरितिकुत्वंन ॥ खिजस्मात् पचाद्यच्वा ॥ कचते । अच् । प्रज्ञाद्यण् वा ॥

काचकः । पुं । काचग्रव्दार्थे ॥

काचकूपी । स्त्री । सीसी इति ख्याते काचपात्रे ॥

काचकोषः । पुं । खालटेमाख्ये अपवरकविशेषे ॥

काचनम् । न । पत्रनिवन्धने ॥ इतित्रिकाण्डशेषः ॥

काचनकम् । न । पत्रनिवन्धने ॥ लेखो निवध्यते येन तत्र काचनकाभिधे तिहारावली ॥

काचनकी । पुं । तालिके । लेखे । लिपौ इतिजटाधरः ॥

काचनी । स्त्री । लिखितस्य निवन्धने । तालिके ॥

काचभाजनम् । न । काचपात्रे । शिशुके ॥ काचस्यभाजनम् ॥

काचमलम् । न । काचलवणे ॥

काचलवणम् । न । कालालूण इति प्रसिद्ध लवणविशेषे । नीले । काचे । कृष्णलवणे ॥

काचसम्भवम् । न । काच लवणे ॥

काचसौवर्चलम् । न । काचलवणे ॥

काचस्थाली । स्त्री । पारुलगाछ इति गौडभाषा प्रसिद्ध वृक्षे । पाटलायाम् । फलेवच्छायाम् ॥ काचपात्रे ॥ काचस्य चारस्य स्थाली पात्रम् ॥

काचाचः । पुं । कपर्दकाख्ये । वृहद्वके ॥

काञ्चिघः । पुं । काञ्चने । शातकुम्भे ॥ झिमडा इति गौडभाषा प्रसिद्ध स्वर्णखण्डे ॥ मूषिके ॥

काचित । अ । काचन । कापिकस्मीदृश्यर्थे ॥

काचितः । त्रि । शिक्यारोपिते पदार्थे । शिक्यिते ॥ काचेधृतम् । प्रातिपदिकाद्धात्वर्थे इति णिच् । क्तः ॥

काचिमः । पुं । देवकुलोद्भववृक्षे । भवरौ इतित्रिकाण्डशेषः ॥

काच्छः । त्रि । कच्छदेशोद्भवे ॥ कच्छेषु भवः । अण् ॥

काञ्चनः । पुं । कचनार इति प्रसिद्धे रक्तश्वेतभेदेन द्विविधे वृक्षविशेषे । तत्राद्यस्य पर्यायाः । रक्तपुष्पः । कोविदारः । युग्मपत्रः । कुण्डलः ॥ द्वितीयस्य । काञ्चनालः । कर्वुदारः । पाकारि रिति ॥ चम्पके ॥ नागकेशरे ॥ उदुम्बरे ॥ धुस्तूरे ॥ न । स्वर्णे । हेम्नि ॥ किञ्जल्के । अञ्जकेशरे ॥

॥ धने ॥ नागकेशरपुष्पे ॥ काञ्चति । काचिदीप्तौ । नन्द्यादिल्युः ॥

काञ्चनकः । पुं । शालेर्जातिविशेषे ॥ कोविदारवृक्षे ॥ न । हरिताले ॥

काञ्चनकदली । स्त्री । स्वर्णकदल्याम् । चाँपाकेला इति गौडभाषा ॥

काञ्चनकारिणी । स्त्री । शतमूल्याम् ॥

काञ्चनक्षीरी । स्त्री । क्षीरिणीलतायाम् ॥

काञ्चनगिरिः । पुं । सुमेरुपर्वते ॥

काञ्चनपुष्पकम् । न । आहुल्यवृक्षे । तरवराख्ये । सुपुष्पे ॥

काञ्चनपुष्पी । स्त्री । गणिकारीवृक्षे ॥

काञ्चनारः । पुं । कोविदारे । युगपत्रके ॥ काञ्चनारो हिमो ग्राही तुवरः श्लेष्मपित्तनुत् । कृमिकुष्ठगुदभ्रंसगण्डमालाव्रणापहः ॥ कोविदारोपि तद्वत्स्यात् तस्य पुष्पं लघु स्मृतम् । रूक्षं सङ्ग्राहि पित्तास्रप्रदरक्षयकासजित् ॥

काञ्चनालः । पुं । कोविदारे ॥

काञ्चनाह्वयः । पुं । चाम्पेये । नागकेशरे ॥ काञ्चनस्याह्वया आह्वयो यस्य ॥

काञ्चनी । स्त्री । हरिद्रायाम् ॥ गोरोचनायाम् ॥ स्वर्णक्षीरीवृक्षे ॥ काञ्च्यतेऽनया । काचिदीप्त्यादौ । क-रणेतिल्युट् । टिड्ढेतिङीप् ॥

काञ्चनीया । स्त्री । गोरोचनायाम् ॥

काञ्चिः । स्त्री । काञ्च्याम् ॥ काञ्चते । काचिदीप्तिबन्धनयोः ॥ सर्वधातुभ्य इन् ॥

काञ्चिकम् । न । काञ्जिके । आरनाले ॥ इकन्तात् संज्ञायां कन् ॥

काञ्ची । स्त्री । सप्तपुर्य्यन्तर्गतपुरीविशेषे ॥ यथा । शिवकाञ्ची विष्णुकाञ्ची काञ्चीयुग्मञ्चसम्मतम् । एतास्तु पृथिवीमध्ये न गण्यन्ते कदाचन ॥ एताः सप्तपुर्यः ॥ काञ्ची शिवविशूलस्था काञ्ची हरिहरात्मिका । वामदक्षिणहस्ताभ्यां दधार द्विजपुङ्गवा इति भूतशुद्धितन्त्रम् ॥ चन्द्रहार गोट् इति गौडभाषाप्रसिद्धे स्त्रीकट्याभरणे । मेखलायाम् । तत् पर्यायाः । सप्तकी । रसना । सारसनमिति ॥ केचित्तु एकयष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका । रसना षोडश ज्ञेया कलापः पञ्चविंशकः ॥ इति भेदं पठन्ति । इह स्वभेदात् पर्यायता ॥ गुञ्जायाम् ॥ कृदिकारादितिवा ङीष् ॥

काञ्चीपदम् । न । जघने ॥ इतिहलायुधकोषः ॥

काञ्जिकम् । न । आरनाले । अवन्तिसोमे । धान्याम्ले । काँजी इतिभा-

था ॥ काञ्जिकं रोचनं रुच्यं पाचनं च
ह्रिदीपनम् । शूलाजीर्णविबन्धघ्नं
कोष्ठशुद्धिकरम् परम् ॥ नभवेत का
ञ्जिकं यत्र तत्र ख्यातिः प्रदीयते ॥ सं
स्थितं धान्यमण्डादिकाञ्जिकं कथ्यते
जनैः ॥ काञ्जिकमपिदितीक्ष्णोष्णं रो
चनं पाचनं लघु । दाहज्वरहरं स्प
र्शात् पानाद्वातकफापहम् ॥ माषा
दिवटकैर्यत्तु क्रियते तद्गुणाधिकम् ।
लघुवातहरं तत्तु रोचनं पाचनम्परम्
॥ शूलाजीर्णविबन्धामनाशनं बस्ति
शोधनम् ॥ धान्याम्लमच्छतरयाम
निवारिहारिगुणैरजोलवणजीर-
कसंस्कृतं यत् । आवासितं सुरभिहि
ङ्गुकणेन यत्नात् तेनाशुशुष्कणिकगो
ऽधिकतां प्रयाति ॥ एलामरीचषधवि
भावितमाणिमन्थं संसिद्धमामकरम
दकं काञ्जिकं यत् । मन्दं विवर्द्धयति
जाठरवीतिहोत्रं निर्वाणदीपमिव ग
न्धकचूर्णयोगः ॥ काञ्जिकं रुचिदं हृ
द्यं स्वच्छमग्निकरं परम् । वातघ्नबल
दं श्रेष्ठं गुर्वाहारस्य पाचकम् ॥ अपिच
। काञ्जिकं दधितैलन्तु वल्लीपलितना
शनम् । दाहकं गात्रशैथिल्यं वल्यं स-
न्तर्पणं परम् ॥ मर्द्दनाच्च भक्षणात्
॥ अपिच । कुल्माषधान्यमण्डेम-
चामृतं काञ्जिकम्भवेत् ॥ यन्मस्त्वा-



दिशुचौभाण्डेसगुडक्षौद्रकाञ्जिकम्
। धान्यराशौत्रिरात्रस्थं शुक्तं चुक्रं तदु
च्यते ॥ अम्लद्रव्यादौ । संज्ञायामि
तिभावेस्वुन् । धात्वर्थनिर्देशे वा ।
केनञ्जिका अस्य ॥

काञ्जिकवटकः । पुं । काँजीवरा इति
लोके ॥ तस्य पाकप्रकारो यथा । म
न्यनीभूतनाधार्या कटुतैलेन लेपि-
ता । निर्मलेमांवुना पूर्यं तस्यां चू
र्णैविभिः क्षिपेत् ॥ राजिकाजीरल
वणहिङ्गुशुण्ठीनिशाकृतम् । निः
क्षिपेद्वटकांस्तत्र भाण्डस्यास्यञ्चमुद्र
येत् ॥ ततोदिनत्रयादूर्द्धमम्लाः स्यु
र्वटकाध्रुवम् ॥ काञ्जिकवटकोरुच्यो
वातहरः श्लेष्मकारकः शीतः । दाहं
शूलमजीर्णं हरते नेत्रामयेष्वहितः
॥ इति ॥

काञ्जिका । स्त्री । जीवन्तीलतायाम् ॥
पलाशीलतायाम् ॥ सार्षपदण्डैः
कृतेव्यञ्जनान्तरे ॥ सार्षपीकन्दली
सूक्ष्माखण्डिता स्निग्धभाजने । स्था
पिता मण्डसहिता त्वथवा तण्डुलोद
के ॥ सप्तरात्रात् परन्तुक्तं ततः सम्य
क् प्रजायते । तस्मादेवसमाकृष्य
तलयेद्वाप्रलेहयेत् ॥ काञ्जिकेतिस
माख्याता सूद्रधर्मोपजीवकैः । सार्ष
पस्य गुणा येहि ते चास्या अपिकीर्त्ति

ता: ॥

काञ्ची । स्त्री । महाद्रोणावृक्षे ॥

काठ: । पुं । पाषाणे । अश्मनि ॥

काठकम् । न । कठानान्धर्मे आम्नाये समूहे । चरणेभ्योधर्मवदिति गोत्र चरणाद्वुञ् ॥

काठिन्यम् । न । कठिनतायाम् ॥ यथा । वाच्यतां समयोतीत: स्पष्टमग्रे भविष्यति । इतिपाठयतांग्रन्थे काठिन्यंकुत्रवर्त्तत इतिकलिविडम्बनम् ॥

काठिन्यफल: । पुं । कपित्थवृक्षे ॥

काण: । पुं । काके । वायसे ॥ त्रि । एकचक्षुषि । काणा इति भाषा ॥ योगविशेषे । यथा । रवौज्येष्ठा सोमेऽभिजित् भौमे पूर्वाभाद्रपदा बुधेऽश्विनी भरणीच गुरावार्द्रा शुक्रे मघा शनौचित्राचेत् काणयोगो भवति ॥ कणनिमीलने । अस्मात् घञ् ॥

काणूक: । पुं । करटे । वायसे ॥ कणति । कण० । सृकणिभ्यामूकोकणाविच्च्य् कण् ॥

काण्ड: । पुं । न । स्तम्बे । तृणादिगुच्छे ॥ तरुस्कन्धे । गुद्दा इतिभाषा ॥ वाणे । शरे ॥ अवसरे । प्रस्तावे । प्रकरणे ॥ कुत्सिते ॥ वृक्षविशेषे । अस्फोठे ॥ नाडीदण्डे । नाले ॥ वर्गे । परिच्छेदे ॥ वृन्दे । समूहे ॥ रहसि । निर्जनस्थाने ॥ षोडशहस्तप्रमाणे दण्डे ॥ श्लाघायाम् ॥ पापीयसि ॥ कनति । कनीदीप्तौ । अमन्ताट्ड: । कादिभ्य:कित् । अनुनासिकस्येतिदीर्घ: ॥ कणति कण्यते वा । कणशब्दे । ड: । बाहुलकाद्दीर्घ: ॥ न । सन्धिविच्छिन्नैकखण्डास्थिनि ॥

काण्डकटुक: । पुं । कारवेल्ले ॥

काण्डकाण्डक: । पुं । काशतृणे ॥

काण्डकीलक: । पुं । लोध्रे ॥

काण्डगुण्ड: । पुं । दीर्घकाण्डे । कशेरुतृणे ॥ गुण्डनामतृणे ॥

काण्डगोचर: । पुं । नाराचे । लोहमयेवाणे ॥

काण्डतिक्त: । पुं । भूनिम्बे । चिरायता इतिभाषा ॥

काण्डनील: । पुं । लोभे ॥

काण्डपट: । पुं । तिरस्करिण्याम् ॥ दृष्ट्यावोत्तम्बिनि वायुसञ्चारार्थे पटविशेषे । चिक सिर्की इतिचभाषा ॥ कनात इतिच ॥

काण्डपुङ्खा । स्त्री । शरपुङ्खायाम् ॥

काण्डपुष्पम् । न । दौना इति भाषा प्रसिद्धे क्षुद्रसुगन्धिपुष्पविशेषे ॥

काण्डपृष्ठ: । पुं । वेश्यापतौ ॥ सुतान्तरे ॥ स्वकुलं पृष्ठत: कृत्वा यो वैप

रक्षणं प्रणीत । तेन दुष्पूरितेनाषौ ।
काण्डपृष्ठ इति स्मृतः ॥ न । कर्णधनुषि ॥ काण्डानि शस्त्राणि पृष्ठे यस्य ॥ ॥ त्रि । शस्त्राजीवे ॥

काण्डफला । स्त्री । कटुकायाम् ॥

काण्डर्षिः । पुं । वेदकाण्डविशेषाध्यापके जैमिन्यादौ मुनिविशेषे ॥ इति त्रिकाण्डशेषः ॥

काण्डवान् । त्रि । काण्डीरे । बाणधारके । तीरन्दाज इतीतरभाषा ॥ काण्डो बाणोऽस्यास्ति । मतुप् ॥

काण्डवारिणी । स्त्री । दुर्गायाम् ॥ यथा । महागजघटाटोपसंयुगे नरवाजिनाम् । खरगाद् वारते बाणान् तेनसा काण्डवारिणीति देवीपुराणे देवीनिरुक्ति नामा ४५ ऽध्यायः ॥

काण्डसन्धिः । पुं । ग्रन्थौ ॥

काण्डस्पृष्टः । पुं । काण्डपृष्ठे । शस्त्राजीवे ॥ स्पृष्टं गृहीतं काण्डं शस्त्रं येन । वाहिताग्न्यादिष्विति परनिपातः ॥

काण्डहीनम् । न । भद्रमुस्तके ॥

काण्डिका । स्त्री । लङ्कायाम् । करालत्रिपुटायाम् ॥ वालुकीनामककर्कट्याम् ॥

काण्डीरः । त्रि । काण्डवति ॥ काण्डो बाणोऽस्यास्ति । काण्डाण्डादीरन्नी



रचौ ॥ पुं । अपामार्गे ॥ काण्डवेल इति गौडभाषा प्रसिद्धे लताप्रभेदे । कारवल्ल्याम् ॥

काण्डीरा । स्त्री । } मञ्जिष्ठायाम् ॥
काण्डीरी । स्त्री । }

काण्डेक्षुः । पुं । कोकिलाक्षे । तालमखाना इतिभाषा ॥ काशतृणे ॥ काण्डे इक्षुरिव ॥

काण्डोलः । पुं । पिटे । कण्डोले ॥ स्वार्थिकः प्रज्ञाद्यण् ॥

काण्वः । पुं । यजुर्वेदीयशाखाविशेषे ॥ कण्वस्य गोत्रापत्यम् । काण्व्यः । गर्गादियञ् ॥ काण्वस्य छात्रः । कण्वादिभ्यो गोत्रइत्यण् । कण्वो देवताऽस्य वा ॥

कातरः । त्रि । अधीरे । व्यसनाकुले । रोगादिनाऽऽकुलमनसि ॥ भीते ॥ विवशे ॥ ईषत्तरति । पचाद्यच् । ईषदर्थे चेति कोः कादेशः ॥ पुं । कातलामाच इति गौडभाषाप्रसिद्धे मत्स्ये ॥

कातराक्षी । स्त्री । चकितनेत्रायाम् । मृगलोचनायाम् ॥

कातर्य्यम् । न । अधीरतायाम् । केवलायांनीतौ ॥ यथा । कातर्यं केवलानीतिः शौर्यं श्वापदचेष्टितम् । अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष

ष सः ॥ भांनेष्यण् ॥

कातलः । पुं । मत्स्यविशे॰ । कातला इ तिभाषा ॥ कातलोमधुरस्त्रोष्णो गुरुपाकीत्रिदोषकृत् ॥

कातृणम् । न । रोहिषतृणे ॥

कात्यः । पुं । कात्यायनमुनौ ॥ कत स्यापत्यम् । गर्गादित्वात् यञ् ॥

कात्यायनः । पुं । धर्मशास्त्रकर्त्तृमुनि विशेषे ॥ व्याकरणवार्त्तिककारे । व ररुचौ ॥ कात्यस्यापत्यम् । फक् ॥

कात्यायनी । स्त्री । उमायाम् । दुर्गा याम् ॥ काषायवस्त्राढ्ढ्यर्द्धवृद्धविधवाया म् ॥ कात्यायन्यर्द्धवृद्धायाकाषायव सनाऽधवेत्यमरः ॥ कतस्यापत्यम् । ग॰ यञ् । सर्वत्रलोहितादिकतन्तेभ्य इतिष्फः । षित्त्वान्ङीष् ॥

कार्थञ्चित्कः । त्रि । कथञ्चिदर्थे ॥ वि नयादित्वात्स्वार्थेठक् ॥

काथिकः । पुं । कथायांसाधौ ॥ कथा दिभ्यष्ठक् ॥

कादम्बः । पुं । वालिहाँस इतिगौड प्रसिद्धे कलहंसपक्षिणि । नीलहं सोयमितिरघुव्याख्यानेमल्लिनाथः ॥ वाणे । इषौ ॥ कदति । कदिःसौचः । कदेर्णित् पक्षिणीत्यम्बच् ॥ कद म्बेसमूहेभवः । अण् ॥

कादम्बकः । पुं । वाणे । सायके ॥

कादम्बरः । पुं । दध्यग्रे । दधिसरे ॥ न । कदम्बपुष्पोद्भवेमद्ये ॥ कादम्बं कदम्बजातंरसंराति । रा॰ । आत इतिकः ॥ मल्लिनाथस्तु दधङ्गिरभि तस्तटाविविमाघ श्लोकव्याख्यावसरे कादम्बश्चः । कादम्बः कलहंसे क्षयोरितिविश्वः । कादम्बं राति र लयोरभेदाल्लाति प्रकृतित्वेनाद्दत्ते इतिकादम्बरमैक्षवम् । पानसन्नाच माधूकं खार्जूरन्तालमैक्षवम् इति स्मरणात् । आत इतिकः इत्याह ॥

कादम्बरी । स्त्री । कोकिलायाम् ॥ भा रत्याम् । सरस्वत्याम् ॥ शारिका पक्षिणि ॥ मदिरायाम् । हलिप्रिया याम् ॥ कुत्सितमम्बरम् । कुगती तिसमासः । कोःकत्तत्पुरुषेचि । कदम्बरंनीलाम्बरमस्यास्ति । अर॰ अच् । तस्येयम् । तस्येदमित्यण् । ङीप् ॥ यद्वा । कदम्बेजातोरसःकाद म्बः । तत्रजातइत्यण् । कादम्बंरा ति । रादाने । आतोनुपेतिकः । गौरादित्वान् ङीप् ॥

कादम्बर्य्यः । पुं । कदम्बद्रुमे ॥

कादम्बा । स्त्री । मुण्डीतिख्यातायाङ्क दम्बपुष्प्याम् ॥

कादम्बिनी । स्त्री । मेघमालायाम् ॥ कादम्बाः कलहंसाः वलाकावन्मेघ

मनुधावन्ति ते सन्ततम्याः । इति: ॥
कादम्बस्यविकाशः कादम्बः। सेोऽस्य स्याः.कार्यत्वेनेतिवा ॥
कादाचित्कम् । त्रि । कदाचिद्भवे ॥
काद्रवेयः । पुं । नागे । नराकारे फणा काङ्गूलवति सर्पेभ्योऽन्यस्मिन् देव योनौ॥ कद्रुाः अपत्यम्। स्त्रीभ्योढ क् । ढलोपेोऽकद्रुाः ॥ शुभ्रादित्वा द्ढक् ॥
कानकम् । न । जयपालबीजे ॥
काननम् । न । वने ॥ गृहे ॥ ब्रह्मणो मुखे॥ कानयति । कनीदीप्त्यादैा। युच्ल्युट्। ॥ कस्य जलम् अननं जीव नमस्येतिवा ॥
काननारिः । पुं । शमीवृक्षे ॥ इतिशब्द चं० ॥
कानीनः । पुं । पाराशर्ये । वेदव्यासे॥ कर्णे । कुन्तीज्येष्ठपुत्रे ॥ त्रि । कन्य काजाते ॥ कन्यायामूढा तदावोढुरे वपुत्रः । यथाहमनुः। पितृवेश्मनि कन्यातुयं पुत्रं जनयेद्रहः। तंकानी नं वदेन्नाम्नावोढुः कन्यासमुद्भवमि ति ॥ कन्यायामनूढापितृगृहएवति ष्ठति तदा तत्पुत्रो मातामहस्यैव । यथाह याज्ञवल्क्यः। कानीनः कन्यकाजातो मातामहसुतोमत- इति ॥ कन्याया अपत्यम् । कन्या याःकनीनचेत्यण् ॥
कानीयसः । त्रि । कनीयसि ॥ स्वार्थे ऽण् ॥
कान्तः । पुं । पत्यौ ॥ लोहे ॥ चन्द्रसू र्य्योयःपर्यायान्तःकान्तः शिलायाम् । यथा । चन्द्रकान्तः सूर्यकान्तः अ यस्कान्त इति ॥ वसन्तर्तौ ॥ हिज्ज लवृक्षे ॥ कदाचिदार्याललितापुं रूपाकृष्णविग्रहा । वंशीनादविनो देन करोति विवशं जगदित्यादि पुराणवाक्यात् त्रिपुरसुन्दर्यवतार त्वेनातिसुन्दरे श्रीकृष्णचन्द्रे । वा सुदेवे॥ अभिरूपतमदेहधारित्वा त् द्विपरार्द्धान्ते कल्पप्रलयोऽन्ताय स्मादितिवा । द्विपरार्द्धावसानेकं ब्र ह्माणमन्तयतिनाशय तिवा ॥ न । कुङ्कुमे ॥ लौहविशेषे ॥ तल्लक्ष०। यथा । स्वादुर्यत्र भवेन्निम्बकल्को रा त्रिन्दिवोषितः । कान्तंतदुत्तमं य त्नरूप्येणावर्त्तितं मिलेत ॥ तत्प रीक्षा यथा। पात्रेयस्मिन् प्रसरति जलेतैलबिन्दुर्निषिक्तोपिढुं गन्धंवि सृजतिनिजं कृषितं निम्बकल्कः। पाकेदुग्धं भजतिशिखराकारतांनै तिभूमौ कान्तंलोहंतदिदमुदितं ल क्षणोक्तं नचान्यदिति सुखबोधः ॥ त्रि । मनोरमे । शोभने ॥ अभीष्टे

॥ गन्धविशेषे ॥ काम्यते स्म । कमु कान्तौ । क्तः । यस्य विभाषेति नेट् । अनुनासिकस्येति दीर्घः ॥ कनति स्म वा । कनी दीप्तिकान्तिगतिषु । गत्यर्थेति क्तः ॥

कान्तपक्षी । पुं । मयूरे ॥

कान्तपुष्पः । पुं । कोविदारवृक्षे ॥

कान्तलकः । पुं । नन्दीवृक्षे । कोंद इति गौडभाषा प्रसिद्धे । तुन्ने ॥ काम्यते । कमु० । मतिबुद्धि पूजार्थे भ्यश्चेति क्तः । लकति । लकआस्वादने । अच् । कान्तश्चासौ लकश्च ॥

कान्तलोहः । पुं । न । अयस्कान्ते । कान्तीसार इति प्रसिद्धे लौहे ॥ अस्य परीक्षा । यत्पात्रे नप्रसरति जले तैलबिन्दुः प्रतप्ते हिङ्गुर्गन्धं त्यजति च निजं तिक्ततां निम्बकल्कः । तप्तं दुग्धं भवति शिखराकारकं नैति भूमिं कृष्णाङ्गःस्यात् सजलचणकः कान्तलो हं तदुक्तमिति ॥ अस्य गुणाः । गुल्मोदरार्शःशूलाममामवातभगन्दरम् । कामलाशोथकुष्ठानि क्षयं कान्तम योहरेत् ॥ प्लीहानमम्लपित्तञ्च यकृच्चापि शिरोरुजम् । सर्वान् रोगान् विजयते कान्तलोहं न संशयः ॥ बल वीर्य्यं वपुःपुष्टिं कुरुते ऽग्निं विवर्द्धये दिति ॥

कान्ता । स्त्री । नार्य्याम् ॥ स्त्रीविशेषे । सर्वाङ्गसुन्दर्याम् ॥ भोगे वीर्ये धने पूर्णे मनः कुटिलभाषणैः । कान्ता हरति सर्वस्वं कः स्तेनस्तादृशोऽपरः ॥ प्रियङ्गुवृक्षे । फलिन्याम् ॥ नागरमुस्तायाम् ॥ रेणुकायाम् ॥ वृहदेलायाम् ॥ काम्यते स्म । कमु० । णि ङ् । भावे क्तः । टाप् ॥

कान्ताङ्घ्रिदोहदः । पुं । कान्ताचरणदोहदे । अशोकवृक्षे ॥

कान्तायसम् । न । अयस्कान्ते ॥

कान्तारः । पुं । कोविदारवृक्षे ॥ इक्षुविशेषे । कनारा इति भाषा ॥ कान्तारेक्षुर्गुरुर्वृष्यः श्लेष्मलो वृंहणः सरः ॥ न । उपसर्गादौ ॥ कानने ॥ अक्षविशेषे ॥ पुं । न । महारण्ये ॥ दुर्गमवर्त्मनि ॥ विले ॥ कान्ता आरा यस्य ॥ यद्वा । कस्य जलस्य सुखस्य वा । अन्तः । कान्तं मनोज्ञम् ऋच्छति इयर्त्ति वा । कर्मण्यण् ॥

कान्तारकः । पुं । काजलि आकु इति गौड भाषा प्रसिद्धे इक्षु विशेषे ॥ कान्तारसमृच्छति । ऋगतौ । कर्मण्यण् ॥ स्वार्थे कन् ण्वुल्वा ॥

कान्तारी । स्त्री । कान्तारके ॥

कान्तिः । स्त्री । शोभायाम् । दीप्तौ ॥ अभिलाषे । इच्छायाम् ॥ स्त्रीणांशृङ्गार

जेगुणविशेषे । सौन्दर्ये ॥ काम्यते अनयां वा । कमनं वा । कमु० । क्तिन् । अनुनासिकेति दीर्घ इति केनचि दुक्तंतन्न । काम्यतीति तेनविग्रहणी तत्त्वात् । तचाङ्गत्वात्णिङ्निमित्त ह्रदुः सम्भवात् । आयादय इति णिङ् भावे वा बोध्यम् ॥

कान्तिदम् । न । पित्ते ॥ त्रि । कान्त्यु त्पादके । शोभादायके ॥

कान्तिदा । स्त्री । वाकुच्याम् । सोमरा ज्याम् ॥

कान्तिदायकम् । न । कालीयकवृक्षे ॥ त्रि । कान्तिप्रदे ॥

कान्यिकः । त्रि । कन्यायाम्भवे ॥ शैपि कः कन्यायाष्ठक् ॥

कान्दर्पिकम् । न वाजीकरणे ॥ यथा । रक्ते ऽधिके स्त्री पुरुषस्तु शुक्रे न पुंसकं शोणितशुक्रसाम्ये । यस्मादतः शुक्रविवृद्धिदानि निषेवितव्यानि रसायनानि ॥ हर्म्यपृष्ठ मुडुनाथर श्मयः सोत्पलं मधु मदालसाप्रिया । वल्लकी स्मरकथारहः स्रजो वर्गएप मदनस्य वागुरा ॥ माक्षीकधातु मधुपारदलोहचूर्णपथ्याशिलाजतु विडङ्गघृतानि योऽद्यात् । सै कानि विंशति रथानि जरान्वितोपि सोशी तिकोपि रमयत्यबलांयुवेव ॥ क्षीरं श्रितयः कपिकच्छुमूलैः पिवेत्स्वयं स्त्रीषु न सोभ्युपैति । माषान् पयः सर्पिषि वा विपक्वान् षड्ग्रासमात्रांश्च पयोनुपानात् ॥ विदारिकायाः स्व रसेन चूर्णं मुहुर्मुहुर्भावितशोषितञ्च । घृतेन दुग्धेन सशर्करेण पिवेत् सयस्य प्रमदाः प्रभूताः ॥ धात्रीफला नां स्वरसेन चूर्णं सुभावितं क्षौद्र सिताज्ययुक्तम् । लीढ्वानुपीत्वाच पयो ऽस्मिशक्याकामाग्निकामः पु रुषोनिषेवेत ॥ क्षीरेण वस्ताण्डयु जाश्रितेन समप्राप्यकामी वहुश स्तिलानयः । सुशोषितान् स्तिपिवेत्त पयश्चतश्चाग्रतः किंचटकः करोति ॥ माषस्तूपसर्पिस्वितेनसर्पिषा षष्टिकौ दनमदन्तियेनराः । क्षीरमप्यनुपि वन्तितासुते शर्वरीषु मदनेनशेरते ॥ तिलाश्वगन्धाकपिकच्छुमूलैर्विदा रिकापष्टिकपिष्टयोगाः । आजेनपि ष्टाः पयसाघृतेन पक्वा भवेच्छष्कुलि कातिवृष्या ॥ क्षीरेणवागेचुरको पयोगं विदारिकाकन्दकभक्षणं वा । कुर्वन्नसीदेद्यदिजीर्यतेस्य मदा ग्निनाचेदिदमत्रचूर्णम् ॥ साजमो दलवणाहरीतकीशृङ्गवेरसहिता च पिप्पली । मद्यतक्रतरलोष्णवा रिभिश्चूर्णपानमुदराग्निदीपनम् ॥

अन्यत्रतित्तकषायाणि कटूनि यानि यः खारशाकबहुलानि च भोजनानि। हन्त स्वशीर्षरचितः स करोत्यनेकव्याजान् जरन्निव युवाप्यवशाम वाप्येति ॥

कान्दवम् । न । मिठाई पकवान इति प्रसिद्धे भक्ष्ये ॥ कन्दो संस्कृत म् । संस्कृतम्भक्ष्याइत्यण् ॥

कान्दविक: । त्रि । आपूपिके । पूपविक्रयकर्त्तरि । भक्ष्यकारे ॥ कान्दवं पण्यमस्य । तदस्यपण्यमितिठक् ।

कान्दिग्भूत: । त्रि । कान्दिशीके ॥

कान्दिशीक: । त्रि । भयद्रुते । भीत्या पलायिते । कान्दिशंयामीत्याह । तदाहेतिमाशब्दादिभ्यउपसङ्ख्यानमितिठक् । पुं॰ ॥

कान्यकुब्जम् । न । पुरविशेषे । गाधिपुरे । कुशस्थले । महोदये । कनौज इति भाषा ॥

कान्यजा । स्त्री । नलीनामगन्धद्रव्ये ॥

कापटिक: । त्रि । शठे ॥ पुं । छात्रे ॥ परमर्मज्ञे । पञ्चवर्गेषु प्रथमे ॥ तत्र परमर्मज्ञ: प्रगल्भच्छात्र: कपटव्यवहारित्वात् कापटिक: । तं दृष्ट्वार्थेन मर्थमानाभ्यामुपगृह्य रहसि राजाब्रूयात् यच्चदुष्टं संपश्यसि तत् तदानीमेव मयि वक्तव्यमिति ॥ कपटे नचरति । ठक् ॥

कापथ्यम् । न । कपटभावे ॥

कापथम् । न । उशीरे ॥ पुं । कुपथे । निन्द्यवर्त्मनि ॥ कुत्सित: पथ: । कुगतीतिसमास: । ईषदर्थेचेति को: कादेश: । कुमार्गोपीषन्मार्गो भवति । इत्यमरुकपथशब्देन समासेन पुंस्त्वं निर्वाह्य पथिन् शब्देन समासे कापथ्यचयोरितिकादेशे पथ: सङ्ख्याव्ययादेरितिक्लीवत्वं भवति ॥

कापाल: । पुं । कालियाकडा इतिगौडभाषा प्रसिद्धकर्कटायाम् ॥ न । अष्टादशकुष्ठान्तर्गतवातिककुष्ठे । पश्यकपालम् ॥

कापालिक: । पुं । कपालि इतिगौडभाषाप्रसिद्धवर्णसङ्करजातौ । अस्य अविशेषोयम् ॥ सिद्धान्ताचारिविशेषे ॥ यथा । अथतीर्थकराग्रणी:प्रतस्थे कापालिकजालकंधिजेतुमितिशङ्करविजय: ॥ अस्यस्वरूपं यथा । नराखिमालाकृतभूरिभूषण: श्मशानवासी न्वकपालभोजन: । पश्यामि योगांजनशुद्धदर्शनो जगन्मिथोभिन्नमभिन्नमीश्वरादिति ॥ अस्यधर्मोयथा । मस्तिष्कान्त्रवसाभिघारितमहामांसाहुती र्जुह्नतांवन्हौ ब्रह्मकपालकल्पितसुरापाने

न न: पारगा । सद्य: कृत्तकठोरकण्ठ विगलत्कीलालधारोक्षणौ रुद्योन: पुरुषौ पहारबलिभिर्देवो मया भैरव: इति प्रबोधचन्द्रोदय:॥ कपालिकेव । शर्करादिभ्योऽण् ॥

कापाली । स्त्री । विडङ्गायाम् ॥

कापित्थम् । न । दधित्थे ॥ कपित्थस्यावयवोविकारोवा । अनुदात्तादेश्चेत्यञ् ॥

कापिल: । पुं । साङ्ख्यशास्त्रे ॥ पिङ्गलवर्णे ॥ चि । पिङ्गलवर्णवति ॥ । न । उपपुराणविशेषे ॥

कापिशम् । न । मद्ये ॥

कापिशायनम् । न । मद्ये । मधुनि ॥ देवतायाम् ॥ कापिश्यांजातादि । कापिश्या:ष्फक् ॥

कापिशायनी । स्त्री । द्राक्षायाम् ॥ षित्वात् ङीष् ॥

कापिशेय: । पुं । पिशाचे ॥

कापुरुष: । पुं । कुपुरुषे ॥ कुत्सित: पुरुष: । विभाषापुरुषइतिकादेश: ॥ ईषत् पुरुषोवा ॥

कापेय: । पुं । शौनकर्षौ । कपिगोत्रापत्ये ॥ इतश्चानिञ इतिढक् ॥ चि । कपिसम्बन्धिनि ॥ न । कपित्वे ॥ कपे: कर्मभावोवा । कपिज्ञात्योर्ढक् ॥

कापोतम् । न । कपोतसमूहे ॥ कपोतानांसमूह: । अनुदात्तादेरञ् ॥ सौवीराञ्जने ॥ कपोतस्येदम् । कपोतवर्णत्वात् । तस्येदमित्यण् ॥ पुं । रुचके ॥ कपोताभवर्णे ॥ सर्जिकाक्षारे ॥ कपोतवर्णोऽस्यास्ति । ज्यो॰ अण् ॥ चि । कपोताभवर्णवति ॥ कपोतस्यावयवोविकारोवा । प्राणिरजतादिभ्योऽञ् ॥

कापोताञ्जनम् । न । सौवीराञ्जने । स्रोतोञ्जने ॥ कापोतञ्च तदञ्जनञ्च ॥

काप्यकर: । पुं । काप्यकारे ॥

काप्यकार: । पुं । स्वयंकृतं पापंचित्ते आधाय य: कथयति तस्मिन् । स्वपापवक्तरि ॥

काफल: । पुं । कट्फले ॥

काम । अ । अभ्यनुज्ञायाम् ॥

कामम् । न । रेतसि ॥ इष्टानतिक्रमे । निकामे ॥ काम्ये ॥ वाढे ॥ अनुमतौ ॥ पुं । इच्छायाम् ॥ अनुरागे ॥ फलतृष्णायाम् ॥ तत्तद्दृष्टविषयाभिलाषे ॥ पुंसोयादिषयापेक्षास कामइतिभण्यते । पुमानादौकाममय एवभूत्वाथकर्मकृत् । यतोयंकर्मणोहेतु: कामोतोस्यप्रधानता ॥ अकामस्यक्रियाकाचिद्दृश्यते नेहकर्हिचित् । यद्यद्धिकुरुतेकिञ्चित्तत्तत्का

मस्यचेष्टितम् ॥ वाह्यादिभेदात् कामस्त्रिविधः । वाह्योग···स्वेचादिः १ आन्तरो मनोराज्यरूपः २ वासनामात्ररूपस्तृतीयः ३ ॥ इन्द्रियाधिष्ठाने ॥ अस्त्रेः काम्यमानत्वाच्छब्दादिविषयेषु ॥ विषयभोगे ॥ स्त्रीपुंसयोः परस्परव्यतिकराभिलाषेत्व-त्यन्तनिरूढः कामशब्दः ॥ स्त्रीसङ्गे ॥ अस्मात् सङ्कल्पादिदंमेस्यादित्ये-वंरूपे ॥ अप्राप्तेऽपि विषयः प्राप्तिकारणाभावेऽपि प्राप्यतामित्याकारे चित्तवृत्तिविशेषे ॥ रतिमात्रहेतुः कामः ॥ शास्त्रानुमतजायापुत्रवित्तादिविषयोऽभिलाषः ॥ मोहनस्तम्भनाकर्षणवशीकरणमारणोच्चाटनादिः ॥ दिव्यमानुषभेदात् द्विविधः कामः ॥ कर्मफले ॥ कामयितव्ये ॥ रिरंसायाम् ॥ रतौ ॥ त्रयोदशाङ्के ॥ कामस्तु ब्रह्मणो हृदयाज्जातः । यथा । हृदि कामो भ्रुवोः क्रोधो लोभश्चाधरदच्छदादिति श्रीभागवतम् ॥ महाराजवृते ॥ कामदेवे । स्मरे ॥ अस्य स्थानानि यथा । पादाङ्गुष्ठे प्रतिपदि द्वितीयायाञ्च गुल्फके । ऊरुदेशे तृतीयायां चतुर्थ्यां भगदेशतः ॥ नाभिस्थाने च पञ्चम्यां षष्ठ्यान्तु कुचमण्डले । सप्तम्यां हृदये चैव चाष्टम्यां कण्ठदेशतः ॥ नवम्यां कण्ठदेशे च दशम्यां चोष्ठदेशतः । एकादश्यां गण्डदेशे द्वादश्यां नयने तथा ॥ श्रवणे च त्रयोदश्यां चतुर्दश्यां ललाटके । पौर्णमास्यां शिखायाञ्च ज्ञातव्यश्च रतिक्रमात् ॥ दक्षे पुंसां स्त्रियां वामे शुक्ले कृष्णे विपर्ययः ॥ यत्र स्थाने वसेत् कामस्तत्रैव नखचुम्बनम् । मन्त्रेणानेन कर्त्तव्यं ज्ञातव्यं रतिकोविदैः ॥ काम्यतेऽनेन । कमु० । पुंसि संज्ञायामिति घः । यद्वा । कामयते । पचाद्यच् ॥ कमनम् । कमेर्घञ्वा ॥

कामकला । स्त्री । रतौ । कामदेवपत्न्याम् ॥ सुर्वबिन्दुकुकुन्वेति ध्यानोक्तशक्तिप्रभेदे ॥ चन्द्रस्य याः षोडशकलास्ता एव कामस्य कलाः ॥

कामकामी त्रि । अत्रे । आस्थान विषयान् कामयितुं शीले ॥

कामकारः । पुं । कामतःप्रवृत्तौ । स्वेच्छायाम् ॥ कामंकरोति । कृञ्० । कर्म्मण्यण् ॥

कामकारतः । अ । स्वेच्छाकारणेत्यर्थे ॥

कामकूटः । पुं । वेश्याप्रिये ॥ वेश्याया विभ्रमे ॥

कामकृत् । त्रि । कामकारके ॥ कामान् करोति । डुकृञ्० । क्विप् ॥

कामकेलिः । पुं । सुरते ॥ वि । विङ्गे ॥

कामक्रोधपरायणः । वि । कामक्रोधाभ्यां सदापरिगृहीते ॥ कामक्रोधौ परमयन माश्रयोयस्य ॥

कामखड्गदला । स्त्री । स्वर्णकेतक्याम्॥

कामगामी । त्रि । कामङ्गामिनि ॥

कामगिरिः । पुं । भारतवर्षस्यपर्वतविशेषे ॥ सतुकामरूपदेशे वर्त्तते ॥

कामगुणः । पुं । रागे ॥ विषये ॥ आभोगे ॥

कामङ्गामी । त्रि । कामचरे । अनुकामीने ॥ कामंयथेच्छं गमनशीलः । काममित्यव्ययम् । सुपीतिणिनिः ॥

कामचारः । पुं । कामाचारे ॥ स्वतन्त्रतायाम् ॥

कामचारी । त्रि । कामुके ॥ स्वच्छन्दे । स्वेच्छाचारिणि ॥ कलविङ्के ॥ पुं । गरुडे ॥

कामचारिपुरम् । न । देवपुरविशेषे ॥

कामजानः । पुं । कोकिले । पिके ॥

कामतालः । पुं । कोकिले । वनप्रिये ॥

कामतिथिः । स्त्री । त्रयोदश्याम् ॥

कामदः । त्रि । कामिके । अभीष्टदे ॥ न । दक्षिणस्यां दिशिविख्याते वनविशेषे ॥ कामानददाति । ङुदाञ्० आत इति कः ॥

कामदा । स्त्री । कामधेनौ । टाप् ॥

कामदुघा । स्त्री । कामधेनौ ॥ कामान् दुग्धे दोग्धिवा । दुहःकपघश्चेति दुहेःकप् प्रत्ययोघश्चान्तादेशः॥

कामधरः । पुं । कामरूपस्य मत्स्यध्वज पर्वतस्थे सरोवरे ॥

कामधुक् । स्त्री । समुद्रमथनोद्भवायां वसिष्ठमुनेः कामधेनौ ॥ धेनूनांमध्येसा भगवतो विभूतिः । कामान् दोग्धि । दुह० क्विप् ॥ त्रि । काम्यप्रदे ॥ यथा । एकः शब्दः सुज्ञातः सुप्रयुक्तः स्वर्गेलोकेकामधुग् भवतीतिश्रुतिः ॥

कामदूतिः । पुं । कामदूतिकायाम् ॥

कामदूतिका । स्त्री । नागदन्त्याम् ॥ पाटलायाम् ॥

कामदूती । स्त्री । पाटलावृक्षे ॥ कामदूतिकार्थे ॥

कामधेनुः । स्त्री । कामदुहि । स्वर्गवि ॥ वशिष्ठधेनौ ॥

कामध्वंसी । पुं । शिवे ॥ कामं ध्वंसयति । ध्वंसु० सुपीतिणिनिः ॥

कामनः । त्रि । कामुके॥ अनुदात्तादेश्चेतिणिजन्तात्कमेर्युच् ॥

कामना । स्त्री । इच्छायाम् ॥ टाप् ॥

कामन्धमी । पुं । कांस्यकारे ॥

कामपत्नी । स्त्री । रतौ ॥ कामस्य पत्नी ॥

कामपरीत: । त्रि । कामातुरतया विपरीतबुद्धौ ॥

कामपाल: । पुं । बलदेवे ॥ कामान् पालयति । पालरक्षणे । कर्मण्यण् ॥

कामप्रद: । पुं । भगवति । वासुदेवे ॥ कामानां पुरुषार्थानांप्रद: ॥ रतिबन्धविशेषे । यथा । द्वौ पादौ स्कन्धसंलग्नौ चिप्त्वालिङ्गं भगे तथा । कामयेत कामुक: प्रौढ्यावन्ध:कामप्रदो हिस: इति ॥

कामप्रवेदनम् । न । स्वाभिप्रायाविष्करणे ॥

कामफल: । पुं । महाराजाम्रवृक्षे ॥

कामभाक् । त्रि । कामार्हे ॥

कामम् । अ । अनुमतौ ॥ प्रकामे ॥ पर्य्याप्ते ॥ असूयायाम् ॥ अनुगमने ॥ अकामानुमतौ । स्वच्छन्दार्थे । आदावनिच्छायां पश्चादङ्गीकारे ॥ काम्यते । कर्मणिकम्तादम् ॥

काममह: । पुं । चैत्र्याम्पूर्णिमायाम् ॥

कामयमान: । त्रि । उशति । वाञ्छति ॥

कामयान: । त्रि । अर्थिनि ॥ कामुके ॥

कामयाना । स्त्री । गर्भिण्याम् ॥

कामयिता । त्रि । कामुके ॥ कामयते । कमु० । णिजन्तात् तृन् ॥

कामरूप: । पुं । काँवरू इतिप्रसिद्धे देशे । प्रागज्योतिषे ॥ कालेश्वरं श्वेतगिरिं त्रैपुरं नीलपर्वतम् । कामरूपाभिधो देशो गणेशगिरिमूर्द्धनि ॥ तत्र कामगिरौ योनिपीठे . कामाख्या देव्यस्ति । यथा । योनिपीठं कामगिरौ कामाख्या तत्र देवतेत्युपक्रम्य सर्वत्र विरला चाहं कामरूपे गृहे गृहे इतितन्त्रचूडामणौ पीठमाला ॥ त्रि । मनोज्ञरूपे ॥ स्वेच्छारूपे ॥

कामरूपिणी । स्त्री । अश्वगन्धावृक्षे ॥

कामरूपी । पुं । विद्याधरे ॥ जाहकजन्तौ ॥ त्रि । मनोज्ञरूपिणि ॥ स्वेच्छारूपिणि ॥ सर्वं मायु विचेतव्यं हरिभि:कामरूपिभिरितिरामायणम् ॥ कामंतोरूपायस्य । इनि: ॥

कामरेखा । स्त्री । वेश्यायाम् ॥

कामल: । पुं । वसन्तकाले ॥ मरुभूमौ ॥ त्रि । कामुके ॥ पुं । स्त्री । रोगविशेषे ॥ तस्यनिदानसम्प्राप्तिलक्षणानियथा । पाण्डुरोगीतु योऽत्यर्थं पित्तलानि निषेवते । तस्य पित्तमसृङ्मांसंदग्ध्वारोगाय कल्पते ॥ । हारिद्रनेत्र: स भृशंहारिद्रत्वङ्नखाननः । रक्तपीतशकृन्मूत्रोभेकवर्णोहतेन्द्रिय: ॥ दाहाविपाकदौर्बल्यसदनारुचिकर्षित: । कामला बहुपित्तैषाकोष्ठशाखाश्रयामता ॥

अश्वोपधं यथा । फलत्रिकामृताबा सातिक्ताभूनिम्बनिम्बजः । क्वाथः चौद्रयुतोऽहन्यात् पाण्डुरोगं सकामलमिति । कालान्तरात् खरीभूता कृच्छ्रा स्यात् कुम्भकामला ॥ तस्या लिङ्गलक्षणम् । छर्द्यरोचकहृल्लास ज्वरक्लमनिपीडितः । नश्यति श्वास कासार्त्तो विड्भेदी कुम्भकामली ॥ कृष्णपीतशकृन्मूत्रो भृशं शूनश्च मानवः । सरक्ताक्षिमुखच्छर्दिविण्मूत्रो यश्चताम्यति ॥ दाहारुचितृडानाहतन्द्रामोहसमन्वितः । नष्टाग्निसंज्ञः क्षिप्रं हि कामलावान् विपद्यते इति ॥ मरीचतिलपुष्पाभ्यामञ्जनं कामलापहमिति गारुडे १८७ अध्यायः ॥

कामलता । स्त्री । शिश्ने ॥ इति हेमचन्द्रः ॥

कामला । स्त्री । कामले रोगे ॥

कामलायनः । पुं । उपकोसलाख्यमुनौ ॥ कमलस्यापत्यम् । नडादित्वात् फक् ॥

कामलिका । स्त्री । कङ्गुधान्ये ॥

कामवती । स्त्री । दारुहरिद्रायाम् ॥

कामवल्लभः । पुं । आम्रे ॥

कामवल्लभा । स्त्री । ज्योत्स्नायाम् ॥

कामवृक्षः । पुं । वन्दाके ॥

कामवृद्धिः । पुं । कामज इति कर्णाट देशप्रसिद्धे क्षुपविशेषे । मदनायुधे । कन्दर्पजीवे ॥

कामदूती । स्त्री । पाटलायाम् ॥

कामशरः । पुं । आम्रे ॥

कामसखः । पुं । वसन्तकाले ॥

कामसुतः । पुं । अनिरुद्धे ॥

कामसूत्रम् । न । वात्स्यायनादिकामतन्त्रप्रतिपादकशास्त्रे ॥

कामहैतुकम् । न । कामातिरिक्तकारणशून्ये ॥

कामाख्या । स्त्री । कामरूपदेशे देवीस्थाने ॥ सतीदेहेनावतीर्णा या महादेव्या यत्रयोनिमण्डलं पतितम् कालिकापुराणे च यस्य महत्त्वं मन्तत त्रिपुरभैरव्याः स्थानम् । यथोक्तं देवीगीतायाम् । श्रीमत्त्रिपुरभैरव्याः कामाख्यायोनिमण्डलम् । भूमण्डले क्षेत्ररत्नं महामायाधिवासितम् ॥ नातः परतरं स्थानं क्वचिदस्ति धरातले । प्रतिमासं भवेद्देवी यत्र साक्षाद्रजस्वला ॥ तत्रस्था देवताः सर्वाः पर्वतात्मकतां गताः । पर्वतेषु वसन्त्येव महत्यो देवता अपि ॥ तत्रत्या पृथिवी सर्वा देवीरूपा स्मृता बुधैः । नातः परतरं स्थानं कामाख्यायोनिमण्डलादिति ॥ नामकारणं

यथा । श्रीभगवानुवाच । कामार्थ मागता यस्मात् मया सार्द्धं महागिरौ । कामाख्या प्रोच्यते देवी नीलकूटे रहोगता ॥ कामदा कामिनी कामा कान्ता कामाङ्गदायिनी ॥ कामाङ्गनाशिनी यस्मात्कामाख्या तेनचोच्यतइति कालिकापुराणम् ॥

कामाङ्कुशः । पुं । नखे ॥ शिश्ने ॥ व्याघनखद्वययुक्ते वा लानाम्भूषणे ॥

कामाङ्गः । पुं । आम्रवृक्षे ॥

कामातुरः । त्रि । कामार्त्ते ॥

कामात्मजः । पुं । अनिरुद्धे ॥

कामात्मता । स्त्री । फलाभिलाषशीलत्वे ॥ कामात्मनो भावः । तल् ॥

कामात्मा । पुं । कामस्वभावे । कामाकुलचित्ते ॥ काम्यमानविषयशताकुलचित्तत्वेन काममये ॥ कामेफलतृष्णाया मात्मा यस्यसः ॥

कामाधिष्ठानम् । न । इन्द्रियमनोबुद्धिषु ॥ इन्द्रियाणि मनोबुद्धि रस्याधिष्ठान मुच्यते ॥

कामानशनम् । न । अनाशके । तपसि ॥ तपोनानशनात् परम् । कामानामनशनम् । रागद्वेषरहितैरिन्द्रियैर्विषयाणां सेवनं यदृच्छालाभसन्तुष्टत्वमितियावत् ॥

कामान्धः । पुं । कोकिले ॥ त्रि । कामेनविवेकहीने ॥

कामान्धा । स्त्री । कस्तूर्य्याम् ॥

कामायुधः । पुं । महाराजाम्रवृक्षे ॥ न । कामदेवास्त्रे ॥

कामायुः । पुं । गरुडे ॥

कामारिः । पुं । विटमाक्षिकधातौ ॥ श्री सदाशिवे । महादेवे ॥

कामार्त्तः । त्रि । कामपीडिते । कामातुरे ॥

कामालुः । पुं । रक्तकाञ्चनवृक्षे ॥

कामावशायिता । स्त्री । शिवस्याणिमाद्यष्टधैश्वर्य्यान्तर्गते ऐश्वर्यविशेषे । सत्यसङ्कल्पतायाम् ॥ कामान् अवशेते । शीङ्णिनिः । कामावशायिनो भावः । तल् प्रत्ययः ॥

कामावसायिता । स्त्री । कामावशायितायाम् ॥ कामान् अवस्यति तिष्ठतीत्यर्थे स्यतेर्णिनिः । भावेतल् ॥

कामावसायित्वम् । न । अष्टैश्वर्य्यान्तर्गतैश्वर्यविशेषे । सत्यसङ्कल्पतायाम् ॥ यथास्यसङ्कल्पो भवति भूतेषु तथैवभूतानि भवन्ति । अन्येषां निश्चयान्निश्चेतव्यमनुविधीयन्ते योगिनस्तु निश्चेतव्याः पदार्था निश्चयमिति । कामान् स्वेच्छया अवसाययितुं निश्चेतुं शीलमस्य । स्यतेर्णिनिः

। भावे त्वः ॥

कामाङ्कः । पुं । राजाम्रे

कामिः । पुं । कामुके ॥ स्त्री । रत्याम् ॥

कामिकः । पुं । कारण्डवखगे ॥ न । काम्यं । काम्यमानभोगमोक्षप्रयोजने विधिपूर्वके कर्मणि ॥ त्रि । कामदे । अभीष्टफलप्रदे ॥

कामितः । त्रि । इच्छिते । वाञ्छिते ॥ कामः सञ्जातोस्य । ता° इतच् ॥

कामी । पुं । परमात्मनि ॥ पूर्णकामत्वात् कामोऽस्यास्ति । इनिः ॥ कामुके ॥ चक्रवाके ॥ पारावते ॥ चटके ॥ संसारिणि ॥ चन्द्रे ॥ ऋषभौषधौ ॥ सारसखगे ॥ अवश्यङ्काम्यते । कमकान्तौ । आवश्यकेति ग्रह्यादित्वाद्णिनिः ॥

कामिनी । स्त्री । अतिशयकामयुक्तायांनार्याम् । सवर्णासवर्णयो रतायाम् ॥ भीरुस्त्रियाम् ॥ स्त्रीसामान्ये ॥ वन्दायाम् ॥ दारुहरिद्रायाम् ॥ मदिरायाम् ॥ अवश्यं काम्यते । कमेः पूर्ववण्णिनिः ॥ भूयान् कामोऽस्यस्याः । अतइनिर्वा ॥

कामिनीपुष्पः । पुं । इक्षुविशेषे ॥ न । आर्तवे ॥ कामिन्याः पुष्पम् ॥

कामिनीशः । पुं । शोभाञ्जनवृक्षे ॥ विदग्धनायके ॥

कामिमत्तः । पुं । स्मरोत्सवे ॥

कामीनः । पुं । रामपूगे । सुरेवटे ॥ त्रि । कामानुरूपिणि ॥

कामुकः । पुं । अशोकपादपे ॥ अतिमुक्तके । माधवीलतायाम् ॥ चटके ॥ त्रि । कमने । कामयितरि । कामिनि । स्त्रीसुखासक्ते ॥ कामयते तच्छीलः । लषपतपदेत्यादिनाकमेरुकञ् प्रत्ययः ॥

कामुककान्ता । स्त्री । अतिमुक्तकलतायाम् ॥

कामुका । स्त्री । इच्छावत्याम् । धनादीच्छायुक्तायाम् ॥ कामयते तच्छीला । उकञन्तात्टाप् ॥

कामुकी । स्त्री । मैथुनेच्छायुक्तायाम् । वृषस्यन्त्याम् ॥ जानपदकुण्डगोणेत्यादिनाङीष् ॥

कामेप्सुः । पुं । फलकामे । सकामे ॥ काममाप्तुमिच्छतीति तथा ॥

कामेश्वरी । स्त्री । कामाख्यापञ्चमूर्त्यन्तर्गतमूर्त्तिविशेषे ॥

कामोदकम् । न । मृतोद्देशेनस्वेच्छयाददत्तोदके ॥

कामोदा । स्त्री । रागिणी विशेषे ॥

काम्पिल्यः । पुं । गुण्डारोचनिकायाम् । कबीला इति भाषा ॥ उत्तरदेशविशेषे ॥ कम्पिलाया अदूरभवः ।

सङ्ख्याशादिस्वात् यथ: ॥

काम्पिल्ल: । पुं । काम्पिल्ल र्थे ॥ काम्पिल्ल: कफपित्तास्त्रकक्रिमिगुल्मोदरव्रणान् । हन्तिरेची कटुष्णश्च मेहानाहविषाश्मजित् ॥

काम्पिल्लक: । पुं । काम्पिल्यार्थे ॥

काम्पिल्लका । स्त्री । उत्तरजनपदविशेषे ॥

काम्पील: । पुं ।
काम्पीलक: । पुं । } काम्पिल्यार्थे ॥

काम्बल: । पुं । कम्बलावृतरथे ॥ कम्बलेन परिवृतो रथ: । परिवृतो रथ इत्यण् ॥

काम्बविक: । पुं । शङ्खवलयादिकर्त्तरि । शाङ्खिके । शङ्खकारे ॥ कम्बुशिल्पमस्य । शिल्पमितिठक् । शाश्वतिक इतिनिर्द्देशात् कादेशोऽनित्य: ॥ कम्बोर्विकारो ऽस्यास्तीतिठन्वा ॥

काम्बुका । स्त्री । अश्वगन्धायाम् ॥

काम्बोज: । पुं । कम्बोजदेशजे ऽश्वे ॥ सोमवल्के ॥ पुन्नागवृक्षे ॥ कम्बोजदेशोद्भवे प्रथमत: क्षत्रिये पश्चाद्विहितक्रियालोपादिना शूद्रत्वमापन्ने दस्युपदवाच्ये । सतुयवनतुल्योम्लेच्छजातिविशेष: । अस्य सगरराजेन सर्व्वशिरोमुण्डनङ्कृतम् । यथा । अर्द्धं शकानां शिरसोमुण्डयित्वा व्यसर्जयत् । यवनानांशिर: सर्व्व काम्बोजानां तथैवचेति ह° ॥ पुं । न । वल्लक्षखदिरे । पपरियाखैर इतिभाषा ॥ कम्बोजेषु देशेषुभव: । तत्रभवइत्यर्थे । कच्छाद्यण् । कम्बोजो ऽभिजनो ऽस्यवा । सिन्ध्वाद्यण् ॥

काम्बोजी । स्त्री । माषपर्ण्याम् । हयपुच्छ्याम् ॥ दुग्धखदिरे ॥ गुञ्जायाम् ॥ वाकुच्याम् ॥ कम्बोजेषुभवा । अण् । ङीप् ॥

काम्यम् । न । अन्त:करणशुद्ध्यनुपयोगिनि कर्म्मविशेषे । फलकामनया चोदिते ॥ यथा । यत्किञ्चित्फलमुद्दिश्य यज्ञदानजपादिकम् । क्रियते कायिकंयच्च तत्काम्यं परिकीर्त्तितमिति ॥ त्रि । कमनीये । सुन्दरे ॥ कामनाविषयेस्वर्गादौ ॥ कामोस्तियत्र । अन्यत्रापीति यप् ॥ यद्वा । काम्यते । कम° । ञ्चोयत् ॥

काम्यकर्म्म । न । स्वर्गादीष्ट साधने ज्योतिष्टोमादौ । फलोद्देशेनविधीयमाने कर्म्मणि ॥ काम्यञ्च तत्कर्म चेतिविग्रह: ॥

काम्यदानम् । न । प्रवारणा ॥ फलकामनयादाने ॥ यथा । अपत्यविजयैश्वर्यस्वर्गार्थं यत्प्रदीयते । दानंतत्काम्यमाख्यात मृषिभिर्द्धर्म्मचिन्तकैरि

ति गरुडपुराणम् ॥ काम्येनेच्छया काम्यस्य सुहृदादेरिष्टस्य वरस्त्रीरत्नस्य श्रादेर्वादानम् ॥

काम्यफलम् । न । आर्थिक्यांशुद्धौ ॥ प्राधान्येन फलं शुद्धिरार्थिकी काम्यकर्मणः । आर्थिकी शुद्धिः काम्यकर्मणः प्राधान्येन फलम् ॥

कायः । पुं । कदैवते । ब्राह्मतीर्थे ॥ मूर्त्तौ । देहे ॥ सङ्घे ॥ लक्ष्ये ॥ स्वभावे ॥ मूलधने ॥ प्राजापत्यविवाहे । सहनौ धर्मञ्चरतामितिनियमनङ्कृत्वा कन्यादाने ॥ न । मनुष्यतीर्थे । प्रजापतितीर्थे ॥ तत्तु स्वल्पाङ्गुल्योर्मूलेकनिष्ठानामिकयोरधोभागे प्रसिद्धम् । कायमङ्गुलिमूल इति वचनात् ॥ प्रजापतिर्देवताऽस्य । कस्येदित्यण् इदन्तादेशश्च । यस्येतिलोपात् परत्वादादिवृद्धिः ॥ चीयतेऽन्नादिभिः चीयतेऽस्मिन्नस्थ्यादिकमिति वा । चिञ्चयने । निवासचितीत्यादिनाघञ् ।

कायचिकित्सा । स्त्री । वैद्यविद्याङ्गविशेषे ॥ यथाह सुश्रुतः । कायचिकित्सानाम सर्वाङ्गसंसृतानां व्याधीनां ज्वरातीसाररक्तपित्तशोषोन्मादापस्मारकुष्ठमेहादीनामुपशमनार्थमिति ॥

कायवलनम् । न । कवचे । तनुत्रे ॥ इति हारावली ॥

कायमानम् । न । तृणकुट्याम् ॥ शरीरपरिमाणे ॥

कायस्थः । पुं । परमात्मनि ॥ नरेषु धूर्त्ते कृपाहीने नरजातिविशेषे । अचरजीविके । कूटकृति । पञ्जीकरे । कायथ इति भाषा ॥ यथोक्तं ब्रह्मवैवर्त्ते कृष्णजन्मखण्डे ८५ ऽध्याये । विश्वेकलिपिकर्त्तीच भगवदात् हुनं हरेत् । कायस्थेनोदरस्थेन मातुर्मांसंनखादितम् । तत्रनास्तिकृपा तस्यदन्ताभावोहि केवलमिति ॥ वह्निपुराणेपि । चाटचारणचौरेभ्यो बधबन्धभयादिभिः पीड्यमानाः प्रजारक्षेत् कायस्थेभ्योविशेषतइति॥ काये तिष्ठति । ष्ठा । सुपिस्थ इति कः ।

कायस्था । स्त्री । हरीतक्याम् ॥ आमलक्याम् ॥ काकस्तिष्ठत्यनया । घञर्थेकः ॥ एलाइये ॥ तुलस्याम् ॥ कायस्थभार्यायाम् ॥

कायिकः । त्रि । शारीरिके । कायनिष्पन्ने ॥

कायिका । स्त्री । गवादिवलीवर्दा

कायिकावृद्धिः । स्त्री । } दिकर्मयुतायांवृद्धौ ॥ यथा । दोह्यवाह्यकर्मयुताका

**कारकः**

यिकासमुदायइतिन्यासः ॥ मूलध नाऽविरोधिन्यां प्रकृत्यदेयपगात दर्शादिरूपायांवृद्धौ ॥ यथा । काया विरोधिनीशश्वत् पण्याद्यायातुकायि केति नारदः ॥ हलायुधस्तु पणाद्वी दा इत्यत्र पणावाह्येतिपठित्वा पण स्यमूलधनस्य यावदवस्थानं तावत् शश्वतवर्षसहस्रमपि उत्तमर्णेन या वाह्यते प्राप्यते सा कायिकेति व्याख्या तवान् । तत्राखा भोगलाभान्तर्गता अपराधा तद्भिन्ना । इतिमिश्राः ॥

कारः । पुं । वधे ॥ निश्चये ॥ बलौ ॥ यत्ने ॥ यतौ ॥ तुषारशैले । हिमा द्रौ ॥ क्रियायाम् ॥ यथा । स्वाहा कारवषट्कारनमस्कारा दिवौकसा म् । हन्तकारो मनुष्याणां स्वधाका रःस्वधाभुजामिति ॥ करणम् कारः ॥ कर्मोपपदेकर्तृवाचकः । यथा । क र्मकारः स्वर्णकारः इत्यादि ॥ वि क्षिप्ते धान्यादिराशौ ॥ यथा । द्वौ कारौ ॥ करण व । प्रत्याहारम् ॥ कृ विक्षेपे । परिमाणाख्यायांसर्वेभ्यइ तिकर्मणि घञ् । सर्वेभ्यइतिपञ्च मीनिर्देशात् प्रकृत्याश्रयणव करोदा रवितिप्राप्तोऽप बाध्यते नस्वर्थाश्र याः स्त्रीप्रत्ययाः ॥

कारकः । त्रि । कर्त्तरि । क्रियाजनके ॥ भाष्ये करोति क्रियांनिर्वर्त्तयती तिव्युत्पत्तिदर्शनात् । नपुं ॥ न । क्रियोपाधिके ॥ साक्षात् क्रियानि मित्ते । कर्माद्यन्यतमे । तानितु । कर्त्ता कर्म्म च करणञ्च सम्प्रदानं त थैव च । अपादानाधिकरणेइत्याहुः कारकाणिषट् ॥ कर्त्ता १ यथा पु रुषैः शिवोदृष्टः । कर्म २ यथा रा मं प्रणमति । करणं ३ यथा नेत्रैः शिवोदृष्टः । सम्प्रदानम् ४ यथा ह रिः सद्भ्यः सुखं दद्यात् । अपादानम् ५ यथा बिभीषणः पदाद्भ्रष्टः । अधि करणम् ६ यथा रेमे शरदि गोवि न्दः ॥ सर्वत्र सर्वकारकशक्तिसम्भवः । उक्तञ्च । अनेकशक्तियुक्तस्य विश्व स्यानेककर्मणः । सर्वदासर्वथाभावा त् क्वचित् किञ्चिद्विवक्ष्यतइति । य था । सर्वप्रयत्नेनच भूमिपालास्त स्मिन् प्रजह्रुर्युधिसर्वएवं त्यत्रकर्मणा धिकरणविवक्षायांसप्तमीति ॥ कर कोद्भवजले ॥

कारकदीपकम् । न । अलङ्कारविशेषे । यथा । क्रमिकैकगतानान्तुगुम्फः कारकदीपकम् । गच्छत्यागच्छ तिपुनः पान्थः पश्यति पृच्छति ॥ यथावा । निद्राति स्नाति भुङ्क्ते चल ति कचभरान् शोधयत्यन्तराले दी

व्यत्ययस्तेनैवायं गदितुमवसरो भूय आयाहियाहि । इत्युद्घष्टैः प्रभूणामसकृदधिकृतैर्वारितान् द्वारि दीनान् पश्यास्मानब्धिकन्ये सरसि रुहरुचामन्तरङ्गैरपाङ्गैः ॥ आद्योदाहरणे श्रुतस्य पान्थस्य कर्त्तृकारकस्य गमनादिष्वन्वयः ॥ द्वितीये त्वध्याहृतस्य प्रभोः कर्त्तृकारकस्य निद्रादिष्वन्वयः इत्येकस्यानेकवाक्यान्वयेन दीपकत्वाच्छायापत्त्याकारकदीपकम् ॥

कालकुक्षीयः । पुं । साल्वदेशे ॥ तद्देशीयजने बहुवचनान्तः ॥

कारणम् । न । करणे ॥ साधने ॥ वधे ॥ इन्द्रिये ॥ देहे ॥ कर्म्मणि ॥ कायस्थे ॥ वाद्यप्रभेदे ॥ गीतप्रभेदे ॥ अव्यक्ते । वीजभावे ॥ ईश्वरे । अभिन्ननिमित्तोपादाने ॥ वेदान्तिनो मुखादीश्वरस्याभिन्ननिमित्तोपादानकारणतां श्रुत्वा पातञ्जलीयः सक्रोधमाह । आः पाप कथमीश्वरमेवविकारिणं कृत्वा विनाशधर्म्मिणमुपपादयसि । अस्यायम्भावः वेदान्तीहि भगवतः सकलकार्य्योपादानत्वं मन्यते तच्चमृदद्वविकारितया सङ्गच्छते । यथाहि मृत् स्वयं विकुर्वाणा घटशरावाद्युपादानं भवति तथा स्वयंविकुर्वन्नीश्वरो जगदुपादानमि-



त्यभ्युपगन्तव्यम् । तथाच भगवतो मृदद्वविकारित्वाद्विनाशित्वं सिद्ध्यतीति ॥ साङ्ख्यस्त्वाह ननु रे प्रकृतेर्विश्वोत्पत्तिः पुरुषस्तूदासीन इति । एतच्छ्रुत्वा वेदान्ती सखेदमाह । दुर्बुद्धीहौ एतदपि न जानीतः यत् सर्वप्रमेयजातं घटादिवत् कार्य्यमिति प्रधानोपादानकारणमप्यपेक्षणीयमेवेति अतइयंविकारशङ्का मुग्धवधूविकल्पविलसितमिव । तथाहि । शान्तं ज्योतिः कथमनुदितानस्तनित्यप्रकाशं विश्वोत्पत्तौ व्रजति विकृतिं निष्कलं निर्म्मलञ्च । शश्वन्नीलोत्पलदलरुचामम्बुवाहावलीनां-प्रादुर्भावे भवति नभसः कीदृशो वा विकार इति ॥ हेतौ । बीजे । येन विना यन्नभवति तस्मिन् ॥ तच्च निमित्तोपादानभेदाद्द्विविधम् । कारणत्वमाह । अन्यथासिद्धिशून्यत्वे सति नियतपूर्ववर्त्तित्वम् । तच्चसमवाय्यसमवायिनिमित्तभेदात् त्रिविधम् । परमाणुपरिमाणभिन्नानां कारणत्वमिति भाषापरिच्छेदः ॥ अणुपरिमाणन्तु नकस्यापि कारणमिति सिद्धान्तमुक्तावली ॥ कार्य्यतेऽनेन । णयन्तात् कृञो ल्युट् ॥

कारणकारणम् । न । प्रकृतेरधिष्ठानभू

ते ब्रह्मणि ॥

कारणगुणोद्भवगुणः । पुं । कारणगुणपूर्व्वकगुणे ॥ तद्यथा । रूपम् १ रसः २ गन्धः ३ अपाकजस्पर्शः ४ द्रवत्वम् ५ स्नेहः ६ वेगः ७ गुरुत्वम् ८ एकत्वम् ९ पृथक्त्वम् १० परिमाणम् ११ स्थितिस्थापकसंस्कारः १२ । इति भाषापरिच्छेदः ॥

कारणता । स्त्री ।
कारणत्वम् । न । } हेतुत्वे । पश्य कारणे कारणत्वम् ॥ मूलतत्त्वादिरूपायां सर्व्वविकाराधिष्ठानतायाम् ॥

कारणमाला । स्त्री । अलङ्कारविशेषे । यथोत्तरञ्चेत् पूर्व्वस्य पूर्व्वस्यार्थस्य हेतुता । तदा कारणमाला स्यात् ॥ उत्तरमुत्तरमनु ति यथोत्तरम् । उदाहरणम् । जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते । गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः ॥ अपि च । गुम्फः कारणमालास्याद्यथा प्राक्तनकारणैः । नयेन श्रीः श्रियास्त्यागस्त्यागेन विपुलं यशः ॥ उत्तरोत्तरकारणभूतपूर्व्वपूर्व्वैः पूर्व्वपूर्व्वकारणभूतोत्तरोत्तरैर्वा वस्तुभिः कृतो गुम्फः कारणमाला । आद्योदाहृता द्वितीया यथा । भवन्ति नर-

काः पापात् पापं दरिद्रः सम्भवम् । दारिद्र्यमप्रदानेन तस्माद्दानपरो भव ॥

कारणशरीरम् । न । सत्त्वप्रधानेऽज्ञाने । आनन्दमयकोषे । सुषुप्तौ ॥ अनाद्यविद्यानिर्व्वचनीयं शरीरद्वयकारणमात्रं सत्स्वरूपाऽज्ञानं यदस्ति तत्कारणशरीरमित्याहुः ॥

कारणा । स्त्री । यातनायाम् । गाढवेदनायाम् ॥ नरकरुजा यमयातनेति केचित् ॥ णिजन्तात् कृञोणयासश्रन्येतियुच् । टाप् ॥

कारणिकः । त्रि । परीक्षके ॥ कारणेश्चरति । चरतीतिठक् ॥

कारणोत्तरम् । न । प्रत्यवस्कन्दने ॥ सत्यत्वेनाङ्गीकृत्य तत्प्रतिकूलरूपकारणं ब्रूयात् तदा तदुत्तरं कारणोत्तरम् । तत् त्रिविधम् । बलवत् १ तुल्यबलम् २ दुर्ब्बलम् ३ । आद्यं यथा । मयास्मत्तः शतं गृहीतमिति सत्यम् किन्तु तत् परिशोधितम् । द्वितीयं यथा । मदीयेयम्भूमिः क्रमागतत्वादिति वादयुक्ते प्रतिवादिनापि तथोत्तरम् । तृतीयं यथा । ममेयम्भूमिः क्रमागतत्वात् इति वादयुक्ते ममेयम्भूमिः दशवर्षोपभुज्यमानत्वात् इति प्रत्युत्त

रम् ॥

कारण्डवः । पुं । खडहांस इति गौडे षु प्रसिद्धे हंसविशेषे ॥ अमन्ताडुड इति रमेर्डः । ईषत् रण्डः । ईषदर्थे चेति कोः कादेशः । कारण्डवाति । वा । आतोऽनुपेति कः ॥

कारण्डव्यूहः । पुं । बुद्धभेदे ॥

कारन्धमी । पुं । कांस्यकारे । शौल्विके । धातुवादरते ॥

कारमिहिका । स्त्री । कर्पूरे ॥

कारम्भा । स्त्री । प्रियङ्गुवृक्षे ॥ ईषत् रम्भा । ईषदर्थे चेति कोः कादेशः ॥

कारवः । पुं । काके ॥ का इतिरवो ऽस्यास्ति ॥

कारवल्ली । स्त्री । कारवेल्ले ॥ कारवेल्ले ॥

कारवी । स्त्री । शतपुष्पायाम् । मधुरायाम् ॥ रुद्रजटा इति गौडभाषा प्रसिद्धे दीप्ये । मयूरशिखायाम् ॥ सुषव्याम् । कलजीरी इति भाषा ॥ त्वक्पत्र्याम् ॥ कृष्णजीरके ॥ चुद्रकारवेल्ल्याम् ॥ केनजलेनरौति । रुशब्दे । पचाद्यच् करवस्य मयूरस्येयम् । तस्येदमित्यण् ॥ कारंवाति वा । वागतिगन्धनयोः । आतोऽनुपे तिकः । गौरादिङीष् ॥ यद्वा । कारणम् । हर्षि॰ । गयन्तः । सं॰ क्विप् । कारमवति । अव रक्षणादौ । कर्मण्यण् । ङीप् ॥

कारवेल्लः । पुं । करेला इतिप्रसिद्धे शाके । कठिल्लके । सुषव्याम् ॥ कारवेल्लं हिमं भेदि लघु तिक्तमवातलम् । ज्वरपित्तकफास्रघ्नं पाण्डुमेह कृमीन् हरेत् ॥ कारंवेल्लति वेल्लचलने । कर्मण्यण् ॥

कारवेल्लकः । पुं । कारवेल्ले ॥ स्वार्थे कः ॥

कारवेल्ली । स्त्री । चुद्रकारवेल्ले ॥ तद्गुणा कारवेल्लीस्या द्विशेषाद्दीपनी लघुः । तद्गुणाकारवेल्ल गुणा ॥ कारवेल्ली फलंतक्रेस्वेदितंहिङ्गुमर्दितम् । भर्जितंनवनीतेन सैन्धवेन समन्वितम् ॥ विदलितमुखमीषत्कारवेल्लीकठोरं पुलकितमिवतैलेसाधितंरामठेन । रचितमरिचचूर्णं सैन्धवेनातिपूर्णं सुललितरसनाग्रं लोलतामातनोति ॥ कारवेल्लीफलम्भेदिलघुतिक्तंसुशीतलम् । पित्ताऽस्रक्कामलापाण्डुकफमेदः कृमीन् जयेत् ॥

कारस्करः । पुं । किम्पाकद्रुमे । विषतिन्दौ ॥ कारङ्करोति । डुकृञ्॰ । कृञोहेतुताच्छील्यानुलोम्येषु इति टः । कारस्करोवृक्ष इति निपातनात्सुट् ॥

कारस्कराटिका । स्त्री । कर्णजलौकायाम् ॥

कारा । स्त्री । बन्धनालये । कारागारे ॥ दूत्याम् । प्रसेवके । वीणाधःकाष्ठभाण्डे ॥ सुवर्णकारिकायाम् ॥ बन्धने ॥ पीडायाम् ॥ कीर्य्यते । कृवि° । भि° अङ् । ऋदृशोऽङीतिगुणे दीर्घत्वंनिपात्यते ॥

कारागारम् । न । बन्धनशालायाम् ॥ कारैव आगारम् । काराये बन्धाय वा आगारम् ॥

कारागुप्तः । त्रि । बन्धनागारस्थे ॥ कारायां गुप्तः ॥

कारापथः । पुं । देशविशेषे । लक्ष्मणात्मजयोरङ्गदचन्द्रकेत्वोर्विषये ॥

कारावरः । पुं । पारशवाद्वैदेह्यामुत्पन्ने । चर्मकारे ॥ कारावरोनिषादात्तु चर्मकारः प्रसूयते ॥

कारावेश्म । न । बन्धनालये । वधाङ्के ॥ कारैव काराये वावेश्म ॥

कारिः । स्त्री । क्रियायाम् ॥ त्रि । शिल्पिनि ॥ करोति । डुकृञ्° । कृञउदीच्यांकारुषित्विति इञ् ॥

कारिका । स्त्री । नटयोषिति ॥ कृतौ ॥ स्वल्पाक्षरसूत्र्यात्वह्वर्थज्ञापिकायांकवितायाम् । विवरणश्लोके ॥ शिल्पे ॥ यातनायाम् ॥ नापितादिकमणि ॥ करणम् । धात्वर्थनिर्देशे करोते ण्वुल् । णित्त्वाद्वृद्धिः ॥ यद्वा । करोति । ण्वुल् । प्रत्ययस्थादितीत्त्वम् ॥

कारितः । त्रि । कुर्व्वन् प्रेरितः कारित इत्युच्यते । कराया इतिभाषा ॥

कारिता । स्त्री । कारिकायाम् । कारितावृद्धौ । अधिकसूद इतिभाषा ॥ यथा । ऋणिकेनतुयावृद्धिरधिकासम्प्रकीर्त्तिता । आपत्कालकृतानित्यं दातव्यासा तुकारिता ॥ इति कात्यायनः ॥

कारी । स्त्री । कारिकायाम् । कटुपत्रिकायाम् ॥ कराटकारी आकर्षकारीत्येषाद्विधा ॥

कारीरम् । न । भस्मनि ॥ करीरस्यावयवे । काण्डे ॥ टेँट इतिप्रसिद्ध करीरफले । ततपुष्पे ॥ फलंकरीरस्य हि बीजवर्जितं संस्कारितं सोदकभाजनेषु । सुचिक्कणे वष्टदिनं सुसन्धितं सन्धानरीत्यासुधियाविपाचितम् ॥ कारीरकटुकरूक्षि फल्गमुखंरुचिप्रदम् । कफपित्तकरङ्किञ्चित्कषायंवातहृद्दरम् ॥ अस्यकुसुमशाकन्तु । कारीरकुसुमंसुघर्मनिहितंसद्दारिणा संयुतं सम्पाहेन विपाचितं सलवणं हिङ्ग्वाद्यतैलेभृ

श्रम् । चिरमंतकतरंसुकाञ्जिकमथो सद्देसवारान्वितं भोक्ता केनसमर्चि तः प्रतिदिनं श्रीपार्वतीशः स्वयम् ॥ कारीरकुसुमम्भेदि कटुकं कफनाशनम् । पित्तकृद्रुचिरं भव्यं कषायंपथ्यदम्भृशम् ॥ कारीरकुसुमंरुच्यंशीतलकुल्मनाशनम् ॥ करीरस्यावयवोविकारोवा । अण् । पलाशाद्यण्वा ॥

कारीरी । स्त्री । वृष्ट्यादिफले यागविशेषे ॥

कारीषम् । न । शुष्कगोमयसमूहे । विटौरा उपलौंकाढेर इतिभाषा ॥ करीषाणां समूहः । भि० अण् ॥

कारुः । त्रि । शिल्पिनि ॥ कारयित्वात् कर्माणिकारुं पश्चात्तवञ्चयेदिति कूर्मपुराणम् ॥ कारके ॥ पुं । विश्वकर्मणि ॥ शिल्पे ॥ करोति । डुकृञ्० । कृवापेत्युण् ॥

कारुकः । त्रि । सूपकारादिशिल्पिनि ॥ स्वार्थेकः ॥

कारुककर्म्म । न । सूपकारादीनाङ्कर्मणि ॥ यैः कर्मभिः प्रचरितैः शुश्रूष्यन्तेद्विजातयः । तानिकारुककर्माणि शिल्पानिविविधानिच ॥

कारुचौरः । पुं । सन्धिचौरे ॥

कारुजः । पुं । करभे । गजार्भके ॥ फेने ॥ वल्मीके ॥ नागकेशरे ॥ गैरिके ॥ शिल्पिनां चित्रे ॥ स्वयञ्जाततिले ॥

कारुणिकः । त्रि । दयालौ ॥ करुणाशीलमस्य । शीलमिति ठक् । करुणाप्रयोजनमस्यवा । प्रयोजनमिति ठक् ॥

कारुण्डी । स्त्री । जलौकायाम् ॥

कारुण्यम् । न । परदुःखदुःखित्वे । करुणायाम् ॥ करुणः करुणावान् तस्य भावः । ब्रा० ष्यञ् ॥

कारुषः । पुं । सुधन्वाचार्ये । विजन्मनि ॥

कारूषाः । पुं । करूषदेशवासिषु । वृहद्गृहेषु ॥ बहुवचनान्तोयम् ॥

कारोत्तरः । पुं । सुराग्रभागे । सुरामण्डे ॥ कूपे ॥ त्रि । कार्योत्तमे ॥ कारेण क्रियया उत्तरः ॥

कार्कन्धवम् । न । कर्कन्ध्वाविकारे ॥ तदवयवे ॥ विल्वाद्यण् ॥

कार्कश्यम् । न । कठोरतायाम् ॥ कर्कशस्यभावः । ष्यञ् ॥

कार्णाटः । पुं । कर्णाटदेशे ॥ स्वा० अण् ॥

कार्त्तवीर्य्यः । पुं । चन्द्रवंशीयकृतवीर्यराजपुत्रे । अर्जुने । हैहये । हरेश्चावतारे ॥ अस्यध्यानम् । उद्यत्सूर्यसहस्रकान्तिरखिलक्षोणीधवैर्म-

न्दितो हस्ता मांसतपश्चकेन तु दध्वा
पानि षूंसावता । कात्टाटकमाल्य
यापरिवृतश्चक्रावतारो हरेः पाया
तस्यन्दनगोत्रणा भवसनः श्रीकार्त्त
वीर्यो नृपः इति ॥ जैनराजचक्रव
र्त्तिविशेषे । सुभूमे ॥ कृतवीर्य्यस्या
पत्यम् । अण् ॥

कार्त्तस्वरम् । न । स्वर्णे । हेमनि ॥
कृतस्वरे आकारविशेषे भवम् । अ
ण् ॥ कृताः पठिताः स्वरा येन तस्यैवा
इदम् । शेषइत्यण् ॥ धुस्तूरे ॥

कार्त्तान्तिकः । पुं । दैवज्ञे । मौहूर्त्ति
के । ज्योतिर्विदि ॥ कृतान्तं वेत्ति ।
क्रतूक्थादिसूत्रान्ताट्ठक् ॥

कार्त्तिकः । पुं । स्कन्दे । कार्त्तिकेये ॥
ऊर्ज्जे । शरदृतोर्द्वितीयेमासे । बा
हुले ॥ ऋजुजातस्य फलम् । दक्षः क
ये विक्रयणे धनाढ्यः स्याद्बावदूकोऽ
खिलकोशलः । यः कार्त्तिके का
र्त्तिकरूपधारी जातो भवेद्युद्धवि
शारदश्चेति ॥ वर्षविशेषे । सप्तकृ
त्तिकारोहिण्योरेकतरस्मिन् वृह-
स्पतेरस्तोदयैकतरसम्बन्धे भवती-
ति मलमासतत्त्वम् ॥ कार्त्तिकी पौ
र्णमास्यस्मिन् । विभाषा फाल्गुनी
ति पाक्षिकोऽण् ॥

कार्त्तिकिकः । पुं । कार्त्तिकमासे ॥ का
र्त्तिकी पौर्णमास्यस्मिन् । विभाषा-
फाल्गुनी श्रवणा कार्त्तिकी चैत्रीभ्यः
। इति ठक् ॥

कार्त्तिकी । स्त्री । कार्त्तिकपौर्णमास्या
म् ॥ कृत्तिकया युक्ता पौर्णमासी ।
नक्षत्रेण युक्तः कालः इत्यण् । ङ
तोङीप् ॥

कार्त्तिकेयः । पुं । कुमारे । महासेने
॥ कृत्तिकानामपत्यम् । तत्पाल्य
त्वात् । स्त्रीभ्योढक् ॥ अस्य ध्यानं
यथा । कार्त्तिकेयं महाभागं मयूरो
परि संस्थितम् । तप्तकाञ्चनवर्णा
भं शक्तिहस्तं वरप्रदम् ॥ द्विभुजं श
त्रुहन्तारं नानालङ्कारभूषितम् ।
प्रसन्नवदनं देवं सर्वसेनासमावृत
मिति ॥

कार्त्तिकेयप्रसूः । स्त्री । दुर्गायाम् ॥

कार्त्तिकेयवनम् । न । शरवणे ॥

कार्त्तिकोत्सवः । पुं । कौमुद्याम् । का
र्त्तिक्यां पूर्णिमायाम् ॥ दीपोत्सव
तिथौ ॥

कार्त्स्न्यम् । न । साकल्ये ॥ कृत्स्नस्य-
भावः । ष्यञ् ॥

कार्प्पटः । पुं । अमुनि । छायायाम् ॥
कार्य्यिणि । कार्यार्थिनि । उमेदवा
र दरवारी इति पारस्यभाषा ॥ इ-
ति हेमचन्द्रः ॥ वस्त्रे ॥ स्वा० अव ॥

कार्प्पटगुप्तिका । स्त्री । झोला झोली वटुवा इत्यादिभाषा प्रसिद्धे ॥

कार्पटिकः । पुं । मर्म्मज्ञे ॥ तीर्थसेविनि ॥

कार्प्पण्यम् । न । कृपणतायाम् । दैन्ये । उचितव्ययाकरणेनापि धनरक्षणेच्छारूपे ॥ अनात्माध्यासवत्त्वे ॥ कृपणस्यभावः । ष्यञ् ॥

कार्प्पासम् । न । कार्पासीफले ॥ तूले ॥ त्रि । कार्पासीवस्त्रादौ । बादरे ॥ कार्पास्याः विकारः फलम् । अवयवेचेत्यण् । तस्यफले लुक् ॥ कर्पासस्य विकारः । तस्यविकारइत्यण् । बिल्वाद्यणवा ॥

कार्प्पासकः । पुं । कार्पासिकायाम् । तुण्डकेर्याम् ॥ कार्पसकोलघुः कोष्णो मधुरोवातनाशनः । तत् पलाशं समीरघ्नं रक्तकृन्मूत्रवर्द्धनम् ॥ तत्कर्णपिडकानादपूयस्रावविनाशकृत् । तद्बीजंस्तन्यदंवृष्यंस्निग्धंकफकरङ्गुरु ॥

कार्प्पासधेनुः । स्त्री । दानार्थं कर्पासनिर्मितायां धेनौ ॥

कार्प्पासनासिका । स्त्री । तर्कौ । तकुआ इतिभाषा ॥

कार्प्पासिका । स्त्री । तुण्डिकेर्य्याम् ॥

कार्प्पासी । स्त्री । कार्पासवृक्षे । वदरायाम् । समुद्रान्तायाम् ॥ करोति क्रियतेवा । कृञः पासः । पृ० । जातित्वात् गौरादित्वाद्वा ङीष् ॥ यद्वा । कर्पासोऽस्त्यस्याः प्रज्ञाद्यण् । ङीप् ॥

कार्म्मः । त्रि । कर्मशीले । कर्मसुफलमनपेक्ष्य प्रवृत्ते ॥ कर्मशीलः । छत्रादित्वाण्णः । कार्मस्ताच्छील्य इति टिलोपः । स्त्रियां कार्मी ॥

कार्म्मणः । त्रि । कर्मठे । कर्मकुशले ॥ न । कामण इतिप्रसिद्धे मूलकर्मणि । ओषध्यादिमूलेनवशनोच्चाटनस्तम्भनवशीकरणादिकर्मणि ॥ मन्त्रतन्त्रादियोजने ॥ वाचिकं ग्रुत्वाक्रियमाणे कर्मणि ॥ योगविद्यायाम् ॥ कर्मैव कार्मणम् । तद्युक्तात्कर्मणोण ॥

कार्म्मिकः । त्रि । विचित्रवस्त्रादौ ॥ इतिमिताक्षरा ॥

कार्म्मुकः । पुं । वंशे । वेणौ ॥ श्वेतखदिरे ॥ हिज्जले ॥ महानिम्बे ॥ न । इष्वासे । धनुषि ॥ त्रि । कर्मठे । कर्मक्षमे ॥ कर्मणे प्रभवति । कर्मण उकञ् ॥

कार्य्यम् । न । हेतौ ॥ प्रयोजने ॥ यथा । कार्य्यार्थिनः कुतोगर्व इति ॥ वैय्याकरणाना मादेशप्रत्ययागमेषु ॥ स्त्रिवेशविशेषवतिविनश्वरेशरीरे ॥

तार्किकमते प्रागभावप्रतियोगिनि घटपटादिरूपे विका ॥ कार्य्यमति कार्य्यंत्रिविधम् । समवायिकारणम् १ यथा घटकार्य्यप्रतिकपालम् । असमवायिकारणम् २ यथा घटकार्य्यप्रतिकपालसंयोगादि । निमित्तकारणम् ३ यथा घटंप्रतिदण्डचक्रादीति ॥ कार्य्याणां नियोगविकल्पसमुच्चया भवन्ति । अनेनैवोपायेन नान्येनेति नियोगः । अनेनवाऽनेनवेति विकल्पः । अनेनचेति समुच्चयः ॥ विवादे ॥ यथा । यस्मात् कार्य्यसमारम्भश्चिरात्तेन विनिश्चितः । तस्मान्न लभते कालमभियुक्तस्तु कालभाक् ॥ इति कात्यायनः ॥ अपूर्वे ॥ यथा । विधिप्रत्ययस्य कार्य्ये शक्तिरिति मीमांसकाः ॥ त्रि । सम्पादनीये । कर्त्तव्ये ॥ क्रियते इति । डुकृञ० । विभाषा कृवृषोरिति क्यपभावे ऋहलोर्ण्यत् । वृद्धिः ॥

कार्य्यकुशलः । त्रि । कर्मक्षमे । कर्मठे ॥

कार्य्यता । स्त्री । कार्य्यत्वसङ्गतौ ॥ भावे तल् ॥

कार्य्यत्वम् । न । कार्य्यतासङ्गतौ ॥ अभूत्वाभावित्वे ॥ भावे त्वः ॥

कार्य्यपुटः । पुं । चपणो ॥ उन्मत्ते ॥ अनर्थकरे ॥

कार्य्यप्रद्वेषः । पुं । आलस्ये ॥

कार्य्या । स्त्री । कारीदृक्षे ॥

कार्य्यी । त्रि । यस्य निर्दिश्यते कार्य्यं तस्मिन् ॥ कर्मार्थिनि ॥

कार्शानवः । त्रि । आग्नेये ॥ कृशानोरिदम् । अण् ॥

कार्श्मरी । स्त्री । काश्मरीवृक्षे । गम्भारीम् ॥

कार्श्यः । पुं । कार्श्ये । शालवृक्षे ॥ कर्चूरे ॥ लकुचे ॥ न । कृशत्वे ॥ कृशस्य भावः । वर्णदृढादिभ्यः ष्यञ्चेति ष्यञ् ॥

कार्षः । पुं । कर्षके ॥ कृषिः शीलमस्य । छत्रादिभ्योणः ॥

कार्षकः । पुं । कर्षके ॥ कर्षति । कृष० । कृषेर्वृद्धिश्चोदीचामिति क्वुन् ॥

कार्षापणः । पुं । न । कार्षिके । रजतरूप्ये ॥ षोडशपणे ॥ ताम्रिकेपणे ॥ कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः । इतिमनूक्तेः ॥ कार्षस्यायम् । तस्येदमित्यण् । आपणनम् । पण० । निस्त्यंपणः परिमाणे इत्यप् । गोचरसञ्चरेतिघो वा कार्षस्य कार्षेण वा आपणः ॥

कार्षिः । स्त्री । कृषिरक्तौ ॥ कृषति । कृष० कृषेर्वृद्धिश्चेति इञ् ॥

कार्षिकः । पुं । कार्षापणे । रूप्यमाने

॥ कृषके । इतिहेमचन्द्र: ॥ कर्षस्य अयम् । अध्या० ठञ् ॥ मांसीयप लचतुर्थभागे ॥

कार्ष्णाजिनि: । पुं । ऋष्यन्तरे ॥

कार्ष्णायसम् । न । कृष्णायसो विकारे ॥ अण् ॥

कार्ष्णि: । पुं । प्रद्युम्ने । मकरध्वजे ॥ कृष्णस्या पत्यम् । अतइञ् ॥

कार्ष्णी । स्त्री । शतावर्याम् ॥

कार्ष्य: । पुं । सखुत्रा इति प्रसिद्धे सा लहक्षे ॥ कृषति । कृष० । इगुपधे तिक: । चतुर्वर्णादित्वात् स्वार्थे ष्यञ् ॥

काल्सम् । न । लोहे ॥ कक्कोलके ॥ कालीयके ॥ चि । कृष्णगुणवति ॥

काल: । पुं । यमे । दण्डधरे ॥ कृष्णवर्णे ॥ मृत्यौ । यथा । सर्वस्वदंवलिमधो नयसि च्छलेन प्राणप्रियां जनकजां विपिने जहासि । संवर्द्धयादव कुलं स्वयमेव हंसि कस्त्वां भजेद्यदि हकालभयं नहिस्यादिति ॥ महाकालशिवे ॥ शनौ ॥ कासमर्दे ॥ रक्तचित्रके ॥ राले ॥ कोकिले ॥ गुणचोभके ॥ कालदण्डयोगे ॥ निमेषाद्यभिमानिन्यां देवतायाम् ॥ क्षणदण्डमुहूर्त्तप्रहरदिनरात्रिपचमासायनवत्सरादौ । दिष्टे । अ



नेहसि । समये ॥ यथा । प्रत्यर्थी लभते कालं त्र्यहं सप्ताहमेव च । अर्थीतु प्रार्थयन्कालं तत्‌ क्षणादेव हीयते ॥ क्वचित् प्रत्यर्थीकालंनलभते । यथाहयाज्ञवल्क्य: । साहसस्तेयपारुष्यगोभिशापात्यये स्त्रियाम् । विवादयेत् सद्यएवकालोऽन्यत्रेच्छयास्मृतइति ॥ सच सर्वाधार: सर्वकार्यनिमित्तकारणमादित्यादिक्रियाप्रचयरूप: ॥ अनादिनिधन: कालो रुद्र: सङ्कर्षण: स्मृत: । कलनात् सर्वभूतानांसकाल: परिकीर्त्तित: ॥ अतीतादिव्यवहारहेतु: काल: सचैकोनित्योविभुश्च । जन्यानां जनक: कालो जगता माश्रयोमत: । परापरत्वधीहेतु: क्षणादि: स्यादुपाधित: ॥ अस्यगुणा: । सङ्ख्या १ परिमिति: २ पृथक्त्वम् ३ संयोग: ४ विभाग: ५ । इतिभाषा प० ॥ कालश्च वैशेषिकाभिमतएक: स न अनागतादिव्यवहारभेदं प्रवर्त्तयितुमर्हतीति तस्मादयं यैरुपाधिभेदैरनागतादिभावं पतिपद्यते सन्तु त एवोपाधयो ऽनागतादिव्यवहारहेतव: कृतमन्तर्गडुना कालेनेति साङ्ख्याचार्या: । तस्मान्न कालरूपतत्त्वान्तराभ्युपगम इति ॥ लिङ्गादिविषया

भूतभविष्यद्वर्त्तमानात्मय:कालाइति वैयाकरणा: ॥ कालोऽहं भगवद्विभूति: । काल: कलयतामहम् । कलयतां सङ्ख्यानं कुर्वतांमध्ये ॥ क्रियाशक्त्युपहित: सर्वस्य संहर्त्तापरमेश्वर: काल: ॥ अहमेवाक्षय:काल: । अक्षयकालाभिमान्यऽक्षय: परमेश्वराख्य:काल: ॥ कलनात् सर्वभूतानां ब्रह्मादीनांनिमेषत: । कालशब्देन निर्दिष्टो ह्यखण्डानन्दमद्वय: ॥ कलयत्यायु: । कलसङ्ख्याने । पचाद्यजन्तात् प्रज्ञाद्यण् ॥ कल्यते । कलसङ्ख्याने शब्दे च । कर्मणिघञ् ॥ कालयति सर्वमिति वा । कलप्रेरणे । ण्यन्तात्पचाद्यच् ॥ यद्वा । काल्यते । कालउपदेशे । घञ् ॥ यस्याऽहःप्रथमं रूपमरूपस्यतथानिशा । सन्ध्याच परमेशस्य तस्मै कालात्मनेनम: ॥

कालक: । पुं । जटुले । जतुके । पिप्लौ । देहस्थचिह्नविशेषे । लक्षन इति भाषा ॥ अलगर्दे ॥ न । कालशाके ॥ यकृति ॥ अनित्ये वर्णे रक्तेचार्थे कालाच्चेतिकन ॥ कालक: पट: ॥ कालिकाशाटी कालकमुखम् ॥ कालयति । कलक्षेपे । चु० । ण्वुल् ॥

कालकटङ्कट: । पुं । शिवे ॥

कालकण्ठ: । पुं । शिवे ॥ पीतसारे ॥ मयूरे ॥ खञ्जने ॥ कलविङ्के ॥ दात्यूहे ॥ काल:कृष्णवर्ण: कण्ठो यस्य स: ॥ काले प्रावृषिकण्ठो ध्वनिरस्य वा ॥

कालकण्ठक: । पुं । दात्यूहपक्षिणि ॥ कालकण्ठ ॥ काल:कण्ठोऽस्य । कप ॥ स्या० कनवा ॥

कालकन्दक: । पुं । जलसर्पे ॥

कालकन्या । स्त्री । जरायाम् ॥ कालस्यकन्या ॥

कालकर्णिका । स्त्री । अलक्ष्म्याम् ॥ कालस्यकर्णिका ॥

कालका । स्त्री । कालकेयनाम्नोऽसुरगणस्यजनन्याम् ॥

कालकाल: । पुं । सदाशिवे । देवदेवे ॥

कालकील: । पुं । कोलाहले ॥

कालकीलक: । पुं ॥ कोलाहले ॥

कालकुष्ठम् । न । पर्वतीयमृत्तिकाविशेषे । कङ्कुष्ठे । विरङ्गे ॥

कालकूटम् । न । विषे ॥ वोले ॥ पुं । न । स्थावरेतीव्रविषविशेषे ॥ देवासुररणेदेवैर्हतस्यपृथुमालिन: । दैत्यस्यरुधिराज्जातस्तरुरश्वत्थसन्निभ: ॥ निर्यास:कालकूटाख्योमुनिभि: परिकीर्त्तित: । सोऽहिच्छत्रेशृङ्गवेरे कोङ्कणे मलये भवेत् ॥ कालमपि

कूटयति । कूटपरिदाहे । चु० । कर्मण्यण् ॥ कालस्य कर्मणो मृत्योर्वा कूटोऽग्निरिवेति वा ॥

कालकृत् । पुं । सूर्ये ॥ कालं करोति । डुकृञ्० । क्विप् । तुक् ॥

कालकृतः । पुं । सूर्ये ॥ त्रि । कालजाते ॥ यथा । सर्वं कालकृतम्मन्ये कालोहि बलवत्तरः । इतिपु ॥

कालकेशी । स्त्री । नील्याम् ॥

कालखञ्जनम् । न । यकृति ॥ इतिहेमचन्द्रः ॥

कालखञ्जः । पुं । महानरकविशेषे ॥

कालखण्डम् । न । दक्षिणकुक्षिस्थे मांसखण्डे । यकृति ॥ कालश्चतत्खण्डञ्च ॥

कालग्रन्थिः । पुं । वत्सरे ॥

कालघण्टः । पुं । योगविशेषे ॥ यथा । षष्ठीं शीतांशुवारे परिहर दशमीं सप्तमीम्भार्गवेपि अष्टम्यां देवपूज्यं बुधदिननवमीं सौरिवारे दशम्याम् । एकादश्याञ्च भौमे दशशतकिरणेव र्जयेद्द्वादशीञ्च सर्वारम्भं न कुर्याज्जनयति विपदं कालघण्टोहि योगः इति ॥

कालङ्कृतः । पुं । कालकासुन्दे इतिगौडभाषाप्रसिद्धे कासमर्दे । कसौंदी इतिभाषा ॥

कालचक्रम् । न । कालस्वरूपे चक्रे ॥ यथा । कालोद्विविधेऽवसर्पिण्युत्सर्पिणीषुभेदतः । सागरकोटिकोटीनां विंशत्या स समाप्यते ॥ अवसर्पिण्यांषडरा उत्सर्पिण्यांतएवविपरीताः । एवंद्वादशभिररैर्विवर्त्ततेकालचक्रमिदम् ॥ इतिहेमचन्द्रः ॥ वत्सरस्वरूपे ॥

कालचिन्तकः । पुं । ज्योतिर्विदि । दैवज्ञे ॥

कालज्ञः । पुं । कुक्कुटे ॥ त्रि । अत्याय ज्ञाल इतिविदुषि ॥ वहेदमित्रं स्कन्धेन यावत्कालविपर्ययः । तमेवचागते काले भिन्द्याद्घटमिवाश्मना ॥ कालं जानाति । ज्ञा० । कः ॥

कालञ्जरः । पुं । योगिचक्रस्यमेलके ॥ भैरवे । शिवे ॥ पर्वतविशेषे ॥ देशविशेषे ॥ काल्याःस्थाने सिद्धपीठे ॥

कालञ्जरा । स्त्री । } चण्ड्याम् ॥
कालञ्जरी । स्त्री । }

कालतालः । पुं । तमालवृक्षे ॥

कालतिन्दुकः । पुं । काकेन्दौ । कुपीलुके ॥

कालदण्डः । पुं । योगविशेषे ॥ कालस्य दण्डे ॥

कालधर्म्मः । पुं । मृत्यौ ॥ समयस्वभावे ॥ कालस्य धर्मः ॥

कालनियोगः । पुं । दैवमायाम् ॥ कालस्य नियोगः । कालकृतो वा नियोगः ॥

कालनिर्य्यासः । पुं । गुग्गुलौ ॥

कालनेमिः । पुं । राक्षसविशेषे ॥ हिरण्यकशिपुपुत्रे । दैत्यविशेषे ॥

कालनेमी । पुं । कालनेमौ ॥

कालनेमिनिहा । पुं । श्रीपतौ । विष्णौ ॥ कालनेमिं निजघानेति ॥

कालनेमिरिपुः । पुं ।
कालनेमिहा । पुं ।
कालनेम्यरिः । पुं । } विष्णौ ॥

कालपर्णः । पुं । तगरवृक्षे ॥

कालपालकम् । न । कङ्कुष्ठमृदि ॥

कालपाशः । पुं । यात्रायां वर्जनीयविशेषे ॥ उत्तरादिषु पूर्वान्तदिक्षु सूर्यादितः क्रमात् । काल स्तत्सम्मुखे पाशो निशायान्तु विपर्य्ययः ॥ सम्मुखस्थौ कालपाशौ यात्रायान्तु विवर्जयेत् ॥

कालपीलुकः । पुं । कुपीलौ ॥

कालपुच्छः । पुं । मृगविशेषे ॥ गुणै रेणुसमः कालपुच्छो मुनिभि रीरितः ॥

कालपुरुषः । पुं । यमसहाये ॥ ज्योतिश्शास्त्रे ॥ यथा । किन्त्वस्य कालपुरुषाख्यमहार्णवस्य गच्छेत् कदाचिदन्तमृषिर्मनसापि पारम् । इति ॥ नराणां शुभाशुभज्ञानार्थं जन्मलग्नादिद्वादशराशिकल्पिते ज्योतिश्शास्त्रप्रसिद्धे पुरुषाकारे ॥

कालपृष्ठः । पुं । मृगविशेषे ॥ कङ्कपक्षिणि ॥ न । कोदण्डमात्रे । धनुर्मात्रे ॥ कर्णचापे । कर्णस्य पृथासनयस्य धन्वनि ॥ कालो यम इव पृष्ठ मस्य । कालवर्णं वा पृष्ठ मस्य ॥

कालपेषी । स्त्री । श्यामलतायाम् ॥

कालप्रभातम् । न । शरदृतौ ॥ इति त्रिकाण्डशेषः ॥

कालभाण्डिका । स्त्री । मञ्जिष्ठायाम् ॥

कालमानः । पुं । कृष्णार्जके । कृष्णतुलस्याम् ॥ राजनिर्घण्टे कालमाल इति पाठः ॥

कालमुष्कः । पुं । घण्टापाटलिवृक्षे ॥

कालमूलः । पुं । रक्तचित्रके ॥

कालमेघः । पुं । श्यामलेसघनेघने ॥

कालमेशिका । स्त्री । कालमेष्याम् ॥ काले मिष्यते । मिशशब्दे । कर्मणि घञ् । गौ० ङीष् । स्वार्थे कन् ॥

कालमेषी । स्त्री । कालमेषिकायाम् । मञ्जिष्ठायाम् ॥ त्रिवृति ॥ सोमराज्याम् ॥ कालं वर्णं मिषति । मिष स्पर्द्धायाम् । कर्मण्यण् । गौरा

इत्यस्मात् ङीष्॥

कालयुक्तः। पुं। वत्सरे॥ यथा। गोम हिष्योर्विनश्यन्तियेचान्येमटनर्त्तकाः। वासवोवर्षते देवियस्मात्रवर्षिका यते॥ तिलसर्षपमाषादिकार्पासानां महार्घता। गोमहिष्यः सुवर्णानि कांस्यताम्राश्मेषतः॥ तस्मिन् देवि विक्रीयकर्त्तव्योधान्यसञ्चयः। तेन धान्येन लोकोऽयं निस्तरिष्यति दुर्दिनम्॥ पार्थिवामेघका द्दीनाः कालयुक्ते प्रपीडिताः॥ इति॥

कालरात्रिः। स्त्री। सर्वभूतापहारिण्यां महादेव्याम्॥ सर्वमारकस्यापिका कस्य रात्रिर्नाशिका। प्रलयेकालस्यापिनाशात्॥ कालरात्रिर्यमभगिनीतिभावप्रकाशः॥ कल्पान्तरात्रौ॥ भीमरथ्याम्॥ निशाविशेषे। दीपावल्याम्॥ दीपावलीतुयाप्रोक्ता कालरात्रिःसामतेत्यागमवचनात्॥ दुर्गायाः शक्तिविशेषे॥ दैत्यनिमग्नप्रलयेऽपीतिकश्चित्॥ कालः संहारोमरणं तदुपलक्षिता रात्रिः॥

कालवृक्षः। पुं। कालाञ्जिवृक्षे॥

कालवन्धनम्। न। विड्लवणे॥

कालशीषम्। न। तिला इति गौडभाषाप्रसिद्ध कृष्णागुरौ। वक्त्रे। सीसके॥

कालविद्। पुं। ज्योतिर्विदि॥ ज्योतिर्विदि कालः परमार्थः इत्याह। तन्न। कालैक्ये मुहूर्त्तादिव्यवहारायोगात्। तथानानात्वेऽपि न स्वातन्त्र्यम्। अन्यविषयत्वेन प्रतीतेः। उदयकालादिरूपाद्दिनाक्रियाधर्मत्वेन प्रतीतेः स्फुटत्वात्। नचक्रियाधर्मत्वं कालेपितदुत्पत्तिदर्शनात्। अन्यथाकाशानवच्छिन्नत्वेनक्रियानित्यत्वापातात्॥ त्रि। अवसरज्ञे॥

कालविभक्तिः। स्त्री। मासर्त्त्वयनादौ॥

कालवृन्तः। पुं। कुलत्थवृक्षे॥

कालवल्ली। स्त्री। पाटलावृक्षे॥

कालवेला। स्त्री। क्रियानर्हकालविशेषे॥ यथा। पञ्चविषधुक्तिनगेन्द्र वेददिग्द्शिनसापिदिवाऽवरात्रौ। षट्तूर्यरामाक्षिशराब्धिचन्द्रनागासुत्र्यादिषुकालवेला इति॥ कालस्वमनेस्तस्यामार्द्रकृपावेला॥ इतिदीपिका॥

कालशाकम्। न। नाडिकम् शाकशाकम् कालकमितिपर्यायप्रसिद्ध शाकविशेषे। नरिका नरचा इतिगौडभाषा॥ कालशाकंसरंरुच्यं वातकृत्कफशोफहृत्। बल्यं रुचिकरं मेध्यं रक्तपित्तहरं हिमम्॥

कालशालिः। पुं। कृष्णशालौ॥

कालमेयम् । न । गोरसे । घोले ॥ कलस्याम् मन्थनपात्रे ? ? म् । इति कुचिकलशिवस्याम्त्य हेर्दम् ॥

कालसंरोधः । पुं । चिरकालावस्थाने ॥

कालसर्पः । पुं । कृष्णसर्पे । महाविषे ॥

कालसारः । पुं । कृष्णसारे मृगे ॥ न । पीतचन्दने । कालानुसार्ये । कालिया इतिगौडभाषा ॥

कालसूत्रम् । न । अयुतयोजनपरिमण्डले ताम्रमयेतप्तसमदेशे उपर्यधस्तादग्न्यर्काभ्यामतितप्यमाने नरके ॥ कृत्वा ... पच्छेदनरूपेण नरके ॥

कालसेयम् । न । घोले ॥

कालस्कन्धः । पुं । तमालवृक्षे ॥ तिन्दुकवृक्षे ॥ जीवकद्रुमे ॥ दुष्खदिरे ॥ उदुम्बरे ॥ कालः स्कन्धो यस्य ॥

कालहानिः । स्त्री । विलम्बे ॥

कालहीनः । पुं । लोभे ॥

काला । स्त्री । कृष्णत्रिवृतायाम् ॥ कालयति । कलविक्षेपणे । णिच् । अच् । पचाद्यच् ॥ मञ्जिष्ठायाम् ॥ नीलिकायाम् ॥ कल्यते । कलक्षेपे । कर्मणि घञ् ॥ कृष्णजीरके ॥ अश्वगन्धायाम् ॥ पाटलावृक्षे ॥ कालियाकडा इतिगौडभाषाप्रसिद्धे कुलिकवृक्षे ॥ कालोवर्णोऽस्यास्ति । अर्श आद्यच् ॥

गौर्याम् ॥ वर्णाद्यविषयायां जानपदेतिना ङीष् ॥

कालाक्षरिकः । त्रि । शिक्षिताक्षरे ॥

कालाख्या । स्त्री । नवविधासु तुष्टिषु तृतीयायाम् ॥ यथा । प्रव्रज्यापिन सद्योनिर्वाणदेति सैवकालपरिपाकमपेक्ष्यसिद्धिंतेविधास्यति अलमुत्तमतयेत्युपदेशे यातुष्टिः साकालाख्या ओघ उच्यते ॥

कालागुरु । न । कृष्णागुरुणि ॥ कालञ्चतत् अगुरुच ॥ अयंप्राग्ज्योतिषे भवतीतिप्रसिद्धिः ॥

कालाग्निरुद्रः । पुं । संहारकारिरुद्रे ॥

कालाग्निः । । पञ्चमुखे रुद्राक्षे ॥

कालाङ्गः । पुं । कात्रेयप्रभेदे ॥

कालाङ्गम् । न । कालपुरुषस्याङ्ग ॥ यथा मेषः शिरो वृषोवक्त्रं मिथुनं बाहुयुग्मकम् । कर्कटोहृदयञ्चैव सिंहस्तूदरमेवच ॥ कन्याकटिस्तुलावस्तिर्वृश्चिकोगुह्यमेवच । धनुरूरूमृगो जानुकुम्भोजङ्घेप्रकीर्त्तिते ॥ मीनः पादद्वयञ्चैव कालाङ्गानि यथाक्रमम् ॥ इतिकालनरस्याङ्गसदसद्ग्रहयोगतः । पुंसामपितदङ्गेषु शुभाशुभफलंवदेदिति ॥

कालाञ्जनी । स्त्री । नीलाञ्जन्याम् । रेचन्याम् ॥

गतौ । कालेऽभ्युत ॥
कालातीत: । पुं । कालात्ययापदिष्टे ॥ कालातिक्रमणे ॥ कालस्य अतीतम् ॥ त्रि । अतीतकाले ॥
कालात्ययापदिष्ट: । पुं । कालातीते । बाधितहेतौ ॥ कालस्य साधनकालस्य अत्यये अभावे अपदिष्ट: प्रयुक्तो हेतु: । एतेन यस्य हेतो: साध्याभाव: प्रमाणान्तरेण सिद्ध: स कालात्ययापदिष्ट: । यथा । वह्निरनुष्ण: कृतकत्वात् । अत्रानुष्णत्वसाध्यस्य तदभावउष्णत्वम् तत्स्पर्शेन प्रत्यक्षेणागृह्यते इति ॥
कालामल: । पुं । प्रलयाग्नौ ॥
कालानुनादी । पुं । भ्रमरे । रोलम्बे ॥ कलविङ्के ॥ कपिञ्जले ॥
कालानुशारिवा । स्त्री । तगरपादिके । तगरमूल इति भाषा ॥ शीतल्याम् । शिउलीछोप इति गौडभाषा ॥
कालानुसारकम् । न । तगरे ॥ पीतचन्दने ॥
कालानुसारि: । पुं । शैलेये । शैलज नामगन्धद्रव्ये ॥
कालानुसार्य्य: । पुं । न । शैलेये ॥ कालीयके । गौडभाषया कालियानाम पीतवर्णसुगन्धिकाष्ठे ॥ शिंशपावृक्षे ॥ तगरे ॥ कालेन अनुस्रियते । सृ

कालानुसार्य्यकम् । न । शैलेये ॥
कालान्तरविष: । पुं । मूषिकादौ ॥
कालाप: । पुं । सर्पभोगे ॥ राक्षसे ॥ त्रि । कलापव्याकरणज्ञे ॥
कालापकम् । न । चतुर्णां श्लोकानां सम्बन्धे ॥
कालायसम् । न । लौहे ॥ कालञ्च तत् अयश्च । अनोश्मायः सरसां जातिसंज्ञयोरितिटच् ॥
कालायीनम् । न । कलायानां भवने क्षेत्रे ॥ कलायानाम् भवनं क्षेत्रम् । धान्यानाम्भवने क्षेत्रेखञ् ॥
कालाशुद्धि: । स्त्री । शुभकर्मानर्हसमये ॥ सा यथा । बाल्येऽतिवार्द्धके ऽस्तारव्यत्वेगुरुशुक्रयो: । गुरौ मकरसिंहस्थे चयमासाधिमासयो: ॥ त्रयोदशदिनेपक्षेगुर्वादित्येतथैव च । लुप्ताब्देत्रिविधोत्पाते कालाशुद्धिरुदाहृतेति ॥
कालिक: । पुं । क्रौञ्चविहगे ॥ न । कालीये । कृष्णचन्दने ॥ न । वैरे ॥ प्रकृष्टोदीर्घ: कालोऽस्य । प्रकृष्टेठञ् ॥ त्रि । कालसम्बन्धिनि ॥ सामयिके ॥ कालेन निर्वृत्त: । निर्वृत्तेऽक्षद्यूतादिभ्य इतिठञ् ॥ काले भवो वा । कालाट्ठञ् ॥

कालिका । स्त्री । गौर्य्याम् ॥ चण्डिकाभेदे ॥ कार्ष्ण्ये ॥ वृश्चिकपत्रवृक्षे ॥ क्रमदेयवस्तुमूल्ये ॥ धूसर्य्याम् ॥ नवमेघे ॥ पटोलशाखायाम् ॥ रोमाल्याम् ॥ मांस्याम् ॥ काक्याम् ॥ शिवायाम् ॥ मेघावल्यौ ॥ स्वर्णादिदोषे ॥ सुरायाम् ॥ चीरकीटे ॥ काकोल्याम् ॥ श्यामाख्यविहगे ॥ प्रतिमासीयवृद्धौ ॥ यथा । प्रतिमासंस्रवतिया वृद्धिः साकालिकामतेतिनारदः ॥ कुज्झटिकायाम् ॥ हिमाचलभवायां त्रिशिरायां हरीतक्याम् । सागन्धयोगकरणे प्रशस्ता भवति ॥ कालोवर्णः समयश्चास्त्यस्याः । अत इनिठनाविति ठन् ॥ स्त्रा० कन्वा । केण इति ह्रस्वः ॥

कालिकापुराणम् । न । उपपुराणविशेषे ॥

कालिकाव्रतम् । न । अमावास्यायां स्त्रीकर्त्तव्ये भविष्यपुराणोक्त व्रतविशेषे ॥

कालिङ्गः । पुं । भूमिकर्कारौ ॥ हस्तिनि । द्विपे ॥ सर्पे ॥ लोहविशेषे ॥ अस्य लक्षणं यथा । कालिङ्गो लिङ्गवान् यःस्यात् घनःस्वच्छाङ्गकोमत इति ॥ कलिङ्गानां राजनि ॥ ज्ञानमगधर्व्वालङ्कस्वरमसाद्दश ॥ न । कर्व्वीदातरवृज इतिख्यातफलविशेषे । सुवर्त्तुले । कालिन्दके ॥ गुणा यथा । कालिङ्गं ग्राहि हृत्पित्तशुक्रघ्नं शीतलं गुरु । पक्वन्तु सोष्णं सक्षारं पित्तलं कफवातजित् ॥ कालिङ्गाः पुं भूम्नि । नीवृति ॥ कलिङ्गदेशमारभ्य पश्चाद्देयोऽजमशिवे । दक्षिणस्याम् हेशानि कालिङ्गाः परिकीर्त्तिताः ॥

कालिङ्गिका । स्त्री । त्रिवृति ॥

कालिङ्गी । स्त्री । राजकर्क्कट्याम्

कालिदासः । पुं । विक्रमादित्यसभायां नवरत्नमध्यगणिते प्रसिद्धकविविशेषे । मेधारुद्रे ॥ काल्याःदासः । ङ्यापोः संज्ञाछन्दसोर्बहुलमिति ह्रस्वः ॥

कालिनी । स्त्री । आर्द्रानक्षत्रे ॥ इति हेमचन्द्रः ॥

कालिन्दम् । न । } कर्व्वीदा इति प्रसिद्ध फलविशेषे । कालिङ्गे ॥
कालिन्दकम् । न । }

कालिन्दी । स्त्री । यमुनायाम् ॥ कलिन्दस्येयम् । तस्येदमित्यण् । ङीप् ॥ रक्ताविवृति ॥

कालिन्दीभेदनः । पुं । कालिन्दीकर्षणे । बलदेवे ॥ कालिन्द्याः भेदनः ॥

कालिन्दीसूः । स्त्री । सूर्य्यपत्न्याम् । यमुनामातरि ॥

कालिन्दीसोदरः । पुं । यमे ॥ कालि

न्याःसोदरः ॥

कालिमा । पुं । कार्ष्ण्ये ॥

कालियः । पुं । कृष्णसर्पविशेषे ॥

काली । स्त्री । मालवराजपतन्याम् । सत्यवत्याम् ॥ कालिकायाम् ॥ अम्बिकाललाटाविर्भूतायां देव्याम् । क्षीरकीटे ॥ मातृभेदे । उमायाम् । काल सङ्कलनात् कालीत्यागमः ॥ कालकरस्थायां देव्याम् ॥ नव्यमेघौघे ॥ परिवादे ॥ कालाञ्जन्याम् ॥ तुवर्याम् ॥ त्रिवृति ॥ रात्रौ ॥ वृश्चिकाल्याम् । विछाटी इति गौड भाषा ॥ वह्निजिह्वाविशेषे । कालोवर्णोऽस्यस्याः । कालाज्जामपदकुण्डगोणस्थलभाजनागकालनीलेत्यादिनाङीष् ॥

कालीकः । पुं । क्रौञ्चे ॥

कालीची । स्त्री । यमस्यविचारभूमौ ॥ इतित्रिकाण्डशेषः ॥

कालीतनयः । पुं । महिषे ॥ इतिहेमचन्द्रः ॥

कालीयम् । न । कृष्णचन्दने । हरिचन्दने ॥ कुङ्कुमे ॥ पुं । सर्पविशेषे ॥

कालीयकः । पुं । दारुहरिद्रायाम् ॥ न । गौडभाषया कालिया इति प्रसिद्धे पीतवर्णे सुगन्धिकाष्ठे । जायके । कालानुसार्ये ॥ कृष्णचन्दने ॥ कालीयकं रक्तगुणं विशेषाद्यवनाशनम् ॥ कालस्यवर्णस्येदम् । वृद्धाच्छः । स्वार्थेकन् ॥

कालीयकचोदः । कुङ्कुमे ॥

कालुष्यम् । न । मालिन्ये ॥

कालेयः । पुं । दैत्यभेदे ॥ न । कालखण्डे । यकृति ॥ गौडभाषया कालिनामपीतवर्णसुगन्धिकाष्ठे ॥ प्राग्दीव्यतीयेर्थे अग्निकलिभ्यांढग्वक्तव्यः इतिढक् ॥

कालेयकः । पुं । दारुहरिद्रायाम् ॥ कुक्कुरे ॥ न । कालीयके । पीतवर्णे सुगन्धिकाष्ठे ॥ कलेरयम् । सर्वत्राग्निकलिभ्यांढक् । स्वा० कन् ॥

काल्यः । पुं । कर्पूरहलदी इति प्रसिद्धे द्राविडके । कर्चूरे ॥

काल्यकः । पुं । वेधमुख्ये । कर्चूरके । काल्ये ॥ कल्येविधौभवः । तत्रभवइत्यणन्तात् कन् ॥

काल्पनिकः । त्रि । आरोपिते । कल्पिते । कल्पनाभवे ॥ कल्पनाया आगतः । ठक् ॥

काल्पिकः । त्रि । कल्पोवेदाङ्गम् तदुक्तविधौ ॥

काल्यम् । न । प्रत्यूषे । प्रभाते ॥ कलयतिचेष्टाम् । अघ्न्यादयश्चेति कलेर्यक् । ततः प्रज्ञाद्यण् ॥ शीते

॥ त्रि। प्राप्तकाले॥ कालःप्राप्तोऽस्य। कालाद्यत॥

कालेयकः। पुं। कर्चूरे। दार्विडके॥ काले साधुः। तत्रसाधुरितियत्। स्वा॰ कम्॥

काल्यमानः। त्रि। विचाल्यमाने॥

काल्या। स्त्री। उपसर्यायाम्। गर्भग्रहणप्राप्तकालायाङ्गवि॥ कालःप्राप्तोऽस्याः। तदस्यप्राप्तमिति वर्त्तमाने कालाद् यत्॥

कावचिकम्। न। सनुचिणाङ्गणे॥ कवचिनांसमूहः। ठञ्कवचिनश्च॥

कावाद:। पुं। वाक्कलहे॥ ईषद्वादः ईषदर्थेचेतिकोः कादेशः॥

कावारम्। न। शैवले॥ आसमन्तात् वार्य्यते आच्छाद्यतेऽनेन। कृत्रञ्चु रादेः पुंसीतिघः। यद्वाआवारयति व्रियते वा। कृञ्॰। अच्। घञ्वा। कस्यजलस्य आवारम्॥

कावारी। स्त्री। छत्राद्विच्छत्रके। अमत्कुट्याम्। वारिवायाम्॥ छत्रारति भाषा॥

कावृकः। पुं। कुक्कुटे॥ चक्रवाके॥ पीतमुण्डखगे॥

कावेरम्। न। कुङ्कुमे॥

कावेरी। स्त्री। वेश्यायाम्॥ हरिद्रायाम्॥ सरिद्विशेषे॥ कस्य जलस्य वेरं शरीरम्। तस्येवम्। सस्येदमित्यण्। ङीप्। ईषद्वेरमस्या वा॥

काव्यः। पुं। शुक्रे। दैत्यगुरौ॥ न। ग्रन्थे। कविकृतौ॥ अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यमितिवामनः॥ तत्त्रिविधं यथा। सव्यङ्ग्यमुत्तमं काव्यं मध्यङ्ग्यमधमं स्मृतम्। किञ्चिद्व्यङ्ग्यसमायुक्तं मध्यमं परिकीर्त्तितमितिकाव्यचन्द्रिका॥ कवेरपत्यम्। कुर्वादिभ्योण्यः॥ कवेरिदङ्कर्मभावो वा। त्रा॰। ष्यञ्॥ कुधातोः श्चोरावश्यके इति ण्यद्वा॥

काव्यचौरः। पुं। चन्द्ररेखा॥

काव्यलिङ्गम्। न। अर्थालङ्कारप्रभेदे॥ अस्यलक्षणं यथा। हेतोर्वाच्य पदार्थत्वेकाव्यलिङ्गमुदाहृतमिति॥ काव्यलिङ्गं हेतोर्वाच्यपदार्थतेतिच॥ यथा। वपुःप्रादुर्भावा दनुमितमिदं जन्मनि पुरा पुरारे न प्रायः क्वचिदपि भवन्तं प्रणतवान्। नमन्मुक्तः संप्रत्यऽह मतनु रग्रेप्यनतिभाग् महेश क्षन्तव्यं त दिदमपराधद्वयमपि॥ अनेक पदार्थता यथा। प्रश यिसखीसलीलपरिहासरसाधिगतै र्ललितशिरीषपुष्पहननैरपि ताम्यति यत्। वपुषि वधाय तत्र तव शस्त्र मुपक्षिपतः प

ततु शिरस्यऽकाण्डयमदण्ड इवैष भुजः ॥ एक पदार्थता यथा । भस्मो द्धूलनभद्रमस्तु भवते रुद्राक्षमाले शुभं. हा सोपानपरम्पराङ्गिरिसुताकान्तालयालङ्कृतिम् । अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखालोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥ एषु अपराधद्वये पूर्वापरजन्मनोरनमनम् भुजपाते शस्त्रोपक्षेपो महामोहे-सुखालोकोच्छेदित्वञ्च यथाक्रम-मुक्तरूपो हेतुः ॥

काव्या । स्त्री । पूतनायाम् ॥ बुद्धौ ॥

काव्यार्थापत्तिः । स्त्री । अर्थालङ्कारप्रभेदे ॥ कैमुत्येनार्थ संसिद्धिः काव्यार्थापत्तिरिष्यते । स जित स्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम् ॥ अत्र सदृश्यनेन पद्मानि येन जितानि इति विवक्षितम् । तथाच सोऽपियेनजित स्तेन पद्मानिजितानीति किमुवक्तव्यमितिदण्डापूपिकान्यायेन पद्मजयरूपस्यार्थस्य संसिद्धिः काव्यार्थापत्तिः ॥ तान्त्रिकार्थापत्तिव्यावर्त्तनाय काव्यविशेषणम् । यथा वा । अधरोयमधीराक्ष्याबन्धुजीवप्रभाहरः । अन्यजीवप्रभांहन्तहरतीति किमद्भुतम् ॥ स्वकीयहृदयं



भित्त्वा निर्गतौ यौ पयोधरौ । हृदयस्यान्यदीयस्य भेदने का कृपातयोः ॥

काशः । पुं । रोगविशेषे ॥ क्षुते ॥ पुं । कण्ठकण्डूयने ॥ काँस इति प्रसिद्धे तृणविशेषे । इक्षुगन्धायाम् ॥ काशः स्यान्मधुरस्तिक्तः स्वादुपाकोहिमः-सरः । मूत्रकृच्छ्राश्मदाहास्रक्षयपित्तजरोगजित् ॥ न । काशपुष्पे ॥ काशते । काशृदीप्तौ । पचाद्यच् ॥

काशकः । पुं । काशे । काँस इतिभाषा ॥

काशाल्मलिः । स्त्री । कूटशाल्मलिवृक्षे ॥

काशिः । स्त्री । देशविशेषे । काश्याम् ॥ काशते । काशृ० । सर्वधातुभ्य इन् ॥

काशिका । स्त्री । काश्याम् । महाश्मशाने ॥ प्रकाशिकायाम् ॥ काश्येव । । स्वार्थे कन् ॥ काशिक्याम् ॥ काश्यादिभ्यष्ठञ्ञिठः। इकारउच्चरणार्थः॥

काशिकाप्रियः । पुं । दिवोदासे । धन्वन्तरौ ॥

काशिकी । स्त्री । काश्याञ्जातायाम् ॥ काश्यांजाता तत्रभवा तत आगता दिर्वा । काश्यादिभ्यष्ठञ्ञिठाविति ठञ् । ङीप् ॥

काशिराजः । पुं । नृपतिविशेषे । धन्व

न्तरौ । सुषोङ्गे ॥ काश्याः राजा । राजाह: सखिभ्यष्ट । ॥

काशी । स्त्री । वाराणस्याम् । तपःस्थल्याम् । अविमुक्ते । आनन्दवने ॥ मुने प्रलयकालेऽपि न तत् क्षेत्रं कदाचन । विमुक्तं न शिवाभ्यां यद् विमुक्तं ततोविदुः ॥ न यदाभूमिवलयं न यदापां समुद्भवः । तदा विहर्त्तुं मीशेन क्षेत्र मेत द्विनिर्मितम् ॥ इत्यगस्त्यम्प्रतिस्कन्दवचनम् ॥ अयोध्या मथुरा माया काशी काञ्ची अवन्तिका । पुरीद्वारावती चैव सप्तैता मोक्षदायिकाः ॥ एतास्तु पृथवीमध्ये न गण्यन्ते कदाचन । पुरीद्वारावतीविष्णोः पाञ्चजन्यो परिस्थिता ॥ एताश्च मुक्तिदाः सर्वा एकचगणिताःसुरैः । यानि यानिच क्षेत्राणि काशीप्राप्तिकराणिषट्॥प्राणिना मिह मोक्षार्थं महाकारुणिकः शिवः । तारोपदेशं कुरुते इत्याहुः शास्त्रकोविदाः । यथोक्तंरुद्रयामले । काशीपुरीपरिसरे सुरसिन्धुतीरे कर्णे जपत्यनुदिनं किल देहभाजाम् । मोक्षार्थमेव दयया शशिखण्डमौलिः श्रीशक्तिबीजमनघं सुरसंघसेव्यमिति ॥ तत्र वेष्ण वेभ्योरामम न्त्रश्च शैवेभ्यःपञ्चाक्षरस्य



वृहज्ज्जाबालोक्त्या शाक्तेभ्यःशक्तिबीजस्यभुवनेश्वरीमन्त्रस्य यतिभ्यःप्रणवस्येतिव्यवस्था॥सदा कृतयुगञ्चास्तु सदा चास्तू त्तरायणम् । सदा महोदयश्चास्तु काश्यां निवसतां सताम् ॥लोलार्ककेशवौ कोटी गङ्गाज्या नगरंधनुः । कलि लक्ष्यः शरो धर्म्मः शिवो धन्वी पुनातु माम् ॥ अथवा सर्वक्षेत्राणि काश्यां सन्ति नगोत्तम । तत्र नित्यं वसेन नित्यं देवीभक्तिपरायणः ॥ तानि स्थानानि सम्पश्यन् जपन् देवीं निरन्तरम् । ध्यायं स्तच्चरणाम्भोजं मुक्तोभवति वन्धनादितिदेवीगीता देवीभागवते ॥ काशते । काशृदीप्तौ । पचाद्यच् । गौरादित्वान् ङीष् ॥

काशीनाथः । पुं । विश्वेश्वरे । शिवे ॥

काशीराजः । पुं । शिवे ॥ धन्वन्तरौ ॥ काश्याः राजा । टच् ॥

काशीशम् । न । धातुकाशीशे । शीरा कसीति प्र० उपधातुविशेषे ॥ तद्द्विविधम् । हरिद्वर्णं लोहितञ्च धातुकाशीशमिष्यते । शुक्लवर्णं तथाकृष्णाम्पुष्पकाशीशमुच्यते ॥

काशृकारः । पुं । गुवाके ॥

काश्मरी । स्त्री । गम्भार्याम् ॥ काशते । काशृ० । अन्येभ्योपीतिमनिन् । व

नोरश्चेति ङीब्रौ ॥

काश्मर्य्यः । पुं । काश्मरीवृक्षे । गम्भा-
र्याम् ॥ काश्मरीशब्दोऽस्त्यस्य । अन्ये
भ्योपीतियप् ॥

काश्मीरम् । न । पुष्करमूले ॥ कुङ्कुमे ॥
टङ्के ॥ पुंभूम्नि । देशविशेषे । शाल्मशि
ल्पिषु ॥ संप्रदायविशेषे ॥ यथा । शा
रदामठमारभ्य कुङ्कुमाद्रितटान्तक-
म् । तावत् काश्मीरदेशः स्यात् पञ्चा
शद्योजनात्मकः ॥ कश्मीरेषु भवम् ।
तत्रभवइत्यर्थे कच्छादिभ्य श्चेत्यण्
॥ स्वार्थेणवा ॥

काश्मीरजम् । म । कुष्ठे । पारिभाव्ये
॥ कुङ्कुमे ॥ पुष्करमूले ॥ काश्मीरे
जायते । जनी० । सप्तम्यांजनेर्डः ॥

काश्मीरजन्म । न । कुङ्कुमे ॥ कुष्ठे ।
पारिभाव्ये ॥ काश्मीरे जन्मास्य ॥

काश्मीरजा । स्त्री । अतिविषायाम् ।
महौषधे ॥

काश्मीरा । स्त्री । अतिविषायाम् ॥ क
पिलद्राक्षायाम् ॥ पृथिव्याम् ॥

काश्मीरी । स्त्री । गम्भार्याम् ॥ गुण
यथा । काश्मीरीतुवरातिक्ताधीर्यो
ष्णामधुरागुरुः । दीपनी पाचनी
मेध्याभेदिनीभ्रमशोषजित् ॥ दो
षतृष्णामशूलार्शोविषदाहज्वराप-
हा । तत्फलंवृंहणंवृष्यंगुरुकेश्यंरसा
यनम् । वातपित्ततृषारक्तक्षयमूत्र
विबन्धहृत् ॥ स्वादुपाकेहिमंस्निग्धं
तुवराम्लंविशुद्धिकृत् । हन्याद्दाहतृ
षावातरक्तपित्तक्षतक्षयानिति ॥

काश्यः । पुं । काशिराजे ॥ न । मद्ये ॥

काश्यपः । पुं । मुनिविशेषे ॥ कणाद
मुनौ ॥ मृगविशेषे० ॥ मीनवि० ॥
गोत्रवि० ॥ तत्प्रवरान्तर्गतमुनिवि०
॥ कश्यपस्यात्मजमात्रे ॥ कश्यपस्यगो
त्रापत्यम् । विदाद्यञ् ॥ न । मांसे
॥ इतिहेमचन्द्रः ॥

काश्यपिः । पुं । अरुणे । गरुडाग्रजे ॥ ग
रुडे ॥ कश्यपस्यापत्यम् । वा० इञ् ॥

काश्यपी । स्त्री । पृथिव्याम् । भूमौ ॥
कश्यपस्येयम् । तस्येदमित्यण् । ङी
प् ॥ अम्बिकायाम् ॥

काश्यपेयः । पुं । सूर्य्ये ॥

काश्वरी । स्त्री । काश्मर्याम् । गम्भा
र्याम् ॥ काशते । काशृ० । अन्येभ्यो
पीतिवनिप् । वनोरचेतिङीब्रौ ॥

काषः । पुं । कषणे ॥ कषणपाषाणे ॥
कष्यतेऽनेन । काष० । घञ् ॥

काषायम् । त्रि । कषायेणरक्ते वस्त्रादौ
॥ तेनरक्तंरागादित्यण् ॥

काषायी । त्रि । कषायरक्तवस्त्रवति ॥

काष्ठम् । न । दारुणि । इन्धने ॥ अर्क
निष्कास नार्थेकाष्ठे ॥ यथा । ससा

रमति शुष्कं यत् मुष्टिमध्येसमेष्यति। तत् काष्ठकुष्ठमिति आहुः खदिरादिसमुद्भवम्॥ काशते। काशृ॰। हनिकुषीत्यादिना क्थन्। त्रश्चेति षत्वम्। तिसुचेतिनेट्॥

काष्ठकम्। न। अगुरुणि॥

काष्ठकदली। स्त्री। वनकदल्याम्। शिलारम्भायाम्। काठकेला इतिभाषा॥

काष्ठकीटः। पुं। घुणे॥

काष्ठकुट्टः। पुं। शतच्छदखगे। खटकबढैया इति भाषा॥

काष्ठकुद्दालः। पुं। अभ्रयाम्। नौकादेर्मलापनयनार्थेकाष्ठघटितकुद्दाले॥ कमुद्दालयति। दलविदारणे। कर्मण्यण्। शकंध्वादिः। काष्ठस्य कुद्दालः॥

काष्ठजम्बूः। स्त्री। भूमिजम्ब्वाम्॥

काष्ठातट्। पुं। वर्णसङ्करजातिविशेषे। रथकारे। वर्द्धकौ। बढइ इति भाषा॥ काष्ठं तक्षति। तक्षूतनूकरणे क्विप्। काष्ठतक्षौ। काष्ठतड्भ्यामित्यादिरूपाणि॥

काष्ठतक्षकः। पुं। रथकारे। तक्षणि॥ काष्ठंतक्षति। तक्षू॰। ण्वुल्॥

काष्ठतन्तुः। पुं। कोषकारे। काष्ठकृमौ॥

काष्ठदारुः। पुं। देवकाष्ठे॥

काष्ठद्रुः। पुं। पलाशवृक्षे॥

काष्ठधात्रीफलम्। न। आमलके॥

काष्ठपाटला। स्त्री। सितपाटलिकायाम्॥

काष्ठमठी। स्त्री। चितायाम्॥ इति त्रिकाण्डशेषः॥

काष्ठमल्लः। पुं। शवयाने। अर्थी इति भाषा॥

काष्ठमौनम्। न। इङ्गितेनापिस्वाभिप्रायाऽप्रकाशने॥

काष्ठलेखकः। पुं। घुणे॥

काष्ठलोही। पुं। काष्ठलोहयुक्तमाचे। वातद्वौ॥

काष्ठवल्लिका। स्त्री। कटुकायाम्॥

काष्ठशारिवा। स्त्री। शारिवायाम्। अनन्तमूल इतिगौडभाषा॥

काष्ठा। स्त्री। दारुहरिद्रायाम्॥ स्थितौ। स्थानमात्रे॥ दिशि। आशायाम्॥ उत्कर्षे। प्रकर्षे॥ मर्यादायाम्। सीमनि॥ निष्ठायाम्॥ पर्यवसानभूमौ॥ अष्टादशनिमेषात्मके काले॥ दशक्षणपरिमितेकाले॥ काशते। काशृ॰। हनिकुषिनीरमिकाशिभ्यः क्थन्। त्रश्चेतिषत्वम्। टाप्॥

काष्ठाम्बुवाहिनी। स्त्री। द्रोण्याम्। काष्ठादिकृतच्छिद्रशयनौकाकृतिजलसेचन्याम्॥ पुनः पुनरम्बुवहति। व

कुलमाभीरत्यश्च्यतिरिति: । काष्ठस्य संम्बधिनी । काष्ठेष्वुपस्थानम् । शिलामय्या अपिद्रोणीत्वात् ॥

काष्ठालुकम् । न । काठिन्ययुक्ते कन्दविशेषे ॥

काष्ठीलः । पुं । राजार्के ॥

काष्ठीला । स्त्री । कदल्याम् ॥ काष्ठिना दृश्यते । दृशस्यप्रलोपणायोः । अच् ॥ काईषत् अष्ठीलमस्यावा ॥

काष्ठोदुम्बरिका । स्त्री । काकोदुम्बरिकायाम् ॥

कासः । पुं । खाँसीति प्रसिद्धे रोगे । क्षवथौ ॥ पञ्चकासाः स्मृतावातपित्तश्लेष्मक्षतक्षयैः । क्षयायोपेक्षिताः सर्वेबलिनश्चयथोत्तरम् ॥ कासते अनेन । कासृशब्दकुत्सनयोः । हलश्चेतिघञ् ॥

कासकन्दः । पुं । कोकणदेश प्रसिद्धे । कासालौ । विशालपर्वे ॥

कासघ्नः । पुं । मोदकविशेषे ॥ यथा । हरीतकीकणाशुण्ठीमरिचंगुडसंयुतम् । कासघ्नोमोदकः प्रोक्तस्तृष्णारोचकनाशनइति ॥

कासघ्नी । स्त्री । कण्टकार्याम् ॥

कासजित् । स्त्री । भार्ग्याम् ॥

कासनाशिनी । स्त्री । कर्कटशृङ्ग्याम् ॥

कासमर्दवटिका । स्त्री । वेसवारविशेषे ॥

कासमर्दः । पुं । कालकासुन्दा इतिगौडभाषाप्रसिद्धे गुल्मप्रभेदे । अरिमर्दे । जरणे ॥ पुं । न । कासुन्दी इतिगौडभाषाप्रसिद्धे वेसवारे ॥ पेषितजलमिश्रितवस्त्रगलितवेसवार इतिपाकराजेश्वरः ॥

कासमर्ददलम् । न । कसौंदी इति ख्यातशाके ॥ कासमर्ददलंरुच्यंवृष्यं कासविषास्रनुत् । मधुरंकफवातघ्नंपाचनंकण्ठशोधनम् ॥ विशेषतः कासहरंपित्तघ्नंग्राहकंलघु ॥

कासमर्दनः । पुं । पटोले ॥

कासरः । पुं । महिषे ॥ केजले सरति सृगतौ । अच् ॥ यद्वा ॥ कुईषत् सरति । स्थूलकायत्वात् । ईषदर्थेचेतिकोः कादेशः ॥

कासहा । पुं । क्वाथविशेषे ॥ यथा । कण्टकारीकृतः क्वाथः सकृष्णः सर्वकासहेति ॥

कासारः । पुं । सरोवरे । सपद्मं निष्पद्मंवा महाजलाशये ॥ कृत्रिमेपद्माकरे ॥ कासते । कासृशब्दे । तुषाराद्यश्चेत्यारन् ॥ यद्वा ॥ कुईषत् सारोस्य । ईषदर्थेचेति कोः कादेशः । अर्शआद्यच् ॥ यद्वा । केजले

मसारः। अन्येषामपीति दीर्घः। आकृप्रक्षेपो वा॥ कं तमृच्छति। ऋ गतौ। कर्मण्यण् वा॥

कासारम्। न। कसार इति ख्याते पक्वान्नविशेषे॥ तत् प्रकारो यथा। घृते तप्ते विनिःक्षिप्य कणिक्कां पाचयेच्छनाक्। ततस्तत्र विनिःक्षिप्य खण्डं भागसमं पचेत्॥ ततश्चावतार्य्य तत् पात्रे क्षिप्त्वा सम्यक् सुचिक्कणे। चतुरस्रीकृतं छेत्तत् भवेत् कासारसंज्ञकम्॥ कासारं रुचिदं श्रेष्ठं नातिरूक्षं नपिच्छिलम्। श्वासकफपित्तघ्नं विदर्चौरविकारकम्॥ प्रक्षिप्य माषशृङ्गाटकगोधूमाणां पृथक् पृथक्। शालूकस्यचकर्त्तव्यं कासारं खण्डसर्पिषा॥

कासारिः। पुं। कासमर्द्दे॥ आलूके॥

कासालुः। पुं। काकमादेशप्रसिद्धे आलुविशेषे। कासकन्दे॥

कासीसम्। न। हीराकसी इति गौडभाषाप्रसिद्धे उपधातुविशेषे। भस्मवन्मृत्तिकाख्याकासीसमिति परीचिते धातुकासीसे। खेचरे। धातुशेखरे॥ कासीसं धातुकासीसं पांशुकासीसमित्यपि। तदेवकिञ्चित्पीतन्तु पुष्पकासीसमुच्यते॥ कासीसमम्लमुष्णञ्च तिक्तञ्च तुवरं तथा। वातश्लेष्महरं केश्यं नेत्र्यं कण्डूविषप्रणुत्। मूत्रकृच्छ्राश्मरीश्वित्रनाशनं परिकीर्त्तितम्॥

कासूः। स्त्री। विकलवाचि॥ शक्त्यस्त्रे॥ बुद्धौ॥ रुजि॥ कसति। कसगतौ। खितकासिपद्यर्त्तेरिण्यूः॥

कासूतरी। स्त्री। शक्त्याख्ये आयुधे॥ ह्रस्वाकासूः॥ कासूगोणीभ्यां ष्टरच्। ङीष्॥

काहका। स्त्री। काहलावाद्ये॥

काहलः। पुं। कुक्कुटे॥ शब्दमात्रे॥ दुष्कुवाचाम्। मखामादे॥ बिडाले॥ न। अव्यक्तवाक्ये॥ त्रि। शुष्के॥ भृशे॥ खले॥

काहला। स्त्री। वाद्यभाण्डविशेषे। काहली इति हिमगिरौ प्रसिद्धायां ध्वनिनालायाम्॥ अप्सरसांप्रभेदे॥

काहलापुष्पः। पुं। धुस्तूरे॥ काहलीव पुष्पमस्य॥

काहली। स्त्री। तरुण्याम्। दिक्कर्याम्॥

काहारकः। पुं। कहार इति प्रसिद्धे शिविकावाहकजातिविशेषे॥ यथा। तथा गारुडिका वीराः क्षुरकर्मोपजीविकाः। व्याधाः काहारकाः पुष्टाः कृष्णं संवाहयन्ति ये इति जैमिनिभारते आश्वमेधिके पर्वणि १० अध्या

य: ॥

किंवदन्ति: । स्त्री । जनश्रुतौ ॥ कोऽपि वाद: । किम्पूर्वाद्वदे: भुवोऽभिच् । बाहुलकाद्वदेरपि । ततोङीषविकल्प: ॥

किंवदन्ती । स्त्री । जनश्रुत्याम् । सत्ये असत्येवा लोकवादे ॥ कोऽपिवाद: । किम्पूर्वोद्वदे: तृभूवह्वियसीति बाहुलकाज् भच् । भोऽन्त: । गौ० ङीष् ॥

किंवा । अ । विकल्पे । अथवा ॥

किंशारु: । पुं । सस्यशूके । धान्याग्रभागे ॥ बाणे ॥ कङ्कपक्षिणि ॥ किञ्चित् कुत्सितंवा । शृणाति । शृहिंसायाम् । किञ्जरयो: श्रिणा इतिञुण् ॥

किंशुक: । पुं । पलाशवृक्षे ॥ नन्दीवृक्षे ॥ किञ्चित् शुकइव । शुकतुण्डाभपुष्पत्वात् ॥

किंशुलुक: । पुं । पलाशवृक्षविशेषे ॥

किंसखा । पुं । कुत्सिते सख्यौ । दुर्मन्त्रिणि ॥ कुत्सित: सखा । किम: क्षेपइ समासान्तप्रतिषेध: ॥

किकि: । पुं । किकिदिवे । चाषे ॥ नारिकेले ॥

किकिदिव: । पुं ।
किकिदिवि: । पुं । } चाषखगे ॥

किकिदीव: । पुं । चाषविहगे ॥ नोखकण्ठ ॥

किकिदीवि: । पुं । सोनाचडा इतिगौडभाषाप्रसिद्धे स्वर्णचातके । चाषपतत्रिणि ॥ बाहुलकाद्ध्रस्वदीर्घयोर्विनिमय: ॥

किकीदिव: । पुं । किकिदिवौ ॥ किकिदीविकिकीदिवाविति द्विरूपकोषादकारान्तोपि ॥

किकीदिवि: । पुं । चाषे ॥ किकोतिदिव्यति वासते । दिवुक्रीडादौ । कृविघृष्विच्छविस्थवि किकीदिविरिति साधु: ॥

किकीदीव: । पुं ।
किकोदीवि: । पुं । } चाषपक्षिणि ॥

किखि: । पुं । वानरे । कपौ ॥ स्त्री । फेरौ । लघुशृगाले । लोमडी इति भाषा ॥

किङ्कर: । त्रि । दासे । सेवके ॥ विप्रक्षत्रकिङ्करोभूपे वैश्यो भूपस्यभूमिप । सर्वेषांकिङ्करारा: शूद्रा ब्राह्मणस्यविशेषत: ॥ किञ्चित् कुत्सितंवाकरोति । दिवाविभेत्यत्रकिंयत्तद्बहुष्विप्यच ॥

किङ्करा । स्त्री । दास्याम् ॥ अजन्ताट्टाप् ॥

किङ्करी । स्त्री । दास्याम् ॥ किङ्करस्य ॥ स्त्री । पुंयोगादाख्यायामितिङीष् ॥

किङ्किणी । स्त्री । क्षुद्रघण्टिकायाम् । घाघर इति गौडभाषा प्रसिद्धे क्ष्याभरण विशेषे । कर्धनी कौंधनी इति भाषा ॥ किञ्चित् किणाङ्करोति । किणशब्दात् तत् करोतीति णिजन्तात् अच् । गौ० ङीष् ॥ विकङ्कतद्रुमे ॥

किङ्किणीका । स्त्री । क्षुद्रघण्टिकायाम् ॥ चञ्चगमने । कणशब्दे । अस्मात् यङ्लुगन्तात् चङ्किणः किङ्किणाचे स ईकन् । धातोः किङ्कणादेशश्च ॥

किङ्किरः । पुं । कोकिले । भ्रमरे ॥ हये ॥ कामदेवे ॥ न । गजकुम्भे ॥

किङ्किरा । स्त्री । रक्ते । रुधिरे ॥

किङ्किरातः । पुं । अशोकद्रुमे ॥ कामदेवे ॥ रक्ताम्लाने ॥ शुके ॥ पिके ॥ पुष्पविशेषे ॥ हेमगौरे । पीताम्लाने ॥ अस्य गुणाः । किङ्किरातो हिमस्निग्धः कषायश्च हरेदसौ । कफपित्तपिपासास्रदाहशोषवमिक्रिमीनिति ॥

किङ्किरालः । पुं । बर्बुरवृक्षे ॥

किङ्किरी । पुं । विकङ्कते । स्रुवावृक्षे । बुंइचि इतिगौडभाषा ॥

किञ्च । अ । आरम्भे ॥ साकल्ये ॥ सम्भावनायाम् ॥ किम् च चेति विग्रहः ॥

किञ्चन । अ । अकात्स्न्र्ये । असाकल्ये । अल्पे ॥

किञ्चनः । पुं । हस्तिकर्णपलाशे ॥

किञ्चित् । अ । स्वल्पे । ईषत् । अनाक ॥ इदन्तयानिर्देष्टुमशक्ये ॥ किञ्चिच्च अनयोः समाहारः ॥

किञ्चिलिकः । पुं । } किञ्चुलुके ॥
किञ्चुलिका । स्त्री । }

किञ्चुलुकः । पुं । केंचुआख्ये कीटविशेषे । गण्डूपदे ॥ किञ्चिल्लुम्पति । कास्पनेकाजग्रहणं चलुम्पात्यर्थमिति षाष्ठिकनिर्दिष्टञ्चलुम्पधातुः । अन्येभ्योपीतिड । टेरिति ककार मकारपकाराणां लोपः । ततः संज्ञायां कन् ॥

किञ्जम् । न । }
किञ्जलः । पुं । } किञ्जल्के ॥

किञ्जल्कः । पुं । केसरे । पुष्परेणौ ॥ किञ्जल्कः शीतलो रूक्षः कषायो ग्राहकोऽपिसः । कफपित्ततृषादाहरक्तार्शोविषशोथजित् ॥ पद्मकिञ्जल्क इतिशेषः ॥ किञ्चिज्जलति । जलअपवारणे । प्राकुलकातकः ॥ न । नागकेशरपुष्पे ॥ पद्माभ्यन्तरस्थे केशाकारे वराटकवेष्टने केसर इतिख्याते । पीतपरागे ॥

किञ्जल्कविभेदः । पुं । केसरावगमे ॥

म्भाविताना म्। इति प्राचीनाः ॥

किन्तुघ्नः । पुं । बवाद्येकादशकरणान्तर्गतशेषकरणे ॥ तज्जातस्य फलम् । मित्राभिये नैवकिञ्चिद्विशेषो धर्मो धर्मे तुल्यता मानवस्य । लोके चाहे सर्वदाप्रीतियुक्तः किन्तुघ्नाख्येयस्य नूनं जनिः स्यादिति कोष्ठीप्रदीपः ॥

किल्ही । पुं । } घोटके । अश्वे ॥ मा
किल्धी । पुं । } धावेतौ ॥

किन्नरः । पुं । किम्पुरुषे । मयौ । अश्वमुखदेवयोनिनरविग्रहे देवगायने ॥ किञ्चिन्नरः अश्वमुखत्वात् । कुत्सितो वा नरः किन्नरः । किंक्षेप इति समासः । कुत्सात्व कस्यचिन्नरमुखाश्वकायत्वात् कस्यचिदश्वमुखनरशरीरत्वात् ॥ अर्हदुपासकविशेषे इति हेमचन्द्रः ॥

किन्नरेशः । पुं । वैश्रवणे । कुवेरे ॥ किन्नराणामीशः ॥

किन्नरेश्वरः । पुं । कुवेरे । नरवाहने ॥

किमु । अ । प्रश्ने ॥ वितर्के ॥ स्थाने ॥

किम् । अ । कुत्सायाम् । गर्हणे ॥ वितर्के ॥ निषेधे ॥ प्रश्ने ॥ प्रकारे । कूयते वक्तव्यं वा । कुशब्दे । बाहुलकात् डिम् । कायतेर्डिमिर्वा ॥ ईषदर्थे ॥ अतिशये ॥

कः । त्रि । क्षेपे ॥ वितर्के ॥ जिज्ञासायाम् ॥ परिप्रश्ने ॥ कामम् कायति वा । कै शब्दे । कायतेर्डिमिः ॥ स्त्री । का । न । किम् ॥

किमिच्छकः । पुं । मार्कण्डेयपुराणोक्तव्रतविशेषे ॥

किमु । अ । सम्भावनायाम् । विमर्शे ॥ किम् च उच ॥

किमुत् । अ । किमुतार्थे ॥

किमुत । अ । प्रश्ने ॥ वितर्के ॥ विकल्पे ॥ अतिशये ॥ किम् च उत च । समाहारो वा ॥

किमूत । अ । वितर्के ॥ किम् च उतच अनयोः समाहारः ॥

किम्पचः । त्रि । किम्पचाने ॥ किम्पचति । पचाद्यच् । किंक्षेप इतिसमासः ॥

किम्पचानः । त्रि । कृपणे ॥ किञ्चित् पचति । शीलादिकमानशितिस्वामी ॥ किमपचति । ताच्छील्येति चानश् । अनित्यमागमशासनमिति नमुक् । किंक्षेपइतिसमासः ॥

किम्पाकः । पुं । माकाल इति गौडभाषाप्रसिद्धमहाकालजतायाम् ॥ तत्फले ॥ त्रि । अज्ञे ॥ मातृशासिते ॥

किम्पुरुषः । पुं । किन्नरे ॥ किञ्चित् कुत्सितो वा पुरुषः । किंक्षेपइतिसमा

सः। कुत्साचकिन्नर शब्देऽवलोक नीयां ॥ लोकभेदे। जम्बूदीपस्थन वखण्डान्तर्गते हिमांचलहेमकूटयो र्मध्यवर्त्तिनि वर्ष॥

किम्पुरुषार्थता। स्त्री। कुत्सितपुरुषा र्थत्वे॥ प्रपञ्चस्य पुरुषार्थत्वेन सत्य त्वप्रतिपादने भयनिवृत्त्यभावात्कु त्सितत्वम्॥

किम्पुरुषेशः। पुं। कुबेरे॥ किम्पुरु

किम्पुरुषेश्वरः। पुं। षाणामीशः ईश्व रोवा॥

किम्पूरुषः। पुं। किन्नरे॥ न। वर्षभे दे॥

किम्प्रभुः। पुं। कुत्सितेप्रभौ। आप्त जनादिताश्रवणकारिणि॥ कुत्सि तः प्रभुः। किंचेपइति समासः॥

किम्भरा। स्त्री। नलीनामगन्धद्रव्ये॥

कियान्। त्रि। किम्परिमाणविशिष्टे॥ किम्परिमाणमस्य। किमिदंभ्यांवो घइति वतुप्। वस्यघः। इदङ्कि मोरीशकी। यस्येतिलोपः॥ कास ङ्ख्या परिमाणमस्यवा। किमः स ङ्ख्यापरिमाणे डतिचेतिवतुप् वा। वस्य घः॥ स्त्री। कियती॥ न। कियत॥

कियदेतिका। स्त्री। उत्साहे। उद्योगे॥

कियाहः। पुं। रक्तवर्णाश्वे॥ इतिहेम

चन्द्रः॥

किरः। पुं। वराहे। शूकरे॥ किरति। कृविक्षेपे। इगुपधज्ञाप्रीकिरःकः॥

किरकः। पुं। लेखके॥ वालशूकरे॥

किरणः। पुं। सूर्ये॥ अर्कांशुदीधितौ-॥ कीर्यते। कृविक्षेपे। कृपृवृजिम न्दिनिधाञः क्युरितिक्युः॥

किरणमाली। पुं। सूर्ये॥ किरणानां माला सा अस्ति अस्य। व्री० इनिः॥

किराटिका। स्त्री। किराणो इतिख्या- ते सारिकाखगे॥

किरातः। पुं। अरण्यचरे म्लेच्छजाति प्रभेदे। किरातदेशोद्भवे पूर्वक्षत्रि ये पश्चाद्विहितक्रियालोपाद्ब्राह्मणा दर्शनेनच शूद्रतामापन्ने दस्युपदवा- च्ये॥ देशविशेषे॥ तप्तकुण्डंसमार भ्य रामचेत्रान्तकं शिवे। किरातदे शो देवेशि विन्ध्यशैलेऽवतिष्ठति॥ घोटकरक्षके॥ अल्पतनौ॥ भूनि- म्बे॥ यथा। किरातः सारकोरूक्षः शीतलस्तिक्तकोलघुः। सन्निपातज्व रश्वासकफपित्तास्रदाहनुत्॥ कास शोथतृषाकुष्ठज्वरव्रणकृमिप्रणुदिति॥ किरति। कृवि०। इगुपधेतिकः। अतति। अतसा०। अच। किरस्या सावतश्च॥

किरातकः। पुं। भूनिम्बे॥ किरातको

 

ऽन्योनैपाकः सोऽर्हतिकोऽस्वरान्तकः ॥ किरातएव । स्वार्थेक ॥

किराततिक्तः । पुं । चिरायता इतिप्रसिद्धे वृक्षे । भूनिम्बे । अनार्यतिक्ते ॥ किरातदेशे अस्ति जन्मस्थानमस्य । अर्शआद्यच् । किरातश्चासौतिक्तश्च ॥

किराताशी । पुं । गरुडे ॥

किराति: । स्त्री । गङ्गायाम् ॥ इतिजटाधरः ॥

किराततिनी । स्त्री । जटामांस्याम् ॥

किराती । स्त्री । दुर्गायाम् ॥ गङ्गायाम् ॥ कुट्टन्याम् ॥ चामरधारिण्याम् ॥

किरिः । पुं । भूदारे । शूकरे ॥ किरति । कृविक्षेपे । कृगॄशॄपृकुटिभिदिच्छिदिभ्यश्चेति इप्रत्ययः ॥ इकृकृष्यादिभ्यः इति भावे इग्वा ॥

किरिटि । न । हिन्तालफले ॥

किरीटः । पुं । न । मुकुटे ॥ किरति कीर्यतेऽनेनवा । कृ० । कृतॄकृ पिभ्यः कीटन् । शिरोवेष्टने ॥

किरीटी । पुं । अर्जुनपाण्डवे ॥ त्रि । किरीटवति ॥ किरीटोऽस्यास्ति । इनिः ॥

किरीटमाली । पुं । अर्जुने ॥

किर्म्मी । स्त्री । पलाशे ॥ शालायाम् ॥ हेमपुत्र्याम् । स्वर्णपुत्तलिकायाम् ॥ लोहपुत्तलिकायाम् ॥

किर्म्मीरः । पुं । नागरङ्गवृक्षे ॥ राक्षसविशेषे ॥ कर्बुरे ॥ त्रि । कर्बुरवर्णवति ॥ कीर्यते । कृवि० । बाहुलकात कृगॄशॄपृकटिपटिशौटिभ्यईरन्निति ईः न मुडागमश्च ॥

किर्म्मीरजित् । पुं । भीमसेने ॥

किर्म्मीरत्वक् । स्त्री । नारङ्गवृक्षे ॥

किर्म्मीरभित् । पुं । भीमसेने ॥ किर्म्मीरम् भिनत्ति । भिदिर० । क्विप ॥

किर्म्मीरसूदनः । पुं । भीमसेने ॥ किर्मीरं सूदयति सूदितवान् वा । सूदक्षरणे । नन्द्यादित्वात् ल्युः ॥

किल । अ । वार्त्तायाम् ॥ सम्भाव्ये ॥ अनुशयार्थे ॥ निश्चये ॥ प्रसिद्ध्याम् ॥ मात्रद्योतके ॥ सत्ये ॥ हेतौ ॥ अरुचौ ॥ अलीके ॥ न्यक्कारे ॥ किलति । किलश्वैत्ये । इगुपधेत्किः ॥

किलकिञ्चितम् । न । स्त्रीणांविलासविशेषे । इष्टजनदर्शनहर्षवशात् शुष्करुदितहसितत्रसितक्रोधश्रमाभिलापानां सङ्करकरणरूपे हावे । शृङ्गारभावजायांक्रियायाम् ॥ तल्लक्षणं यथा । हर्षाद्रुदितगीतादिभ्यामिश्रंकिलकिञ्चितमिति ॥ क्रोधाश्रुह-

र्मभीत्यादेः सङ्करः किलकिञ्चित-मितिच ॥ अपिच । गर्वाभिलाषरुदि तस्मिताऽसूयाभयक्रुधाम् । सङ्करीक रणंयत् स्यादुच्यते किलकिञ्चितमि-त्यलङ्कारकौस्तुभः ॥

किलकिला । स्त्री । हर्षस्वने । सिंह-नादे ॥ वानराणांशब्दानुकरणे ॥

किलाटः । पुं । क्षीरविकृतौ ॥ नष्टदु-ग्धस्य पक्वस्य पिण्डः प्रोक्तः किलाट-कः ॥ दधिकूर्चिकातक्रकूर्चिकयोः पिण्डे ॥

किलाटी । पुं । वंशे । वाँस इति भाषा ॥ इतिशारावली ॥

किलाटी । स्त्री । क्षीरविकृतौ । कूर्चि कायाम् ॥

किलासम् । न । सेहुवाँ इति ख्याते सिध्मरोगे । त्वक्पुष्पे ॥ किलति । किलश्वैत्यक्रीडनयोः । इगुपधे तिकः । अस्यति । असुक्षे° । अच् । किलञ्च तदसञ्च ॥ यद्वा । केलन म् । भि° अङ् । किलमस्यति । अण् । किलेमश्वैत्येन असति वा । अस दीप्तौ । अच् ॥

किलासघ्नः । पुं । काँकरोल इतिगौड भाषा प्रसिद्धे वृक्षविशेषे । कर्कोट के । तिक्तपत्रे । सुगन्धके ॥

किलासी । त्रि । सिध्मले । किलासरो गवति ॥ किलासमस्यास्ति । इन्नो पतापेति इनि प्रत्ययः ॥

किलि । अ । कण्ठकूजिते ॥

किलिकिला । स्त्री । सिंहनादे ॥ जित शात्रवदर्पस्य प्रतिज्ञापूरणीकृतः । वी रस्यगर्जितंसिंहनादः किलि किला-तथे तिविश्वः ॥

किलिकिलितम् । न । शौर्येणगर्जिते॥

किलिञ्जः । पुं । किलिञ्जके । कटे ॥ किल्यतेनेन । किल° । इगुपधादि ति इन् । वेत्रवीरणादेः किलेर्जातः । जमी°। पञ्चम्यामजाता वितिडः । पृ° ॥ सूक्ष्मदारुणि ॥

किलिञ्जकः । पुं । वीरणादिकटे ॥ कि लिञ्जात् स्वार्थे । कन् ॥

किलिमम् । न । देवदारुणि ॥ इतिरा जनिर्घण्टः शब्दरत्नावलीच ॥ इकि लिमम् किलिमम् । भीमसेनोभी म इतिवत् ॥

किल्बिषम् । न । अपराधे ॥ पापे ॥ रोगे ॥ धर्माधर्मफलभूते अनिष्टे संसारे ॥ पापवत् पुण्यस्याप्य निष्टफ लत्वेन किल्बिषत्वमेव । श्रोष्ठ्यम ध्यमदः ॥ केलनम् । किल्यतेवा । किलश्वैत्ये । किलेर्बुकचेतिटिषच् प्रत्ययः ॥

किल्ली । पुं । घोटके ॥ किल्लीतिपाठा

नरम् ॥

किशल: । पुं । न । पल्लवे ॥

किशलय: । पुं । न । पल्लवे ॥ किञ्चित् शलति । शलचलने । वा० कयन् । पृ० ॥

किशोर: । पुं । अश्वशिशौ ॥ तैलपर्णौषधौ ॥ सूर्ये ॥ तरुणावस्थे । दशवर्षोर्द्ध्वमापञ्चदशवर्षके ॥ यथा । किञ्चिच्छूर: किशोर:स्यात्ततो विद्यमात् परम् । शूरत्वं दृश्यते किञ्चिदनुद्दृष्टं दिने दिने इति ॥ चि । कैशोरावस्थायुक्ते ॥ कशति । कशशब्दे किञ्चित् शवतिवा शुनतौ शवगतौवा किञ्चित् शृणातिवा । शृहिंसायाम् । किशोरादयश्चेति साधु: ॥

किशोरी । स्त्री । किशोरावस्थायुक्तायाम् ॥ तरुण्याम् ॥ किशोरात् वयसिप्रथम इतिङीप् ॥

किष्कन्द: । पुं । ओड्रदेशस्थशैलविशेषे । स्त्री । तत्रस्थगुहायाम् ॥

किष्किन्धा । स्त्री । गन्धमादनगुहायाम् ॥ पुरीविशेषे ॥ सापूर्वं वालिवानरस्य राजधान्यासीत् । श्रीरामो वालिनं हत्वा तां सुग्रीवायदत्तवान् ॥ किङ्किन्दधाति । डुधाञ० । आत इति क: । पारस्करादित्वात् पूर्वस्य किमो मलोप: । सुट् षत्वञ्च नि

पात्यते ॥

किष्कन्धाधिप: । पुं । वालिवानरे ॥

किष्कु: । पुं । स्त्री । वितस्तौ । द्वादशाङ्गुलपरिमाणे ॥ प्रकोष्ठे । कफोणिरधोमणिवन्धपर्य्यन्ते ॥ करे । हस्ते ॥ चतुर्विंशत्यङ्गुलेमाने ॥ त्रि । कुत्सिते ॥ कायतेऽनेन । कैशब्दे । मृगय्वादित्वात् कु: । पारस्करादित्वात् साधु: ॥

किष्कुपर्व्वा । पुं । इक्षौ ॥ वंशे ॥ पोटगले ॥

किसरम् । न । सुगन्धिद्रव्यविशेषे ॥

किसरिक: । त्रि । वणिग्विशेषे । किसरवणिजि ॥ किसरं पण्यमस्य । किसरादिभ्य:ष्ठन् । षित्वात् ङीष् । किसरिकी ॥

किसलय: । पुं । न । पल्लवे । नवीनपत्रे ॥ नवपत्रादियुक्तशाखाग्रपर्णे । नवपत्रस्तवके ॥ किञ्चित् सलति । षलगतौ । वा० कयन् । पृ० ॥

की । अ । कुत्सायाम् ॥

कीकट: । पुं । अश्वे । घोटके ॥ कीकटा: । गयाप्रदेशे ॥ यथा । चरणाद्रिं समारभ्य गृध्रकूटान्तकं शिवे । तावत्कीकटदेश:स्यात् तदन्तर्मागधोभवेत ॥ पश्चमगधम् । विहारनाम्ना प्रसिद्धे देशे इति केचित् ॥ त्रि । कृपणे ॥ निर्धने । नि:स्वे ॥

कीकशः । पुं । चण्डाले ॥ कीं इति कशति कशशब्दे ॥ पचाद्यच् ॥

कीकसः । पुं । कृमिजातौ ॥ न । अस्थिनि ॥ त्रि । कर्कशे ॥ कीतिकसति कसगतौ ॥ पचाद्यच् ।

कीकसास्यः । पुं । पक्षिणि ॥ इतिशाराबली ॥

कीचकः । पुं । दैत्यविशेषे ॥ राक्षसविशेषे ॥ द्रुभेदे ॥ नले ॥ केकयनृपात्मजे । विराटराजश्याले ॥ विपुलान्तरालगर्भे वेणुजातौ ॥ अनिलयोगात् शब्दायमानवंशे ॥ चीकति शब्दायते । चीकमर्षणे । ण्वु० । चीकयते राद्यन्तविपर्ययश्चेति वुन् ॥ यद्वा । कीत्यव्यक्तं शब्दं चकति । चकतृप्यादौ अच ॥ कीचेत्यव्यक्तं कायति वा । ।मू० कः । अन्येभ्योपीति डोवा ॥

कीचकजित् । पुं । भीमसेने ॥ कीचकमजैषीत् । जी० । क्विप् । तुक् ॥

कीचकभित् । पुं । वृकोदरे । भीमसेने ॥ कीचकम् भिनत्ति । भिदिर्० । सत्सूद्विषेति क्विप । तुक् ॥

कीटः । पुं । कृमिभ्यः किञ्चित्स्थूले क्षुद्रजन्तुमात्रे ॥ कीटति ।कीट० ।अच् ॥

कीटकः । पुं । कृमिजातौ ॥ मागधजातौ ॥ त्रि । निष्ठुरे ॥ स्वा० कः कन्वा ॥

कीटघ्नः । पुं । गन्धके ॥ कीटंहन्ति । हन० । अमनुष्यकर्तृकेचेतिटक् ॥

कीटजा । स्त्री । जतुनि । लाक्षायाम् ॥ कीटेभ्योजाता । जनी० । डः ॥

कीटपादिका । स्त्री । हंसपदीवृक्षे ॥

कीटमणिः । पुं । खद्योते ॥ कीटेषुमणिरिव ॥

कीटमाता । स्त्री । हंसपदीवृक्षे ॥

कीटमारी । स्त्री । हंसपदीवृक्षे ॥

कीटमेघः । पुं । मृगचिल्ला इतिप्रसिद्धे कीटे । अयंनदीतीरेसिकतामध्येतिष्ठति ॥

कीटसंज्ञकः । पुं । राशिविशेषस्य संज्ञायाम् । मकरान्ताद्वै कर्कटमीनवृश्चिकाश्च कीटाख्याः ॥

कीडेरः । पुं । तण्डुलीयशाके ॥

कीदृक । त्रि । } किम्प्रकारे ॥
कीदृशः । त्रि । }

कीनाशः । पुं । यमे । कृतान्ते ॥ यथा । किङ्कीनाश पाशधर गर्जसि मामुपगम्य हासभर मर्जसि । हरिचरणं शरणं नहि पश्यसि यत्नामस्मरणात्त्वपिनश्यसीति ॥ वानरविशेषे ॥ त्रि । कर्षके ॥ क्षुद्रे ॥ पशुघातिनि ॥ कीत्यव्ययक् कुत्सायाम् । की कुत्सितं नाशयति । पचाद्यच् ॥ यद्वा । क्लिश्नाति क्लिश्यते वा । क्लिशूविबाधने क्लि

शवधेवा। क्रिशेरीश्चोपधायाः कन लोपश्चलोमाम् चेतिश्च उपधाया ईत्त्वम् सलोपोनामागमश्च॥

कीरः। पुं। शुके। मेधाविनि। फलाशने॥ कीराः। पुंभूम्नि। काश्मीरदेशे॥ न। मांसे॥ कीति ईरयति। ईर०। णिजन्तः। अच्॥

कीरकः। पुं। वृक्षविशेषे॥ चपचके॥ प्रापणे॥ शुकशावके॥

कीरवर्णकम्। न। स्थौणेयकनामगन्धि सुगन्धिद्रव्ये॥

कीरेष्टः। पुं। अक्षोटवृक्षे॥ आम्रद्रुमे॥ अजमधूकवृक्षे॥ कीराणामिष्टः॥

कीर्णः। त्रि। दत्ते॥ आच्छन्ने॥ विक्षिप्ते॥ हते। हिंसिते॥ कीर्यतेस्म। कृ०। क्तः। नत्त्वणत्वे॥

कीर्त्तनम्। न। उक्तौ। कथने॥ कापास्तु युचमपोच्छन्तीति अतियूतीत्यत्रप्रसादकारः॥

कीर्त्तना। स्त्री। यशसि॥

कीर्त्तयन्। त्रि। कथयति॥ कृतेर्लटः शत्रादेशः॥

कीर्त्तिः। स्त्री। प्रसादे॥ विस्तारे॥ कर्दमे॥ शब्दे॥ दीप्तौ॥ मातृकाविशेषे॥ यशसि। समज्ञायाम्॥ धार्मिकत्वनिमित्तायां प्रशस्तत्वेन नामादिग्देशीयलोकज्ञानविषय-

ताह्वपायांख्यातौ॥ पराक्रमख्यातौ। सृतख्यातौ॥ यस्य कीर्त्तिर्हता लोके धिक् तस्यैव कुजीवितम्। दानादिप्रभवा कीर्त्तिः शौर्यादिप्रभवं यशः॥ कीर्त्तिं स्वर्गफलामाहुरासंसारं विपश्चितः। अकीर्त्तिन्तु निरालोकनरकोद्देशदूतिकाम्॥ तस्मात्कीर्त्तिमुपादद्यादकीर्त्तिञ्च - विवर्जयेत॥ सुकर्मपत्नी संसिद्धा कीर्त्तिर्धन्यैस्सुपूजिता। ययाविना जगत्सर्वं यशोहीनं मृतं यथा॥ कीर्त्त्यते। कृतसंशब्दने। क्तियूतीतिनिपातनात् साधुः। कीर्त्तनम्। कीर्त्तिः शोभः। कृपिशिवदीत्यादिनेनिः॥

कीर्त्तितः। त्रि। कथिते॥

कीर्त्तिभाक्। पुं। द्रोणाचार्ये॥ त्रि। कीर्त्तियुक्ते॥

कीर्त्तिमान्। पुं। वसुदेवस्य ज्येष्ठपुत्रे॥ त्रि। कीर्त्तिसंयुक्ते॥

कीर्त्तिशेषः। पुं। मरणे॥ यशसोऽवधौ॥

कीलः। पुं। स्त्री। अग्निशिखायाम्। ज्वालायाम्॥ शङ्कौ॥ शस्त्रे॥ कफोणौ॥ कफोणिकाघाते॥ स्तम्भे॥ लेशे॥ कीलति बध्नाति। कील बन्धने। इगुपधेतिकः॥ कील्यते

अवधानेन वा । कर्म्मणि घञ् पुंसीति
घोषा ॥

कीलकः । पुं । शिवके । गवांस्तम्भे । यत्रबद्धागौर्दुह्यते तस्मिन् । खूंटा इति भाषा ॥ गवां गात्रकण्डूयनार्थं गोष्ठे निखातस्तम्भे ॥ कीलशब्दार्थे ॥ वत्सरविशेषे । यथा । आयन्ते सर्वसस्यानि सुभिक्षं निरुपद्रवम् । सौम्यदृष्टिर्भवेद्राजा कीलकेच शुभं वदेदिति ॥ कील्यते । कील० । हलश्चेति घञ् । स्वा० कन् ॥

कीलसंस्पर्शः । पुं । गाव इति गौड भाषा प्रसिद्धे वृक्षविशेषे ॥

कीला । स्त्री । पुं । कीले ॥ स्त्री । रतहतौ । रतौ प्रतिहतिविशेषे ॥ यदाहवात्स्यायनः । कीला उरसि कर्त्तरी शिरसि विद्धाकपोलयोरिति ॥ कीलति । कील० । इगुपधेतिकः । टाप् ॥

कीलालम् । न । रुधिरे ॥ जले ॥ अमृते ॥ मधुनि ॥ कीलां वह्निज्वालामलति वारयति । अलभूषणादौ । कर्मण्यण् ॥ औणादिकः कीलां लाति वा । कीलेन प्रतिबन्धेन अल्यते वार्य्यते । अल० । घञ् । कीलम् प्रतिबन्धम् अलति वा । कर्मण्यण् ॥ पुं । पशौ ॥ कीलंबन्धनम् अलंयोग्यमस्येति ॥

कीलालधिः । पुं । समुद्रे ॥ कीलालानि धीयन्तेऽस्मिन् । डुधाञ्० । अधिकरणेकिः ॥

कीलालपः । पुं । राक्षसे ॥ कीलालं पिबति । पा० । आतोऽनुपसर्गे इति कः ॥

कीलितः । त्रि । बद्धे ॥ निखातकीले ॥ कील्यतेस्म । कील० । क्तः ॥

कीशः । पुं । कपौ । वानरे ॥ सूर्य्ये ॥ पक्षिणि ॥ त्रि । दिगम्बरे । नग्ने ॥ की इति शब्दमीष्टे । ईश० । मू० कः ॥ यद्वा । कस्य वायो रपत्यम् । अतइञ् । किः हनूमान् ईशो यस्य सः ॥

कीशपर्णः । पुं । अपामार्गे ॥

कीशपर्णी । स्त्री । अपामार्गे ॥ कपिलोमतुल्यानि लोमशानि पर्णान्यस्याः । पाककर्णेतिङीष् ॥

कीशफलम् । न । कक्कोले । गन्धद्रव्यविशेषे ॥

कु । अ । पापे ॥ कुत्सायाम् ॥ ईषदर्थे ॥ निवारणे ॥ कवते । कूयते वा । कुङ् शब्दे । मित० डुः ॥

कुः । स्त्री । अवन्याम् । धरायाम् । भूमौ ॥ प्रथमाङ्के १ ॥ कवते । कुङ्० । मित० डुः ॥

कुकः । त्रि । समर्थे ॥ कोकते आदत्ते

। कुक° । इगुपधेतिकः ॥

कुकभम् । न । मद्ये ॥ इति शब्दच-न्द्रिका ॥

कुकरः । त्रि । रोगकुञ्चितकरे । कुणी ॥

कुकीलः । पुं । पर्वते । शिलोच्चये ॥

कुकुटः । पुं । स्वस्तिके । सितावरे । सु निषण्णशाके ॥

कुकुदः । पुं । कूकुदे । सत्कृत्यकन्या दातरि ॥

कुकुन्दरः । पुं । कुकुरद्रुमे ॥ न । कूप के । नितम्बस्थकूपकद्वये । स्त्रियाः पृष्ठवंशाद्धोगर्त्ते ॥ कुमभूमिं दर यति । दृभये । खलः । कर्मण्यण् । शिलोपस्यस्यानिमत्त्वात्त्रवृद्धिः । स त्पुवर्पेकृतीति बाहुलकादणुक् । कुत्सितं कुन्दरम् ईषत्कुन्दरमत्र तिवा ॥ यद्वा । स्कुन्द्यते कामिना। स्कुदिश्चाप्रवणे । मद्गुरादयश्चेति साधुः ॥

कुकुभा । स्त्री । रागिणीविशेषे ॥

कुकुरः । पुं । यदुवंशीयान्धकराजस्य तनये ॥ कुक्कुरे ॥ न । ग्रन्थिपर्णीवृ क्षे ॥ कोकते । कुक आदाने । को कतेर्वाकुगिच्चुरच् ॥

कुकुराः । पुंभूम्नि । देशविशेषे । यदुषु । दाशार्हेषु । सात्वतेषु ॥ नित्यंब हुवचनान्तः ॥



कुकूटी । पुं । शाल्मलीवृक्षे ॥

कुकूलः । पुं । तुषानले ॥ शिरीषा द पि मृद्वङ्गी क्वेयमायतलोचना । क्व यं क्व च कुकूलाग्निकर्कशो मदना ग्निः ॥ न । शङ्कुभिःसङ्कीर्णेश्वभ्रे ॥ तनुत्रे । कंवचे ॥ कोर्भूमेःकूलम् । कुत्सितंवा कूलम् ॥ यद्वा । कवते । कुङ्शब्दे । पिञ्जादिभ्यादूलच् । धा तोःकुगागमः ॥

कुकोलम् । न । कोलिवृक्षे ॥

कुक्कुटः । पुं । कामचे । ताम्रचूडे । च रणायुधे । कुकुडा इतिभाषा ॥ अ स्यमांसगुणायथा । कुक्कुटो बृंहणः स्निग्धो वीर्योष्णोऽनिलहृद्गुरुः । च क्षुष्यः शुक्रकफकृद्बल्यो वृष्यः कषा यकइति ॥ कुक्कुटलक्षणंयथा । कु क्कुटस्त्वृजुतनूरुहाङ्गुलि स्ताम्रवक्त्र नखचूलिकःसितः । रौति सुस्वर मु षात्यये च यो वृद्धिदः स नृपराष्ट्र वाजिनाम् ॥ यवग्रीवो यो वा बदर सदृशो वा पि विहगो बृहन्मूर्द्धा व र्णै र्भवति बहुभिर्यश्चरुचिरः । स श स्तः सङ्ग्रामे मधुमधुपवर्णो यश्च ज यकृन्न शस्तो योतोऽन्यःकृशतरर वःखञ्जचरणः ॥ इति वाराहीसं- हिता ॥ निषादपुत्रे ॥ शूद्रपुत्रे ॥ तृ णोल्कायाम् ॥ कुक्कुभपक्षिणि ॥ न

क्रिकये । स्फुलिङ्गे ॥ वनकुक्कुटे ॥ यथा । सुरासमण्डपानाय भोजने चरणायुधाः । तित्तिराविष्किराः पथ्याः कुक्कुटाविषमज्वरे इत्यभिधेयः ॥ अत्र चरणायुधोग्रहकुक्कुटः । कुक्कुटोवनकुक्कुटइतिव्याख्यानात् ॥ कोकनम् । कुकश्रा० । सं० क्विप् । कुटति । कुटकै।० । इगुपधेतिकः । कुकाकुटः । कर्तृकरणयोरितिसमासः ॥ कुतसितः कुटः कोः पृथिव्याः कुटो वा । पृ० ॥

कुक्कटमण्डपः ।पुं । काश्यांप्रसिद्धे मुक्तिमण्डपे ॥

कुक्कुटकः । पुं । कुक्कटार्थे ॥ शूद्राज्जातोनिषाद्यान्तुसवैकुक्कुटकःस्मृतः । इतिमनुः ॥

कुक्कुटमस्तकम् । न । चव्ये । चोंइ इति गौडभाषा ॥

कुक्कटव्रतम् । न । सप्तम्यामाधेंस्त्रीकर्त्तव्ये व्रतविशेषे । ललितासप्तमीव्रते ॥ भाद्रेमासि सिते पक्षे सप्तम्यां नियमेनया । स्नात्वा शिवं लेखयित्वा मण्डलेचसहाम्बिकम् । पूजयेच्च तदातस्याः दुष्पापंनैव विद्यते ॥

कुक्कटशिखः । पुं । कुसुम्भवृक्षे ॥

कुक्कटाभः । पुं । } कुक्कुटतुल्यवर्णसर्प

कुक्कुटाहिः । पुं । } विशेषे ॥

कुक्कुटिः । स्त्री । दम्भचर्यायाम् ॥

कुक्कुटी । स्त्री । अव्रतचर्यायाम् ॥ छच्छराम् । छिपकली इति भाषा ॥ शाल्मलीवृक्षे ॥ कुक्कुटयोषिति ॥ अशाल० । कुक्कुटी च मृदुचारुभाषिणीस्निग्धमूर्त्ति रुचिराननेक्षणा । सा ददातिसुचिरं मनीषितां श्रीयशोविजयवीर्यसम्पदः ॥ जातेरस्त्रीविषयादिति ङीष् ॥

कुक्कुटीव्रतम् । न । भाद्रशुक्लासप्तम्यां कर्त्तव्ये नियमविशेषे । ललिता सप्तम्याम् ॥

कुक्कुभः । पुं । पातकुका इतिगौडभाषाप्रसिद्धे पक्षिणि ॥ वनकुक्कुटे ॥ कुगिभ्यव्यक्तं शब्दं कैाति । बाहुलकात्भक् ॥ कुकुशब्दंभाषते वा । भाषय्य० । अन्येष्वपीतिडः ॥

कुक्कुरः । पुं । कूकर इतिभाषाप्रसिद्धे कैालेयके । सारमेये ॥ कोकते । कुकआदाने । क्विप् । कुरति । कुरशब्दे । इगुपधेतिकः । कुकचासैा कुरश्च ॥ न । ग्रन्थिपर्णे । कुकरैांदा इति ख्यातैाषधैा ॥ कुक्कुरोस्यास्ति । कुक्कुरशब्दस्तद्गन्धे लाक्षणिकः । अर्शआद्यच् । यद्वा । कोकते । कुक० । कोकतेर्वाकुगिच्छुरच् । कुगागमश्च ॥

कुक्कुरद्रुः । पुं । मृदुच्छदे । हस्तापचे

। कुक्कुरमुखा कुकुरोंढा इति च भाषा ॥ कुकुरद्रुः कटुस्तिक्तो ज्वररक्तकफापहः । तन्मूलमार्द्रं निःक्षिप्तं वदने मुखशोषहृत् ॥

कुक्कुरी । स्त्री । शुन्याम् । सारमेय्याम् । कूकरी कुत्ती इति च भाषा ॥ जातेरिति ङीष् ॥

कुक्कुवाक् । पुं । सारङ्गमृगे ॥

कुक्षः । पुं । कुक्षौ । जठरे ॥ गर्भे ॥ कुष्णाति । कुष निष्कर्षे । उन्धिगुधिकुषिभ्यश्चेति सः कित् ॥

कुक्षिः । पुं । उदरे ॥ कुष्यते निष्काश्यते मलोऽस्मात् । कुष० । प्लुषिकुषिशुषिभ्यः क्सिः ॥ केतुमालवर्षस्य देशविशेषे ॥ समुद्रमध्यप्रदेशे ॥ कुक्षिपार्श्वोदरकटीपृष्ठवक् पर्वभेदनमित्यत्र कुक्षिशब्द उदरस्य वामदक्षिणभागद्वयवाचीति भावप्रकाशः । कूख इति भाषा ॥

कुक्षिम्भरिः । त्रि । आत्मम्भरौ । स्वोदरमात्रपूरके ॥ कुक्षिं बिभर्त्ति इति विग्रहे कुक्षेर्मुमागमो भृञ इन्प्रत्ययश्च निपातसिद्धः ॥

कुक्षिरन्ध्रः । पुं । नले ॥

कुङ्कुमम् । न । कुमकुम् केसर इति च नाम्ना विख्याते गन्धद्रव्ये । काश्मीरजन्मनि ॥ काश्मीरदेशजे क्षेत्रे कुङ्कुमं यद्भवेद्धितम् । सूक्ष्मकेशरमारक्तं पद्मगन्धि तदुत्तमम् ॥ वाह्लीकदेशसंजातं कुङ्कुमं पाण्डुरं भवेत् । केतकीगन्धयुक्तं तन्मध्यमं सूक्ष्मकेशरम् ॥ कुङ्कुमं पारसीके यन्मधुगन्धि तदीरितम् । ईषत्पाण्डुरवर्णं तदधमं स्थूलकेशरम् ॥ कुङ्कुमं कटुकं स्निग्धं शिरोरुग्व्रणजन्तुजित् । तिक्तं वमिहरं वर्ण्यं व्यङ्गदोषत्रयापहम् ॥ कुमकुम् इति शब्दोक्ति वा चकत्त्वेनास्य । अर्शआद्यच् ॥ यद्वा । कुक्यते । कुक० । वा० उमक्प्रत्ययः । आच्छीनद्योर्नुमिति योगविभागान्नुम् ॥

कुङ्कुमाद्रिः । पुं । पर्वतविशेषे ॥

कुङ्गनी । स्त्री । महाज्योतिष्मत्याम् ॥

कुचः । पुं । स्तने ॥ कुचति । कुच सङ्कोचे । इगुपधेति कः ॥

कुचण्डिका । स्त्री । मूर्वालतायाम् ॥

कुचण्डी । स्त्री । मूर्वायाम् ॥

कुचन्दनम् । न । रक्तचन्दने ॥ बकम् इति भाषाप्रसिद्धे पत्राङ्गे ॥ द्रुमविशेषे ॥ निर्गन्धत्वात् कुत्सितं चन्दनम् । कोश्चन्दनमिव वा । कुत्सितान्यन्यचन्दनान्यस्माद्वा ॥

कुचफलः । पुं । दाडिमद्रुमे ॥

कुचरः । त्रि । कुवादे । परदोषकथन

शीले ॥ कुत्सितं चरति । पचाद्यच् ॥

कुचाग्रम् । न । चूचुके । स्तनाग्रभागे ॥ कुचस्य अग्रम् ॥

कुचाङ्केरी । स्त्री । चुक्रिकायाम् । चूकाशाक इतिभाषा ॥

कुचिकः । पुं । } कुंचिया इति गौडभाषा प्रसिद्ध-
कुचिका । स्त्री । } मत्स्ये ॥

कुचितः । त्रि । परिमिते ॥ कुचति । कुच सङ्कोचे । दाचर्चाचकुचीति कितच् ॥

कुचेलः । त्रि । कुवाससि ॥ कुत्सितं चेलमस्य ॥

कुचेला । स्त्री विद्धकर्ण्याम् ॥

कुचेली । स्त्री । अम्बष्ठायाम् । आकनादि इतिगौडभाषा ॥

कुच्छम् । न । कुमुदे ॥ इतिशब्दचन्द्रिका ॥

कुजः । पुं । आरे । भौमग्रहे ॥ नरकासुरे ॥ द्रुमे ॥ कोः पृथिव्याः जातः । पञ्चम्यामितिडः ॥

कुजम्भलः । त्रि । सन्धिचौरे ॥ इतिहारावली ॥

कुजम्भिलः । त्रि । कुजम्भले ॥ इतिशब्दरत्नावली ॥

कुजा । स्त्री । कात्यायन्यांदेव्याम् ॥ सीतादेव्याम् ॥

कुजाष्टमः । पुं । दोषविशेषे ॥ सर्वान् गुणान्निहन्त्याशु विलग्नादष्टमः कुजः । अस्यापवादः । अजगे नोचगे भौमे शत्रुक्षेत्रगतेपि वा । कुजाष्टमोद्भवोदोषोन किञ्चिदपि विद्यतेइति ॥

कुज्जिशः । पुं । मत्स्यविशेषे ॥

कुज्झटिः । स्त्री । धूममहिष्याम् । कुहेलिकायाम् ॥

कुज्झटिका । स्त्री । रतान्ध्याम् । नभोरेणौ ॥

कुज्झटी । स्त्री । कुहेलिकायाम् ॥

कुञ्चनम् । न । नेत्ररोगविशेषे ॥ तल्लक्षणम् । वाताद्या वर्त्मसङ्कोचं जनयन्ति यदा मलाः । तदा द्रष्टुं न शक्नोति कुञ्चनं नाम तद्विदुरिति ॥

कुञ्चफला । स्त्री । कुष्माण्ड्याम् ॥

कुञ्चिः । पुं । अष्टमुष्टिमिते धान्यमानभेदे ॥ यथा । अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलमिति ॥

कुञ्चिका । स्त्री । कृष्णजीरके ॥ कुंचे इति गौड प्रसिद्धे मत्स्यविशेषे ॥ यथा । कुञ्चिकयैनं विस्मापयति भाययति ॥ कमचो इतिभाषा प्रसिद्धायां वंशशाखायाम् ॥ कुञ्जी ताली इतिच भाषा प्रसिद्धायां कूर्चिकायाम् ॥ मेथिकायाम् ॥

कुञ्चितम् । न । तगरपुष्पे ॥ त्रि । व

के॥ सङ्कोचिते। कुञ्चतिम्। कुञ्चकौटिल्ये। क्त:। वा कुञ्चकात सं ज्ञापूर्वकत्वाद्वा नलोपाभाव:॥

कुञ्ज:। पुं। न। हस्तिहनौ॥ हस्तिदन्ते॥ निकुञ्जे। समन्ताल्लतादिभिराच्छादिते स्थानविशेषे॥ कौजायते। कावजनि वा। अमीप्रा०। स मन्मांजनेर्ड:। पृ०॥

कुञ्जर:। पुं। अनेकपे। हस्तिनि॥ अतिशयित: कुञ्जोऽस्त्यस्य। रम करमेत्समुत्वकुञ्जेभ्य:। उपसङ्ख्यानमितिर:॥ देशविशेषे॥ केशे॥ उत्तरपदस्थितश्च श्रेष्ठार्थे॥ पञ्चमात्रस्यप्रथमे। ऽऽ प्रभेदे॥

कुञ्जरक्षारमूलम्। न। मूलके॥ इति राजनिर्घण्ट:॥

कुञ्जरच्छाया। स्त्री। गजच्छायायाम्॥ यथा। योगो मघात्रयोदश्या: कुञ्जरच्छायसंज्ञक:। भवेन्मघायां संस्थे च शशिन्यर्के करस्थिते इति॥

कुञ्जरपर्य्याय:। पुं। पञ्चमात्रस्यप्रथम। ऽऽपर्याये॥

कुञ्जरपिप्पली। स्त्री। गजपिप्पल्याम्॥

कुञ्जरा। स्त्री। धातकीद्रुमे॥ पाटलायाम्॥ हस्तिन्याम्॥

कुञ्जरारातिः। पुं। शरभे॥ सिंहे॥ कुञ्जरस्य अराति:॥

कुञ्जरालुकम्। न। हस्त्यालुनि॥ इति शब्दचन्द्रिका॥

कुञ्जराशन:। पुं। अश्वत्थे। पिप्पले॥ कुञ्जरेणाश्यते। अशभोजने। कर्मणिल्युट्॥

कुञ्जरी। स्त्री। करेणौ। हस्तिन्याम्॥

कुञ्जलम्। न। काञ्जिके॥ कञ्जिकसंज्ञम्। पृषोदरादि:॥

कुञ्जवल्लरी। स्त्री। निकुञ्जिकाम्लावृक्षे॥

कुञ्जिका। स्त्री। कृष्णजीरके॥ निकुञ्जिकाम्लाहवृक्षे। कुञ्जवल्लर्याम्॥

कुट:। पुं। कोटे। गढ इति भाषा॥ शिलाकुट्टे। पत्थर फोड़नेका हथौड़ा इतिभाषा॥ पर्वते॥ वृक्षे। अनोकहे॥ टवर्गप्रथमोपध इति प्रामाणिका:॥ पुं। न। कलशे। घटे॥ पुं। स्त्री। गृहे। वेश्मनि॥ कुटति। कुटिलो भवति। कुटकौटिल्ये। इगुपधेतिक:॥

कुटकम्। न। फाले॥ कुटति। कुट०। कुन॥

कुटकाचल:। पुं। पर्वतविशेषे॥

कुटङ्क:। पुं। गृहाच्छादने। छप्पर छान इतिच भाषा॥

कुटच:। पुं। कुटजवृक्षे॥

कुटज:। पं। कौरिया कौरय्या इतिप्र

सिद्धे वृक्षविशेषे । गिरिमल्लिकायाम् । वत्सके ॥ अस्य फलमिन्द्रयवः ॥ कुटजः कटुको रूक्षो दीपनस्तुवरो हिमः । अर्शोतीसारपित्तास्रकफतृष्णामकुष्ठनुत् ॥ अगस्त्यमुनौ ॥ द्रोणाचार्य्ये ॥ कूटे शृङ्गे जायते स्म । सप्तम्यां जनेर्डः । पृषोदरादिः ॥

कुटजबीजम् । न । इन्द्रयवे

कुटजा । स्त्री । कलहंसच्छन्दसि ॥ सजसा भवेदिह सगौ कुटजाख्यमिति लक्षणात् ॥

कुटन्नटः । पुं । श्योनाकवृक्षे । शोणके ॥ न । कैवर्त्तीमुस्तके । मोथा इति भाषा ॥ कुटन् वक्रीभवन् नटति । नट स्पन्दने पचाद्यच् ॥

कुटपः । पुं । मुनौ ॥ निष्कुटे । गृहसमीपोपवने ॥ कुडवपरिमाणे मानभाण्डे ॥ न । कमले ॥ कुटति । कुट० । उषिकुटिदलीत्यादिना कुटेः कपन् प्रत्ययः ॥

कुटरः । पुं । न । कुठरे । मन्थानदण्डबन्धनस्तम्भे ॥ वा० कुटेः करन् ॥

कुटरुः । पुं । अंशुकगृहे । छोटातम्बू तम्बूटी इति च भाषा ॥ कुटति । कुट० । कुटः किच्च्वरुः ॥

कुटरुणा । स्त्री । त्रिवृतायाम् ॥

कुटलम् । न । पटले । छान छप्पर इति च भाषा ॥ इति हारावली ॥

कुटहारिका । स्त्री । दास्याम् ॥

कुटिः । पुं । महीरुहे ॥ शरीरे ॥ स्त्री । स्वल्पगृहे ॥ शालायाम् ॥ कुटति । कुट० । इगुपधात् किदिति इन् प्रत्ययः ॥ यद्वा । क्षगृशृपृकुटिभिदिच्छिदिभ्यश्चेति इः स च कित् ॥

कुटिचरः । पुं । वारिशूकरे । सूंस इति भाषा ॥

कुटितम् । त्रि । कुटिले ॥ कुटति । कुट० । रुचिवचिकुचिकुटिभ्यः कितच् ॥

कुटिलः । त्रि । अनृजौ । अराले ॥ भङ्गुरे ॥ न । तगरपुष्पे ॥ कुटिं कौटिल्यं लाति । ला० । आतोनुपेति कः ॥ कुटति वा । कुट० । मिथिलादित्वाद्वा हुलकाद्वा इलच् ॥

कुटिलकः । पुं । नागविशेषे ॥

कुटिलगः । पुं । सर्पे ॥

कुटिलगा । स्त्री । नद्याम् ॥

कुटिला । स्त्री । नदीविशेषे ॥ राधिकासखीविशेषे ॥ तगरपादिकायाम् ॥ स्पृक्कानामगन्धद्रव्ये ॥

कुटिलिका । स्त्री । व्याधानाङ्गतिविशेषे ॥ कर्मारोपकरणभूते लौहे ॥ वक्राग्रा लौहयष्टिर्या प्रोक्ता कुटिलिका हि सेत्युक्तेः ॥

कुटी । स्त्री । कुम्भदास्याम् । कुटनी

तं मांसं सुस्वादु लघु दीपनम् । तथापि जाङ्गलं श्रेष्ठं आनूलेष्वपिप स्विणाम् ॥

कुट्टिमः । पुं । न । स्वल्पगृहे । कुटीरे ॥ गर्भागारे ॥ मणिभूमौ । रत्नखनौ ॥ सुधाघटितभूतले ॥ बद्धभूमौ । गींव इति कुरसी इति च भाषा ॥ दाडिमद्रुमे ॥

कुट्टिमितम् । न । भावभेदे । स्त्रीणां हावभावशृङ्गारचेष्टान्तर्गतचेष्टाविशेषे । स्त्रीणां स्वाभाविकदशाङ्गरागान्तर्गते विलासभेदे ॥ तल्लक्षणं यथा । केशस्तनाधरादीनां ग्रहे हर्षेऽपि सम्भ्रमात् । प्राहुः कुट्टिमितं नाम शिरःकरविधूननम् ॥ अपि च । केशाधरादिग्रहणे मोदमानेपि मानसे । दुःखितेव बहिः कुप्येद्यत्कुट्टिमितं हितदिति ॥ स्त्रीणामेष स्वभावो यदिष्टमप्यनिष्टतया निवारयन्त्य एव सुरतसुखमुपभुञ्जते इति ॥ अपि च । दुःखोपचारः सौख्येपि हर्षात्कुट्टिमितं मतम् ॥ सुरतेषु गाढपरिपीडने केशस्तनादिग्रहणेच हर्षात् सुखेपि दुःखाभिव्यक्तिया दुःखेपि सुखाभिव्यक्तिया कुट्टिमितम् । कुट्टनम् । कुट्ट० घञ् । कुट्टेन निर्वृत्तम् । भावप्रत्ययान्तादिमप्रत्ययस्य इतीमप् । ततो

र्भावाज्ज्ञायेतः । तारकादित्वादितजन्या ॥

कुट्टिहारिका । स्त्री । दास्याम् ॥ इति शब्दबुधः ॥

कुट्टीरः । पुं । क्षुद्रपर्वते ॥ इति धाराबली ॥

कुट्मलः । पुं । मुकुले । विकासोन्मुखकलीकलिकायाम् ॥ न । नरकान्तरे ॥ यत्र लुम्भिः पीडनम् ॥ कुटति । कुट कौटिल्ये । वृषादित्वात् कलच् तस्य मुट् च ॥ यद्वा । कुड्मले कुटतिवा । कुट० । कुटिकुषिभ्यां क्मलच ॥

कुठः । पुं । द्रुमे । शाले ॥ कुठति । कुठ० । पचाद्यच् ॥

कुठरः । पुं । दधिविलोडने । मन्थाधारे रज्जुमि युंक्ते स्तम्भे ॥ कुठति कुठ गतिप्रतिघाते । बाहुलकात् करन् ॥

कुठाकुः । पुं । कुठकुठेया इति भाषाप्रसिद्धे पक्षिविशेषे ॥

कुठाटङ्कः । पुं । स्त्री । कुठारे ॥

कुठारः । पुं । द्रुमे ॥

कुठारः । पुं । स्त्री । सुधितौ । परशौ । कुल्हाडा इति भाषा । पर्शा इति च ॥

कुठारी । स्त्री । कुठारे । कुल्हाडी इति भाषा ॥ जातित्वात् ङीष् ॥

कुण्डलिका । स्त्री । मात्रावृत्तभेदे ॥ यथा । कुण्डलिका सा कथ्यते प्रथमं दोहा यत्र । रोलाचरणचतुष्टयं प्रभवति विमलं तत्र ॥ प्रभवति विमलं तत्र पदस्यति सुललितयमकम् अष्टपदी सा भवति विमलकविकौशलगमकम् । अष्टपदी सा भवति सुविमलपण्डितमण्डलिका कुण्डलिनायकभणितविबुधकर्णा कुण्डलिकेति ॥ जलेबी इतिप्रसिद्धे पक्वान्ने॥

कुण्डली । पुं । फणिनि । सर्पे ॥ वरुणे ॥ मयूरे ॥ चित्रमृगे । चित्तल इति भाषा ॥ त्रि । कुण्डलयुक्ते ॥ कुण्डलम् कुण्डलाकारो वा सोऽस्यास्ति । अतइनि: ॥

कुण्डलिनायक: । पुं । पिङ्गलसर्पे ॥

कुण्डलिनी । स्त्री । मूलाधारनिवासिन्याम् कुलकुण्डलिनीशक्तौ ॥ उरग्याम् ॥ गुडूच्याम् ॥ कुण्डलानांमण्डले ॥ खलादिभ्यादिनि: ॥ जलेबीतिख्यातेपक्वान्नविशेषे॥तस्या:पाकप्रकारो यथा । नूतनंघट मानीय तस्यान्त:कुशलोजन: । प्रस्थार्द्धपरिमाणेन दध्नाऽम्लेन प्रलेपयेत् ॥ द्विप्रस्थांशमितां तत्र दध्यम्लंप्रस्थसम्मितम् । घृतमर्द्धशरावञ्च घोलयित्वा घटे क्षिपेत् ॥ आतपे स्थापयेत्तावद्यावद्याति तदम्लताम् । ततस्तत् प्रक्षिपेत् पात्रे सच्छिद्रे भाजनञ्च तत् ॥ परिभ्राम्य परिभ्राम्य ततस्तत्तप्ते घृते क्षिपेत् । पुन:पुनस्तां वानृत्त्या विदध्यात् मण्डलाकृतिम् ॥ तां सुपक्वां घृतान्नीत्वा सितापाके तनुद्रवे । कर्पूरादिसुगन्धे च स्नपयित्वो द्धरेत्तत: ॥ एषाकुण्डलिनी नाम्ना पुष्टिकान्तिबलप्रदा । धातुवृद्धिकरी वृष्या रुच्या चेन्द्रियतर्पणीति ॥ कुण्डलिनो ङीप् ॥

कुण्डली । स्त्री । गडूच्याम् ॥ काञ्चनद्रुमे॥ कपिकच्छाम् ॥ सर्पिणीवृक्षे ॥ जलेबीति प्रसिद्धे मिष्टान्नविशेषे । कुण्डलिन्याम् ॥ इतिपाकराजेश्वर: ॥ कुलकुण्डलिन्यांशक्तौ ॥

कुण्डाशी । त्रि । कुण्डस्यसङ्करविशेषस्यान्नभोजिनि ॥ अमृते जारज: कुण्डो मृते भर्त्तरि गोलक: । य स्तयो रन्न मश्नाति स कुण्डाशी ति कथ्यते ॥ इति देवल: ॥ कुटना इति प्रसिद्धे भगभक्षके ॥ महाभारते दानधर्मे तथा दर्शनात् ॥

कुण्डिका । स्त्री । कमण्डलौ ॥ पिठरे । स्थाल्याम् ॥ कूंड कूंडा इतिच प्रसिद्धे पात्रविशेषे ॥ स्वा० क: ॥

कुण्डिन: । पुं । ऋषिविशेषे ॥ न । वि

दर्भनगरे ॥ यथा । अथ भीमसुतावलोकनैः सफलं कर्त्तुमहः स देवसः । क्षितिमण्डलमण्डनायितं नगरं कुण्डिनमण्डजो ययाविति पूर्वनैषधे २ सर्गः ॥ कुण्डते । कुण्डिदाहे । बहुलमन्यत्रापीति इनच् प्र० ॥

कुण्डी । स्त्री । अमत्रविशेषे । कमण्डलौ ॥ कुण्डी कम्बुकपालानि मधुपूर्णानि बिभ्रतः । किं न पश्यति लोको यं ब्रह्मविष्णुमहेश्वरान् ॥ जानपदकुण्डेत्यादिना अमत्रे ङीष् ॥ भर्त्तर्यमृते जारजातायाम् ॥ अमनुष्यजातित्वात् जातिलक्षणो ङीष् ॥ कुणति वा । कुणशब्दोपकरणयोः । अमन्ताड्डः ॥

कुण्डीरः । पुं । मनुष्ये ॥ त्रि । बलवति ॥ इति धरणी ॥

कुतनुः । पुं । कुवेरे ॥ त्रि । कुत्सितशरीरे ॥

कुतपः । पुं । सूर्य्ये ॥ वैश्वानरे ॥ द्विजन्मनि ॥ अतिथौ ॥ गवि ॥ भागिनेये ॥ पुं । न । दौहित्रे ॥ वाद्ये ॥ छागलकम्बले । नेपालकम्बले । खारुचा इति पर्व्वतीय भाषा ॥ कुशतृणे ॥ दिवसस्याष्टमांशे । अह्नोऽष्टमे मुहूर्त्ते । त्रिंशद्दण्डदिनमाने द्वितीयप्रहरशेषदण्डावधितृतीयप्रहरप्रथमदण्डपर्य्यन्ते काले । अयञ्चैकोद्दिष्टश्राद्धारम्भकालः । यथा । आरभ्य कुतपे श्राद्धं कुर्य्यादारौहिणं बुधः । विधिज्ञो विधिमास्थाय रौहिणन्तु न लङ्घयेदिति ॥ दिवसस्याष्टमे भागे मन्दीभवति भास्करः । स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम् ॥ अपिच । अह्नो मुहूर्त्ता विख्याता दश पञ्च च सर्व्वदा । तत्राष्टमो मुहूर्त्तो यः स कालः कुतपः स्मृत इति मत्स्यपुराणम् ॥ * ॥ पारिभाषिककुतपास्तु । मध्याह्नः खड्गपात्रञ्च तथा नेपालकम्बलः । रौप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः ॥ पापं कुत्सितमित्याहुस्तस्य सन्तापकारिणः । अष्टावेते यतस्तस्मात् कुतपा इति विश्रुताः ॥ इति मिताक्षरायामाचाराध्यायः ॥ कुत्सितं तपति । तप० । संज्ञायां भृतॄवृजीति खच् । अनव्ययस्येति न मुम् । यद्वा । कुम्भुवं तपति । आगमशास्त्रस्यानित्यत्वान्न मुम् ॥

कुतः । अ । प्रश्ने ॥ पञ्चम्यर्थे । कस्मादर्थे ॥ निह्नवे ॥ कस्मात् किमस्त्सिल् । कुतिहोः ॥

कुतुकम् । न । कौतुके । फलनिरपेक्षतया चिकीर्षिते ॥ कुत्सितं कर्म्म नि

 

मितस्नेहपात्रं कायति । कै० । आ-
तोनुपेतिक: । उपपदसमास: । इ
कोह्रस्वोङ्योगालवस्येतिह्रस्व: ॥ य
द्वा । कुत्वाम्भवम् । अध्यात्ठक् । इ
सुसुगिति क: । केण इति ह्रस्व: । सं
ज्ञापूर्वकत्वात् पत्वेवृद्ध्यभाव: ॥

कुतप: । पुं । चर्ममये ऽल्पे स्नेहपात्रे । कुप्पी इतिभाषा ॥ ह्रस्वा कुतू: । कुत्वाडुपच् ॥

कुतुम्बुरु । न । कुतसिततिन्दुकीफले ॥

कुतू: । स्त्री । चर्मनिर्मिते स्नेहपात्रे । कुप्पा इतिभाषा ॥ कुतसितं तन्यते । तनु० । बा० कू: टिलोपश्च ॥ कौति वा । कुशब्दे । बा० कूस्तुकच् । कुत्वाडुपजितिनिर्देशाद्वा ॥

कुतूणक: । पुं । कतुया इति गौड भाषाप्रसिद्धे बालानां नेत्ररोगे ॥ तस्य ल० । यथा । कुतूणक: चीरदोषा च्छिशूनामेव वर्त्मनि । जायते तेन तन्नेत्रं कण्डूरञ्च स्रवेत् मुहु: ॥ शिशु: कुर्याल्ललाटाक्षि कूटना साच घर्षणम् । सूर्य्योनार्कप्रभां द्रष्टुं न वर्त्मोन्मीलनक्षम: इति ॥

कुतूहलम् । न । अपूर्ववस्तुदिदृक्षाया तिशये चेष्टाविशेषे । कौतुके । कौतूहले ॥ कुतूहलं रम्यदृष्टौ चाप-

स्यं परिकीर्त्तितम् ॥ बलमिरमेव चिकीर्षिते ॥ त्रि । प्रशस्ते ॥ ऋद्भुते ॥ कुतं हलति । हलविलेखने । मू० क: ॥ यद्वा । हलति । पचाद्यच् । कुत्वा: हलम् ॥

कुतूहली । त्रि । विनोदार्थिनि ॥

कुतूगम् । न । कुम्भिकायाम् । वारिपर्याम् । जलपत्नी काई इतिच भाषा । पाना इति गौडभाषा ॥

कुत्र । अ । देशप्रश्ने ॥ कस्मिन् । सप्तम्यास्त्रल् ॥

कुत्रचित् । अ । कुत्र । किसीठिकाने इति भाषा ॥

कुत्सनम् । न । निन्दने ॥ कुत्स० । ल्युट् ॥

कुत्सला । स्त्री । नीलीवृक्षे ॥

कुत्सा । स्त्री । निन्दायाम् ॥ कुत्सनम् । कुत्स अवक्षेपणे । गुरोश्चहलइति स्त्रियाम: । टाप् ॥

कुत्सितम् । न । कुष्ठनामौषधे ॥ त्रि । निन्दिते । निकृष्टे । प्रतिकृष्टे । गर्हिते ॥ कुत्सा सञ्जातास्य । सा० इतच् ॥

कुथ: । पुं । बर्हिषि । दर्भे ॥ पुं । स्त्री । आस्तरणकम्बले । गजपृष्ठस्थितचित्रकम्बले । प्रवेणयाम् । वर्णा । हाथीकीझूल इति भाषा ॥ कुथ्नाति । कुन्थसंश्लेषणे । अच् । इगुपधेति निर्देशात् क्वचिदकित्यपि नलोप: ॥

यथा । कुन्यस्य शोभां । कुर्थिर्हिंसा संक्लेशनयोः । आगमशास्त्रस्यानित्य त्वात् नुमू । इगुपधेतिकपि अथवा । ॥ कुथ्यति वा । कुथपूतीभावे । इगुपधेतिकः ॥ कुथा कन्था समाख्याता कुथः स्यात्करिकम्बलम् । कुथः कुशः कुथः कीटः प्रातःस्नायीद्विजः कुथस्तथाहकश्चित ॥

कुथा । स्त्री । आस्तरणे ॥ टाप् ॥

कुधोदरी । स्त्री । कल्किपुराणप्रसिद्धा यां कुम्भकर्णपौत्र्यां निकुम्भदुहितरि ॥ साकल्किमाहतेति पुराणे प्रसिद्धिः ॥

कुदृष्टिः । स्त्री । वेदबाह्यतार्किकमतनायाम् ॥ यावेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । इतिमनुः ॥

कुद्दालः । पुं । कोविदारे । काञ्चनारे ॥ भूमिदारणास्त्रे । कुदाल इति भाषा ॥ कुम् भूमि मुद्दालयति । दलविदारणे । कर्मण्यण् । शकंध्वादिः ॥

कुद्दङ्कः । पुं । गृहविशेषे । मञ्चोपरिमण्डपे । उद्घाटे । पिठरे ॥ इतिचिकाण्डशेषः ॥

कुद्दङ्गः । पुं । पिठरे । कुद्दङ्के ॥

कुद्रवः । पुं । कोद्रवे ॥

कुद्रवनः । पुं । कोद्रवे ॥

कुधान्यम् । न । क्षुद्रधान्ये ॥

कुधीः । त्रि । विपरीतबुद्धिमति ॥

कुध्रः । पुं । पर्वते ॥ कुंधरति । धृञ् । मूलविभुजादित्वात्कः ॥

कुनखः । पुं । क्षुद्ररोगविशेषे ॥ तल्लक्षणं यथा । नखमांस मधिष्ठाय वातः पित्तञ्च देहिनाम् । कुर्वीते दाहपाकौ च तं व्याधिंचिप्प मादिशेत ॥ तदेवाल्पतरैर्दोषैः परुषं कुनखं वदेदिति ॥ त्रि । कुत्सितनखयुक्ते ॥

कुनखी । त्रि । कुनखरोगयुक्ते ॥ सङ्कुचितनखे ॥

कुनटः । पुं । श्योनाकप्रभेदे ॥ कुत्सितनटे ॥

कुनटी । स्त्री । नैपाल्याम् । मनःशिलायाम ॥ धन्याके ॥ कौनटति । नटअवस्यन्दने । अच् । गौरादित्वान् ङीष् ॥ कुत्सिता नटी इव वा ॥

कुनली । पुं । वकवृक्षे ॥

कुनाभिः । पुं । निधौ ॥ वातमण्डल्याम् । बबूला बवण्डर इतिच भाषा ॥

कुनाशकः । पुं । दुरालभायाम् । यवासे ॥ कुंनाशयति । णश० । ण्यन्तः । अच् । स्वा० कन् ॥

कुन्तः । पुं । गवेधुकायाम् ॥ प्रासायुधे । भल्ले । भाला इति भाषा ॥ प्रायोहस्तक्षेप्ये शल्ये इति स्वामी ॥ कु शरीर मुनत्ति । उन्दी० । बाहुलका

सन्तः। शकंध्वादिः॥

कुन्तलः। पुं। केशे। चिकुरे। वाले॥ ह्रीवेरे॥ चषके॥ जवे॥ हले॥ कुन्तं कुन्ताग्राकारं लाति। ला०। आतोनुपेतिकः॥ कुन्तलाः। पुंभूम्नि। जनपदविशेषे॥ यथा। कामगिरिं समारभ्य द्वारकान्तं महेश्वरि। श्रीकुन्तलाभिधो देशो वर्णितः शक्तिसङ्गमे इति।

कुन्तलवर्द्धनः। पुं। भृङ्गराजे। भंगरा इति भाषा॥

कुन्तलिका। स्त्री। दध्यादिच्छेदन्याम्। पालिकायाम्। दही काटने की छुरी वा कटोरी इति भाषा॥

कुन्तलोशीरम्। न। वालके। वाला इति भाषा॥

कुन्तिः। स्त्री। युधिष्ठिरादिपाण्डवानां मातरि॥ बा० कमेर्भिच्। प्रज्ञ्यादिलोपे कुगुण्डादेशः॥ देशविशेषे॥

कुन्ती। स्त्री। युधिष्ठिरादीनां जनन्याम्। शूरसेनसुतायाम्। पृथायाम्॥ गुग्गुलुवृक्षे॥ शल्लक्याम्॥ इतो मनुष्यजातेरिति ङीष्॥

कुन्तीपुत्रः। पुं। युधिष्ठिरादिषु॥ कुन्तीच शूरसेनराजस्य कन्या पृथानाम्नासीत्। तत्पिता तां कुन्तिभोजायादत्तवान्। अतः कुन्तीति विश्रुता। सा च मृगीभूतस्य मुनेः शापात् मैथुनरहितस्य स्वामिन आज्ञया धर्मात् युधिष्ठिरं पवनाद्भीमसेनम् इन्द्रात् दर्जुनम् अश्विनीकुमाराभ्यां नकुलसहदेवौ जनयामास॥ सा च कन्यावस्थायां मादित्यात् कर्णञ्च जनयामास। अतः। कर्णोपि कुन्त्याः पुत्रः॥

कुन्थुः। पुं। बौद्धविशेषे॥ जिनचक्रवर्त्तिविशेषे॥

कुन्दः। पुं। अच्युते। मुकुन्दे॥ सर्वपापविनाशाय वाजिमेधेन वेधसाम्। तस्मिन् यज्ञे महादाने दक्षिणां भृगुनन्दनः। मारीचाय ददौ प्रीतः कश्यपाय वसुन्धरामिति हरिवंशोक्तः॥ कुंधरां कश्यपाय ददाति। कुदाञ्०। आतोऽनुपसर्ग इति कः। पृषोदरादित्वान्नुमागमः। कुंद इति गौड भाषाप्रसिद्धे भ्रमियन्त्रे। खराद्भ्रमौ॥ कुबेरस्य निधिविशेषे॥ कुन्दुरुनामगन्धद्रव्ये॥ करवीरवृक्षे॥ पाकशक्यशाके॥ पुं। न। पुष्पविशेषे। माघ्ये॥ कुन्दं शीतं लघु स्रंसि शिरोविषविनाशनम्॥ कुम्भं दयते लुनाति वा। दैप्शोधने दो अवखण्डने वा। आत इति कः। तत्पुरुषे इति द्वितीयाया अलुक्। म-

दा । कुम् भूमिम् उनत्ति : उन्दी० । कर्मण्यण् । श० ॥ यद्वा । कौति । कुशब्दे । अब्दादित्वात् कौतेर्नुमितिदन् ॥

कुन्दकः । पुं । कुन्दुरुके ॥

कुन्दमः । पुं । मार्जारे ॥ इति त्रिकाण्डशेषः ॥

कुन्दरः । पुं । कुन्दरा इति कलिङ्गप्रख्याते तृणविशेषे दीर्घपत्रे । खरच्छदे ॥ कुन्दंराति । रा० । आतोनुपसर्गे इतिकः ॥

कुन्दिनी । स्त्री । पद्मसमूहे । पद्मिन्याम् ॥

कुन्दुः । पुं । मूषिके ॥ स्त्री । कुन्दुरुनामगन्धद्रव्ये ॥

कुन्दुरुः । पुं । स्त्री । स्वनामख्यातेसुगन्धिद्रव्ये । यस्य निर्यासे कुन्दुरुखोटि इतिगौडानांख्यातिः । पालङ्क्यायाम् । सौराष्ट्रे । बहुगन्धे ॥ कुन्दुरुर्मधुरस्तिक्तस्तीक्ष्णस्त्वच्यः कटुर्हरेत् । ज्वरस्वेदग्रहालक्ष्मीमुखरोगकफानिलान् ॥ कुम्भूमिमुनत्ति उदयति वा । अपवादयस्त्वेति साधुः ॥ पालङ्क्यायाकेपीतिकश्चित् ॥

कुन्दुरुकः । पुं । कुन्दुरुनाम्नि सुगन्धिद्रव्ये ॥

कुन्दुरुकी । स्त्री । शल्लकीवृक्षे ॥ कुन्दु

रूवप्रतिकृतिः । इवेप्रतिकृताविति कन् । गौरादित्वात् ङीष् ॥

कुपथः । पुं । कदध्वनि । कापथे ॥

कुपाणिः । त्रि । कुकरे । वक्रहस्ते । टुण्डा इतभाषा ॥

कुपितः । त्रि । रुषिते । क्रुद्धे ॥

कुपिनी । पुं । कैवर्त्ते । जालिया मछुवा इतिचभाषा ॥

कुपिनी । स्त्री । खालुइ इतिगौडभाषाप्रसिद्धायां स्वल्पमत्स्यधान्याम् ॥

कुपिन्दः । पुं । तन्तुवाये ॥ कुप्यति । कुप० । कुपेर्वाबश्चेतिकिन्दच् ॥

कुपीलुः । पुं । कारस्करवृक्षे । काकेन्दौ । कुचला इतिभाषा ॥ कुपीलुः शीतलस्तिक्तो वातलो मदकृल्लघुः । परं व्यथाहरो ग्राही कफपित्तास्रनाशनः ॥

कुपुरुषः । पुं । कुत्सितनरे ॥ कुत्सितःपुरुषः । कुगतीति समासः ॥

कुपूयः । त्रि । कुत्सिते । जात्याचारादिनिन्दिते ॥ कुत्सितंपूयते । पूयी विसरणे । पचाद्यच् ॥

कुप्यम् । न । स्वर्णरूप्याभ्यामन्यस्मिन् तैजसे ताम्रादिधातौ ॥ अष्टधातुमध्यस्ता इतिख्याते धातौ ॥ गुप्यते । गुपू रक्षणे । राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याऽव्यथ्या इतिक्यप

न्तोनिपातितःकुप्यशब्दः । तत्रगुपेरादेः कत्वम्संज्ञायाम ॥

कुप्यशाला । स्त्री । स्वर्णरजतभिन्नतैजसपात्रादिनिर्माणगृहे । सन्धान्याम् । ठठेरहट्टा इतिभाषा ॥

कुप्रियः । त्रि । अधन्ये ॥

कुप्लवः । पुं । तृणादिनिर्मिते कुत्सितो डुपादौ ॥

कुबेरः । पुं । धनदे । यक्षराजि ॥ नन्दीवृक्षे ॥ अर्हदुपासकविशेषे ॥ त्रि । कुदेहे ॥ मन्दे ॥ कुत्सितं बेरं शरीर मस्य कुत्सितत्वात् । यथाहुः । कुत्सायां क्विति शब्दोयं शरीरं बेर मुच्यते । कुबेरः कुशरीरत्वान्नाम्ना तेनैवसोङ्कितः ॥ इतिवायु पुराणम् ॥ यद्वा । कुम्बति धनम् । कुविश्राच्छादने । कुम्बेर्नलोपश्चेत्येरक् । औषधमधः ॥

कुबेरकः । पुं । नन्दिवृक्षे ॥ कुबेर ॥ स्वार्थेकः ॥

कुबेराक्षी । स्त्री । पाटलावृक्षे ॥ लताकरञ्जे । सितपाटलिकावृक्षे ॥ कुबेरस्येवाक्षियस्याः । अक्ष्णोदर्शनादित्यच् । गौरादित्वान्ङीष् ॥

कुबेराचलः । पुं । } कैलासपर्वते ॥
कुबेराद्रिः । पुं । }

कुब्जः । पुं । खड्गे ॥ अपामार्गे ॥ त्रि । गडुले । कुबडा इतिभाषा ॥ अस्यलक्षणं । यथा । हृदयं यदि वा पृष्ठ मुन्नतं क्रमशः सरुक् । क्रुद्धो वायु र्यदा कुर्यात्तदा तं कुब्जमादिशेत् । इति ॥ कुरीषत् उब्जमार्जवमस्य । श० ॥

कुब्जकः । पुं । पुष्पविशेषे । भद्रपुष्पे ॥ महासहे । कण्टकाढ्ये । कुब्ज कूजा कूजे इतिभाषाप्रसिद्ध सेवतीप्रभेदे । यथा । चम्पकात् पुष्पशतका दशोकंपुष्प मुत्तमम् । अशोकात् पुष्पसाहस्रात् सेवतीपुष्प मुत्तमम् । सेवतीपुष्पसाहस्रात् कुब्जकं पुष्पमुत्तममितिनारसिंह पुराणम् ॥ अस्यगुणा यथा ॥ कुब्जकः सुरभिः स्वादुःकषायानुरसःसरः । त्रिदोषशमनो हृष्यः शीतवर्त्तोषसम्भृतइति ॥ कौ उब्जति । उब्जआर्जवे । अच् । यद्वा । कुरीषत् उब्जमार्जवमस्य । श० । स्वार्थेकः ॥

कुब्जकण्टकः । पुं । श्वेतखदिरे ॥

कुब्रम् । न । वने ॥ कुम्बति । कुविश्राच्छादने । कुम्ब्रेरेतिरन् ॥

कुभृङ्गिलकः । पुं । सप्तशल्लाकचक्रे ॥

कुमनीषः । त्रि । कुत्सितबुद्धिमति ॥ कुत्सिता मनीषाऽस्य ॥

कुमारः । पुं । शुके ॥ कार्त्तिकेये । स्कन्दे ॥ भाण्डीरायुवराजि ॥ अश्ववार

के ॥ पञ्चवर्षीयबालके ॥ वत्सतरे ॥ अर्हदुपासकविशेषे ॥ सिन्धुनदे ॥ न । जात्यश्वे । उत्तमस्वर्णे ॥ कुमारयति क्रीडति । कुमारक्रीडायाम् । पचाद्यच् ॥ कुत्सितो मारोऽस्येतिवा ॥ कौमारयति दुष्टान् । अच् ॥ सदाबालत्वाद्वाकुमारः ॥ यद्वा । कामयते । कम० । कमेःकि दुत्वोपधायाश्च्चारन् प्रत्ययः ॥

कुमारकः । पुं । वत्सतरे ॥ कुमारश्चिरतनगणस्तत् ॥ कुमारयति । पचाद्यच् । कुमारइव । इवेप्रतिकृताविति कन् ॥ बालके ॥ यतः कुं पृथिवीं मत्यां मारयेत् ततःकुमारकः ॥

कुमारपालः । पुं । शालिवाहननृपे ॥ इतिहेमचन्द्रः ॥

कुमारभृत्या । स्त्री । गर्भिण्याःपरिचर्यायाम् । बालतन्त्रे ॥

कुमारयुः । पुं । युवराजे ॥

कुमारवः । त्रि । कुमार वति ॥ कुमारोऽस्त्यस्य । अन्येभ्योपिदृश्यते इति वः ॥

कुमारवाही । पुं । मयूरे ॥

कुमारसूः । स्त्री । गङ्गायाम् ॥ दुर्गायाम् ॥ कुमारंसूते । सूङ्० । क्विप् ॥

कुमारघ्न । त्रि । बालघातिनि ॥

कुमारिकः । त्रि । कुमारीमति ॥ कु



मार्य्यस्त्यस्य । व्री० ठन् ॥

कुमारिका । स्त्री । कुमार्य्याम् ॥ नवमल्लिकायाम् ॥ भारतवर्षस्य नवखण्डविशेषे । भरतखण्डे ॥ यथा । वर्णव्यवस्थितिरिहैव कुमारिकाख्ये शेषेषु चान्त्यजजनानिवसन्ति सर्वे इति ॥ स्थूलैलायाम् ॥

कुमारिणी । स्त्री । चण्ड्याम् ॥ कुत्सिताम् ईर्ष्यान् मारयति सच्छीला ॥

कुमारी । स्त्री । अनूढकन्यायाम् । पार्वत्याम् ॥ नवमल्लिकायाम् ॥ नदीप्रभेदे । शुक्तिमत् पादोद्भवायांसरिति ॥ सरायाम् । इतकुमार्याम् ॥ यथा । कुमारी भेदिनी शीता तिक्ता नेत्र्या रसायनी । मधुरा बृंहणी बल्या वृष्या वातविषप्रणुत् ॥ गुल्मप्लीहयकृद्वृद्धिकफज्वरहरी हरेत । ग्रन्थ्यग्निदग्धविस्फोटपित्तरक्तत्वगामयानिति ॥ अपराजितायाम् ॥ जम्बुद्वीपविभागे ॥ रामतरण्याम् ॥ वन्ध्याकर्कोटक्याम् ॥ स्थूलैलायाम् ॥ मोदिनीपुष्पे ॥ तरुणीपुष्पे ॥ श्यामापक्षिणि ॥ कन्यायाम् ॥ द्वादशवर्षीयायांकन्यायाम् ॥ यथा । अष्टवर्षा भवेद्गौरी दशवर्षा च कन्यका । सम्प्राप्तेद्वादशेवर्षेकुमारीत्यभिधीयते । इतिस्मृतौभेदः ।

मुदाना मावासो यस्मिन ॥

कुमुदिका । स्त्री । कट्फले ॥ कौमो दते । मुदीहर्षे । इगुपधेतिकः । स्वार्थे कन ॥

कुमुदिनी । स्त्री । कुमुदयुक्तपुष्करिण्यां दे ॥ कुमुदलतायाम् ॥ उत्पलिन्याम् । छोटी कोंई इतिभाषा ॥ कुमुदान्यत्रदेशे सन्ति । पु० इनिः ॥ कुमुदखण्डे ॥ कुमुदानांसमूहः । ख ला० इनिः ॥ पद्मिन्यां ये गुणाः प्रोक्ताः कुमुदिन्याश्चते स्मृताः । सातु मृणादिसवैक्षे रक्तासमुदिताबुधैः ॥

कुमुदिनीनायकः । पुं ।
कुमुदिनीपतिः । पुं । } चन्द्रमसि ॥

कुमुदी । स्त्री । कट्फले ॥

कुमुदेशः । पुं । चन्द्रे । इन्दौ ॥

कुमुद्वान् । त्रि । कुमुदप्रायदेशे ॥ कुमुदानि प्रायाण्यत्र । कुमुदनडवेतसेभ्योड्मतुप् । मायइ वः ॥

कुमुद्वती । स्त्री । कुमुदिन्याम् ॥ उगितश्चेति ङीप् ॥ रामपुत्रस्य कुशस्य पत्न्याम् ॥ कुमदनागस्य कनिष्ठायाम् ॥

कुमुद्वतीबीजम् । न । बेरा इतिप्रसिद्धे कैरविणीफले ॥ भवेत् कुमुद्वतीबीजं स्वादुरूक्षंहिमंगुरु ॥

कुमोदकः । पुं । विष्णौ ॥ इतिहेमच-न्द्रः ॥ कोः पृथिव्यामोदकः पालकत्वात् ॥

कुम्पः । त्रि । बाहुकुण्ठे । टोंगड़ौ । टुण्डा । इति भाषा ॥

कुम्बा । स्त्री । सुगहनायामावृतौ । त्रिविडवेष्टने । अस्पृश्यादिदर्शनवारणायवेष्टने ॥ कुम्बति अनयावा । कुबि आच्छादने । चितिपूजिकथिकुम्बिचर्चश्चेत्यङ् । टाप् ॥

कुम्भः । पुं । एकादशे राशौ । कुम्भरोगे ॥ जन्मकालिकचन्द्राश्रितैतद्राशिफलम् । यथा । अनलसतासहितो ऽन्यशुभप्रियः कुशलता कलितो ऽतिविचक्षणः । कलशगामिनि शीतकरेमरः सदसि सज्जनमान सुरोचनः इति ॥ तल्लग्नेजातस्यफलम् । कुम्भलग्ने समुद्भूतश्चलचित्तोतिसौहृदः । परदारतो नित्यं सत्त्वकायोमहासुखी ॥ हस्तिमूर्द्धांशे । गजशिरसः पिण्डद्वये ॥ यथा । ते क्षत्रियाः कुण्डलिनो युवानः परस्परं सायकविक्षताङ्गाः । कुम्भेषु लग्नाः सुषुपु र्गजानां कुचेषु लग्ना इवकामिनीनामिति ॥ राक्षसान्तरे । कुम्भकर्णस्य पुत्रे ॥ वेश्यापतौ ॥ प्राणायामाङ्गकुम्भके ॥ परिमाणान्तरे ॥ सच द्विपलशतं, द्रोणो विंशतिद्रोणौ

मीपाकइति श्रीभागवतम् ॥

कुम्भीरः । पुं । कुम्भीर इति नाँका इतिच भाषा प्रसिद्धे मारके जलजन्तुवि० । नक्रे । गिलग्राहे ॥ कुम्भिनं हस्तिनं मीरयति । कर्मण्यण् । उपपदसमासः ॥

कुम्भीरमक्षिका । स्त्री । कुम्भीरपोका इति गौड भाषा प्रसिद्धे मक्षिकाविशेषे । कणायाम् ॥ इतिहारावली ॥

कुम्भीबीजम् । पुं । जयपाले ॥

कुम्भोलूः । न । गुग्गुलौ ॥

कुम्भोलूखलकम् । न । गुग्गुलौ ॥ कुम्भोलूखलकाकारादुत्कोशादि येतम् ॥

कुरका । स्त्री । सल्लकीवृक्षे ॥

कुरङ्करः । पुं । } सारसपक्षिणि । पुष्कराह्वे ॥
कुरङ्कुरः । पुं । }

कुरङ्गः । पुं । हरिणविशेषे ॥ कुरङ्गईषत्ताम्रः स्याद्धरिणाकृतिको महान् ॥ कुरङ्गोऽंहणो बल्यः शीतलः पित्तहृद्गुरुः । मधुरो वातहृद्ग्राही किञ्चित् कफकरो मतः इति । हरिणस्य गुणैस्तुल्यः कुरङ्गः कथितो बुधैरितिच भावप्रकाशः ॥ मृगे । वातायौ ॥ कौ रङ्गति । रगि० अच ॥ कैरङ्गो स्यच्छवा । अर्शआद्यच ॥ यद्वा । किरति । कृवि० । पिशादिभ्यः कित् इत्यङ्च प्र० । बाहुलकात् उत्वम् । कुरशब्देवाऽस्तु ॥

कुरङ्गनयना । स्त्री । मृगनयनतावीनायाम् । कुरङ्गाक्ष्याम् ॥

कुरङ्गनाभिः । पुं । कस्तूर्याम् ॥

कुरङ्गमः । पुं । एणे । ऋष्ये ॥ हरिणविशेषीयम् ॥

कुरङ्गाक्षी । स्त्री । एणीनयनायाम् ॥

कुरङ्गिका । स्त्री । मुद्गपर्ण्याम् ॥

कुरङ्गी । स्त्री । कुरङ्गयोषायाम् । मृग्याम् ॥

कुरचिल्लः । पुं । कर्कटे ॥

कुरटः । पुं । चर्मकारे ॥

कुरण्टः । पुं । } पीतायां झिण्ट्याम् । पीताम्लाने ॥ कुर्यते । कुरशब्दे । बाहुलकात् अण्टः । स्वार्थे कन् ॥
कुरण्टकः । पुं । }

कुरण्डः । पुं । मुष्कवृद्धिरोगे । अण्डवृद्धौ ॥ साकरुण्डवृक्षे ॥

कुरण्डकः । पुं । त्रिसन्ध्यादेव्याः स्थाने ॥

कुररः । पुं । उत्क्रोशखगे ॥ कवते । कुङ्शब्दे । कुवः क्ररन् ॥

कुरराङ्घ्रिः । पुं । देवसर्षपे । रक्तमूलके । लक्ष्मटले ॥

कुररी । स्त्री । मेष्याम् ॥ कुररस्त्रियाम् ॥

कुररीहता । स्त्री । छन्दोविशेषे ॥ कुर

रीवता ननभजैर्लगयुक् । यथा । अ नतिचिरोज्झितस्य जलदेन चिर स्थितबहुबुद्बुदस्य पयसोऽनुकृतिम् । विरलविकीर्णवज्रशकलासकला मि ह विदधाति धौतकलधौतमही ॥

कुरलः । पुं । उत्क्रोशे । कुररे ॥ चूर्ण कुन्तले ॥ इतिधरणी ॥

कुरवः । पुं । पीतझिण्ट्याम् ॥ कुरवके । रक्तझिण्ट्याम् ॥ सितमन्दारे ॥ कु त्सितशब्दे ॥ त्रि । कुत्सितशब्दयु क्ते ॥

कुरवकः । पुं । रक्ताम्लाने । रक्तसहा याम् । रक्तझिण्ट्याम् ॥ पीतझि ण्ट्याम् ॥ त्रि । कुत्सितरवे ॥ कुत्सि तः ईषद्वा अलीना मल्पमकरन्द त्वात् रवोऽत्र । बहुव्रीहित्वात्कका देशः ॥

कुरसः । पुं । मद्यभेदे ॥ कुत्सितरसे ॥ त्रि । कुत्सितरसयुक्ते ॥ कुत्सितो रसोऽत्र ॥

कुरसा । स्त्री । गोजिह्वालतायाम् ॥

कुराहः । पुं । कुलाहे । ईषत्पाण्डौकृ ष्णजङ्घे घोटके ॥ इतिहेमचन्द्रः ॥

कुरी । स्त्री । तृणधान्यप्रभेदे ॥

कुरीरः । पुं । कम्बले ॥ न । मैथुने ॥ क्रियते । डुकृञ्० । कृञउच्चेति ईर नप्रत्ययः । उदन्तादेशश्च ॥



कुरुः । पुं । आग्नीध्रराजपुत्रे । प्रियव्रत स्य पौत्रे ॥ चन्द्रवंशीयराजविशेषे । सम्बरणराजभार्यायां सूर्यकन्या यां तपत्यां जाते ॥ ओदने । भक्ते ॥ श्रीकण्ठजाङ्गले ॥ कण्टकारिका याम् ॥ कर्त्तरि ॥ करोति । डुकृञ्० । कृग्रोरुच्चेति कुः ॥ जम्बूद्वीपस्थनवव र्षान्तर्गते वर्षविशेषे ॥ कुरवः क्ष त्रियाः । तेषां निवासो जनपदः कुर वः । निवासेऽर्थे जनपदेलुप् । लु पियुक्तवद्व्यक्तिवचने ॥ पुं भू । नीवृद्वि शेषे ॥ हस्तिनापुर मारभ्या कुरुक्षे त्रा च्छदक्षिणे । पञ्चालपूर्वभागेतु कु रुदेशः प्रकीर्त्तितः ॥

कुरुकन्दकम् । न । मूलके ॥

कुरुक्षेत्रम् । न । देवयजने । देशविशे षे । धर्मक्षेत्रे । कुरुपाण्डवानां युद्ध भूमौ ॥ तरन्तुकारन्तुकयोर्यदन्तरंरा मह्रदानाञ्च मचक्रुकस्य च । एतत् कुरुक्षेत्रसमन्तपञ्चकं प्रजापतेरुत्तर वेदिरुच्यते ॥ यथाग्रामपिलोकानां कुरुक्षेत्रं विशिष्यते । अर्द्धंतस्तु कुरु क्षेत्रमर्द्धंतस्तुपृथूदकम् ॥ कुत्सितंरौ तीति कुरु पापंकर्म तस्यक्षेपणात् गमनकारणत्वात् क्षेत्रम् ॥ यद्वा । कुः पृथिवी तस्यांरौतिशब्दंकरोति यः प्राणस्तन्निवासभूतम् ॥ स्थाणु

प्रियादेव्याःस्वामनेतत् ॥

कुरुक्षेत्रीयोगः । पुं । एकस्मिन् सावन दिने तिथित्रयनक्षत्रत्रययोगत्रया- णां स्पर्शे ॥ कुरुक्षेत्रे मरणयोगे ॥ ॥ यथा । पञ्चग्रहयुते मन्दौ मम- संस्थे वृहस्पतौ । सौम्यक्षेत्रगते च- न्द्रे कुरुक्षेत्रे मृतिर्भवेदितिजातका- भरणसङ्ग्रहेयोगाध्यायः ॥

कुरुटः । पुं । सितावरशाके ॥

कुरुण्टः । पुं । पीतझिण्ट्याम् ॥ पीता म्लाने ॥

कुरुण्टकः । पुं । पीतपुष्पाम्लाने ॥ पी तझिण्ट्याम् । सहचर्याम् ॥ कुरुटति कटिस्तेयकरणे । ण्वुल् क्रनवा । कु तसितः कौवा कण्टकः । कुगतीति समासः ॥

कुरुण्टी । स्त्री । दारुपुत्तलिकायाम् ॥

कुरुपतिः । पुं । युधिष्ठिरे ॥

कुरुबम् । न । कुलपालके । कमला नेबू इति गौडभाषाप्रसिद्धे । नारङ्ग विशेषे ॥

कुरुम्बा । स्त्री । } द्रोणपुष्प्याम् ॥
कुरुम्बिका । स्त्री । }

कुरुम्बिका । स्त्री । सैहलीवृक्षे ॥

कुरुराट् । न । दुर्योधने ॥

कुरुराजः । पुं । दुर्योधने ॥ कुरूणांदे शविशेषाणां राजा । टच् ॥

कुरुवः । पुं । भाजस्त्रिवपूर्णकुरुवके । भ्र मरके । भ्रमराकके ॥

कुरुवकः । पुं । शोणाम्लाने । रक्ताम्लाने । रक्तझिण्ट्याम् ॥ पीतझिण्ट्याम् ॥ ईषदर्थेति । रुशब्दे । संज्ञायांकुन् । उवङ् ॥

कुरुवर्षः । पुं । कुरुसंज्ञके वर्षे ॥

कुरुविन्दः । पुं । मेघनामनि । मुस्ता याम् ॥ कुल्माषे ॥ ओषिभेदे ॥ मकुरे ॥ हिङ्गुले ॥ न । पद्मरागम णौ । माणक इति भाषा ॥ काचल वणे ॥ कुरून् विन्दति । विद्लृलाभे । अनुपसर्गाल्लिम्पविन्दधारिपारि वे द्युदेजिचेतिसातिसाहिभ्यश्चेति शः॥

कुरुविल्वः । पुं । पद्मरागमणौ ॥

कुरुविस्तः । पुं । स्वर्णपले । ४ तोला सौना इतिभाषा ॥ कुरुष विस्त ॥

कुरुवृद्धः । पुं । भीष्मपितामहे ॥ कुरु षु कुरुवंशजेषु वृद्धः ॥

कुरूद्वहः । पुं । युधिष्ठिरे ॥

कुरूप्यम् । न । रङ्गे ॥

कुर्जः । पुं । कुलञ्जनवृक्षे । गन्धमूले ॥

कुर्प्परः । पुं । कफोणौ ॥ जानुनि ॥ कुरति । कुरशब्दे । क्विप् ॥ कोरण म् । संपदादित्वात् । पिपर्त्ति । पॄ० अच् । कुरचासौपरश्च ॥ कुरा शब्देन प रो वा ॥

कुप्पासः । पुं । अर्द्धेचोलके ॥

कुप्पासकः । पुं । कञ्चुलिकायाम् । आँगी काँचुली चोली इतिचभाषा ॥

कुर्वत् । त्रि । कर्मकारे । भृत्ये ॥ करोति । डुकृञ्० । शतृ ॥ तनादिकृञ्भ्य उः । अतउत्सार्वधातुके । यण् ॥

कुर्वाणः । त्रि । भृत्ये ॥ कारके ॥ कुरुते । डुकृञ्० । शानच् ॥

कुलम् । न । जनपदे ॥ मध्यमवृषभद्वयेन यावती भूमि र्वाह्यते तावत्यां भूमौ ॥ हली कुलन्तु भुञ्जीतेतिमनुः ॥ गोत्रे ॥ सजातीयगणे ॥ यथा । विप्रकुलम् ॥ आचारो विनयो विद्या प्रतिष्ठा तीर्थदर्शनम् । निष्ठा वृत्ति स्तपो दानं नवधा कुललक्षणम् ॥ भवने ॥ तनौ । देहे ॥ तत्व इति भाषा प्रसिद्धेषु जीवादिषु यथा । जीवः प्रकृतितत्त्वञ्च दिक्कालाकाशमेवच । क्षित्यप्तेजो वायवश्च कुलमित्यभिधीयतेइति॥ पुं । कुलिके । शिल्पिकुलप्रधाने ॥ कोलति । कुलसंस्त्यानेबन्धुषुच । इगुपधेतिकः ॥ यद्वा । कूयते । कुङ्शब्दे । वा० लक् ॥ कुम् भूमिंलातिवा । कौलीयते वा । लीङ् श्लेषणे । अ-न्येभ्योपीतिडः ॥

कुलकः । पुं । वल्मीके ॥ काकतिन्दुके ॥ कुलश्रेष्ठे ॥ मलयवृक्षे ॥ हरितसर्पे ॥ न । पटोले ॥ पद्यादिसम्बद्धे कसमूहे ॥ त्रि । शिल्पिकुलप्रधाने । कुलश्रेष्ठिनि ॥ कुलस्य गृहस्य प्रतिकृतिरिव । इवेप्रतिकृतावितिकन् ॥ यद्वा कोलति । कुलसंस्त्याने । इगुपधेतिकः । स्वार्थे कन् वा ॥

कुलकर्कटी । स्त्री । चीनाकर्कट्याम् ॥

कुलकुण्डलिनी । स्त्री ।
कुलकुण्डली । स्त्री । } मूलाधारपद्मस्थितशिवशक्तिविशेषे ॥

कुलकः । पुं । करताल्याम् । तालमर्द्दले ॥ इतिहारावली ॥

कुलचया । स्त्री । शूकशिम्ब्याम् ॥

कुलजः । पुं । कुलीने । सत्कुलप्रसूते ॥ कुले जातः । सप्तम्यांजनेर्डः ॥

कुलजा । स्त्री । कुलपालिकायाम् ॥ डान्ताट्टाप् ॥

कुलञ्जः । पुं । कुलञ्जनवृक्षे ॥

कुलञ्जनः । पुं । स्वनामाख्याते कुलके । गन्धमूले ॥ कुलञ्जनस्य स्वरकृत् कफकटमुखशोधनः । अर्क इतिशेषः ॥

कुलटा । स्त्री । असत्याम् । पुंश्चल्याम्

म् । वन्धकायाम् ॥ अभिचारार्थं कुलानि अटति । अट० पचाद्यच् । शकंध्वादिः ॥ भिक्षुक्याम् । सन्ध्याम् ॥ भिक्षार्थं कुलानि अटति । पूर्ववत् प्रक्रिया ॥ परकीयान्तर्गतनायिकाविशेषे ॥

कुलतिथिः । पुं । स्त्री । चतुर्थ्यष्टमीद्वादशीचतुर्दशीषु ॥ यथा । द्वितीया दशमी षष्ठी कुलाकुल मुदाहृतम् । विषमास्त्वऽकुलाः सर्वाश्शेषास्त्वति थयःकुलाः ॥ इति तन्त्रशास्त्रम् ॥

कुलत्थः । पुं । स्वनामख्याते ऽन्नविशेषे । ताम्रबीजे । कुलथ कुलथी इति भाषा ॥ कुलत्थः कटुकः पाके कषायः पित्तरक्तकृत् । लघुर्विदाही वीर्योष्णःकासश्वासकफानिलान् ॥ हन्ति हिक्काश्मरीशुक्रदृगानाहान् सपीनसान् । स्वेदसङ्ग्राहको मेदःकफज्वरकृमीन्हरेत् ॥

कुलत्था । स्त्री । कुलत्थिकायाम् । दृक्प्रसादायाम् । वनकुलत्थे ॥ अस्यागुणा यथा । कटुत्वम् । तिक्तत्वम् । अर्शःशूलनाशित्वम् । विबन्धाध्मानशमनत्वम् । चक्षुर्हितत्वम् । व्रणरोपणत्वञ्चेति ॥ कुलत्थाञ्जने ॥

कुलत्थाञ्जनम् । न । कुलत्थकायाम् । प्रतापनायाम् ॥

कुलत्थिका । स्त्री । कुलत्थाकाराञ्जनप्रस्तरविशेषे । चक्षुष्यायाम् । खापरिया इति भाषा ॥ वनकुलत्थे ॥ कुलत्थप्रतिकृतिः । इवेप्रतिकृतावितिकन् ॥ यथा । कुलेतिष्ठति । ठा० । सुपीतिकः । स्वार्थे कन् । पृ० ॥

कुलधर्मः । पुं । असाधारणकुलोचितधर्मे । स्वजातीयधर्मे । कुलाचारे ॥ यथा । उत्सन्नकुलधर्माणां मनुष्याणांजनार्दन । नरकेनियतं वासोभवतीत्यनुशुश्रुमेति भगवद्गीता ॥ दिव्यवीरपशुभावान्तर्गतदिव्यधर्मे । यथा । कुलधर्मात् परो धर्मो नास्ति ज्ञाने ऽथ मामके । यस्यानुष्ठानमात्रेण ब्रह्मज्ञानी नरोभवेदिति ॥ कुलस्य धर्मः ॥

कुलधारकः । पुं । औरसात्मजे । पुत्रे ॥ कुलस्यवंशस्यधारकः ॥

कुलनक्षत्रम् । न । भरणीरोहिणीपुष्यमघोत्तरफल्गुनीचित्राविशाखाज्येष्ठाश्रवणोत्तरभाद्रपत्सु ॥ यथा । वारुणार्द्राभिजिन्मूलं कुलाकुल मुदाहृतम् । कुलानि समधिष्ण्यानि शेषाणि चाकुलानिचेतितन्त्रशास्त्रम् ॥

कुलनाथः । पुं । कुलपतौ ॥

कुलनाशः । पुं । उष्ट्रे ॥ कुलध्वंसे ॥

ख्यकारणंयथा। कूर्मोपविभागे १५ ऽध्याये। अनृतात् पारदार्याच्च तथाऽभक्ष्यस्य भक्षणात्। अश्रौतधर्माचरणात् क्षिप्रंनश्यतिवैकुलम्॥ अश्रोत्रियेवेददानात् वृषलेषुतथैव च। विहिताचारहीनेषु क्षिप्रंनश्यतिवैकुलमिति॥ तदभावस्य कारणन्तु। यावच्च वेदधर्माःस्युर्यावत्स्यात्कृष्णार्चनम्। यावत्स्याच्छुचिकृत्यंच तावन्नाशोभवेन्नहीति॥

कुलपतिः। पुं। मुनिविशेषे॥ यथा। मुनीनां दशसाहस्रं यो अन्नदानादिपोषणात्। अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः। इतिपुराणे ऋचयाख्यलक्षिते॥ गणमुख्ये। जमादार हौलदार इत्यादि यवनभाषा प्रसिद्धे॥ यथा। शिविकावाहानां कुलपतिः॥ कुलस्यपतिः॥

कुलपथः। पुं। दमनकवृक्षे॥

कुलपर्वतः। पुं। महेन्द्रादिसप्तशैलेषु॥ यथा। महेन्द्रो मलयः। सह्यः शुक्तिमान् ऋक्षपर्वतः। विन्ध्यश्चपारियात्रश्चसप्तात्र कुलपर्वताः इति। अत्र भारतेवर्षे। इतिविष्णुपुराणम्॥

कुलपालकम्। न। कुदम्बे। कमलानेवु इति गौड़भाषा प्रसिद्धे नार ङ्गविशेषे॥ त्रि। वंशप्रतिपालके॥

कुलपालिः। स्त्री। कुलवत्याम्॥

कुलपालिका। स्त्री। कुलस्त्रियाम्। साध्व्याम्। अभिचारवारणेन कृतकुलरक्षायाम्॥ यथा। एकत्र कौलव्रतभङ्गशङ्का विदग्धता भङ्गभयं परत्र। इत्थाकुलानां कुलपालिकानां गतागतैरेव गताश्रिया मेति॥ अपिच। सुखयतितरां न रचति परिचयलेशं गताङ्गने च श्रीः। कुलकामिनीव नोज्झति वाग्देवी जन्मजन्मापीति॥ कुलम् पालयति। पालरक्षणे। कर्मण्यण्। स्वा॰ कन्॥

कुलम्भरः। पुं। कुलम्भले। सन्धिचौरे॥

कुलवान्। त्रि। कुलीने॥ कुलमस्यास्य। यवादित्वात्॰ पक्षे मतुप्॥

कुलवर्णा। स्त्री। रक्तत्रिवृति॥

कुलवारः। पुं। भौमशुक्रयोः॥ यथा। रवि श्चन्द्रो गुरुः सौरि-श्चत्वारश्चाकुला इमे। भौमशुक्रौ कुलाख्यौहि बुधवारः कुलाकुलः॥ इति तन्त्रशास्त्रम्॥

कुलविप्रः। पुं। कुलपुरोहिते॥

कुलश्रेष्ठी। त्रि। शिल्पिकुलप्रधाने। कुलिके॥ कुलश्रेष्ठत्वमस्त्यस्य। इनिः॥

कुलसंज्ञक: । पुं । तिथिवारनक्षत्र विशेषे ॥ यथा । अर्काष्टे ऽवेदतिथिषु । कुजगुरुकयो: । पूर्वाश्वीन्द्रमघेष्वर्काद्दर्नदीशेन्दुचित्रासु ॥

कुलसत्तम: । त्रि । कुलश्रेष्ठिनि ॥

कुलसम्भव: । पुं । बीजे ॥ कुलेसम्भवति । अच् ॥ कुलेसम्भवोऽस्य वा ॥ यद्वा । सम्भवत्यस्मात् । अपादाने । कुलस्य सम्भव: ॥

कुलसौरभम् । न । मरुवकवृक्षे ॥

कुलस्त्री । स्त्री । कुलपालिकायाम् । नान्यगामिन्यां कुलरक्षिकायाम् ॥ कुलस्य पालिका स्त्री । शा० ॥

कुलहण्डक: । पुं । आवर्ते । आवर्ते ॥

कुलाकुलतिथि: । पुं स्त्री । द्वितीयाषष्ठी दशमीषु ॥ यथा । द्वितीयादशमीषष्ठी कुलाकुल मुदाहृतमिति तन्त्रशास्त्रम् ॥

कुलाकुलनक्षत्रम् । न । आर्द्रामूलाऽभिजिच्छतभिषासु ॥ यथा । वारुणाद्रीभिजिन्मूलं कुलाकुल मुदाहृतमिति ॥

कुलाकुलवार: । पुं । बुधवारे ॥ यथा । भौमशुक्रौकुलाख्यौ हि बुधवार: कुलाकुल इति ॥

कुलाकुलसंज्ञक: । त्रि । तिथिवारनक्षत्रविशेषे ॥ यथा । द्वितीयाषष्ठीदशमीषु ॥ बुधे ॥ मूलाशतभिषाद्रीभिजित्सु ॥

कुलाचल: । पुं । कुलपर्वते ॥

कुलाचार: । पुं । कुलधर्मे ॥ धर्मकामार्थमोक्षप्रदे आगमोक्ताचारविशेषे ॥ यथा । जीव: प्रकृतितत्त्वञ्च दिक्कालाकाशमेवच । क्षित्यप्तेजोवायवश्च कुलमित्यभिधीयते ॥ ब्रह्मबुद्ध्यानिर्विकल्पमेतेष्वाचरणञ्च यत् । कुलाचार: सएवाद्येधर्मकामार्थमोक्षद इति ॥ त्रि । कुलाचारविशिष्टे ॥ कुलेआचार: ॥ कुलाचारोस्ति अस्य । अर्श आद्यच् ॥

कुलाचार्य्य: । पुं । कुलाचाराभिज्ञे ॥

कुलाट: । पुं । क्षुद्रमत्स्यप्रभेदे ॥

कुलाद्रि: । पुं । कुलाचले । कुलपर्वते ॥

कुलाधारक: । पुं । पुत्रे ॥ कुलस्य आसमन्तात् धारक: ॥

कुलाय: । पुं । यत्नविशेषे ॥ स्थानमात्रे ॥ नीडे । पक्षिनिलये । खोसला कोश इति भाषा ॥ न । शरीरे ॥ कुलं पक्षिसङ्घातोऽयतेऽत्र । अय गतौ । हलश्चेतिघञ् ॥ यद्वा । कौ लायो गति रस्मात् ॥

कुलायस्थ: । पुं । पक्षिणि ॥ कुलाये तिष्ठति ष्ठा० । सुपिस्थ इतिक: ॥

कुलायिका । स्त्री । पक्षिशालायाम् ॥

कुलालः । पुं । कुक्कुभेखगे ॥ घूकपक्षिणि ॥ कुम्हार इति भाषा प्रसिद्धे कुम्भकारे ॥ अस्योत्पत्तिर्यथा । मालाकारात् कर्मकार्य्यां कुम्भकारोऽभ्यजायत इति प० सं० ॥ पट्टिकाराद्धतैलिक्यां कुम्भकारोबभूवह । इति प० प० ॥ कुंभूमिं लाडयति । लडविलासे । कर्मण्यण् । डलयोरैक्यम् । कुलमालयति वा । आतोनुपेतिकः । कुलमलति वा । अल० । अण् ॥ कुलंलुनाति वा । लूञ् छेदने । डः ॥ कोलति वा । कुल संस्थाने । तमिविशिविडिम्रणिकुलिकपिपलिपञ्चिभ्यः कालन् । इति कालन प्रत्ययः ॥

कुलाली । स्त्री । नीलोपलभेदे । अञ्जनाकरे । चक्षुष्यायाम् । कुलत्थाकाराञ्जनप्रस्तरविशेषे ॥ अरण्यकुलत्थिकायाम् ॥ कुलालभार्य्यायाम् ॥ कुलमलति । अल० अण् । ङीप् ॥

कुलाहः । पुं । ईषत् पीतवर्णे कृष्णजानौ घोटके ॥ इतिहेमचन्द्रः ॥

कुलाहकः । पुं । कृकलासे ॥ राङ्गाकुले खाडा इतिगौडभाषाप्रसिद्धे वृक्षविशेषे ॥

कुलाहलः । पुं । कोकसीमा इतिगौडभाषाप्रसिद्धे क्षुद्रवृक्षविशेषे । भूकदम्बे ॥

कुलिः । पुं । हस्ते । भुजादले ॥ स्त्री । कण्टकार्य्याम् ॥

कुलिकः । पुं । अष्टमहानागान्तर्गतनागविशेषे ॥ काल्याकडा इतिगौडप्रसिद्धे द्रुमविशेषे ॥ वेलाविशेषे ॥ यथा । शक्रार्कद्विग्वसुरसाब्ध्यश्विन्यः कुलिकारवेः । रात्रौनिरेकास्तिथ्यंशाः शनैश्चान्योपिनिन्दितइति ॥ त्रि । कुलश्रेष्ठे । कुलसत्तमे । शिल्पिकुलप्रधाने ॥ कुलमधीतमस्येनास्ति । अतइनिठनाविति ठन् ॥

कुलिङ्गः । पुं । फिङ्गा इतिगौडभाषाप्रसिद्धे पक्षिविशेषे । धूम्याटे । फिङ्गके ॥ भूप्रस्थासन्नगमनचारिणि धान्यजीविनि खगे । चटके । गौरय्याचिडी इतिभाषा ॥ कुलिङ्गः शीतलः स्निग्धः स्वादुः शुक्रकफप्रदः । सन्निपातहरोवेश्म चटकस्त्वतिशुक्रलः ॥ त्रि । कुत्सितलिङ्गधारिणि ॥ कुत्सितंलिङ्गमस्य ॥

कुलिङ्गकः । पुं । कलविङ्के । चटके ॥

कुलिङ्गाक्षी । स्त्री । पेटारी इतिगौडभाषाप्रसिद्धे पेटिकावृक्षे ॥

कुलिङ्गी । स्त्री । कर्कटशृङ्गीवृक्षे ॥

कुली । त्रि । कुलवति ॥ कुलमस्यास्य । बलादित्वात् पक्षे इनिः ॥

कुलिरः । पुं । कुलीरे । कर्कटे ॥

कुलिशः । पुं । न । दम्भोलौ । वज्रे ॥ कुलौ हस्ते शेते अन्येभ्योपीतिडः ॥ कुलिमः पर्वताम् श्यति वा । शोत० । आतोमुपेतिकः ॥ कुत्सितम् ईष द्वा लिशति । लिशअल्पीभावे । इगुपधेतिकः ॥ अस्थिसंहारवृक्षे ॥ पुं । मत्स्यविशेषे । कण्टकाष्ठोले ॥

कुलिशद्रुमः । पुं । स्नुहीवृक्षे । थूहर इतिभाषा ॥

कुलिशनायकः । पुं । शृङ्गारबन्धविशेषे ॥ यथा । स्त्रीपादद्वय माकृष्य विमुमुचितलिङ्गकः । योनिञ्च पीडयेत् कामी बन्धः कुलिशनायकइति ॥

कुलिशपाणिः । पुं । इन्द्रे ॥

कुलिशाङ्कुशा । स्त्री । बौद्धानांविद्यादेवीविशेषे ॥

कुलिशासनः । पुं । शाक्यमुनौ ॥

कुली । स्त्री । कण्टकार्याम् ॥ पत्न्याः ज्येष्ठभगिन्याम् ॥ गौ० ङीष् ॥

कुलीनः । पुं । आजानेये । अश्वभेदे ॥ त्रि । कुलाचारस्थिते । कौले ॥ वीरे ॥ कुलोद्भवे । महाकुले । आर्ये ॥ कुलस्यापत्यम् । कुलात्खः ॥ उत्कर्षविशेषविशिष्टवंशजकुलीनइति गौडाः ॥ सच्चवङ्गजकुलाचार्यग्रन्थे कुलदीपिकायामाधुनिककुलीनत्वे न वर्णितो द्रष्टव्यः ॥

कुलीनकः । पुं । वनमुद्गे ॥

कुलीनसम् । न० । जले ॥ इतिहैमः ॥

कुलीरः । पुं । कांकडा इतिप्रसिद्धे जलचरे । कर्कटे ॥ कर्कटराशौ ॥ कोलति । कुलसं० । गम्भीरादयश्चेति ईरन् ॥ कौलीयते । लीङ् श्लेषणे । बा० रक् ॥ यद्वा । कुलमश्वाति । असइतिः । तमीरयति । कर्मण्यण् । जनकभक्षकत्वात् ॥ जयमंगलीः । सं० क्विप् । कुत्सितालीः । तां राति वा ॥ कुरीरशब्दस्य कपिलकादित्वाल्लत्वेपि कुलीरः ॥

कुलीरविषाणी । स्त्री । शृङ्ग्याम् ॥

कुलीरशृङ्गी । स्त्री । कर्कटशृङ्गीवृक्षे ॥

कुलीराद्य । पुं । कर्कटशिशौ । स्यगवौ ॥ इतिचिकाण्डशेषः ॥

कुलुकम् । न । जिह्वामले ॥ इतिहेमचन्द्रः ॥

कुलुक्कगुञ्जा । स्त्री । उल्कायाम् ॥

कुलेशः । पुं । सदाशिवे ॥ कुलपतौ ॥

कुलेशानी । स्त्री । उमायाम् । पार्वत्याम् ॥

कुलेश्वरः । पुं । सदाशिवे ॥ कुलस्य धर्मविशेषस्य ईश्वरः ॥ गोत्रपतौ ॥

कुलेश्वरी । स्त्री । पार्वत्याम् । शिवायाम् ॥ कुलस्य ईश्वरी ॥

कुलोत्कटः । पुं । कुलीनाश्वे ॥
कुलोन्नतः । त्रि । कुलाद्धुन्नतियमिते ॥
कुलोद्भवः । त्रि । कुलीने ॥ कुलेउद्भवोयस्य ॥
कुल्फः । पुं । रोगे ॥ शरीरावयवे । गुल्फे ॥ कलते । कलशब्दसंस्त्यानयोः । कलिगलिभ्यामफगस्योच्च ॥
कुल्मलम् । न । पापे ॥ कुष्णाति । कुषनिष्कर्षे । कुटिकुषिभ्यांक्मलन् कुषेर्लश्च ॥
कुल्माषः । पुं । यावके ॥ अर्द्धस्विन्नधान्ये । घुंघुंनी कौंअरी इतिभाषा ॥ अर्द्धस्विन्ना स्तु गोधूमा अन्येपि च णकादयः । कुल्माष इतिकथ्यन्ते शब्दशास्त्रेषुपण्डितैः ॥ कुल्माषा गुरवो रूक्षा वातला भिन्नवर्चसः ॥ रुग्भेदे ॥ चणकांशोः पारिपार्श्विके ॥ कीदृश्टमाषे ॥ कुत्सितमाषे ॥ शूकशून्येयवादौ ॥ न । काञ्जिके ॥ कुलंमस्यति । मसीपरिणामे । कर्मण्यण् । पृ० ॥ यद्वा । कोलति । कुल० । क्विप् । कुल् अर्द्धस्विन्नोमाषोस्मिन् ॥ कुल् बन्धुर्माषोस्यवा ॥
कुल्माषाभिषुतम् । न । काञ्जिके ॥ कुल्माषैर्यवादिभिरर्द्धस्विन्नैरभिषूयतेस्म । षुञः क्तः । षत्वम् ॥
कुल्मासः । पुं । कुल्माषार्थेषु ॥

कुल्यम् । न । अस्थि । कीकसे ॥ अष्टद्रोण्याम् ॥ शूर्पे ॥ आमिषे ॥ मान्ये ॥ त्रि । कुलजे । कुलोद्भवे ॥ कुलहिते ॥ कुलस्यापत्यम् । अपूर्वपदादन्यतरस्यामितियत् ॥ कुलेभवम् साधुवा । दिगादिभ्योयत् तत्र साधुरिति वा ॥ यद्वा । कोलति कुल्यते वा । कुलसं० । अघ्न्यादयः ॥
कुल्या । स्त्री । सरिन्मात्रे ॥ कूल बर्हा इतिभाषाप्रसिद्धायां पयःप्रणाल्याम् । सारण्यां ॥ कुल्याऽल्पाकृत्रिमासरित् ॥ जीवन्तिकौषधौ ॥ कुलस्त्रियाम् ॥ अष्टद्रोणमितेमाने ॥ कुले प्राणिगणे कुटुम्बेदाम्पत्ये वा साधुः । तत्रसाधुरितियत् ॥
कुवम् । न । उत्पले । जलजपुष्पमात्रे ॥ कौवलते । वलसंवरणे । अन्येभ्योपीतिडः ॥ यद्वा । कुवते । कूङ्शब्दे कुटादिः । पचाद्यच् ॥
कुवकालुका । स्त्री । घोलीशाके ॥
कुवङ्गम् । न । सीसके ॥
कुवज्रकम् । न । वैक्रान्तमणौ ॥
कुवलम् । न । उत्पले ॥ मुक्ताफले ॥ बदरीफले ॥ चितेः संवलनाज्ज्वाले ॥ कौवलते । वल० । पचाद्यच् ॥ कुवल्याःफलम् । अण्लुकौ । लुब्दहितलुकीतिङीषोलुक् ॥

कुवलयम् । नं । उत्पले । चन्द्रविकाशिनि । कमोदिनी केँ श्री इतिभाषा ॥ श्वेतं कुवलयम्प्रोक्तं कुमुदं कैरवन्तथा ॥ नीलोत्पले ॥ इतिराजनिर्घण्टः ॥ यथा । कुवलयदलनीलंवर्वरीस्निग्धकेशमिति ॥ कमलकुमुदादिसामान्ये जलज पुष्पे ॥ कोर्वलयमिव शोभाकरत्वात् ॥ भूमण्डले । भूमिवलये ॥

कुवलयापीडः । पुं । कंसस्य हस्तिरूपे दैत्यविशेषे ॥

कुवलयिनी । स्त्री । उत्पलिन्याम् ॥

कुवलाश्वः । पुं । धुन्धुमारनृपे ॥

कुवली । स्त्री । कोलिवृक्षे ॥ कौवलति । वल प्राणने । पचाद्यच् । गौ० ङीष् ॥

कुवलेशयः । पुं । विष्णौ ॥ कुं भूमिं वलते संवृणोतीति कुवलं तोयम् । वल संवरणे । पचाद्यच् । कुवले जले शेते । शीङो ऽधिकरणेशेतेरित्यच् । शयवासेष्वलुक् ॥

कुवादः । पुं । कुत्सितवादे ॥ त्रि । कुत्सितवादिनि । परदोषकथनशीले ॥ कुत्सितो वादो ऽस्य । अर० अच् ॥

कुवित् । अ । भूर्य्यर्थे ॥ प्रशंसायाम् ॥

कुविन्दः । पुं । शूद्रागर्भे विश्वकर्मणो जाते । तन्तुवाये ॥ कुम् भुवं विन्दति कुत्सितं वा विन्दति । विद्लृ लाभे । गवादिषु विन्देः संज्ञायामिति शः ॥ यद्वा । कुप्यति कुप क्रोधे । कुपेर्वा वश्चेति किन्दच् ॥

कुवृत्तिकृत् । पुं । काँटाकरञ्ज इतिगौडभाषाप्रसिद्धे करञ्जभेदे । पूतिके ॥ त्रि । कुवृत्तिकर्त्तरि ॥

कुवेणिः । स्त्री । मत्स्याधान्याम् ॥

कुवेणी । स्त्री । खालुइ इतिगौडभाषाप्रसिद्धे मत्स्यस्थापनपात्रे । मत्स्याधान्याम् ॥ कुत्सितं वेणन्ते मत्स्या अस्याम् । वेणृ गतौ । हलश्चेति घञ् । गौरादित्वान् ङीष् ॥

कुवेलम् । न । कुवलये ॥ इतिहेमचन्द्रः ॥

कुशः । पुं । रामसुते ॥ कुशोन्मृष्टः कुशः । वाल्मीकिना कुशे सम्मृष्टो गर्भक्लेदो ऽस्य ॥ योक्त्रे ॥ घृतसमुद्रेणावृते द्वीपविशेषे ॥ कुशोभूत् कारणं कौशेम्वयम्भुविधियं च्छति । अयमेवास्य कुशसंज्ञायां कारणम् ॥ न । जले ॥ पुं । न । कुश इतिभाषा प्रसिद्धतृणे । दर्भे ॥ अस्योत्पत्तिर्यथा । बर्हिष्मतीनामपुरी सर्व्वसम्पत्समन्विता । न्यपतन् यत्र रोमाणि यज्ञस्याङ्गं विधुन्वतः ॥ कुशकाशा त एवासन् शश्वद्धरितवर्चसः ।

ऋषयो यैः पराभाव्य यत्नमाग् य
ज्ञ मीजिरे॥ इतिश्रीविष्णुभागवत
म्॥ अस्यगुणा यथा। ह्रस्वदीर्घपथ
भेदात् कुशस्तु द्विविधो मतः। दर्भ
द्वयं त्रिदोषघ्नं मधुरंतुवरं हिमम्।
मूत्रकृच्छ्राश्मरीतृष्णावस्तिरुक्प्रद
रास्रजिदिति॥ अथ कुशधारणवि
धिस्तत्प्रतिनिषिद्ध। पूजाकाले सर्व
दैवकुशहस्तोभवेच्छुचिः। तर्जन्या
रजतंधार्यंस्वर्णं धार्यमनामया॥ कु
शकार्यकरं यस्मानतत्त्वन्याः कुशाः
कुशाः। कुशेन रहितापूजा विफला
कथिता मया॥ नान्यस्य रजतंस्व
र्णंधार्यं हि निजमङ्गले। इतिवरदा
तन्त्रे१ पटलः॥ नस्पृशेत् तिलदर्भौं
स्तु सधवातुकथञ्चनेति ब्राह्मणसर्व
स्वम्॥ त्रि। पापिष्ठे॥ मत्ते॥ कौ
शेते तिष्ठति। अन्येभ्योपीतिडः॥
कुश्यतिवा। कुशश्लेषणे। इगुपधेति
कः॥ कुपापंश्यति वा। शोऽनन्त
सुपीति योगविभागात्कः

कुशध्वजः। पुं। राजोजनकस्यानुजे॥

कुशपः। पुं। पानपात्रे॥

कुशपुष्पम्। न। ग्रन्थिपर्णे। गाँठिया
ला इतिभाषा॥

कुशलम्। न। कल्याणे। क्षेमे॥ पुण्ये
। सुकृते॥ पर्याप्तौ॥ त्रि। शि

क्षिते॥ नहि कुशलो दृष्या कालं यापय
यति॥ मोक्षे॥ कुतसितम् अशुभ
रूपंशलते ऽनेन। शलचलने। प-
चाद्यच्॥ कुशान् लातिवा। लादा
ने। आतइति कः॥ यद्वा। कौ पृथि
व्यां शलति। शलचलने। अच्। शि
अर्थेसंचरणा वा। कौशलति चालय
ति राजकार्याणि॥ यद्वा। कु पापेष
दर्थयोः। पापात् शलति बुद्धिवैभ
वात्॥ यद्वा। कुशयति। कुशसंश्लेष
णे। सौत्रोधातुर्वा। इषा० कलः॥
मत्वर्थे सिध्मादित्वात् लज्वा॥

कुशलप्रश्नः। पुं। कौशल्याम्। कुशल
जिज्ञासायाम्॥ कुशलस्यप्रश्नः॥

कुशलवौ। पुं। द्विवचनान्तः। एकयो
क्त्या रामपुत्रयोः॥

कुशलानुशिष्टः। त्रि। निपुणाचार्यशि
क्षिते॥ कुशलेन अनुशिष्टः॥

कुशली। त्रि। कुशलयुक्ते॥ इनिः॥

कुशली। स्त्री। अश्मन्तकवृक्षे॥ क्षुद्रा
म्लिकायाम्॥

कुशस्थलम्। न। कान्यकुब्जदेशे॥

कुशस्थली। स्त्री। द्वारकायाम्॥

कुशा। स्त्री। रज्ज्वाम्। वल्गायाम्॥
मधुकर्कट्याम्॥ छन्दोगास्तोत्रोयाग
गणनार्थंनौदुम्बरान् शङ्कून् कुशा
इति व्यवहरन्ति॥

कुशाकरः । पुं । वह्नौ ॥

कुशाग्रीयः । त्रि । कुशाग्रसदृशे ॥ कुशाग्रमिव । कुशाग्राच्छः ॥

कुशाग्रीयमतिः । त्रि । तीक्ष्णबुद्धौ । प्रत्युत्पन्नमतौ । सूक्ष्मदर्शिनि ॥ स्त्री । सूक्ष्मायांबुद्धौ ॥ कुशाग्रीयामतिर्यस्य ॥ कर्मधारयेोऽन्यच ॥

कुशाग्रीया । स्त्री । तीक्ष्णायां बुद्धौ ॥

कुशारणिः । पुं । दुर्वासोमुनौ ॥

कुशाश्मलि. । पुं । रोहितकवृक्षे ॥

कुशावती । स्त्री । रामात्मजस्य कुशस्य राजधान्याम् ॥ अस्त्यर्थेमतुप् ॥

कुशिंशपा । स्त्री । कपिलशिंशपायाम् ॥

कुशिकः । पुं । मुनिविशेषे । अमदग्नेः पितरि ॥ फाले ॥ सर्जवृक्षे ॥ बिभीतकवृ० ॥ अश्वकर्णवृ० ॥ तैलशेषे ॥ त्रि । केकरे ॥ विश्वामित्रस्य पितरि ॥

कुशितः । त्रि । जलमिश्रिते ॥

कुशी । पुं । वाल्मीकिमुनौ ॥

कुशी । स्त्री । फाले । लौहविकारे ॥ कुशशब्दाद्ये विकारे ऽयोमानपदेतिङीष् ॥

कुशीदम् । न । रक्तचन्दने ॥ दृद्धिजीविकायाम् । वृद्ध्यै धनप्रयोगे ॥

कुशीलवः । पुं । वाल्मीकौ । प्राचेतसे ॥ कीर्त्तिसञ्चारकनटे । चारणे । याचके ॥ कुत्सितं शीलमस्य । कुगतीतिसमासः । अस्त्यादिदृश्य



तेइतिवः ॥ कुशीलं वाति वा । वागस्त्यादौ । कः ॥ नर्त्तनहत्ते ॥

कुशोलवौ । पुं । एकवेोऽश्वारामात्मजयोः ॥

कुशीवशः । पुं वाल्मीकिमुनौ ॥

कुशूलः । पुं । तुषाग्नौ ॥ अन्नकोष्ठके । इष्टकादिनिर्मिते धान्यस्थापनार्थस्थाने । कोष्ठागारे ॥ इतित्रिकाण्डशेषः ॥

कुशूलधान्यकः । पुं । ब्राह्मणविशेषे । नित्यनैमित्तिकधर्मकृत्यपोष्यवर्गसहितस्य गृहिणेो यावता धान्यादिधनेन वर्षत्रयं समधिकंवा निर्वाहो भवति ता वद्धने विप्रे । कुशूलं कुशूलपरिमितं धान्यं यस्य सः ॥

कुशेशयः । पुं । कर्णिकारवृक्षे ॥ न । पद्मे ॥ सारसपक्षिणि ॥ कुशेजलेशेते । अधिकरणेशेतेरित्यच् । शयवासेष्वादिनाऽलुक् ॥

कुशेशयकरः । पुं । रवौ ॥ त्रि । अन्यच ॥ कुशेशयंकरे यस्य ॥

कुषाकुः । पुं । वानरे ॥ वह्नौ ॥ सूर्ये ॥ त्रि । परोत्तापिनि ॥ कुष्णाति । कुषनिष्कर्षे । कठि कुषिभ्याङ्काकुः ॥

कुषितः । त्रि । जलमिश्रिते ॥

कुषीदम् । न । कुसीदे ॥

कुष्ठः । पुं । न । पुष्करभेषजे । कुष्ठ

इति गौ०भाषा ॥ पारिभाव्ये ॥ कुष्ठमुष्णं कटु स्वादु शुक्रलं तिक्तकं लघु । हन्ति वातास्रवीसर्पकासकुष्ठमरुत्कफान् ॥ कोढ इति प्रसिद्धे पापरोगे । श्विचे ॥ म्रियते यदि कुष्ठेन पुनर्जातस्य तद्भवेत् । नातो निन्द्यतरो रोगो यथा कुष्ठं प्रकीर्त्तितम् ॥ विषभेदे ॥ कुष्णाति रोगम् । कुष० । हनिकुषिनीरमिकाशिभ्यः क्थन् ॥

कुष्ठकेतुः । पुं । भूम्याहुल्ये । मार्कण्डिकायाम् । भुमिखखसा इति भाषा ॥

कुष्ठगन्धि । नं । एलवालुके ॥

कुष्ठगन्धिनी । स्त्री । अश्वगन्धायाम् ॥

कुष्ठघ्नः । पुं । हिलावल्याम् ॥

कुष्ठघ्नी । स्त्री । काकोदुम्बरिकायाम् ॥ बाकुच्याम् ॥

कुष्ठनाशनः । पुं । वाराहीकन्दे ॥ गौरसर्षपे ॥ क्षीरीशवृक्षे ॥

कुष्ठनाशिनी । स्त्री । बाकुच्याम् । सोमराज्याम् ॥

कुष्ठलम् । न । कुत्सितस्थले ॥

कुष्ठसूदनः । पुं । आरग्वधे ॥

कुष्ठहन्ता । पुं । हस्तिकन्दे ॥

कुष्ठहन्त्री । स्त्री । बाकुच्याम् ॥

कुष्ठहृत् । पुं । खदिरे ॥

कुष्ठारिः । पुं । विट्खदिरे ॥ पटोले ॥ आदित्यपत्रे ॥ खदिरे ॥ गन्धके ॥

कुष्ठितः । त्रि । कुष्ठरोगवति ॥ कुष्ठं सञ्जातमस्य । ता० इतच् ॥

कुष्ठी । त्रि । कुष्ठरोगयुक्ते ॥ वल्लोपमापेति इनिः ॥

कुष्मलम् । न । छेदने ॥ छादने ॥ विकसिते ॥ कुष्णाति । कुष० । कुटिकुषिभ्याङ्क्मलन् ॥

कुष्माण्डः । पुं । कुंहडा इतिप्रसिद्धे फलशाके । कर्कारौ ॥ कुष्माण्डं बृंहणं वृष्यं गुरु पित्तास्रवातनुत् । बालं पित्तापहं शीतं मध्यमं कफकारकम् ॥ वृद्धं नातिहिमं स्वादु सक्षारं दीपनं लघु । वस्तिशुद्धिकरं चेतोरोगहृत् सर्वदोषजित् ॥ अस्य प्रकाराः । यथा । घृते तप्ते विनिःक्षिप्य खण्डान् कुष्माण्डसंभवान् । वार्त्ताकविधिना कुर्यात् प्रलेहतलनादिकम् ॥ सुस्वादुसुन्दरम् ॥ यथा । वेसवारान्वितं वा घृते तलनपूर्वकम् । कुष्माण्डकं फलं सिद्धं विदुः सुस्वादुसुन्दरम् ॥ गुलिका । घृतेन गुडयुक्तेन गोलकुष्माण्डखण्डकान् । रन्धितान् क्षीरमरिचै रिमान् सुगुलिकां विदुः ॥ * ॥ खण्डकुष्माण्डकम् । चतुरस्रायतान् स्थूलान् स्विन्नान् क्षीरेण चोदितान् । सुपाच्यान ख

गृह्यते निर्विशङ्कैर्वत्समर्थैः चतुर्गुणं चेतिवाकारोऽनाख्यायाम् तेनद्वैगुण्यादिलाभः इति ॥ कुसीदे विशेषो गारुडे २१५ अध्याये उक्तः सयथा। कुसीदकृषिवाणिज्यं प्रकुर्वीता स्वयंकृतम्। आपत्काले स्वयं कुर्वन् नैनसा युज्यते द्विजः॥ बहवोवर्त्तनोपाया ऋषिभिः परिकीर्त्तिताः। सर्वेषामपि चैवैषां कुसीदमधिकं विदुः॥ अनावृष्ट्याराजभयान्मूसिकाद्यैरुपद्रवैः। कृष्यादिके भवेद्बाधा साकुसीदे न विद्यते॥ शुक्लपक्षे यथा कृष्णे रजन्यांदिवसेपि वा। उष्णेवर्षतिशीते वा वर्द्धनं न निवर्त्तते॥ देशांगतानां या वृद्धिर्नानापण्योपजीविनाम्। कुसीदंसर्वतः सम्यक् संस्थितस्यैवजायते॥ लब्धलाभः पितॄन् देवान् ब्राह्मणांश्चैव पूजयेत्। तेतृप्तास्तस्य तद्दोषं शमयन्ति न संशयः॥ वणिक्कुसीदेदद्यात्सुवर्णं काञ्चनादिकम्। कृषीवलोऽन्नपानानि यानशय्यासनानिच॥ पण्येभ्योविंशतिंदद्यात् पशुस्वर्णादिकंशतम्। पादेनायस्यपारक्यंकुर्यात् सञ्चय मात्मवान्॥ अर्द्धेनचात्मभरणं नित्यनैमित्तिकान्वितम्। पादञ्च प्राप्यमानस्य मूलभूतं विवर्द्धयेत॥ सिद्धान्तौ भृतिः सेवा गोरक्ष्यंविपणिः कृषिः। वृत्तिर्भैक्ष्यं कुसीदञ्च दशजीवनहेतवः इति॥ त्रि। कुसीदिके॥ कुस्यते। कुससंश्लेषणे। कुसेरुम्भोमेदेतारः सीदः। इदसूचेतृतीयोऽन्त्यस्यादिदीर्घादिश्चतन्त्रेणोपात्तः। इषाकव्यमीतिसूत्रे हस्व एवेतिदत्तिकारहरदत्तादिग्रन्थो पष्ठश्चेननिर्णीतम्॥

कुसीदिकः। त्रि। वार्द्धुषिके। इत्याजीवे॥ कुसीदंवृद्धिस्तदर्थं द्रव्यं कुसीदम्। तत् प्रयच्छति। कुसीददशैकादशात् ष्ठन् ष्ठचाविति ष्ठन्॥ स्त्रियां। षित्त्वात् ङीषि कुसीदिकी॥

कुसुमम्। न। स्त्रीरजसि॥ नेत्ररोगविशेषे॥ फले॥ पुष्पे॥ मासामासे पञ्चमाषिकस्य। ऽ॥ षष्ठप्रभेदे॥ कुस्यति कुस०। कुसेरुम्भोमेदेता इत्युमः॥ कविकुसुमलताध्यायो यथा। फलकुसुमसमृद्धिं वनस्पितीनां विलोक्य विज्ञेयम्। सुलभत्वं द्रव्याणां निष्पत्तिः सर्वसस्यानाम्॥ केनकस्यवृद्धिर्भवतदाह। शालेन कलमशालीरक्ता शोकेनरक्ताशालिः॥ पाण्डूकः क्षीरिकया नीवाशोकेनशूकरकः॥ न्यग्रोधेनयव

श्च स्निग्धकवृक्षाच्चघटितो भवति । अश्वत्थेन यवा निष्पत्तिः सर्वशस्यानाम् ॥ जम्बूभिस्तिलमाषाः शिरीषवृक्षाच्च कङ्गुनिष्पत्तिः । गोधूमाश्च मधूकैर्यववृद्धिः सप्तपर्णेन ॥ अतिमुक्तककुन्दाभ्यां कर्पासं सर्षपान् वदेदसनैः । बदरीभिश्च कुलत्थांश्चिरविल्वेनादिशेन्मुद्गान् ॥ अतसी वेतसपुष्पैः पलाशकुसुमैश्च कोद्रवा ज्ञेयाः । तिलकेन शङ्खमौक्तिकरजतान्यथ चेङ्गुदेन शणाः ॥ करिणश्च हस्तिकर्णैरादेश्या वाजिनोऽश्वकर्णेन । गावश्च पाटलाभिः कदलीभिरजाविकं भवति ॥ चम्पककुसुमैः कनकं विद्रुमसम्पच्च बन्धुजीवेन । कुरवकवृक्षाद्वज्रं वैदूर्यं नन्दिकावर्त्तैः ॥ विन्द्याच्च सिन्धुवारेण मौक्तिकं वासकाः कुसुम्भेन । रक्तोत्पलेन राजा मन्त्री नीलोत्पलेनोक्तः ॥ श्रेष्ठी सुवर्णपुष्पात् पद्मैर्विप्राः पुरोहिताः कुमुदैः । सौगन्धिकेन बलपतिरर्केण हिरण्यपरिवृद्धिः ॥ आम्रैः क्षेमं भल्लातकैर्भयं पीलुभिस्तथारोग्यम् । खदिरशमीभ्यां दुर्भिक्षमर्जुनैः शोभना वृष्टिः ॥ पिचुमन्दनागकुसुमैः सुभिक्षमथ मारुतः कपित्थेन । निचुलेनावृष्टिभयं व्याधिभयं भवति कुटजेन ॥ दूर्वाकुशकुसुमाभ्यामिक्षुर्वह्निश्च कोविदारेण । श्यामालताभिवृद्ध्या बन्धक्यो वृद्धिमायान्ति ॥ यस्मिन् काले स्निग्धनिश्छिद्रपत्राः संदृश्यन्ते वृक्षगुल्मा लताश्च । तस्मिन् वृष्टिः शोभना सम्प्रदिष्टा रूक्षैश्छिद्रैरल्पमम्भः प्रदिष्टम् ॥ इति वाराह्यां २७ अध्यायः ॥

कुसुमकार्म्मुकः । पुं । कामदेवे ॥

कुसुमपुरम् । । पटना इति प्रसिद्धपुरे । पाटलिपुत्रे ॥

कुसुममध्यम् । न । चालिताला इति गौडभाषा प्रसिद्धे वृक्षविशेषे । भव्ये ॥

कुसुमशरः । पुं । कामदेवे ॥

कुसुमाकरः । पुं । वसन्तर्त्तौ ॥

कुसुमाक्षः । त्रि । पुष्पयुक्तनेत्रवति ॥

कुसुमागमः । पुं । वसन्ते ॥

कुसुमाञ्जनम् । न । पुष्पाकाररीतिमलसम्भवेऽञ्जने । पौष्पके । रीतिपुष्पे ॥

कुसुमाञ्जलिः । पुं । पुष्पाञ्जलौ ॥ उदयनाचार्यकृतग्रन्थविशेषे ॥

कुसुमात्मकम् । न । कुङ्कुमे । कुसुये ॥

कुसुमाधिपः । पुं ।
कुसुमाधिराट् । पुं । } चम्पकवृक्षे । हेमपुष्पके ॥

कुसुमायुधः । पुं । कामदेवे ॥

कुसुमास्त्रः । पुं । चौरे । तस्करे ॥

कुसुमासवम् । न । मधुनि ॥

कुसुमेषुः । पुं । पुष्पवाणे । कामदेवे ॥ कुसुमानि इषवोयस्य ॥

कुसुमोच्चयः । पुं । गुच्छे । स्तवके ॥

कुसुम्भः । पुं । कमण्डलौ ॥ महाराजचूतवृक्षे ॥ न । शातकुम्भे । स्वर्णे ॥ कसूंभा इति प्रसिद्धे महारजनपुष्पे । कमलोत्तरे । वह्निशिखे ॥ अस्यगुणा यथा । कुसुम्भं वातलं कृच्छ्ररक्तपित्तकफापहमिति ॥ कुषुम्भत्यनेन वा ॥ कुषुभक्षेपे । कण्ड्वादिः । पचाद्यच् । पृषोदरादित्वात्सः ॥ धृ० ॥ कुस्यतिवा । कुस० । कुसेरुम्भोमेदेता इति उम्भप्रत्ययः । वा हुलकात्सगुणः ॥

कुसुम्भतैलम् । न । कुसुम्भस्नेहे ॥ स्नेहे तैलञ्च ॥ कुसुम्भतैलमत्युष्णं स्याद्गुरु विदाहि च । चक्षुष्यामहितं बल्यं रक्तपित्तकफप्रदम् ॥

कुसुम्भवीजम् । न । वरटायाम् । वरडकरड इतिच भाभाषा ॥

कुसूः । पुं । किञ्चुलुके । गण्डूपदे ॥

कुसृतिः । स्त्री । शाठ्ये ॥ इन्द्रजाले ॥ कुत्सिता सृतिः । सृमतौ । क्तिन् । कुगतीति समासः ॥

कुस्तुभः । पुं । समुद्रे ॥ कु ईषत् कुस्तुभं वा । स्तुभ्नोति । स्तुम्भुःरोधः । मू० कः । अपि नलोपोनस्यात् ॥ विष्णौ ॥

कुस्तुम्बरी । स्त्री । धन्याके ॥ इत्यमरटीकायांभरतः ॥

कुस्तुम्बुरु । न । धन्याके ॥ कुत्सितं तुम्बति । तुबिअर्दने । बाहुलकात् कुस्तुम्बुरूणिजातिरितिनिर्देशाद्वा उरुप्रत्ययःसुटच ॥

कुह । अ । कुत्रार्थे ॥ कुच इच ॥

कुहः । पुं । कुबेरे । यक्षराजि ॥

कुहकम् । न । इन्द्रजाले । मायायाम् ॥ त्रि । दाण्डाजिनिके । धूर्त्ते ॥ मायिनि । धूर्त्ते ॥ कुहयते । कुह विस्मापने । वा० कुन् ॥

कुहकजीवी । त्रि । मायाजीविनि । वाजीगर इतिभाषा ॥

कुहकस्वनः । पुं ।
कुहकस्वरः । पुं । } कुक्कुटे । ताम्रचूडे ॥

कुहक्कः । पुं । तालप्रभेदे ॥ यथा । द्रुतद्वन्द्वं लघुद्वन्द्वं ताले कुहक्कसंज्ञकेइति ॥

कुहनः । पुं । मूषिके ॥ सर्पे ॥ न । मृद्भाण्डवि० ॥ काचभाजने ॥ त्रि । ईर्ष्यालौ ॥

कुहना । स्त्री । दम्भचर्यायाम् । दम्भे

मकृतथ्यामसैामादै। ॥ सर्वलिप्स यामिथ्याधर्माश्रयश्च कुहवि०चु० अदन्तः। युयासश्रम्योयुच् ॥

कुहनिका। स्त्री। कुहनायाम् ॥

कुहरः। पुं। नागविशेषे ॥ न। गह्वरे ॥ सुषिरे। छिद्रे ॥ कर्णे ॥ कण्ठे ॥ कण्ठशब्दे ॥ समीपे ॥ कुंहरति। हरतेरनुप्रमनेऽच् ॥ यद्वा। कुहवि स्मापने। इगुपधत्वात्कः। कुहंराति। रा०। आतइतिकः ॥

कुहरितम्। न। पिकालापे ॥ रतध्वनैा ॥ रटिते ॥ चि। कृतच्छिद्रे ॥

कुहलिः। पुं। पूगपुष्पिकायाम्। पान इतिभाषा ॥

कुहा। स्त्री। कुज्झटिकायाम् ॥ कटुक्याम् ॥

कुहुः। स्त्री। कुह्वाम् ॥ कुहयति। कुहविस्मापने। मृ०कुः ॥

कुहूः। स्त्री। नष्टेन्दुकलायाममायाम्। उदयेऽमायोगान्नष्टचन्द्रकलाऽमा कुहूपदवाच्या ॥ अदृष्टाद्दृष्टतरि ॥ कुहयति। कुहवि० ॥ न्वतिगृध्योः कुरितिकूप्रत्ययो वाहुलकादिहापि ॥

कुहूकण्ठः। पुं। } कोकिले। पिके ॥
कुहूमुखः। पुं। } कोयल इतिभाषा।
कुहूरवः। पुं। }

कुहूलम्। न। सशल्कोर्ध्वरन्ध्रे ॥

कुहेडिका। स्त्री। } कुज्झटिकायाम् ॥
कुहेडी। स्त्री। }

कुहेलिका। स्त्री। कुज्झट्याम्। धूमिकायाम्। नभोरेणौ ॥

कुह्वानः। पुं। कुत्सितशब्दे ॥

कूः। स्त्री। पिशाच्याम् ॥

कूकुदः। त्रि। सत्कृत्यालङ्कृतकन्याप्रदातरि ॥ सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुदः ॥ कोकति। कुकआदाने। इगुपधेतिकः। पृ०॥ यद्वा। कथनं कूः। कूङ्शब्दे। तु०। सं०। कुयःशब्दस्य कुः भूः कीर्त्ति भूमिरितियावत्। कूकुंददाति। आतोऽनुपेति सुपीति योगविभागाद्वा कः ॥

कूचः। पुं। कुचे। स्तने ॥ कवते। कुङ्०। कुवस्वट्दीर्घश्च ॥

कूचिका। स्त्री। } तूलिकायाम्। चित्रलेखनिकायाम् ॥ टिस्वानङ्गी ॥
कूची। स्त्री। }

कूजनम्। न। कूजने ॥

कूजितम्। न। रुते। पक्षिध्वनैा।

कूटः। पुं। अगस्त्यमुनैा ॥ पुं। स्त्री। गृहे ॥ पुं। न। निश्चले ॥ राशौ। धान्यादिपुञ्जे ॥ अयोघने ॥ लोहमुद्गरे ॥ दम्भे ॥ मायायाम्। विपरीतदर्शने। यथार्थवस्त्वाच्छादनेमाऽ

कूटागारम् । न । चन्द्रशालिकायाम् । वडभ्याम् ॥ सुषागारे ॥ स्त्रीणां क्रीडागृहे ॥

कूटायुधम् । न । वहिः काष्ठादिमये ऽन्तर्गुप्तनिशितशस्त्रे ॥ अधर्मप्रधानप्राणिभिः कृतव्यवहाराणि तानिव हुप्रकाणि सन्ति ॥

कूटार्थभाषिता । स्त्री । प्रवन्धकल्पनायाम् । कथायाम् । रूपकथा इति गौडभाषा ॥ प्रहेलिकायाम् ॥

कूणिः । त्रि । रोगादिनाकुञ्चितकरे । कुकरे ॥

कूणिका । स्त्री । शृङ्गे ॥ कलिकायाम् । वीणामूलस्थवंशशलाकायाम् ॥

कूणितः । त्रि । मुद्रिते । सङ्कुचिते ॥

कूदरः । पुं । जातिविशेषे ॥ यथा ब्राह्मण्या क्षत्रियवीर्येण ऋतोः प्रथमवासरे । कुत्सिते चोदरे जातः कूदरस्तेनकीर्त्तितः ॥ तदशौचं विप्रतुल्यं पतितो ऋतुदोषतः । सद्यः कोटकसंसर्गादधमोजगतीतले ॥ इति ब्रह्मवैवर्त्तपुराणम् ॥

कूपः । पुं । स्वनामाख्याते जलाधारे । उदपाने ॥ अस्यलक्षणम् । यथा । भूमौ खातोऽल्पविस्तारो गम्भीरो मण्डलाकृतिः । वद्धोऽवद्धः स कूपः स्यात् तदम्भः कौपमुच्यते ॥ गर्त्ते ॥ गुणवृक्षे ॥ मृन्माने ॥ कूपके । कुप्पा इ भाषा ॥ कुवन्तिमण्डूका यस्मिन कु शब्दे । कुपुभ्यांश्चेतिपोदीर्घश्च ॥ कुत्सिताः ईषद्वा आपोऽत्र । ऋक्पूरित्यः । ऊदनोरित्यत्रदीर्घनिर्देशादन्यत्राप्यूदितिवा ॥

कूपकः । पुं । गुणवृक्षे । नौमध्यस्थरज्जुवन्धनकाष्ठे । गुणधरा मास्तूल इतिभाषा ॥ कुप्पा इतिभाषा प्रसिद्धे तैलादिपात्रे ॥ कुकुन्दरे ॥ उदपाने ॥ नद्यादौ स्रोतोवेधकारिणितरुशिलादौ ॥ विदारके । शुष्कनद्यादौवार्यर्थं कृतगर्त्ते ॥ कुत्सितः कूपः । कुत्सिते इति कः । कूपस्य प्रतिकृतिरितिवा । इवे प्रतिकृताविति कन ॥ कूपे कायतिवा । कै० । सुपीति कः ॥

कूपखानकः । पुं । कूपस्य खननकर्त्तरि ॥

कूपत् । अ । प्रश्ने ॥ प्रशंसायाम् ॥

कूपाङ्कः । पुं । } रोमाञ्चे ॥
कूपाङ्गः । पुं । }

कूपारः । पुं । अकूपारे ॥

कूपिका । स्त्री । अम्भोगतोपले । जलमध्यस्थितेपर्वतादौ ॥

कूपी । स्त्री । पात्रविशेषे ॥

कूसम् । न । सरोवरे ॥

कूरः । पुं । न । अन्ने । भक्ते ॥

कूर्च्चः । पुं । न । भ्रुवोर्मध्ये ॥ कत्थने ॥ श्मश्रुणि ॥ कैतवे । दम्भे ॥ मयूरपुच्छमुष्टौ । मुट्टा इति भाषा ॥ कुशमुष्ट्याम् ॥ अङ्गुष्ठाङ्गुलिमध्यस्योपरिभागे ॥ पुं । शीर्षे ॥ आसनविशेषे ॥ न । मलापकर्षणाद्यर्थं मृच्छरीरादिनिर्मिते मुष्टिमाने ॥ तथाच नरसिंहपुराणम् । ततः समर्पयेत् कूर्चमुशीरादिविनिर्मितम् । मलापकर्षणाद्यर्थं श्रीमन्मूर्त्यङ्गसन्धितः इति ॥ विष्णुधर्मोत्तरेपि । उशीरकूर्चकं दत्त्वा सर्वपापैः प्रमुच्यते । दत्त्वा गोवालजं कूर्चं सर्वांस्तापान् व्यपोहति ॥ दत्त्वा चामरजं कूर्चं श्रियमाप्नोत्यनुत्तमामिति हरिभक्तिविलासस्य ६ विलासे ४८ श्लोकः ॥ कुरति । कूर्यते वा । कुरशब्दे । वा० चट् प्रत्ययः ॥

कूर्च्चशिरः । न । अङ्घ्रिस्कन्धे । गुडमुडा इति गौड भाषा ॥

कूर्च्चशीर्षः । पुं । अष्टवर्गमध्यपठिते जीवकौषधौ । मधुरके ॥ नालिकेरे ॥ कूर्चं श्मश्रुतदच्छीर्षमस्य ॥

कूर्च्चशीर्षकः । पुं । जीवके ॥ नालिकेरे ॥

कूर्च्चशेखरः । पुं । नालिकेरे ॥

कूर्च्चिका । स्त्री । चीरविकृतौ । चीरसा इति गौडभाषा ॥ सा द्विधा । यथा । दध्नासह च यत् पक्वं चीरं सा दधिकूर्चिका । तक्रेण पक्वं यत् चीरं सा भवेत्तक्रकूर्चिका ॥ कुञ्चिकायाम् ॥ तूलिकायाम् । आलेख्यकूर्च्चिकायाम् । तुली इति गौडभाषा ॥ कुड्मले ॥ कुञ्चिकायाम् । कपाटोद्घट्टने ॥ द्रव्यमार्जनसाधने । तृणगुच्छे ॥ कूर्चेति । कूर्चविकारे श्वादेराकृतिगणत्वाद्वोध्यः । संज्ञायांवुन् ॥ कूर्चः श्मश्रुवादिरस्त्यस्यावा । अतइनिठनाविति ठन् ॥

कूर्द्दनम् । न । क्रीडायाम् । खेलायाम् ॥ कुर्द क्रीडायाम् । ल्युट् । वोरुपधायादीर्घ इकः ॥

कूर्द्दनी । स्त्री । चैत्रावल्याम् । मधूत्सवे ॥

कूर्प्यम् । न । भ्रुवोर्मध्ये ॥ इति हेम० ॥

कूर्प्परः । पुं । कुर्परे ॥

कूर्प्पासः । पुं । अर्द्धचोलके ॥ कूर्परः कफोणि र्जानुर्वा स्यते ऽत्र । कुर्परे आस्ते वा । असुक्षेपणे आसउपवेशने वा । घञ् । पृ० ॥

कूर्प्पासकः । पुं । चोले । स्त्रीणामाप्रपदीनकञ्चुके । स्त्रीणां कञ्चुलिकायाम् ॥ स्वार्थे कन् ॥

कूर्म्मः । पुं । उन्मीलननिमीलनकरे शरीरस्थवायुविशेषे ॥ उन्मीलने स्मृतः कूर्मो भिन्नाञ्जनसमप्रभः इत्यु

त्तेः ॥ कच्छुआ इति प्रसिद्धे जलजन्तु विशेषे । कच्छपे । पञ्चगुप्ते । कमठे ॥ अस्य लक्षणं यथा । स्फटिकरजतवर्णो नीलराजीविचित्रः कलशसदृशमूर्त्तिः स्याच्चयस्य कूर्म्मः । अरुणसमवपुर्वा सर्षपाकारचित्रः सकलनृपमहत्त्वं मन्दिरस्थः करोति ॥ अञ्जनभृङ्गश्यामतनुर्वा विन्दुविचित्रोऽव्यङ्गशरीरः । सर्पशिरो वा स्थूलगलो यः सोपि नृपाणां राष्ट्रविवृद्धै ॥ वैदूर्यत्विट् स्थूलकण्ठस्त्रिकोणो गूढच्छिद्रश्चारुवंशश्च शस्तः । क्रीडावाप्यां तोयपूर्णे मणौवा कार्यः कूर्म्मो मङ्गलार्थं नरेन्द्रैरिति ॥ वंशः पृष्ठास्थि । मणिः कूपाधोभागः ॥ विष्णोरवतारवि० । सत्ययुगे समुद्रमन्थनकाले मन्दराचलधारणार्थं कच्छपरूपे भगवदवतारे ॥ यथा ॥ विलोक्य विघ्नेशविधिं तदेश्वरो दुरन्तवीर्योऽवितथाभिसन्धिः । कृत्वा वपुः काच्छपमद्भुतं महत् प्रविश्य तोयं गिरिमुज्जहार ॥ सुरासुरेन्द्रैर्भुजवीर्यवेपितं परिभ्रमन्तं गिरिमङ्ग पृष्ठतः । बिभ्रत्तदा वर्त्तनमादिकच्छपोमेनेऽङ्गकण्डूयनमप्रमेय इति ॥ कुः कुत्सितः कौ भुविवा ऊर्म्मिर्वेगोऽस्य । अपप्रत्ययस्त्वेष्य



त्राजितियोगविभागाद्रूप् समासान्तः ॥ मुद्राविशेषे ॥

कूर्म्मचक्रम् । न ॰ ज्योतिषप्रसिद्धे कृषिकर्म्मोक्ते कच्छपाकारचक्रे ॥ तस्याकारो यथा । प्राङ्मुखो भगवान् देवः कूर्म्मरूपी व्यवस्थितः । आक्रम्य भारतं वर्षं नवभेदं यथाक्रमम् ॥ * ॥ तत्र नक्षत्रन्यासक्रमः । मध्यप्रागग्निियाम्यादिकृत्तिकादित्रयत्रयैः । क्रूरवेधयुतैस्तैस्तु पीड्यन्ते तन्निवासिनः ॥*॥ तत्र वेधो यथा । पर्वापरे भवेद्वेधो वेधश्चोत्तरदक्षिणे । ईशानेऽनलयोर्वेधो वेधश्चाग्नेयमारुते । ताराश्रयान्वितं तत्र सौरिंयत्नेन चिन्तयेत् ॥ * ॥ तत्रवेधादिजन्यदोषाः । अतिवृष्टिरनावृष्टिः शलभामूषिकाः खगाः । स्वचक्रं परचक्रञ्च सप्तैते सम्भवन्तिच ॥ * ॥ एवं देशगृहग्रामचेत्रनामर्क्षतो वदेत् । तथाच यत्नतश्चेदि व्यपार्थिवनाभसाः ॥ दृश्यन्तेसुमहोत्पाताः स्वांदिशंतत्रपीडयेत् । सौरिर्बलाधिकोदुष्टः स्वल्पवीर्यः शुभावहः ॥ एकदापीडयेच्च भानुजः कूर्म्मपञ्चके । तत्रस्थानेऽमहाविघ्नोजायते नात्रसंशयः ॥ दुष्टस्थाने गते चन्द्रे कर्त्तव्यंशान्तिपौष्टिकम् ॥ * ॥ तन्नक्षत्रमध्यस्यादेशाः ।

मध्येसारस्वता मत्स्याः शूरसेनाः समाथुराः । पञ्चालसाल्वमाण्डव्य कुरुक्षेत्रगजाह्वयाः ॥ मरुनैमिषवि न्ध्याद्रिपाञ्चघोषाः सयामुनाः । का श्ययोध्याप्रयागश्चगया वैदेहकादयः ॥ * ॥ तत्रपूर्वस्थदेशाः । प्राच्यां मा गधशोणौच वारेन्द्री गौडराढकाः । वर्द्धमानतमोलिप्तप्राग्ज्योतिषोद याद्रयः ॥ * ॥ तत्राग्निकोणस्थदेशाः । आग्नेय्यां मङ्गवङ्गोपवङ्गत्रैपुरकोसलाः । कलिङ्गोड्रान्ध्रकिष्किन्धाविदर्भशवरादयः ॥ * ॥ तत्रदक्षिणस्थ देशाः । दक्षिणे ऽवन्तिमाहेन्द्रमलया ऋष्यमूककाः । चित्रकूटमहारण्यकाञ्ची सिंहलकोङ्कणाः ॥ कावेरीताम्रपर्णीचलङ्कात्रिकूटकादयः ॥ * ॥ तत्रनैर्ऋत कोणस्थदेशाः । नैर्ऋते द्रविडानर्त्तमहाराष्ट्राश्चरैवताः । यवनः पह्लवः सिन्धुः पारसीकादयोमताः ॥ * ॥ तत्रपश्चिमस्थ देशाः । पश्चिमेहैहयास्ताद्रिम्लेच्छवासशकादयः ॥ * ॥ तत्रवायुकोणस्थदेशाः । वायव्ये गुज्जराटश्चनाट जालन्धरादयः ॥ * ॥ तत्रोत्तरस्थदेशाः । उत्तरे चीननेपालहूणकैकेयमन्दराः । गान्धारहिमवत्क्रौञ्च गन्धमादनमालवाः ॥ कैलासमद्र काश्मीरम्लेच्छदेशाः खसादयः ॥ * ॥ तत्रैशानकोणस्थदेशाः । ऐशाने स्वर्गभौमश्चगङ्गाद्वारश्चटङ्कणाः । वाह्लीकब्रह्मपुरककिरातादरदादयः ॥ इति ज्योतिस्तत्त्वम् ॥ * ॥ जपयन्त्रकर्मोक्ते कमठाकारचक्रे ॥ कूर्म्मचक्र मविज्ञाययः कुर्य्याज्जपयन्त्रकम् । तस्ययन्त्रफलं नास्तिसर्वानर्थायकल्पते ॥ इतितन्त्रशास्त्रम् ॥

**कूर्म्मपुराणम्** । न । कौर्म्मे । सप्तदशसहस्रश्लोकात्मके महापुराणे ॥ यथा । सप्तदशसहस्रन्तुपुराणं कूर्म भाषितमिति ॥

**कूर्म्मपृष्ठः** । पुं । अम्लानवृक्षे ॥ कमठपृष्ठदेशे ॥ न । शरावे ॥

**कूर्म्मपृष्ठकम्** । न । शरावे । सकोरा इति भाषा ॥

**कूर्म्मराजः** । पुं । कच्छपराजे । अकूपारे । आदिकच्छपेविष्णोरवतारे ॥ यथा । पृथ्वि स्थिरा भव भुजङ्गम धारयैनां त्वं कूर्मराज तदिदं दितयं दधीथाः । दक्कुञ्जराः कुरुत तत्त्रितये दिधीर्षा मार्यः करोतु हरकार्मुक माततज्यमिति महानाटकम् ॥

**कूलम्** । न । रोधसि । तीरे । तटे । नद्यादजलसमीपस्थाने ॥ स्तूपे सै

न्यपृष्ठे ॥ तडागे ॥ कूलयति । कूल आवरणे । पचाद्यच् ॥

कूलकः । पुं । कृमिशैले ॥ पुं । न । स्तूपे ॥ तीरे ॥

कूलङ्कषः । पुं । समुद्रे ॥ कूलङ्कषति । कष हिंसायाम् । सर्वकूलाभ्रकरीषेषु कषः इति खच् । अरुर्द्विषदिति मुमागमः ॥

कूलङ्कषा । स्त्री । नद्याम् ॥

कूलभूः । स्त्री । तीरभूमौ ॥

कूलवती । स्त्री । नद्याम् ॥

कूलचण्डकः । पुं । जलावर्त्ते ॥ कूलभङ्गे ॥

कूलेचरः । पुं । लुलापादिपशुषु ॥ यथा । लुलापगण्डवाराहचमरीवारणादयः । एते कूलेचराः प्रोक्ता यतः कूलेचरन्त्यपाम् ॥ कूलेचरा मरुत्पित्तहरा वृष्या बलावहाः । मधुराः शीतलाः स्निग्धाः मूत्रलाः श्लेष्मवर्द्धनाइति ॥

कूवरः । पुं । कुब्जके । कूंजा इतिभाषाप्रसिद्धे पुष्पे ॥ पुं । न । युगन्धरे । यत्ररथस्ययुगकाष्ठमासज्यते तत्र ॥ त्रि । रम्ये । चारौ ॥ कवते । कूङ् शब्दे । कुटादिः । बा० वरच् ॥

कूबरी । पुं । रथे ॥ कूबरोयुगन्धरःसोस्यास्ति । इनिः ।

कूबरी । स्त्री । कम्बलाच्छन्नदितरथे ॥ इतिहलायुधः ॥

कूष्माण्डः । पुं । कर्कारौ ॥ गणदेवताविशेषे ॥ द्वात्रिंशन्निरयाधिपतौ ॥

कूष्माण्डकः । पुं । कुष्माण्डे ॥

कूष्माण्डवटिका । स्त्री । कुम्हडौरीइति ख्याते वटीविशेषे ॥ कूष्माण्डवटिका ज्ञेया पूर्वोक्तवटिकागुणा । विशेषात् पित्तरक्तघ्नी लघ्वी च कथिता बुधैः ॥ पूर्वोक्तवटिका माषवटी ॥

कूष्माण्डी । स्त्री । अम्बिकायाम् ॥ ओषधौ ॥ कर्कार्वाम् ॥ कूष्माण्डी तु भृशं लघ्वी कर्कारु रपिकीर्त्तिता ॥

कूहा । स्त्री । कुज्झटिकायाम् । कुहासा इतिभाषा ॥

कृकः । पुं । गले ॥ इति हेमचन्द्रः ॥

कृकणः । पुं । कयार इति भाषाप्रसिद्धे क्रकरपक्षिणि ॥ कीटविशेषे ॥ कृ इति कणति । कणशब्दे अच् ॥ कृकेणकण्ठेन अणति वा । अणशब्दे । अच् । श० ॥

कृकरः । पुं । शिवे ॥ देहानिलविशेषे । क्षुत्करवायौ ॥ कृकरस्तु क्षुतेचैव जवाकुसुमसन्निभः ॥ करवीरवृक्षे ॥ चव्ये ॥

कृकलः । पुं । क्षुत्कारेदेहस्थेवायुविशेषे ॥

कृकला । स्त्री । पिप्पल्याम् ॥

कृकलासः । पुं । सरटे । क्रकचपादि ।

प्रतिहर्षे । इमाश्रये ॥ कृकं शिरोग्रीवा काण्ठञ्च लासयति । लसश्लिष्य योगे । चु० कर्म्मण्यण् ॥

कृकवाकुः । पुं । कुक्कुटे ॥ मयूरे ॥ सरटे ॥ कृकेन गलेमवक्ति । वचप रिभाषणे । कृकेवचः कश्चेतिमुण् ॥

कृकवाकुध्वजः । पुं । कार्त्तिकेये । स्कन्दे ॥ कृकवाकुर्ध्वजेऽस्य ॥

कृकाटिका । स्त्री । घाटायाम् । ग्रीवायामुन्नतभागे ॥ ग्रीवापश्चाद्भागे ॥ कृकङ्कण्ठम् अटति । अटगतौ । ण्वुल् । स्वा० कन् ॥

कृच्छ्रम् । न । आभीले । कष्टे । दुःखत त्कारणयोः ॥ अंहसि । पापे ॥ सान्तपनादिव्रते ॥ मूत्रकृच्छ्ररोगे ॥ त्रि । तद्वति ॥ स्मृतौ व्रतेपुल्लिङ्गोप्ययम् ॥ कृन्तन्ति अनेनवा । कृतीछेदने । कृतेश्छकूचेतिरक् प्रत्ययः छश्चान्त्यस्यादेशः ॥

कृच्छ्रसान्तपनम् । न । व्रतविशेषे ॥ यथा गोमूत्रं गोमयं क्षीरं दधि सर्पिःकुशोदकम् । एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतमिति ॥ गोमूत्रादीन्येकीकृत्य एकस्मिन् दिने भक्षयेत् तद्दिनेनान्यत्किञ्चिदद्यात् । अपरदिने चोपवास इत्यर्थः ॥ सम्यक् तपनमत्र । प्रज्ञाद्यण् यद्वा । सन्तपति । ल्युः । तस्येदम् कर्म । अण् । कृच्छ्रञ्चतत्सान्तपनञ्च ॥

कृच्छ्रातिकृच्छ्रः । पुं । व्रतविशेषे ॥ यथा हवशिष्ठः । अथभक्षस्तृतीयः कृच्छ्रातिकृच्छ्रोयावत् सकृदादीत । यावदेकवारमुदकं हस्तेन ग्रहीतुंशक्नोति तावन्नवसुदिवसेषुभक्षयित्वा त्र्यहमुपवासः कृच्छ्रातिकृच्छ्रः ॥ सुमन्तुर्यथा । द्वादशरात्रंनिराहारःस कृच्छ्रातिकृच्छ्रः । एतत् कृच्छ्रातिकृच्छ्रद्वयं द्वादशाहसाध्यमशक्तविषयम् ॥ ब्रह्मपुराणम् । चरेत् कृच्छ्रातिकृच्छ्रञ्च पिवेत्तोयञ्चशीतलम् । एकविंशति रात्रन्तुकाले ष्वेतेषु संयतः ॥ कालेषु प्रातःसायंमध्याह्नेष्वित्यर्थः । इति प्रायश्चित्तविवेकः ॥

कृच्छ्रारिः । पुं । विल्वाम्रवृक्षे ॥

कृच्छ्रार्द्धः । पुं । दिनषट्कसाध्येव्रतविशेषे ॥ यथाहापस्तम्बः । सायम्प्रातस्तथैकैकंदिनद्वयमयाचितम् । दिनद्वयञ्चनाश्नीयात् कृच्छ्रार्द्धःसोभिधीयते ॥ इति प्रायश्चित्तविवेकः ॥

कृणुः । पुं । चित्रकरजातौ । चितेरा इतिभाषा ॥ इति त्रिकाण्डशेषः ॥

कृतम् । न । सत्ययुगे ॥ यथा । दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितमिति । मनुश्च । चत्वार्याहुःसहस्राणि

वर्षाणान्तु कृतं युगम्। तस्य तावच्छती सन्ध्यासन्ध्यांशश्च तथाविधः॥ सन्ध्यासन्ध्यांशयोरन्तर्यः कालो मुनिसत्तम। युगाख्यः स तु विज्ञेयः कृतत्रेतादिसंज्ञक इति॥ पर्याप्ते। अलमर्थे॥ फले॥ त्रि। विहिते॥ हिंसिते॥ अकारि। डुकृञ्०। क्तः॥ निष्पादिते॥ पुं। कृताये॥

कृतकम्। न। विड्लवणे॥ त्रि। कृत्रिमे॥ कृन्तति। कृती छेदने। कृणत्ति वा। कृती वेष्टने। वा० क्वुन्॥

कृतकर्म्मा। त्रि। निपुणे। प्रवीणे। शिक्षिते॥ पुण्यवति॥ कृतं कर्म तत्तद्वर्णाश्रमाभिमाननिमित्तमन्तःकरणशोधकं येन॥

कृतकृत्यः। त्रि। कृतार्थे। निष्पन्नकर्म्मणि। समाप्तकार्ये। धन्ये॥ विदुषि॥ कृतं कृत्यं वर्णाश्रमोचितमन्तःकरणशोधकं कर्त्तव्यं येन न पुनः कृत्यान्तरं यस्यास्ति सः। कृतकृत्यस्तु सन्न्यस्य स्वात्ममात्ररतिर्भवेत्॥ ऋणत्रयाद्विमुक्ते॥ ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः। नैवाऽस्ति किञ्चित्कर्त्तव्यमस्ति चेन्न स तत्त्ववित्॥ अकृतकृत्यो हि मृत्योर्बिभेति। यथाहुः॥ प्रायेणाकृतकृत्यत्वान् मृत्योरुद्विजते जन इति॥

कृतकोटिः। पुं। काश्यपमुनौ॥ उपवर्षमुनौ॥ इति त्रिकाण्डशेषः॥

कृतक्रियः। त्रि। कृतकार्ये॥

कृतक्षणः। त्रि। लब्धावकाशे॥

कृतघ्नः। त्रि। कृतहन्तरि। कृतोपकारस्यापकारे प्रवर्त्तमाने॥ कृतमुपकारमपकाराचरणेन यो विनाशयति स कृतघ्न इत्यर्थः। स चानेकविधः प्रोक्तः पुराणे स्कान्दसंज्ञके। यथा। भर्त्तृपिण्डापहर्त्ता च पितृपिण्डापहारकः। यस्माद् गृहीत्वा विद्याञ्च दक्षिणां न प्रयच्छति॥ पुमान् स्त्रियश्च यो द्वेष्टि यस्तान् घातयेन्नरः। कृतस्य दोषं वदति सकामाम् न करोति यः॥ न स्मरेच्च कृतं यस्तु आश्रमान् यस्तु दूषयेत्। सर्वांस्तानृषिभिः सार्द्धं कृतघ्नानब्रवीन्मनुरिति॥ तस्य प्रायश्चित्तमपि नास्ति। यथा। ब्रह्मघ्ने च सुरापे च चौरे च गुरुतल्पगे। निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिरिति॥

कृतच्छिद्रा। स्त्री। कोषातकीलतायाम्॥

कृतज्ञः। पुं। हरौ॥ कृतं कार्यं जगद्रूपम्। जानातीति ज्ञः आत्मा। कृतञ्चासौ ज्ञश्चेति तथा। यद्वा। कृतं जगत् ज्ञः आत्मा यस्य। प्राणिनां पुण्यपाप

रूपंकृतंकर्म्मजानाति फलदानाये ति वा ॥ गुनि । कुक्कुरे ॥ त्रि । म र्य्यादिनि । प्रत्युपकारेसयत्न ॥ येन केनचित् स्वस्मैकिञ्चिदपिकृतमुप कारंबहुतया जानाति । चाश्वघो धने । आतद्दतिकः ॥

कृतज्ञता । स्त्री । उपकारित्वे ॥ भावे तल् । तलन्तंस्त्रियाम् ॥

कृतत्रा । स्त्री । चायमाणायांलतायाम् ॥

कृतदासः । पुं । नारदोक्तपञ्चदशदासा न्तर्गते दासविशेषे । सतुकेनचिन्नि मितेन एतावत्कालपर्य्यन्तं तवाहंदा सइतिकृतसमयः॥इतिक्रमसङ्कुरः ॥

कृतधीः । त्रि । पण्डितोत्तमे । निर्मला न्तःकरणे । अभ्याससंस्कृताऽन्तःकर णे ॥

कृतनाशः । पुं । दोषविशेषे ॥ कृतयोः पुण्यपापयोर्भोगमन्तरेण नाशः ॥

कृतपुङ्खः । त्रि । सम्यक्कृतशराभ्यासे । सुप्रयोगविशिखे ॥ कृतोऽभ्यस्तःपु ङ्खयुक्तः शरोयेन ॥

कृतपूर्वी । त्रि । पूर्वनिष्पन्नकर्मणि ॥ कृ तंपूर्वमनेनेत्यर्थे इष्टादिभ्यश्चेति क र्तरि इनिः ॥

कृतफलम् । न । कक्कोले ॥

कृतफला । स्त्री । कोलशिंब्याम् ॥

कृतम् । अ । अलमर्थे ॥ निषेधे ॥

कृतमालः । पुं । आरग्वधे । न्दपद्रुमे ॥ कर्णिकारे । लघ्वारग्वधे ॥ कृता मालाऽस्य ॥

कृतमाला । स्त्री । सरिद्दरे ॥ कृत माला नाम नदी यस्यां मत्स्यो ऽभ द्दुरिः ॥

कृतमुखः । त्रि । प्रवीणे । विज्ञे ॥ कृ तंमुखमस्य । सर्वस्यकृतमुखत्वात् अ चकृतशब्दस्यसंस्कृतपरत्वम् ॥

कृतयुगम् । न । तिष्ये । सत्ययुगे । स न्ध्यासन्ध्यांशयुक्तेषुचतुर्षु दिव्यसह स्रवर्षेषु ॥

कृतरुचिः । चि । अलङ्कृते ॥

कृतलक्षणः । चि । गुणैः प्रतीते । शौ र्यादिगुणैः विख्याते ॥ कृत मुद्रारितं लक्षणं नामास्य ॥ श्रीधरौ ॥ कृता नि लक्षणानि शास्त्राध्ययनेन । वेदाः शास्त्राणि विज्ञानमेतत् सर्वञ्जनार्द नादितिस्मृतेः ॥

कृतवर्म्मा । पुं । हृदीकसुतेक्षचियवि शेषे ॥

कृतविद्यः । चि । अभ्यस्तविद्ये ॥

कृतवीर्य्यः । पुं । एकवीरनृपात्मजे । च न्द्रवंशीयकार्त्तवीर्यस्यजनके ॥

कृतवेतनः । त्रि । वेतनेन नियुक्ते दा सादौ ॥

कृतवेदी । चि । कृतज्ञे ॥

पृष्ठजानुजङ्घादिबन्धे ॥

कृताञ्जः । त्रि । शिक्षिताञ्जे ॥

कृतिः । स्त्री । करणे ॥ पुरुषप्रयत्ने ॥ हिंसायाम् ॥ विंशत्यक्षरायांवृत्तौ ॥ क्रियायाम् ॥ कृतिरिन्द्रियसंयमश्चित्तैकाग्रताकरणञ्चेति छान्दोग्यभाष्यम् ॥ करणम् । डुकृञ्० । स्त्रियां क्तिन् । क्रियतेऽनया वा ॥

कृतकरः । पुं । रावणे । दशवदने ॥ इति शब्दमाला ॥

कृती । त्रि । पण्डिते । बुधे ॥ योग्ये । अभिज्ञे ॥ पुण्यवति ॥ साधौ ॥ कृतार्थे ॥ कृतङ् कर्म प्रशस्तमस्याऽस्ति । अतइनिः । कृतमनेन वा । इष्टादिभ्यादिनिः ॥

कृत्तः । त्रि । छिन्ने । वेष्टिते ॥ कृत्यते स्म । कृतीछेदने क्तः ॥

कृत्तिः । स्त्री । कृष्णसारादिचर्मणि ॥ त्वचि ॥ भूर्जे ॥ कृत्तिकानक्षत्रे ॥ कृत्यते । कृती । स्त्रियां क्तिन् ॥

कृत्तिका । स्त्री । तृतीयनक्षत्रे । बहुलायाम् ॥ तत्रजातस्य फलम् । क्षुधाधिकः सत्यधनैर्विहीनो वृथाटनो त्यन्नमतिः कृतघ्नः । कठोरवाक्चाहितकर्मकृत् स्यात् चेत् कृत्तिकायां मनुजः प्रसूतइति ॥ कृन्तति । कृती० । कृतिभिदिलतिभ्यः किदिति तिकन् ॥

कृत्तिकाभवः । पुं । चन्द्रमसि ॥ कृत्तिकायाः भवोऽस्य ॥

कृत्तिकासुतः । पुं । इन्द्रे ॥ स्कन्दे । कार्त्तिकेये ॥ कृत्तिकायाः सुतः ॥

कृत्तिवासः । पुं । शिवे ॥ इति द्विरू० ॥

कृत्तिवासाः । पुं । शिवे ॥ कृत्तिश्चर्म वासोऽस्य ॥

कृत्नुः । त्रि । कारौ । शिल्पिनि ॥ कर्त्तरि ॥ करोति कृणोति वा । डुकृञ् कृञ् हिंसायां वा । कृहनिभ्यां क्त्नुः ॥

कृत्यम् । न । कर्त्तव्ये । कार्ये । प्रयोजने ॥ पुं । तव्यादिप्रत्ययेषु ॥ यथा । कृत्याः षट् ते समाख्याताः क्यप्ण्यतौभावकर्मणोः । तव्यानीयावनन्तात् यत्केलिमः कर्मकर्त्तरि इति सुपद्मसम्मताकारिका ॥ कर्त्तरि कर्मणि चार्थे विहिताः कृत्याः वाच्यलिङ्गा भवन्ति ॥ त्रि । विद्विष्टे ॥ कार्ये ॥ क्रियते । डुकृञ्० । विभाषाकृवृषोरिति क्यप् ॥ कृत्यते वा । कृतीछेदने । ऋदुपधाच्चाकॢपिचृतेरिति क्यप् ॥ धनादिभिर्भेद्ये शत्रौ ॥ क्रुद्धलुब्धभीतावमानिताः परे कृत्या इति नीतिः ॥

कृत्यवित् । त्रि । कार्यज्ञे ॥ विधिज्ञे ॥

कृत्या । स्त्री । क्रियायाम् ॥ यथा । कां कृत्यां मकार्षीः ॥ अभिचारदेवते ॥ यन्त्रदेवताविं० ॥ ॥ अभिचारक्रियायाम् ॥ करणम् । कृञः शचेतिचात्क्यप् । तुक् । टाप् ॥ कृत्यते वा । कृती० । ऋदुपधादितिक्यप् ॥

कृत्रिमः । पुं । सिल्हके । तुरुष्कनाम्निगन्धद्रव्ये ॥ द्वादशमुखाम्सर्गतपुत्रविं० ॥ यथा । सदृशन्तु प्रकुर्याद्यं गुणदोषविचक्षणम् । पुत्रं पुत्रगुणैर्युक्तं सविज्ञेयस्तुकृत्रिम इतिमनुः ॥ न । विड्लवणे ॥ काचलवणे ॥ जवादिनामगन्धद्रव्ये ॥ रसाञ्जने ॥ त्रि । कृतिसम्भवे । रचिते ॥ डुकृञ्० । भावे ड्वितः क्रिः । कृत्या क्रियया निर्वृत्तम् । त्रेर्मम्नित्यम् इति मप् ॥

कृत्रिमकः । पुं । तुरुष्कनामनि गन्धद्रव्यविशेषे ॥

कृत्रिमधूपः । पुं । } दशकधूपे । कृत्रिमधूपकः । पुं । } नाना सुगन्धिद्रव्यकृतदशाङ्गादिधूपे ॥ कृत्रिमश्चासौधूपश्च ॥ स्वार्थे कन् ॥

कृत्रिमपुत्रकः । पुं । कृत्रिमेपुत्रे ॥ त्रि । पुत्तलिकायाम् । गुडिया इति भाषा ॥

कृत्रिममित्रः । पुं । रचितबन्धौ ॥

कृत्वा । अ । विधायेत्यर्थे ॥

कृत्सम् । न । उदके । जले ॥ समुद्राये ॥ पुं । पापे ॥ कृन्तति कृणत्ति वा । कृतीछेदने वेष्टने वा । स्नुव्रश्चिकृत्यृषिभ्यः किदितिसः ॥

कृत्स्नम् । न । जले ॥ सर्वस्मिन् ॥ कुक्षौ ॥ त्रि । पूर्णे । समग्रे । सोपकरणे । सफले ॥ कृत्यते । कृती० । कृत्यृषिभ्यांक्स्नः ॥

कृत्स्नधर्म्मः । पुं । निष्कामकर्मानुष्ठाने ॥

कृत्स्नवित् । त्रि । परिपूर्णात्मविदि ॥

कृदरः । पुं । कुसूले । अन्नकोष्ठे । धान्यादिगृहे । गञ्ज गोला इतिचभाषा ॥ कुर्वन्ति तस्मिन् । डुकृञ्० । कृदराद्यश्चेतिसाधुः ॥ ॥

कृन्तत्रम् । न । लाङ्गले ॥ कृन्तति । कृती० । कृतेर्नुम्चेतिकत्रप्रत्ययः ॥ कृन्तत्रङ्कर्त्तनीयमिति वेदभाष्यम् ॥

कृन्तनम् । न । छेदने ॥ यथा । कृन्तनं नखकेशानां छेदनञ्च वनस्पतेः । शावाशौचे न कर्त्तव्यं पाठनं पठनं तथा ॥ इति नारदः ॥

कृपः । पुं । द्रोणाचार्यस्य श्यालके । अश्वत्थाममातुले । कृपाचार्ये ॥ व्यासे ॥

कृपणः । पुं । कृमौ ॥ त्रि । मन्दे । क्षुद्रे । किम्पचाने ॥ कुत्सिते ॥ महाव्यसनप्राप्ते । दीने ॥ यथा । महद्धाव्यसनं प्राप्तो दीनः कृपण उच्यते । कुलेप्यकृपणो राम सम्भूतः सर्वकामदे ॥ इति

सम्प्रसारणमित्यतः सम्प्रसारणानुवृत्तेः ॥

कृमिकण्टकम् । न । चित्राङ्गे ॥ विडङ्गे ॥ उदुम्बरे ॥ चित्रायाम् ॥

कृमिकोशोत्थम् । त्रि । कौशेये । रेशिम कपड़ा इतिभाषा ॥

कृमिघ्नः । पुं । पलाण्डौ ॥ कोलकन्दे ॥ पारिभद्रे ॥ भल्लातके ॥ विडङ्गे ॥ कृमीन् हन्ति । अमनुष्यकर्तृके चेतिटक् । अनुपूर्वस्येतिनियमाभावात् ॥

कृमिघ्ना । स्त्री । हरिद्रायाम् ॥

कृमिघ्नी । स्त्री । धूम्रपत्रायाम् ॥ विडङ्गे ॥

कृमिजम् । न । अगुरुणि ॥ त्रि । कृमिजाते । कृमिभिर्जन्यते । जनी० । अन्येष्वपीतिडः ॥

कृमिजग्धम् । न । अगुरुणि । जोङ्गके ॥

कृमिजा । स्त्री । लाक्षायाम् ॥

कृमिदन्तकः । पुं । दन्तरोगविशेषे ॥ कृष्णच्छिद्रः चलः स्रावी ससंरम्भो महारुजः । अनिमित्तरुजोवातात् सज्ञेयः कृमिदन्तकः ॥

कृमिफलः । पुं । उदुम्बरे ॥ कृमयःफलेऽस्य ॥

कृमिरिपुः । पुं । विडङ्गे ॥ कृमीणां-रिपुः ॥

कृमिला । स्त्री । अनेकप्रसवाम् । बहुसन्तानप्रसवायाम् ॥ त्रि । कृमियुक्ते ॥ कृमीन् लाति । ला० । कः ॥

कृमिवृक्षः । पुं । कोषाम्रे ॥ ।

कृमिशङ्खः । पुं । न । कृमिजलजे । जीवशङ्खे ॥

कृमिशत्रुः । पुं । विडङ्गे ॥

कृमिशुक्तिः । स्त्री । जलशुक्तौ ॥

कृमिशैलः । पुं । } वल्मीके । वाँबी
कृमिशैलकः । पुं । } इति भाषा ॥

कृमीलकः । पुं । वनमुद्गे ॥

कृविः । पुं । तन्तुवायद्रव्ये । वापदण्डे । तांत इति भाषा ॥ करोति क्रियतेऽनेनवा । डुकृञ्० । कृविघृष्विच्छविस्थविकिकीदिविरितिसाधुः ॥

कृशः । त्रि । अल्पे । सूक्ष्मे ॥ कृश्यतेस्म । कृशतनूकरणे । अनुपसर्गात् फुल्लक्षीबेतिसाधुः ॥ कृशधने ॥

कृशरः । पुं । कृसरे ॥ कृशंराति । रा दाने । आतइतिकः ॥

कृशरा । स्त्री । कृसरायाम् ॥ टाप् ॥

कृशशाखः । पुं । पर्पटे ॥

कृशाङ्गः । त्रि । सूक्ष्माङ्गविशिष्टे ॥

कृशाङ्गी । स्त्री । प्रियङ्गुवृक्षे ॥ तन्वङ्ग्याम् ॥ कृशान्यङ्गान्यस्याः ॥

कृशानुः । पुं । पावके । अनले ॥ चित्रकवृक्षे ॥ कृश्यति तनूकरोति । कृशतनूकरणे । कृतन्यजीतिकृशे

रामुक् ॥

कृशानुरेताः । पुं । सर्वज्ञे । धूर्जटौ । शिवे ॥ कृशानौ रेतो ऽस्य । देव्याः सोढु मशक्यत्वाद्‌ग्नौ प्रक्षिप्तं रेतः । इति पुराणम् । अतो ऽग्निभूः कुमारः ॥

कृशाश्वी । पुं । नटे ॥ कृशाश्वेन प्रोक्तं नटसूत्र मधीते । कर्मन्दकृशाश्वादिनिः ॥

कृशिका । स्त्री । आखुकर्णीलतायाम् ॥

कृषकः । पुं । फाले ॥ वृषे ॥ त्रि । कर्षके ॥ कृषति । कृषविलेखने । कृषेर्वृद्धिश्चोदीचामितिकुन् ॥

कृषिः । स्त्री । वैश्यवृत्तिवि० । अन्वते । खेती इति भाषा ॥ अन्नोत्पत्त्यर्थं भूमेर्विलेखनं कृषिः ॥ कर्षणम् । कृष० । इक् कृष्यादिभ्यः । इगुपधात् किदितीन् वा ॥

कृषिकः । पुं । फाले ॥ त्रि । कर्षके ॥ कृषति । कृष० । वृश्चिकृषोः किकन् ॥

कृषिका । स्त्री । फाले ॥ टाप् ॥

कृषिजीवी । पुं । कृषिवृत्तौ । स्वयङ्कृतया ऽस्वयङ्कृतया वा कृष्या जीवति इति तथा ॥

कृषीवलः । त्रि । कर्षके । कृषिजीविनि ॥ कृषि रस्यास्ति । रजः कृष्यासुतिपरिषदो वलच् । वले इति दीर्घः ॥

कृष्करः । पुं । शिवे ॥ इति त्रिकाण्डशेषः

कृष्टम् । त्रि । कृष्टिमत् क्षेत्रे । सीत्ये । जोता खेत इति भाषा ॥ कृष्यते स्म । कृष० । क्तः ॥ आकृष्टे ॥

कृष्टपच्यः । त्रि । धान्ये ॥ शालिषु ॥ कृष्टे स्वय मेव पच्यन्ते इत्यर्थे राजसूयसूर्य मृषोद्यरुच्यकुप्य कृष्टपच्याव्यथ्याः इति क्यबन्तो निपातितः ॥ कृष्टेन पच्यते वा ॥

कृष्टपाक्यः । त्रि । कृष्टपच्ये ॥ शुद्धे कर्मणि ण्यत् ॥

कृष्टिः । पुं । पण्डिते । बुधे ॥ स्त्री । आकर्षे । कर्षणे ॥ कर्षति । कृष० । क्तिच् ॥ वा० तिर्वा । संज्ञापूर्वकत्वान्नगुणः ॥

कृष्णः । पुं । भगवतो ऽवतारविशेषे । केशवे । वासुदेवे । देवकीनन्दने । भक्तदुःखकर्षिणि ॥ भक्तानां पापादिदोषान् सर्वथा निवारयितु मशक्यानपि कृषति निवारयति तेषा मेवसर्वथा प्राप्तु मशक्यानपि पुरुषार्थान् आकर्षति प्रापयतीति वा ॥ यथा । स्मरणादेवकृष्णस्य सिद्ध्यन्ति सर्वसिद्धयः । स्मृते

सकलकल्याणभाजनंयत्रजायते। पुरुषं तमजं नित्यं व्रजामि शरणं हरिम्। स्मरणादेव कृष्णस्य पापसङ्घातपञ्जरम्। शतधाभेदमाप्नोति गिरिर्वज्रहतो यथेति कृष्णस्मरण माहात्म्यम्॥ अस्य जन्मसमय उक्तोय माणिक्यनामनि ज्योतिर्ग्रन्थे। उच्चस्थाः शशिभौमचान्द्रिशनयो लग्नं वृषो लाभगो जीवः सिंहतुलालिषु क्रमवशात् पूषोशनोराहवः। नैशीथः समयोऽष्टमी बुधदिनं ब्रह्मर्क्षमत्र क्षणो श्रीकृष्णाभिधमम्बुजेक्षणमभूदाविः परम्ब्रह्मतदिति॥ जनं जनेन जनिता जनं पाति जनेन यः। जनं जनेन हरति तं कृष्णं भजसाम्प्रतम्॥ परब्रह्मणि॥ यथा। कृषि भूर्वाचकः शब्दो णश्च निर्वृतिवाचकः। तयोरैक्यं परम्ब्रह्म कृष्ण इत्यभिधीयते॥ पाराशर्य। वेदव्यासे॥ अर्जुनपाण्डवे॥ वायसे। काके॥ कोकिले॥ करमर्द्दके॥ वर्णविशेषे। नीले। श्यामे। मेचके॥ न। मरिचे॥ लौहे॥ नीलाञ्जने॥ कालागुरुणि॥ अशुभकर्मणि॥ त्रि। मेचकवर्णवति॥ कर्षतिमनः। कृष०। कृषेर्वर्णइतिनक्॥ यद्वा। कर्षत्यरीन्। बाहुल



कात्वर्णं विनापिनक्॥ कृष्णोवर्णोऽस्यास्ति वा कृष्णः। नगन्तात् गुणवचनेभ्यो मतुपोलुगितिलुक्॥

कृष्णकन्दम्। न। कैरवे। निशाह्वये॥ इतित्रिकाण्डशेषः॥ कृष्णःकन्दोस्य॥

कृष्णकर्म्मा। त्रि। दुराचारे। पापाचारयुक्ते॥ कृष्णङ्कर्मास्य॥ कृष्णार्पितकर्मणि॥

कृष्णकलिः। स्त्री। गुलालफूल इति प्रसिद्धे कृष्णकेलौ इति गौडाः॥

कृष्णकायः। पुं। महिषे॥ त्रि। श्यामतनौ॥ कृष्णः कायोस्य॥

कृष्णकाष्ठम्। न। कालागुरुणि॥

कृष्णकोहलः। पुं। द्यूतकृति। अक्षदेविनि॥ कृष्णोऽशुभःकोहलोस्य॥

कृष्णगन्धा। स्त्री। शोभाञ्जने॥

कृष्णगर्भः। पुं। कट्फले॥

कृष्णचञ्चुकः। पुं। चणके॥

कृष्णचतुर्द्दशी। स्त्री। कृष्णपक्षीयचतुर्द्दश्याम्। भूते॥ कृष्णाचासौचतुर्द्दशीच॥

कृष्णचन्दनम्। न। हरिचन्दने। पीतचन्दने॥ कृष्णञ्चचन्दनम्॥

कृष्णचरः। त्रि। कृष्णस्यभूतपूर्वेऽर्थे भूतपूर्वेचरट्॥

कृष्णचूडा। स्त्री। स्वनामागौडेषुप्रसिद्धे पुष्पवृक्षे। गुलतुरा इतियव

नेषु प्रसिद्धे ॥

कृष्णचूडिका । स्त्री । गुञ्जायाम् ॥

कृष्णचूर्णम् । न । लौहमले ॥

कृष्णजटा । स्त्री । जटामांस्याम् ॥

कृष्णजीरकः । पुं । सुषव्याम । कारव्याम् । कालाजीरा इति भाषा ॥ कृष्णश्चासौ जीरकश्च ॥

कृष्णतण्डुला । स्त्री । कर्णस्फोटायां लतायाम् ॥

कृष्णताम्रम् । न । गोशीर्षचन्दने ॥

कृष्णतारः । पुं । हरिणे ॥

कृष्णत्रिवृता । स्त्री । त्रिवृताभेदे । पालिन्द्याम् । श्यामायाम् । कालतेउडी इति गौडभाषा ॥ कृष्णाचासौ त्रिवृताच ॥

कृष्णदन्ता । स्त्री । काश्मरीवृक्षे ॥

कृष्णदेहः । पुं । भ्रमरे ॥ त्रि । कृष्णवर्णशरीरे ॥ कृष्णोदेहोऽस्य ॥

कृष्णद्वैपायनः । पुं । वेदव्यासे ॥ यथा । कृष्णद्वैपायनं व्यासं विद्धि नारायणं विभुम् । कोह्यन्यः । पुण्डरीकाक्षान्महाभारत कृद्भवेदिति विष्णुपुराणम् ॥ द्वीपमयनं जन्मभूमिर्यस्य सः । द्वीपायनएव । प्रज्ञाद्यण् । द्वीपंयमुनाद्वीप मित्यर्थः ॥ कृष्णः कृष्णवर्णत्वात् कृष्णश्चासौ द्वैपायनश्च ॥

कृष्णधत्तूरकः । पुं । कालाधतूरा इति भाषाप्रसिद्धे कृष्णपुष्पे । विषारार्त्तौ । क्रूरधूर्त्ते । शिवे । सिद्धे ॥ सितनीलकृष्णलोहितपीतप्रसवाश्चसन्ति - धत्तूराः । सामान्यगुणोपेता स्तेषुगुणाढ्यस्तु कृष्णकुसुमः स्यादितिराजनिर्घण्टः ॥

कृष्णपक्षः । पुं । सितेतरपक्षे । असितपक्षे ॥ सतु प्रतिपदाद्य मावास्यान्तपञ्चदशदिनात्मकः । यथा । तत्र पक्षावुभौ मासे शुक्लकृष्णौ क्रमेणहि । चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः ॥ पक्षद्वयात्मकास्तु तिथयः क्रमात् पञ्चदशस्मृताः । दर्शान्ताः कृष्णपक्षेताः पूर्णिमान्ताश्चशुक्लके ॥ इति तिथ्यादितत्त्वम् ॥

कृष्णपर्णी । स्त्री । कालतुलस्याम् ॥

कृष्णपाकः । पुं । करमर्द्दके ॥ कृष्णःपाकोऽस्य ॥

कृष्णपाकफलः । पुं । करमर्द्द ॥ कृष्णपाकंफलमस्य ॥

कृष्णपिङ्गला । स्त्री । चण्ड्याम् । दुर्गायाम् ॥

कृष्णपिण्डीतकः । पुं । कृष्णपिण्डीरवृक्षे । वराहे ॥

कृष्णपिण्डीरः । पुं । कृष्णपिण्डीतके ॥

कृष्णपिपीली । स्त्री । कृष्णवर्णायाम्पिपीलिकायाम् । इचरकष्टायाम् । स्थू

कायाम् ॥

कृष्णपुच्छः । पुं । लोमडी इतिभाषा प्रसिद्धे वन्यजन्तुविशेषे । किखे ॥

कृष्णपुष्पः । पुं । कृष्णधत्तूरके ॥

कृष्णपुष्पी । स्त्री । प्रियङ्गुवृक्षे ॥

कृष्णफलः । पुं । करमर्दके ॥ कृष्णानि फलान्यस्य ॥

कृष्णफलपाकः । पुं । करमर्दके । करौंदा इतिभाषा ॥

कृष्णफला । स्त्री । सोमराज्याम् ॥ कृष्णानिफलान्यस्याः ॥ कोलशिंब्याम् ॥ अजादित्वाट्टाप् ॥

कृष्णभूकूष्माण्डः । पुं । विदार्याम् ॥

कृष्णभूमः । त्रि । कृष्णवर्णमृत्तिकायुक्ते देशे ॥ कृष्णोदगित्यच् ।

कृष्णभूमिजा । स्त्री । गोमूत्रिकातृणे ॥

कृष्णभेदा । स्त्री । कटुकायाम् ॥ कृष्णो वर्णेन भेदः भेदोऽस्याः ॥

कृष्णभेदी । स्त्री । कटुक्याम् । कटुरोहिण्याम् ॥ कृष्णं मलम्भिनत्ति । कर्मण्यण् । ङीप् ॥

कृष्णमन्त्री । पुं । पवनव्याधौ । उद्धवे ॥

कृष्णमल्ली । स्त्री । कृष्णमल्लिकायाम् । वनवर्वरे । वर्वर्याम् । काली तुलसी इतिभाषा ॥

कृष्णमुद्गः । पुं । काला मूंग इतिप्रसिद्धे मुद्गे । वासन्ते । सुराष्ट्रजे ॥

कृष्णमूली । स्त्री । शारिवाविशेषे ॥

कृष्णमृत्तिकः । पुं । कृष्णभूमे ॥

कृष्णमृत् । स्त्री । काली मिट्टी इतिप्रसिद्ध कृष्णवर्णायां मृदि । कृष्णभूमौ ॥ कृष्णमृत् मधुरा दाहास्रप्रदरश्लेष्मपित्तनुत् ॥

कृष्णरुहा । स्त्री । जतुकालतायाम् ॥

कृष्णरूप्यः । त्रि । कृष्णचरे ॥

कृष्णलम् । न । रक्तिकायाम् । रत्ती घुंघुची चिरमठी इतिभाषा ॥ चिभिर्यवैःपरिमितेमाने ॥ सर्षपाः षड्यवो मध्यस्त्रियवन्त्वेककृष्णलम् ॥

कृष्णलकः । पुं । गुञ्जायाम् ॥

कृष्णलवणम् । न । सौवर्चललवणे । कालानून इति भाष ॥ काचलवणे ॥

कृष्णला । स्त्री । रक्तिकायाम् । गुञ्जायाम् ॥ कृष्णं वर्णं लाति । लादाने । आतोनुपेतिकः ॥ यद्वा । कृष्णो वर्णोस्त्यस्याः । सि० लच् ॥

कृष्णलोहम् । न । अयस्कान्ते ॥

कृष्णलोहितः । पुं । धूम्रवर्णे । कृष्णरक्तमिश्रवर्णे ॥ त्रि । धूम्रवर्णवति ॥ कृष्णमिश्रोलोहितः । शा० ॥

कृष्णवक्त्रः । पुं । वानरे ॥ इति हलायुधः ॥ त्रि । श्याममुखे ॥

कृष्णवर्णः । पुं । शूद्रे ॥ विधुन्तुदे ॥ कृष्णोवर्णोऽस्य ॥

कृष्णवर्त्मा । पुं । अग्नौ । आश्रयाशे ॥ कृष्णाधूमोवर्त्मास्य ॥ दुराचारे ॥ विधुन्तुदे ॥ चित्रकवृक्षे ॥

कृष्णवर्वरक: । पुं । वर्वरवृक्षे ॥

कृष्णवल्लिका । स्त्री । जतुकालतायाम् ॥

कृष्णवल्ली । स्त्री । कृष्णार्जके ॥ सारिवा विशेषे ॥

कृष्णवानर: । पुं । कपौ । गोलाङ्गूले ॥

कृष्णवीज: । पुं । रक्तशिग्रौ ॥ न । कालिङ्गे । कलींदा इति भाषा प्रसिद्धे फले ॥

कृष्णवृन्ता । स्त्री । पाटलावृक्षे ॥ माषपर्ण्याम् ॥ कृष्णं वृन्तमस्या: ॥

कृष्णवृन्तिका । स्त्री । गम्भार्याम् ॥ कृष्णवृन्तायाम् ॥

कृष्णवेणा । स्त्री । सरिद्विशेषे ॥

कृष्णशार: । पुं । कालसारमृगे । कृष्णसारे ॥ कृष्णश्चासौ शार:शबलश्च । वर्णोवर्णेनेतिसमास: ॥

कृष्णशालि: । पुं । कालधान इति गौड भाषा प्रसिद्धे धान्य विशेषे । यथा मधशालौ ॥ कृष्णशालिस्त्रिदोषघ्नोमधुर: पुष्टिकृद्धित: । पुष्टिवीर्यवर्द्धनश्च वर्णकान्तिबलप्रद इत्यस्यगुणा: ॥

कृष्णशिंबिका । स्त्री । काकाण्ड्याम् ॥ कृष्णवर्णा शिम्बिका ॥

कृष्णशिग्रु: । पुं । शोभाञ्जने ॥

कृष्णशृङ्ग: । पुं । महिषे । लुलाये ॥

कृष्णसख: । पुं । अर्जुनवृक्षे ॥ अर्ज्जुने ॥ कृष्णस्य सखा । टच् ॥

कृष्णसखी । स्त्री । जीरके ॥ इति शब्दचन्द्रिका ॥

कृष्णसर्षप: । पुं । राजसर्षपे । राजिकायाम् ॥

कृष्णसार: । पुं । कृष्णाम् ॥ मृगविशेषे । कालसारे ॥ कृष्णसारस्तु चरति मृगोयत्रस्वभावत: ॥ खदिरे ॥ कृष्णोनसार: शबल: । तृतीयेतियोगविभागात् समास: ॥

कृष्णसारथि: । पुं । पार्थे । धनञ्जये ॥ अर्जुनवृक्षे ॥

कृष्णसारा । स्त्री । शिंशपावृक्षे ॥ कृष्ण: सारोऽस्या: ॥

कृष्णस्कन्ध: । पुं । कालस्कन्धे । तमालवृक्षे ॥

कृष्णा । स्त्री । द्रौपद्याम् ॥ नीलीवृक्षे ॥ कणायाम् ॥ द्राक्षायाम् ॥ नीलपुनर्नवायाम् ॥ कृष्णजीरके ॥ मश्मार्याम् ॥ कटुकायाम् ॥ सारिवाविशेषे ॥ राजसर्षपे ॥ पर्प्यव्याम् ॥ काकोल्याम् ॥ सोमराज्याम् ॥ नदीविशेषे ॥ निर्ऋते: पुर्य्याम् ॥ कृष्णा दैत्यपतेर्म्म्घोधीभवद् दैत्यसेविता । नील रत्नप्रभाजालविलासभवरभूषणा ॥ धू

मार्दिगतौ । शालग्रोनस्त्वेन तमोमयत्वात् दक्षिणमार्गत्वेन तन्त्रप्रसिद्धे पितृयाणमार्गे ॥ कृष्णवर्णायाम् त्रि । अनुदात्तत्वाभावान्न ङीप् । कृष्णावर्णो ऽस्यस्याः । अर्शआद्यच् ॥

कृष्णागुरु । न । । अगुर्वाण । कालागुरुणि । कृष्णकाष्ठे । धूपार्हे ॥ कृष्णागुणाधिकं तत्तु लोहवद् वारिमज्जति ॥ अगुरुप्रभवः स्नेहः कृष्णागुरुसमः स्मृतः ॥

कृष्णाचलः । पुं । रैवताद्रौ ॥ कृष्णस्याचलस्य ॥

कृष्णाजिनम् । न । कृष्णसारचर्मणि ॥

कृष्णाञ्जनी । स्त्री । कालाञ्जनीवृक्षे ॥

कृष्णानदी । स्त्री । कृष्णसमुद्भवायाम् । कृष्णगङ्गायाम् ॥ स्वच्छमस्याजलं रुच्यं पावनं दीपनं मतम् ॥

कृष्णाभा । स्त्री । कालाञ्जन्याम् ॥

कृष्णामिषम् । न । कृष्णलौहे ॥ इ० है० ॥

कृष्णायसम् । न । कृष्णवर्णलौहे । काललौहे ॥

कृष्णार्चिः । पुं । अग्नौ ॥

कृष्णार्जकः । पुं । कालीतुलसी इति भाषा प्रसिद्धे । गरघ्ने । वनवर्बरे ॥

कृष्णाम्बुः । पुं । नीलाब्धौ ॥

कृष्णावासः । पुं । अश्वत्थवृक्षे ॥ कृष्णस्यावासो ऽस्मिन् ॥

कृष्णिका । स्त्री । राजिकायाम् । राइ इति भाषा ॥ कृष्णेव । संज्ञायां कन् ॥

कृष्णेक्षुः । न । काजली ईख इति प्रसिद्धे कोकिलाक्षे । श्यामेक्षौ ॥

कृष्णेतरः । पुं । शुक्लपक्षे ॥

कृष्णोदुम्बरिका । स्त्री । काकोदुम्बरिकायाम् ॥

कृष्या । स्त्री । कर्षणार्हायाम् ॥

कृसरः । पुं । तुल्यतिलान्ने ॥ तिलतण्डुलसम्पक्कः कृसरः सोऽभिधीयते ॥ क्रियते । डुकृञ् । कृधूमदिभ्यः किदिति सरः । वा० नपुंसकम् ॥

कृसरा । स्त्री । खिचरीति लोकप्रसिद्धे द्विदलमिश्रितौदने ॥ तण्डुला दालिसम्मिश्रा लवणार्द्रकहिङ्गुभिः । संयुक्ताः सलिले सिद्धाः कृसरा कथिता बुधैः ॥ कृसरा शुक्रला बल्या गुरुः पित्तकफप्रदा । दुर्जरा बुद्धिविष्टम्भमलमूत्रकरी स्मृता ॥

कृतः । त्रि । रचिते । कृतकल्पने ॥ नियते ॥

कृतकीला । स्त्री । पट्टोलिकायाम् । व्यवस्थापत्रे ॥ इति विकारशेषः ॥

कृतधूमः । पुं । सिल्हके ॥

कृतिकः । त्रि । क्रीते ॥ इति कृदायुधः ॥

कोकयः । पुं । सूर्यवंशीयराजविशेषे ॥

कावस इति ख्याते देशविशेषे ॥

केकयी । स्त्री । भरतमातरि । दशरथराजपत्न्याम् ॥ केकयस्य दुहिता । सङ्कोचेमानाभावा ज्जन्यजनकभावोपि पुंयोग इति पुंयोगादाख्यायामितिङीष् ॥

केकरः । त्रि । वलिरे । ऐंचातानाइति भाषा प्रसिद्धे निम्नोन्नताक्षिपुरुषे । टेरके ॥ केमूर्ध्निकरः शीलमस्य । कृञो हेतुताच्छील्यानुलोम्येष्विति टः ॥ हलदन्तादित्यलुक् ॥

केका । स्त्री । मयूरस्वावाग्याम् ॥ केमूर्ध्नि कायते । कैशब्दे । अन्येभ्योपीति डः । हलदन्तात् सप्तम्याः संज्ञायामित्यलुक् ॥

केकावलः । पुं । मयूरे ॥

केकिकः । पुं । केकावति । मयूरे ॥ व्रीह्यादिभ्यश्चेति ठन् ॥

केकी । पुं । मयूरे ॥ केकाऽस्त्यस्य । व्रीह्यादिभ्यश्चेति पक्षे इनिः ॥

केचन । अ । केचिदित्यर्थे ॥

केचित् । अ । केचनेत्यर्थे ॥

केचुकम् । न । शाकविशेषे । नाडीचे । विश्वरोचने ॥

केशिका । स्त्री । पटकुट्याम् । तंबूटी इतिभाषा ॥

केतः । पुं । अभिनवमन्दिरे ॥ केतनम् । कित० । घञ् ॥

केतकः । पुं । केवडा इतिख्याते केतकीवृक्षे ॥ केतकः सूचिकापुष्पो जम्बुकः क्रकचच्छदः । सुवर्णकेतकीत्वन्यालघुपुष्पासुगन्धिनी ॥ केतकः कटुकः स्वादुर्लघुः स्निग्धः कफापहः ॥ न । केतक्याः पुष्पे ॥ केतक्याः पुष्पम् केतकम् । पुष्पमूलेषु बहुलमित्यणोलुक् । नादि वृद्धिः । लुक् तद्धितलुकीति स्त्रीप्रत्ययस्यलुक् ॥

केतकी । स्त्री । तृणद्रुमान्तरे । सूची पुष्पे । धूलिपुष्पिकायाम् ॥ केतयति । कितनिवासादौ । क्वुन् । ण्वुला ॥ गौरादित्वात् ङीष् ॥

केतनम् । न । सदने । गृहे ॥ निमन्त्रणे ॥ केतौ । ध्वजे । चिह्ने ॥ कृत्ये ॥ केत्यते चायते ऽनेन । कित० । भावकर्मकरणाधिकरणेषु ल्युट् ॥ स्थाने ॥

केतितः । त्रि । निमन्त्रिते ॥ केतितस्तु यथान्यायं हव्यकव्येष्वतन्द्रितः । कथंचिदप्यतिक्रामन्पापः शूकरतांव्रजेत् ॥

केतुः । पुं । रुजि । द्युतौ ॥ पताकायाम् ॥ लक्ष्मणि । चिह्ने ॥ रिपौ ॥ नवमग्रहे । राहोः शरीरे । शिखिनि ॥ सचोत्पातरूपः ॥ प्रज्ञा । ना

नारूपधरोऽव्यक्तो रविणा नरस श्च
यः। नोत्पत्तिर्ज्ञायते तस्य नारदेयःप
श्चितैरपि ॥ एकचूडो द्विचूडश्च
त्रिशिखः पञ्चचूडकः। सहस्रशिख
रूपश्च इन्द्रकेतुरिवस्थितः ॥ सूर्य
पुत्रोऽग्निपुत्रश्च ब्रह्मविष्णुशिवात्मजः
। अनेकशिखरः केतुर्ग्रहपीडां व्य-
पोहतु ॥ अथकेतुरित्येकवचनंजा
त्यभिप्रायम्। धूम्रा द्विबाहवः सर्वे
गदिनो विकृताननाः। गृध्रासनग
ता नित्यंकेतवःस्युर्वरप्रदाः॥ सर्वेकि
रीटिनःकार्या ग्रहालोकहितावहाः
। स्वाङ्गुलेनोच्छ्रिताः सर्वे शतमष्टोत्त
रंसदा ॥ इत्यादिषु बहुत्वदर्शनात्
॥*॥ अत्र केतुचारोवाराहीतो लि
ख्यते।तद्यथा। तत्रादावागमप्रदर्शना
र्थमाह। गार्गीयं शिखिचारं पारा
शर मसितदेवलकृतञ्च। अन्यांश्च
बहून् दृष्ट्वा क्रियतेऽयमनाकुलश्चारः
॥ अथोदयास्तमयलक्षणमाह। दर्श
न मस्तमयो वा न गणितविधिना
ऽस्य शक्यते ज्ञातुम्। दिव्यान्तरिक्ष
भौमास्त्रिविधाःस्युः केतवोयस्मात् ॥
अथकेतूनां दिव्यवर्जितानामन्येषां
स्वरूपमाह ॥ हुताशेऽनलरू
पंयस्मिंस्तत् केतुरूपमेवोक्तम्।
खद्योतपिशाचालयमणिरत्नादीन्



परित्यज्य ॥ दिव्यान्तरीक्ष भौमा
नां केतूनां ल०। ध्वजशस्त्रभवनतरु
तुरगकुञ्जराद्येष्वथान्तरीक्षास्ते ।
दिव्या नक्षत्रस्था भौमाः स्युरतोऽन्य
थाशिखिनः ॥ केतूनां संख्यां मता
न्तरेणाह । शत मेकाधिक मेके
सहस्र मपरे वदन्ति केतूनाम्।
बहुरूपमेकमेव प्राह मुनिर्नारदः
केतुम् ॥ मतान्तराण्युक्त्वास्वसिद्धा
न्तमाह। यद्येको यदिवहवः किम
नेन फलन्तु सर्वथा वाच्यम्। उद-
यास्तमयैः स्थानैः स्पर्शैरा धूपनै।
र्वर्णैः ॥ तेषां फलपाकनियमार्थ
माह ॥ यावन्त्यहानि दृश्यो मासा
स्तावन्त एवफलपाकः। मासैरब्दां
श्च वदेत् प्रथमात् पक्षत्रयात् पर
तः ॥ शुभस्य केतोर्ल०। ह्रस्व
स्तनुः प्रसन्नः स्निग्ध ऋजु रचिरसं
स्थितः शुक्लः। उदितोवाप्यभिदृष्टः
सुभिक्षसौख्यावहः केतुः॥ अशुभ
स्य केतोर्ल०। उक्तविपरीतरूपो
न शुभकरो धूमकेतुरुत्पन्नः। इन्द्रा
युधानुकारी विशेषतो द्वित्रिचूलो
वा ॥ अधुना केतुसहस्रस्य लक्षणं
सफलं विवक्षुस्तत्रादावेव रविजाः
पञ्चविंशतिः केतवो भवन्ति तेषां
लक्षणमाह ॥ हारमणिहेमरूपः

केतु:

किरणाख्य: पञ्चविंशति: सशिखा:। प्रागपरदिशो दृश्यान्नृपति विरोधा दहा रविजा:॥ अग्निपुत्रा स्तावन्त हृच्याह । शुकदहनबन्धुजीवकला चाचतजोपमा हुताशसुता: ।आ ग्नेय्यां दृश्यन्ते तावन्त स्तेदि शि खिभयदा:॥ मृत्युसुता स्तावन्त आ ह वक्रशिखा मृत्युसुता रूक्षा: कृ ष्णाश्च तेपि तावन्त:। दृश्यन्ते याम्या यां जनमरकावेदिन स्तेच॥ भूमि पुत्रा द्वाविंशतिरेवाह । दर्पणवृत्ता कारा विशिखा: किरणान्विता धरा तनया:। चुद्भयदा द्वाविंशति रैशा न्या मधुतैलनिभा:॥ चंद्रसुता स्त्र य:। शशिकिरणरजतहिमकुमुद कुन्दकुसुमोपम: सुता: शशिन:। उत्तरतो दृश्यन्ते चय: सुभिचावहा: शिखिन:॥ ब्रह्मदण्ड स्वस्य ल०॥ ब्रह्मसुत एक एव त्रिशिखो वर्णै स्त्रिभि र्युगान्तकर:। अनियतदिक् सम्प्रभवो विज्ञेयो ब्रह्मदण्डाख्य:॥ एकाधिकं शतं कथित मन्यानि नव शतान्यकेनानि कथनीयानी त्याह ।शत मभिहित मेकाधिक मेकेन विरहिता न्यस्मात् । कथयिष्ये केतूनां शतानि नववचयो: स्प ष्ट:॥ शुक्रपुत्रा चतुरशीतिसङ्

केतु:

ख्या स्तानाह । सौम्येशान्यो बर्दर्य शुक्रसुता यान्ति चतुरशीत्या ख्या:। विपुलसिततारका स्ते स्निग्धाश्चभ वन्तितीव्रफला:॥ षष्टि: शनैश्चर पुत्रा:। स्निग्धा: प्रभासमेता द्विशि खा: षष्टि: शनैश्चराङ्कजा:। अति कष्टफला दृश्या: सर्वेचैतेकनकसं ज्ञा:॥ गुरुपुत्रा: पञ्चषष्टि:। विक चा नाम गुरुसुता: सितैकतारा: शिखापरित्यक्ता:। षष्टि: पञ्चभि र धिका स्निग्धा याम्याश्रिता: पापा:॥ एकपञ्चाश बुधपुत्रा:। नातिव्यक्ता: सूक्ष्मा दीर्घा: शुक्ला यथेष्टदिक्प्र भवा:। बुधजा स्तस्करसंज्ञा: पापफ ला स्त्वेकपञ्चाशत्॥ भौमपुत्रा: ष ष्टि:। चतजानलाऽनुरूपा स्त्रिचूल तारा: कुजात्मजा: षष्टि:। नाम्ना च कौङ्कुमा स्ते सौम्याशासंस्थिता: पा पा:॥ त्रयस्त्रिंशद्राहुपुत्रा:। त्रिंशत् त्र्यधिका राहो स्तेतामसकीलकाइ तिख्याता:। रविशशिगा दृश्यन्ते तेषां फलमकचारोक्तम्॥ अर्कचा रोक्तांतामसकीलकसंज्ञाराहुसुता: केतवष्टच्याद्विनेत्यर्थ:। विंशत्यधि कं शत मग्निपुत्राणाम्। विंशत्य धिक चान्य च्छत मग्ने र्विश्वरूपसं ज्ञानाम्। तीव्रानलभयदानां ज्वा

केतुः

श्यामास्ताभिरा कृतत्तनूनाम् । सप्त
सप्तति वायुपुत्राः । श्यामारुणा वि
तारा श्चामररूपा विकीर्णदीधित
यः । अरुणाख्यास्ते वायोः सप्त च
सप्ततिः पापदाःपरुषाः ॥ प्रजापति
सुतान् ब्रह्मणःपुत्रांश्चाह । तारापु
ञ्जनिकाशाः गणका नाम प्रजापते
रष्टौ । द्वे च शते चतुरधिके चतुर
स्रा ब्रह्मसन्तानाः ॥ द्वात्रिंशद्वरुणपु
त्रा नाह । कङ्का नाम वरुणजा द्वा
त्रिंशद्वंशगुल्मसंस्थानाः । शशिवत्
प्रभासमेता स्तीव्रफलाः केतवः प्रो
क्ताः ॥ षण्णवतिःकालपुत्राः । षण्ण
वतिः कालपुत्राः कबन्धसंज्ञाः कब
न्धसंस्थानाः । पुण्ड्रा भयप्रदाः स्यु
र्विरूपताराश्च ते शिखिनः ॥ नव
विदिक्पुत्राः सर्वेषां च संख्या मन्ये
षाञ्च विशेषं वक्ष्यामीत्याह । शु
क्लविपुलैकतारा नव विदिशां केत
वःसमुत्पन्नाः । एवंकेतुसहस्रं विशे
ष मेषां मतो वक्ष्ये ॥ तत्र ये दृश्य
न्ते तेषां लक्षणं वक्तुकाम स्तत्रादा
वेव वसाकेते र्लक्षणमाह । उद
गायतो महान् स्निग्धमूर्त्ति रपरोद
यी वसाकेतुः । सद्यः करोति मर
कं सुभिक्षम प्युत्तमं कुरुते ॥ अ
स्थिकेतोः शस्त्राख्यस्य ल० । तद्वच्च

केतुः

रूक्षोऽस्थिकेतुः सतु रूक्षः क्षुद्भयाव
हः प्रोक्तः । स्निग्ध स्तादृक् प्राच्यां
शस्त्राख्यो डमरमरकाय ॥ कपाल
केतो र्ल० । दृश्योऽमावास्यायां क
पालकेतुः स धूम्ररश्मिशिखः । प्राङ्
नभसोऽर्द्धविचारी क्षुन्मरकावृष्टि
रोगकरः ॥ रौद्रकेतोर्ल० । प्राग् वै
श्वानरमार्गे शूलाग्रःश्यावरूक्षताम्रा
र्चिः । नभस स्त्रिभागगामी रौद्र इ
ति कपालतुल्यफलः ॥ चलकेतोर्ल०
। अपरस्यां चलकेतुः शिखया या
म्याग्रयाङ्गुलोच्छ्रितया । गच्छेद्य
थायथोदक् तथा तथा दैर्घ्य माया
ति ॥ सप्त मुनीन् संस्पृश्य ध्रुवम
भिजित मेव च प्रतिनिवृत्तः । नभसो
ऽर्द्धं भाग मित्वा याम्येनास्तं समुपया
ति ॥ हन्यात् प्रयागकूलाद् यावदव-
न्तीं च पुष्करारण्यम् । उदगऽपि
च देविका मपि भूयिष्ठं मध्यदेशाख्य
म् ॥ अन्या नपि च स देशान् क्वचि
त् क्वचिद्धन्ति रोगदुर्भिक्षैः । दश मा
साम् फलपाको ऽस्य कैश्चिदष्टादश
प्रोक्तः ॥ श्वेतकेतो र्ल० । प्रा गर्द्ध
रात्रदृश्यो याम्याग्रः श्वेतकेतु रन्यश्च
। कइति युगाकृति रपरे युगपत्तौ
सप्तदिनदृश्यौ ॥ स्निग्धौ सुभिक्षशि
वदौ तथाधिकं दृश्यते कनामा यः ।

थिवं हन्यात्। बहुलासु कलिङ्गेशं रोहिण्यां शूरसेनपतिम् ॥ औशीनर मपि सौम्ये जलजाजीवाधिपंतथार्द्रासु। आदित्ये ऽश्मकनाथं पुष्ये मगधाधिपं हन्ति ॥ असिकेशं भौजङ्गे पित्र्ये ऽङ्गं पाण्ड्यनाथ मपि भाग्ये। औज्जयनिक मार्यमणे सावित्रे दण्डकाधिपतिम् ॥ चित्रासु कुरुक्षेत्राधिपस्य मरणं समादिशेत्तज्ज्ञ: ॥ काश्मीरककाम्बोजौ नृपती प्राभञ्जने न स्त: ॥ इक्ष्वाकुरलकनाथश्च हन्यते यदि भवेद्विशाखासु। मैत्रे पुण्ड्राधिपतिं ज्येष्ठासु च सार्वभौम वध: ॥ मूले त्वन्ध्रकपती अप्ये दैवे काशिपो मरणमेति। यौधेयकार्जुनायनशिविचैद्यान् वैश्वदेवे च ॥ हन्यात् कैकयनाथं पाञ्चनदं सिंहलाधिपं वाङ्गम्। नैमिषनृपं किरातं श्रवणादिषु षट्स्विमान् क्रमश: ॥ केतो र्विशेष माह। उल्काभिताडितशिख: शिखी शिव: शिवतरो ऽभिदृष्टो य: । अशुभ: स एव चोलातङ्गणसितहूणचीनानाम् ॥ विशेषान्तरमाह। नमायत: शिखिशिखाभिहतो यतोवा कच्चंच यत् स्पृशति तत्कथितांच देशान्। दिव्यप्रभावमिहता

न् स यथागतस्मान् भुङ्क्ते गतो नरपति: परभोगिभोगान् ॥ इतिवाराहीसंहितायां केतुचारंनामाध्याय एकादश: ॥ चाय्यते ऽनेनवा। चायूपूजादौ। चाय: किरितिनु: ॥

केतुगृहम्। न। मीनराशौ ॥

केतुग्रहवल्लभम्। न। वैदूर्यमणौ ॥

केतुभ:। पुं। मेघे ॥

केतुमालम्। न। जम्बुद्वीपस्य नवखण्डान्तर्गते खण्डविशेषे ॥ सुकेतनं केतुमालं प्रतीच्यां गन्धमादनात् ॥

केतुरत्नम्। न। वैदूर्यमणौ ॥

केदर:। पुं। दृक्षविशेषे ॥ त्रि। टेरके ॥

केदार:। पुं। अद्रिविशेषे ॥ वदर्या: समीपेक्षेत्रविशेषे ॥ यथा। केदाराख्ये महाक्षेत्रेदेवी सामार्गदायनीतिदेवीगीता ॥ शिवे ॥ भूमिप्रभेदे ॥ आलवाले ॥ खेत इति प्रसिद्धक्षेत्रे। क्यार इति भाषा ॥ कैदारं वारि मधुरं विपाके गुरु दोषलम्। तद्वेव वदुमुक्तन्तु विशेषाद्दोषदं भवेत् ॥ के जले शिरसिवा दारोऽस्य। हलदन्तादित्यलुक् ॥ केन जलेन दीर्यते वा। दृ विदारणे। कर्मणि घञ्। केदाराद्यञ्चेतिनिर्देशादेत्वम् ॥

केदारकटुका। स्त्री। कटुकायाम् ॥

उभाषाप्रसिद्धे कदम्बविशेषे ॥

केलिशुषिः । स्त्री । धरित्र्याम् ॥

केलिसचिवः । पुं । क्रीडाविषयकमन्त्रिणि । नर्मदे । नर्मसचिवे ॥

केवर्त्तः । पुं । कैवर्त्तजातौ ॥ इतिद्विरू० ॥

केवलः । पुं । कुहने ॥ न । ज्ञानभेदे ॥ शुद्धे ॥ निर्णीते ॥ त्रि । अद्वितीये । एकस्मिन् । असहाये ॥ कृत्स्ने ॥ केवते । केवसेवने । इषा०कलः ॥ केशिरसि वलयति वा । वलप्राणने । पचाद्यच् ॥

केवलज्ञानी । पुं । भूतार्हद्विशेषे ॥

केवलद्रव्यम् । न । मरिचे ॥

केवलव्यतिरेकि । न । व्यतिरेकमात्रव्याप्तिकानुमाने ॥ यथा । पृथिवीतरेभ्योभिद्यते गन्धवत्त्वात् यदितरेभ्यो न भिद्यते न तद् गन्धवत् यथा जलम् नचेयं तथा तस्मात् तथेति । अत्र यद्गन्धवत् तदितरभिन्न मित्यन्वयदृष्टान्तो नास्ति पृथिवीमात्रस्य पक्षत्वात् ॥

केवला । स्त्री । एकस्याम् ॥ कृत् छाया म् ॥ केवलात् टाप् ॥

केवलान्वयि । न । अन्वयमात्रव्याप्तिकानुमाने ॥ यथा । घटोऽभिधेयः प्रमेयत्वात् पटवत् इत्यत्र प्रमेयत्वाभिधेयत्वयो व्यतिरेकव्याप्ति र्नास्ति सर्वस्याप्यभिधेयत्वात् प्रमेयत्वाच्च ॥

केवली । पुं । जैनविशेषे ॥

केवली । स्त्री । ज्ञानविशेषे ॥ ग्रन्थविशेषे ॥ केवलमा अकेति संज्ञाछन्दसोर्ङीप् ॥

केविका । स्त्री । केवेर इतिकोकयभाषाप्रसिद्धे पुष्पविशेषे । भृङ्गारी । महागन्धायाम् ॥

केशः । पुं । वरुणे ॥ ह्रीबेरे ॥ दैत्यवि० ॥ विष्णौ ॥ चिकुरे । कुन्तले । वाले ॥ मज्जजातोपधातुविशेषोयम् । केशसमूहार्थवाचकाः शब्दाः यथा । पाशः पक्षः हस्तः पराः पाशोरचनाभार उच्चयः । कलापः पक्षः कलापश्च केशभूयस्त्ववाचका इतिहेमचन्द्रः ॥ क्लिश्यते । क्लिश बन्धे क्लिशु उपतापे वा । क्लिश्नातिवा । क्लिशूविबाधायाम् । क्लिशेरन्लोलोपश्च ॥ केशेते । शीङ्० । अन्येभ्योपीतिडः । इलदन्तादित्यलुक्वा ॥ कस्यशिरसः ईशोवा ॥

केशकः । पुं । केशेषु प्रसिते ॥ स्वाङ्गेभ्यः प्रसिते इतिकन् ॥

केशकलापः । पुं । केशपाशे । केशसमूहे ॥

केशकारः । पुं । करिया कुशियार इतिभाषाप्रसिद्धे इक्षुभेदे ॥ केशकाशः

गुरु: शीतले रक्तपित्तक्षयापह: ॥

केशघ्नी स्त्री । पु । चूड़ायाम् ॥

केशगर्भ: । पुं । } कवर्य्याम् ॥
केशगर्भक: । पुं । }

केशघ्नम् । न । इन्द्रलुप्तके ॥

केशट: । पुं । हरौ । विष्णौ ॥ अजे । छागे ॥ उत्कटे ॥ भ्रातरि ॥ शोषणाख्ये मदनस्य बाणे ॥ शोणकवृक्षे ॥

केशधृत् । पुं । भूतकेशे ॥

केशनाम । न । वाले । ह्रीवेरे । वाला इतिभाषा ॥

केशपक्ष: । पुं । कचौघे । केशकलापे ॥

केशपर्णी । स्त्री । अपामार्गे ॥

केशपाश: । पुं । केशपक्षे ॥ पाश: पक्षश्च हस्तश्च कलापार्था: कचात् परे ॥

केशपाशी । स्त्री । शिखायाम् । शिरोमध्यस्थचूडायाम् ॥ केशानां पाश: । गौरादि: ॥

केशभू: । पुं । शिरसि ॥

केशमथनी । स्त्री । शमीवृक्षे ॥

केशमार्ज्जकम् । न । कङ्कतिकायाम् । कङ्गा कङ्घी इतिचभाषा ॥

केशमार्ज्जनम् । न । कङ्कतिकायाम् ॥

केशमुष्टि: । पुं । विषमुष्टिवृक्षे ॥ महानिम्बे ॥

केशर: । पुं । सिंहस्कन्धजटायाम् ॥ तुरङ्गस्कन्धकेशेषु ॥ पुन्नागवृक्षे ॥ बकुलवृक्षे ॥ न । हिङ्गुनि ॥ पुं । न । किञ्जल्के ॥ के जले शीर्य्यते । शॄ हिंसायाम् । ऋदोरप् । हलदन्तादित्यलुक् ॥

केशरञ्जन: । पुं । भृङ्गराजवृक्षे ॥

केशराज: । पुं । नागमारे । भृङ्गराजे । भंगरा इतिभाषा ॥

केशराम्ल: । पुं । मातुलुङ्गकवृक्षे ॥

केशरी । पुं । सिंहे ॥ तुरगे ॥ केशरा: स्कन्धबाला: सन्त्यस्य । इनि: ॥ बीजपूरकवृक्षे ॥ पुन्नागे ॥ नागकेसरे ॥

केशरुहा । स्त्री । भद्रदन्तिकावृक्षे ॥

केशरूपा । स्त्री । वन्दाकवृक्षे ॥

केशव: । पुं । पुन्नागवृक्षे ॥ वासुदेवे । विष्णौ ॥ केशौ ब्रह्मरुद्रौ सर्वेश्वरावपि अनुकम्प्यतया वाति गच्छतीति व्युत्पत्ति माश्रित्य निरतिशयैश्वर्य्यप्रतिपादनात् सर्वेश्वरे ॥ कश्च ईशश्च केशौ पुत्रपौत्रौ तावस्य । केशाविति व: । केशौ वातिवा । वा गतौ । आतइतिक: । शम्भो: पितामहो ब्रह्मपिता शक्रादयोश्वर इति पद्मोक्ते: ॥ यद्वा । केशिनं दैत्यविशेषं वाति गच्छति मारणार्थं वाते गमनार्थादन्येभ्योऽपिदृश्यते

इति रुः । पृषोदरादित्वात् इकार
[illegible]
हतः केशी जनार्दन । तस्मात् के
शवनाम्ना त्वं लोके ख्यातो भविष्य
सीति हरिर्वै प्रोक्तः ॥ यद्वा । केश
संज्ञिताः । सूर्यादि संक्रान्ता अंशवः
तद्वत्तया केशवः । अंशवो ये प्रकाश
न्ते मम ते केशसंज्ञिताः । सर्वज्ञाः केश
वं तस्मात् प्राहु र्मां द्विजसत्तमाः ॥
इति भारतम् ॥ ब्रह्मविष्णुशिवाख्याः
शक्तयः केशसंज्ञिताः तद्वत्तया श्रा ।
त्वयः केशिन इति श्रुतेः ॥ कश्च अश्च
ईशश्च केशाः ब्रह्मविष्णुरुद्राः ते
अस्य वश्यतया सन्तीति केशवः । के
शशब्दात् मत्वर्थीयः केशाद्वोन्यतर
स्यामिति वप्रत्ययः ॥ यद्वा । केशान्
ब्रह्मविष्णुरुद्रान् वष्टि इच्छति सर्गा
दिकार्यायेति । वशकान्तौ । अन्ये-
भ्योपि दृश्यत इति डप्रत्ययः ॥ यद्वा ।
केशान् ब्रह्मविष्णुरुद्रान् वाति गच्छ
ति नियामकत्वेनेति केशवः । वाग
तिगन्धनयोः । आतो ऽनुपसर्ग इति
कः ॥ को ब्रह्मेति समाख्यात ईशो
ऽहं सर्वदेहिनाम् । आवां तवांशस-
म्भूतौ तस्मात् केशवनामवान् ॥
इति ह० वं ॥ त्रि । प्रशस्तकेशवति
॥ प्रशस्ताः केशाः सन्त्यस्य । प्रशंसा
याम् केशाद्वोन्यतरस्यामिति वः ॥
[illegible]
स्य । मतुप् ॥
केशवर्द्धिनी । स्त्री । सहदेवीलतायाम् ॥
केशवायुधः । पुं । आम्रवृक्षे ॥ न । विष्णो
रस्त्रे ॥
केशवालयः । पुं । अश्वत्थवृक्षे ॥ विष्णो
र्मन्दिरे ॥ केशवस्य आलयः ॥
केशवावासः । पुं । अश्वत्थद्रुमे ॥
केशवेशः । पुं । कबरीम् ॥ केशानां
वेशः मार्जनाबन्धनादिना कृतशोभा
विशेषः ॥
केशहन्तृफला । स्त्री । शमीवृक्षे ॥
केशहन्त्री । स्त्री । सक्तुफलायाम् । श
मीवृक्षे ॥
केशहस्तः । पुं । केशसमूहे ॥
केशाकेशि । अ । केशेषु केशेषु गृही
त्वा प्रवृत्ते युद्धे ॥ तत्रतेनेदमिति
सरूपे इति कर्मव्यतिहारे बहुव्री
हिः । अन्येषामपि दृश्यते इति पूर्व
पदान्तस्य दीर्घः । इच् कर्मव्यतिहारे
इति इच् समासान्तः । तिष्ठद्गुप्रभृ
तिषु इच्प्रत्ययस्य पाठादव्ययीभा
वत्व मव्ययत्वञ्च ॥
केशान्तः । पुं । गृह्योक्ते संस्कारविशेषे ॥
ब्राह्मणादीनां षोडशादिवर्षेषु कर्त्त
व्ये गोदानाख्यव्रतविशेषे ॥ यथाह

मनुः । केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते । राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः इति ॥

केशाम्बुना । स्त्री । सहदेव्याम् ॥

केशार्हा । स्त्री । महानील्याम् ॥

केशिकः । त्रि । प्रशस्तकेशविशिष्टे । केशिनि ॥ प्रशस्ताः केशाः सन्त्यस्य । केशाद्वोऽन्यतरस्यामितिपक्षे ठन् ।

केशिका । स्त्री । शतावर्याम् ॥

केशी । पुं । विष्णौ ॥ दैत्यविशेषे ॥ सिंहे ॥ त्रि । केशिके ॥ ठनोऽभावपक्षे इनिः ॥

केशिनिषूदनः । पुं । श्रीकृष्णे ॥

केशिनी । स्त्री । सांवाकूर्ची इति ख्यातायांचोरपुष्प्याम् ॥ रावणमातरि ॥ जटामांस्याम् ॥ प्रशस्तकेशवत्याम् ॥ इन्नन्तात् ङीप् ॥

केशिसूदनः । पुं । श्रीकृष्णे ॥ केशिनामानमसुरं सूदितवान् सूदयति वा सूदक्षरणे । नं० ल्युः ॥

केशिहा । पुं । केशवे । श्रीकृष्णे ॥ केशिनामानमसुरं हन्ति हतवान्वा । हन्० क्विप् ॥

केशी । स्त्री । नील्याम् ॥ भूतकेश्याम् ॥ अवलोमा वृषे ॥

केशोच्चयः । पुं । केशपाशे ॥

केश्यम् । न । कृष्णागुरुणि ॥ भृङ्गराजे ॥



केसरः । पुं । सिंहस्कन्धजटायाम् ॥ सिंहच्छटायाम् ॥ तुरगस्कन्धकेशेषु ॥ पुन्नागतरौ ॥ बकुलवृक्षे ॥ नागकेसरद्रुमे ॥ न । हिङ्गुनि ॥ नागकेसरपुष्पे ॥ कासीसे ॥ स्वर्णे ॥ पुं न । किञ्जल्के ॥ रभसस्तु हिङ्गुनि द्वयोरित्याह ॥ केजले सरति । सृगतौ । पचाद्यच् । हलदन्तादित्यलुक् । प्रशस्ताः केसराः अस्य । अर्शआद्यच्वा ॥

केसरवरम् । न । कुङ्कुमे ॥

केसराम्लः । पुं । बीजपूरे ॥

केसरिका । स्त्री । सहदेवीलतायाम् ॥

केसरी । पुं । तुरगे ॥ सिंहे ॥ पुन्नागे ॥ नागकेसरे ॥ रक्तशिग्रौ ॥ बीजपूरे ॥ वानराणां यूथपते विशेषे । हनूमतः पितरि ॥ केसराः स्कन्धबालाः सन्त्यस्य । अतइनिः ॥

केसरिसुतः । पुं । हनूमति ॥ इतिहेमचन्द्रः ॥

कैकयः । पुं । देशविशेषे । ब्रह्मपुत्रात्कामरूपान्मध्यभागे तु कैकयः ॥

कैकेयः । पुं । अश्वपतिनृपे ॥ केकयस्याऽपत्यम् । जनपदशब्दात् क्षत्रियादञ् । केकयमित्रयुप्रलयानां यादेरिय इति इयादेशः । वृद्धिः ॥

कैकेयी । स्त्री । भरतमातरि ॥ केक

यस्यापत्यं स्त्री । जनपदशब्दादित्य पत्यप्रत्ययः । अतश्चेति तद्राजस्या कारस्य लुकतुन । मद्राश्वभर्गादि यौधेयादिभ्य इति प्रतिषेधात् । पूर्ववत्तया टेरियादेशः । अजन्तत्वान् ङीप् ॥

कैङ्कर्य्यम् । न । किङ्करत्वे । दासत्वे ॥

कैटजः । पुं । कुटजवृक्षे ॥

कैटभः । पुं । दैत्यविशेषे ॥

कैटभजित् । पुं । विष्णौ ॥ कैटभ मसुरविशेष मजैषीत् । जिजये । सत्सूद्विषद्रुहदुहयुजविदभिदच्छिद-जिनीराजामुपसर्गेपिक्विप् इति क्विप् ॥

कैटभहा । पुं । विष्णौ ॥

कैटभा । स्त्री । दुर्गायाम् ॥

कैटभारिः । पुं । विष्णौ ॥

कैटभी । स्त्री । कात्यायन्याम् ॥

कैटभेश्वरी । स्त्री । दुर्गायाम् ॥ तथाचदेवीपुराणम् । कैटभस्तु वशं कृत्वागृहीता तत् पुरीयथा । तेन सा गीयते देवी पुराणे कैटभेश्वरीति ॥

कैटर्य्यः । पुं । कट्फले । पूतिकरञ्जे । कायफल इतिभाषा ॥ मदनवृक्षे ॥ केटनम् । किट्वासे । यञ् । केटं राति अतितितत्वात् । रा० । का तद्‌तिकः । यत् ० ष्यञ् ॥ निम्बे ॥ महानिम्बे ॥

कैडर्य्यः । पुं । कट्फले ॥ कटभीवृक्षे ॥

कैतकम् । न । केतकीपुष्पे ॥ केवडाभिधेगन्धजले ॥ चि । केतकी सम्बन्धिनि ॥

कैतवम् । न । कपटे ॥ द्यूते ॥ वैदूर्यमणौ ॥ धत्तूरफलपुष्पादौ ॥ खलतायाम् ॥ कितवस्यकर्म्म । यु० अण्॥

केदारः । पुं । शालिधान्ये ॥ न । क्षेत्रसमूहे ॥ केदारजले ॥ केदारं चेत्र मुद्दिष्टं केदारं तज्जलं स्मृतम् । केदारं वार्य्यभिष्यन्दि मधुरं गुरुदोषकृत् ॥ केदारक्षेत्रम् । मञ्ज ॥

कैदारकम् । न । केदारसमूहे । क्षेत्रे ॥ केदाराणांसमूहः । केदाराद्यञ्चेति वुञ् ॥

कैदारिकम् । न । कैदारके ॥ केदाराणांसमूहः । ठञ् कवचिनश्च । चात्केदारादपि ॥

कैदार्य्यम् । न । क्षेत्रे । कैदारिके ॥ केदाराणां समूहः । केदाराद्यञ्चेति यञ् ॥

कैरवः । पुं । कितवे ॥ रिपौ ॥ न । कुमुदे । शुक्लोत्पले ॥ के जले रौति । रुशब्दे । पचाद्यच् । तत्पुरुषेकृतीत्यलुक् । केरवस्य हंसस्येदंप्रिय

म् । तस्येदमित्यण् ॥

कैरविणी । स्त्री । कुमुदिन्याम् । कुमुदयुक्तपुष्करिण्यादौ ॥ कैरवाणिसन्त्यस्याम् । पु०इनिः ॥

कैरविणीखण्डम् । न । कैरविणीनां समूहे ॥ कमलादिभ्यःखण्डः ॥

कैरविणीफलम् । न । बेरा इतिप्रसिद्धे कुमुदबीजे ॥

कैरवी । पुं । चन्द्रे ॥

कैरवी । स्त्री । चन्द्रिकायाम् ॥ मेथिकायाम् ॥

कैराटः । पुं ।
कैराटकः । पुं । } स्थावरविषविशेषे ॥

कैरातः । पुं । बलवत्पुरुषे । दैर्घ्यहे ॥ न । शम्बरचन्दने ॥ पुं । न । भूनिम्बे ॥

कैरालम् । न । विडङ्गे ॥

कैराली । स्त्री । विडङ्गायाम् ॥

कैलासः । पुं । शिवकुबेरयोः स्थाने । कुबेराचले । गणपर्वते ॥ केजले लासो लसन मस्य केलासः स्फटिकः । बलदन्तादिभ्यलुक् । तस्यायम् । कैलासः । अण् ॥ यद्वा । केलीनां समूहः कैलम् । तस्यसमूहइत्यण् । तेनास्यतेऽत्र । आसउपवेशने । हलश्चेतिघञ् ॥ आशाचक्राद्दूरं ॥ कैलासास्थंतदूरंतु बोधिनीत्युतदूरंत इत्युक्तेः ॥

कैलासनिकेतनः । पुं । शिवे । पार्वतीपतौ ॥

कैलासौकाः । पुं । कुबेरे ॥ शिवे ॥

कैवर्त्तः । पुं । धीवर इतिप्रसिद्धे वेश्यागर्भे चत्रियैारसजाते । धीवरे । दासे । शालिके ॥ के जले वर्त्तन्ते । इत० । पचाद्यच् । कैवर्त्तानां मत्स्यानामयं घातकः । तस्येदमित्यण् ॥

कैवर्त्तमुस्तम् । न ।
कैवर्त्तमुस्तकम् । न । } कैवर्त्तीमुस्तके । कुटन्नटे ॥

कैवर्त्तिका । स्त्री । मालवप्रसिद्धेलताविशेषे । वल्लरञ्जायाम् । सुरञ्जायाम् । सुभगायाम् ॥

कैवर्त्तिमुस्तकम् । न । कैवर्त्तीमुस्तके ॥

कैवर्त्ती । स्त्री । परिपेलवे ॥ कैवर्त्तभार्यायाम् ॥

कैवर्त्तीमुस्तकम् । न । कुटन्नटे । वानेये । परिपेलवे । मोथा इतिभाषा ॥ इदन्तु वितुन्नकनाम्नो द्रव्यस्य मुस्ताकृतित्वमिति भावप्रकाशः ॥ कैवर्त्तानां जातिः कैवर्त्ती । कैवर्त्त्या मुस्तकम् ॥

कैवल्यम् । न । निर्वाणे । अत्यन्तदुःखत्रयप्रशमनलक्षणायाम्मुक्तौ ॥ आत्यन्तिकोहि दुःखत्रयाभावःकैवल्यम् । तच्च पुरुषस्य स्वाभाविका

देवाऽचैगुण्यात् सुखदुःखमोक्षरहितत्वात् सिद्धम् ॥ केवलस्यभावः। ब्राह्मणादित्वात् ष्यञ् ॥

कैशिकम्। न। कैश्ये। केशसमूहे ॥ केशानांसमूहः। अचित्तहस्तिधेनोष्ठक् ॥ पुं। शृङ्गाररसे ॥

कैशिकी। स्त्री। नाटकवृत्तिविशेषे ॥ यथा। भारती सात्वती कैशिक्यारभट्यौ च वृत्तयइति ॥

कैशोरम्। न। किशोरावस्थायाम्। दशवर्षोत्तरमापञ्चदशाब्दपर्य्यन्तावस्थायाम् ॥ कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि। कैशोरमापञ्चदशादित्युक्तः ॥ किशोरस्यकर्म भावोवा। प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योञ् ॥

कैश्यम्। न। कैशिके। केशवृन्दे ॥ केशानांसमूहः। केशाश्वाभ्यांयञ्छावन्यतरस्याम् ॥

कोकः। पुं। चक्रवाके ॥ वृके ॥ ज्येष्ठ्याम् ॥ खर्ज्जूरीवृक्षे ॥ दर्दुरे ॥ विष्णौ ॥ कोकते। कुकआदाने। पचाद्यच् ॥

कोकडः। पुं। बिलेशये मृगविशेषे। चमरपुच्छे। लोमशे। धूम्रवर्णके ॥ सम्मांसंश्वासानिलकासहरम् पित्तदाहकरञ्चेतिराजनिर्घण्टः ॥

कोकदेवः। पुं। कपोते ॥

कोकनदम्। न। रक्तकुमुदे ॥ रक्तपद्मे ॥ कोकाँश्चक्रान् नदति। णदअव्यक्तेशब्दे। अन्तर्भावितण्यर्थः। मूलविभुजादित्वात् कः ॥

कोकनदच्छविः। पुं। शोणे। ईषद्रक्ते। रक्तोत्पलाभे ॥ त्रि। तद्वति ॥ कोकनदंरक्तोत्पलम्तद्दिवछविर्यस्य ॥

कोकबन्धुः। पुं। सूर्य्ये ॥ कोकस्यबन्धुरिव ॥

कोकाग्रः। पुं। समष्ठिले क्षुपविशेषे ॥

कोकाहः। पुं। श्वेताश्वे। कर्के ॥ काकाह इतिक्वचित्पाठः ॥

कोकिलः। पुं। पिके। वनप्रिये। ताम्राक्षे। मधुगायने ॥ अङ्गारे ॥ इति त्रिकाण्डशेषः। कोकते। कुकआदाने। सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्यइलच् ॥

कोकिला। स्त्री। पिकभार्य्यायाम् ॥ अजादित्वात्टाप् ॥

कोकिलाक्षः। पुं। तालमखाना इति प्रसिद्धे वस्तुनि। इक्षुगन्धायाम् ॥ कोकिलोऽक्षियस्य। कोकिलशब्दः कोकिलाक्षसदृशे लाक्षणिकः। अक्ष्णोऽदर्शनादित्यच् ॥

कोकिलावासः। पुं। आम्रवृक्षे ॥

कोकिलेक्षुः। पुं। कृष्णवर्णेक्षौ ॥

कोकिलेष्टा। स्त्री। महाजम्ब्वाम् ॥

कोकिलोत्सवः । पुं । आम्रवृक्षे ॥

कोङ्कः । पुं । देशविशेषे ॥

कोङ्कणः । पुं । कोंकन इतिप्रसिद्धे देशे ॥ सह्याद्र्यङ्गं समारभ्य कोटिदेशस्य मध्यगे । समुद्रप्रान्तदेशोऽपि कोङ्कणः परिकीर्त्तितः ॥ न । शस्त्रभेदे ॥

कोङ्कणासुतः । पुं । परशुरामे ॥

कोचः । पुं । सङ्करजातिविशेषे ॥ स तु मांसच्छेदिगर्भे तीवरस्यौरसजातः । इतिब्रह्मवैवर्त्तपुराणम् ॥

कोजागरः । पुं । आश्विनपौर्णमास्याम् । द्यूतपूर्णिमायाम् । कौमुद्याम् ॥

कोठः । पुं । दुर्गे । कुटे । गढ इति भाषा ॥ कुटनम् । कुट० । भावे घञ् ॥

कोटकः । पुं । घरामि राज इति भाषा प्रसिद्धे गृहकारके ॥ स तु कुलकार्यां गर्भे अट्टालिकाकारस्यौरसजातः ॥ इति ब्रह्मवैवर्त्तपुराणम् ॥

कोटरः । पुं । न । वृक्षस्थितगह्वरे । निष्कुहे ॥ कोटंराति । रा० । आत इतिकः ॥

कोटवी । स्त्री । चण्डिकायाम् । दुर्गायाम् ॥ नग्निकाम् । विवसनायांस्त्रियाम् ॥ कोटं वाति । वा० । आतो नुपेतिकः ॥ गौ० ङीष् ॥

कोटिः । स्त्री । धनुषोऽग्रभागे ॥ अश्रौ । अस्त्रादेरग्रभागे ॥ परीक्षकपरिकल्पितनिर्णयनिरूपणीये । प्रावादुकशास्त्रनिर्णयान्ते ॥ उत्कर्षे । प्रकर्षे ॥ दशप्रयुते । शतलक्षसङ्ख्यायाम् । १०००००० ॥ पिडङ्गशाक इति गौड प्रसिद्ध शाके । पृक्कायाम् ॥ कूटयते ऽनया वा । कूटआप्रदाने । चु० । अचरः ॥ कोटयति कोट्यते वा । कुटकौटिल्ये । इः ॥ कुट्यते वा । इञजादिभ्यइतीञ् । सर्वधातुभ्यइतीन् वा । वा० गुणः ॥

कोटिकः । पुं । शक्रगोपकीटे ॥

कोटिजित् । पुं । कालिदासे । मेधारुद्रे ॥

कोटिपात्रः । पुं । केनिपातके । अरित्रे इति हेमचन्द्रः ॥

कोटिरः । पुं । नकुले ॥ शक्रे । इन्द्रे ॥ इन्द्रगोपकीटे ॥

कोटिवर्षम् । न । बाणासुरपुरे ॥

कोटिवर्षा । स्त्री । पिडिङ्गशाक इति गौडप्रसिद्ध पृक्कायाम् । आसारक इतिभाषा ॥ कोटिभिरग्रैर्वर्षति । मधु । वृष सेचने । अच् ॥

कोटिशः । पुं । लोष्टभेदने । हेंगा इति भाषा ॥ कोटिना अग्रेण श्यति । शो तनूकरणे । सुपीतिकः ॥ कोटिर

स्यान्नीति वा । लोमादित्वात् शः ॥
कोटिश ४। म । कोटीकोटौ ॥
कोटीरः । पुं । किरीटे ॥ जटायाम् ॥
कोटीवर्षम् । न । बाणासुरपुरे ॥
कोटीशः । पुं । कोटिशे ॥ ०
कोट्टः । पुं । पुरस्य दुर्गे । राजधान्याम् ॥ न । दुर्गे । किल्ला गढ इतिभाषा ॥ कुट्टच्छेदनभर्त्सनयोः अच् ॥
कोट्टवी । स्त्री । मुक्तकेश्याम् नग्नायां स्त्रियि ॥ याम्बवासामुक्तकेशी कोट्टवीनग्निकाचमेतिजटाधरः ॥ दुर्गायाम् ॥ बाणासुरमातरि ॥ कुट्टनम् । कुट्ट० । घञ् । वा० गुणाभावः । कोट्टंवाति । वा०। आत इति कः । गौरादित्वात् ङीष् ॥
कोट्टवीपुरम् । न । बाणासुरपुरे॥ कोट्टव्याःपुरम् ॥
कोट्टारः । पुं । नागरे ॥ कूपे ॥ पुष्करिण्याः पाटके ॥ कुट्यते। कुट्टच्छेदने प्रतापनेवा । वा० आरन् गुणश्च ॥
कोठः । पुं । चक्राकारे कुष्ठरोगे । मण्डलके । त्वग्दोषे ॥ अस्यलक्षणम् । असम्यग्वमनोदीर्णपित्तश्लेष्मविनिग्रहैः । मण्डलानि सकण्डूनि रागवन्ति बहूनि च ॥ उत्कोठः सानुबन्धस्तु कोठ इत्यभिधीयतेइति ॥ अन्यच्च । वरटीदष्टनिकाशः कण्डूमान् लो



हितोऽस्त्रकफपित्तात् । चर्मिकोर्त्पादविनाशः कोठ इति निगद्यते तज्ज्ञैरिति ॥ कुठति । कुठिप्रतिघाते । अच् । आगमशास्त्रस्यानिष्यन्दाबानुम् ॥
कोठरः । पुं । अङ्कोठवृक्षे ॥
कोठरपुष्पी । स्त्री । वृद्धदारके ॥
कोणः । पुं । वाद्यप्रभेदे ॥ वीणादीनां वादने । येन धनुषाकृतिना वीणादिर्वाद्यते तस्मिन् । नेपालभाषया गञ्जा इति ख्याते वाद्यवादनकाष्ठे । बाजानेकीलकडी इति भाषा ॥ गृहादीनामेकदेशे । कोना इतिभाषा ॥ अस्त्रौ । अस्त्रादीनामग्रभागे । पाल्याम् ॥ लगुडे ॥ मङ्गलग्रहे ॥ भौमे ॥ द्वयोर्दिशोर्मध्यभागे । विदिशि ॥ लग्नान्नवमपञ्चमयोः ॥ शनौ ॥ कुण्यते ऽनेन । कुणशब्दोपकरणयोः । हलश्चेति घञ् । कुणत्यनेनवा । करणेऽप् ॥
कोणकुणः । पुं । उत्कुणे । उद्दंशे । उडुस खटमल मङ्कुण इत्यादिभाषाप्रसिद्धे मत्कुणे
कोथः । पुं । कथो इति गौड भाषा प्रसिद्धे नेत्ररोगविशेषे ॥ त्रि । मथिते ॥ शटिते ॥ यथा । मांसकोथः मांसगलनमिति ॥

कोदण्डः । पुं । भ्रुवि । भ्रूलतायाम् ॥ न । चापे । धनुषि ॥ पुं । न । नीवृद्विशेषे ॥ कोटति । कुटअव्यक्तभाषणे । वा० अण्डन् । पृषोदरादिः॥ कौतेर्विच् । कोर्दण्डोऽस्यवा ॥

कोद्रवः । पुं । धान्यप्रभेदे । कोरदूषे । कोदो इति भाषा ॥ कोद्रवो वातलो ग्राही हिमःपित्तकफापहः ॥ कौतिशब्दतेवा । कुशब्दे कुङ्शब्दे वा । विच् । द्रवति । द्रुगतौ । अच् । कोश्चाऽसौ द्रवश्च ॥ केन वायुना द्रवतीति वा । पृ० ॥

कोपः । पुं । क्रोधे ॥ अस्यनिवृत्तेरुपाय उक्तः शास्त्रे । यथा । अपकारिणि कोपश्चेत् कोपे कोपः कथं न ते । धर्मार्थकाममोक्षाणां प्रसह्य परिपन्थिनीति ॥ अपिच । रिपौबन्धौ स्वदेहे च समैकात्म्यं प्रपश्यतः । विवेकिनः कुतः कोपः स्वदेहावयवेष्विवेति ॥ कोपनम् । कुपक्रोधे । घञ् ॥

कोपनः । त्रि । कोपविशिष्टे । क्रोधिनि ॥ कुप्यति तच्छीलः । क्रुधमण्डार्थेभ्यश्चेतियुच् ॥

कोपनकः । पुं । चोरनामगन्धद्रव्ये ॥

कोपना । स्त्री । कोपवत्यांस्त्रियाम् । भामिन्याम् ॥ कुप्यतितच्छीला । युजन्तात्टाप् ॥

कोपलता । स्त्री । कर्णस्फोटायांलतायाम् । विषपर्ण्याम् । त्रिपुटायाम् ॥

कोपितः । त्रि । क्रोधमापिते । सञ्जातकोपे ॥ वा० इतच् ॥

कोपी । पुं । जलपारावते ॥ त्रि । क्रोधने ॥ अवश्यं कुप्यति । कुप क्रोधे । आवश्यकेतिणिनिः ॥

कोपोपायः । पुं । दण्डे ॥ कोपस्यउपायः ॥

कोमलम् । न । जले ॥ त्रि । अकठिने । मृदौ । मृदुले ॥ मनोज्ञे ॥ काम्यके । कमुकान्तौ । वा० कलच् । अतउत्वम् ॥ कौति वा । कुशब्दे । वृषा० कलः तस्यमुट् । वा० गुणः ॥

कोमलकम् । न । कोमलार्थे ॥ मृणाले ॥

कोमलवल्कली । स्त्री । लवल्याम् ॥

कोमला । स्त्री । चीरिकायाम् ॥ वृत्त्यनुप्रासघटकवृत्तिभेदे ॥

कोमासिका । स्त्री । जालिकायाम् । फलकोजाली इतिभाषा ॥

कोयष्टिः । पुं । जलकुक्कुभे खगे ॥ कं जलं यष्टिरिवास्य । पृ० ॥

कोयष्टिकः । पुं । कोंडापाखी इतिगौडभाषाप्रसिद्धे टिट्टिभखगे ॥ स्वार्थे कन् ॥

कोरकः । पुं । न । कलिकायाम् । कुड्मले ॥ विकारकोरकाणीतिमाघः

। कोरकोऽस्त्री कुड्मले स्यात् कक्कोलकमृणालयोरिति मेदिनिकरः। कोरकन्तु कुड्मले स्यादिति हैमोऽनेकार्थे। तथाच कलिकाकोरकः पुमानित्यमरस्य प्रमादः। प्रायिकाभिप्रायो वा॥ कक्कोलके॥ मृणाले॥ चोरनामगन्धद्रव्ये॥ कुर्य्यते। कुर शब्देतारे। कृ२बुन्॥ यद्वा। कोलति। कुलसंस्याने। ण्वुल्। रलयोरैक्यम्॥

कोरङ्गी। स्त्री। क्षुद्रैलायाम्॥ पिप्पल्याम्॥ कुरति। कुर०। बाहुलकादङ्गच्। गौरादि ङीष्॥

कोरदूषः। पुं। कोद्रवे॥ कोरं दूषयति। दूषवैकृत्ये। णिच्। अण्। कर्मण्यण्॥

कोलः। पुं। अङ्कपाल्याम्॥ शनौ॥ चित्रे। चीता इतिभाषा॥ वराहे। शूकरे॥ उत्सङ्गे। क्रोडे। भुजान्तरे॥ कोंगा कोंगो इतिच भाषाप्रसिद्धे। प्लवे। भेलके। अल्पनौकायाम्। उडुपे॥ अस्त्रविशेषे। टङ्कदयमाने॥ वर्णसङ्करजातिविशेषे। स तु लेटात् तीवरकन्यायां जातः। इति ब्रह्मवैवर्त्तपुराणम्॥ श्मश्रुधारिणि म्लेच्छजातिविशेषे॥ सच पूर्व्वं क्षत्त्रिय आसीत् सगरेणास्य वेद यागादावनधिकारीकृतः॥ इतिहलायुधः॥ देशविशेषे॥ न। चव्ये॥ मरिचे॥ तोलकपरिमाणे॥ वदरे। कोलफले॥ कोल्याःफलम्। अणु लुकौ। लुक् तद्धितलुकीतिङीषोलुक्॥ सौवीरात्तनु सम्यक्कं मधुरं कोलमुच्यते। कोलन्तु वदरं दाहि रुच्यमुष्णञ्च वातहृत्। कफपित्तकरञ्चापि गुरु सारक मीरितम्॥ कोलति। कुलसंस्याने। ज्वलितीतिणः॥ यद्वा। कोलतिपीनत्वात्। अच्॥ यद्वा। कोलन्त्यङ्गान्यत्र। हलश्चेतिघञ्॥

कोलकः। पुं। अङ्कोठवृक्षे॥ बहुवारवृक्षे॥ न। काँकला इतिगौडभाषाप्रसिद्धे गन्धद्रव्यविशेषे। कक्कोले॥ मरिचे॥ कोलति। कुल०। ण्वुल्। कृञादिभ्यो वुन्वा॥

कोलकन्दः। पुं। महाकन्दविशेषे। कमिशे। पुटकन्दे॥

कोलकर्क्कटिका। स्त्री। मधुखर्ज्जूरिकायाम्॥

कोलदलम्। न। नखीनामगन्धद्रव्ये॥ कोलस्य वदर्य्या इव दलम्॥

कोलनासिका। स्त्री। वह्निशीवृक्षे॥

कोलपुच्छः। पुं। कङ्कपक्षिणि॥

कोलमूलम्। न। पिप्पलीमूले॥

कोलम्बकः । पुं । वीणायः काये । तन्त्रीहीने अलाबूदण्डककुभसमुदाये ॥ कोलति । कुल० । बाहुलकादम्बच् । ततः संज्ञायां कन् । ओष्ठ्य मध्यः ॥

कोलवल्ली । स्त्री । वशिरे । करिपिप्पल्याम् । कोलवद्वल्ली तत्तुल्यरोमत्वात् ॥

कोलवालुकम् । न । कङ्कुष्ठे ॥

कोलशिम्बिः । स्त्री । आलकुशीति गौडभाषाप्रसिद्धे लताविशेषे । शूकरपादिकायाम् । कोलशिम्बिः समीरघ्नी गुर्व्युष्णा कफपित्तकृत् । शुक्राग्निसादकृद्बल्या रुचिकृद्बद्धविट् गुरुः ॥

कोला । स्त्री । पिप्पल्याम् ॥ चव्यभेषजे ॥ कोलिद्रुमे ॥ सुरथस्य राजधान्यन्तरे ॥ अस्त्रविशेषे ॥ कोलति । कुल० । ज्वलितीति णः । पचाद्यच्वा । टाप् ॥

कोलाञ्चः । पुं । देशविशेषे ॥

कोलापुरम् । न । दक्षिणदेशप्रसिद्धेलक्ष्मीदेव्याः स्थानविशेषे ॥

कोलाविध्वंसी । पुं । कोलावासिनि ॥ कोलां विध्वंसितुं शीलमस्य । विशब्देन धातोरन्यार्थकरणम् ॥ पर्वतवासिनिम्लेच्छविशेषे ॥ एवंपालयतस्तस्य म्लेच्छाः पर्वतवासिनः । कोलाविध्वंसिनः प्रांशाः पृथ्वीग्रहणतत्परा इति देवीभागवतोक्तेः । अत्र नामैकदेशेनाभिग्रहणमिति न्यायात् कोलाशब्दः कोलाहलवाचकः । तथाच कोलाहलेनान्यायेनैव शत्रुराज्यविध्वंसनशीलाः मतुयुद्धनीत्यवलम्बिन इत्यर्थ इति भागवतव्याख्याने नीलकण्ठशैवः ॥ यद्वा । कोलां काञ्चित् सुरथस्य राजधानीं विध्वंसितुमुपमर्द्दितुं शीलमस्य णिनिः ॥

कोलाहलः । पुं । कलकले । बहुविधदूरगाव्यक्तध्वनौ ॥ कुल० । कोलनं कोलः एकीभावः तमाहलति । हल विलेखने । अच् ॥ गिरिवि० ॥

कोलिः । पुं । स्त्री बदर्याम् ॥ कोलति । कुल० । इन् ॥

कोली । स्त्री । बदर्याम् । बेर इति प्रसिद्धे वृक्षे ॥ कोलति घनीभवति । कुल० । अच् । गौ० ङीष् ॥

कोविदः । पुं । धीरे । पण्डिते । विदुषि ॥ विवेकिनि ॥ कौति धर्मादि । कुशब्दे । कवते वा । कुङ्शब्दे । विच् । गुणः । कोर्वेदस्य विदो वेत्ता । इगुपधेति कः ॥ कवि वेदे विदा यस्य वा ॥

कोविदारः । पुं । रक्तकाञ्चनारे । चमरिके । कचनार इति भाषा ॥ को

विदारकलिकातिकोमला तल्लसिद्ध
तिलतैलपाचिता । हिङ्गुवासवसु
वासवासिता केशवारनुचिताऽति
लोभदा ॥ काञ्चनारः कषायःस्या
दुष्णः शीतलरो लघुः । रूक्षः पि
त्तास्रजित् प्रदरग्रहणीत्ववकासनुत् ॥
कुम् भूमिं विद्दणाति । दॄ विदारणे ।
कर्मण्यण् । पृषोदरादिः ॥

कोशः । पुं । न । कुड्मले ॥ चषके ।
पानपात्रे ॥ दिव्ये ॥ खड्गपिधाने ॥
जातिकोषे । जायफल इति भाषा ॥
अर्थसङ्घाते । अर्थचये ॥ पेश्याम् ।
अण्डे ॥ अण्डकोषे ॥ शब्दादिसङ्ग्रहे
॥ योनौ ॥ शिम्बायाम् ॥ गोपनगृ
हे । गुप्तिस्थाने ॥ हिरण्यादिनिः
क्षेपाधारे । मञ्जूषायाम् ॥ आच्छा
दके ॥ अन्नमयप्राणमयमनोमयवि
ज्ञानमयानन्दमयेष्वात्मनः शरीरे
षु ॥ पनसादिफलस्यान्तःस्थावय
वे । कोया इति भाषा ॥ शब्दान्तर
संयोगे गोलकश्च कोषं यथा सूत्र
कोषः नेत्रकोषः इति ॥ कुश्यते ।
कुश संश्लेषणे । अकर्त्तरि चेति घञ् ॥
अकुप्ये । हिरण्ये । कृताकृतयोर्हे
मरूप्ययोः ॥

कोशकारः । पुं । कुशियार इति प्रसि
द्धे इक्षुविशेषे पथ्याख्यगुणाम् मुद्दे



न्यमध्ये ॥ कोशं करोति । कर्म
ण्यण् ॥

कोशकृत् । पुं । कोषकाराख्ये इक्षु
भेदे ॥

कोशफलम् । न । कक्कोले ॥ कोशे फल
मस्य ॥

कोशफला । स्त्री । त्रपुष्याम् ॥ महाको
शातक्याम् ॥

कोशलः । पुं । अयोध्यायाम् । स
रयूकूले निविष्टे जनपदविशेषे ॥
कुश्यति । कुश संश्लेषणे । बोपदेव
कृते सात्वाद्याः । वृषादित्वात्
कलः । बाहुलकाद्गुणः ॥

कोशला । स्त्री । अयोध्यानगर्याम् ।
साकेते ॥ टाप् ॥

कोशलात्मजा । स्त्री । श्रीरामचन्द्रस्य
मातरि । कौसल्यायाम् ॥ इति शब्द
रत्नावली ॥

कोशलिकम् । न । घूस इति प्रसिद्धे उत्
कोचे ॥ इति हेमचन्द्रः ॥

कोशस्थितः । पुं । कोशस्थे जलचराख्ये
गणे ॥

कोशाङ्कम् । न । वृक्षविशेषे । वहुमूले
। इत्कटे ॥ इतिधारावली ॥

कोशातकः । पुं । कठे ॥ कोशमतति ।
अत० । कुन् ॥

कोशातकी । पुं । वाणिज्ये ॥ वणिजि ॥

न । कर्पूरतुल्यगन्धद्रव्यविशेषे । कक्कोले ॥ कोषे फलमस्य ॥

कोषफला । स्त्री । पीतघोषायाम् ॥

कोषवृद्धिः । स्त्री । अर्थोघवृद्धौ ॥ कुरण्डे ॥

कोषशायिका । स्त्री । छुरिकायाम् ॥

कोषस्थः । पुं । जलचरजीवविशेषाणाङ्गणे ॥ यथा । शङ्खः शङ्खनकश्चापि शुक्तिशम्बूककर्कटाः । जीवा एवंविधाश्चान्ये कोषस्थाः परिकीर्त्तिता इति ॥ कोषस्थामधुराः स्निग्धाः पित्तवातहरा हिमाः । वृंहणा बहुवर्चस्का दृष्या श्च बलवर्द्धना इति ॥

कोषातकः । पुं । वचे । केशे ॥ काठे ॥कोषमतति । अत० । कुन् ॥

कोषातकी । स्त्री । श्वेतघोषे । घोषके ॥ ज्योत्स्निकायाम् । पटोल्याम् ॥ कोषमतति । अत० । कुन् । गौरादित्वान् ङीष् ॥

कोषाम्रम् । न । केश्रोडा इतिगौडभाषाप्रसिद्धे फलविशेषे ॥ अस्यगुणाः । कफवायुनाशित्वम् अग्निदीपनत्वम् मलवद्धताकारित्वञ्चेति ॥

कोषी । पुं । आम्रवृक्षे ॥

कोषी । स्त्री । पादुकायाम् ॥

कोष्ठः । पुं । कुसूले ॥ गृहमध्ये ॥ कुक्षे र्मध्ये ॥ यथा । स्थानान्यामाग्नि पक्कानां मूत्रस्य रुधिरस्य च । हृद्वण्डुकः पुप्फुसश्च कोष्ठ इत्यभिधीयते इति ॥ त्रि । आत्मीये । निजे ॥ कुष्यते । कुष० । उषिकुषिगार्त्तिभ्यस्थन्निति थन् ॥

कोष्ठाकः । पुं । पर्वतान्तरे ॥

कोष्ठागारम् । न । धान्यादिकोष्ठके । कोठार इतिभाषा ॥

कोष्णम् । न । ईषदुष्णे । मन्दोष्णे ॥ त्रि । तद्वति ॥ ईषदुष्णाद् कोष्णम् । ईषदर्थे इतिकादेशः ॥

कोसलः । पुं । सरयूतीरनिविष्टे जनपदविशेषे । अयोध्यानगर्याम् ॥ कुस्यति । कुससंश्लेषणे । वृष्यादिकोर्नित्रिबादः । बाहुलकात् कलप्रत्ययोगुणश्च ॥ यद्वा । कोष्णिम्यां सलति गच्छति । सलगतौ । पचाद्यच् । पृषोदरादित्वात् कुशब्दस्य गुणः ॥

कोहलः । पुं । वाद्यप्रभेदे ॥ नाट्यशास्त्रप्रवक्तरि मुनिविशेषे ॥ मद्ये इति हेमचन्द्रः ॥

कौक्कुत्यम् । न । अनुतापे ॥ अयुक्तकरणे ॥

कौक्कुटिकः । पुं । दाम्भिके ॥ अदूरप्रेरितेक्षणे । भिक्षौ ॥ कुक्कुटीमाया पादपातस्य । तीपश्यति । संज्ञायां ललाटकुक्कुट्योपश्यतीतिठक् । कु

कुटीशब्देन तत्पातार्हः स्वल्पदेशो लक्ष्यते । सन्न्यासी हि कीटादिवधभीत्या पादविक्षेपपर्य्याप्तदेशपर्य्यन्तमेव चक्षुः संयम्य गच्छति ॥

कौक्कुटिकन्दलः । पुं । बोडासाँप इति गौडप्रसिद्धे सर्पविशेषे । भाण्डपुष्पे ॥ इति त्रिकाण्डशेषः ॥

कौक्षः । त्रि । कुक्षौ भवे ॥ तत्रभवः इत्यण् ॥

[illegible]यकः । पुं । असौ । खड्गे ॥ कुक्षौ भवः । कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेष्विति ढकञ् ॥

कौङ्कः । पुं ।
कौङ्कणः । पुं ।
कौङ्कुणः । पुं । कोकन इति प्रसिद्धे कोङ्कणदेशे ॥

कौटः । पुं । कुटजवृक्षे ॥ स्वतन्त्रे ॥

कौटजः । पुं । कुरैया इति प्रसिद्धे वृक्षे । कुटजे ॥ कूटोऽद्रिशृङ्गः स एव कौटः कौटे जायते स्म । सप्तम्यां जनेर्डः । न । कुटजफले ॥ कौटजन्तु लघु स्वादु मृदु ग्राहि च पित्तलम् । ज्वरहृद्रोगपित्तासृङ्मुदावर्त्तश्वयथूञ्जित् ॥ कुटजकुसुमे ॥ तच्छाकप्रकारो यथा । काञ्जिकेन मधुरेण मुहूर्त्तं स्वेदितः कुटजपुष्पगुलुच्छः । पाचितः सलवणं तिलतैले याति हि कृमुरभीवषिमल्लम् ॥ कौटजं कुसुमं ग्राहि सुस्वादु मृदु शीतलम् । लघु हृद्रोगपित्तासृङ्गुदावर्त्तज्वरं हरेत् ॥

कौटतक्षः । पुं । स्वकर्मजीविनि स्वाधीने निजालयस्थे तक्षणि ॥ कुट्याम्भवः कौटः स्वतन्त्रः स चासौ तक्षा च । ग्रामकौटाभ्यां तक्ष्ण इति टच् समासान्तः ॥

कौटल्यः । पुं । वात्स्यायनमुनौ ॥

कौटसाक्षी । पुं । मिथ्यासाक्षिणि ॥

कौटिकः । त्रि । खटीक इति प्रसिद्धे मांसविक्रयजीविनि । वैतंसिके ॥ कूटेन मृगादिबन्धनयन्त्रेण चरति । चरतीति ठक् ॥

कौटिलिकः । पुं । व्याधे ॥ कर्म्मारे ॥ कुटिलिकया हरति मृगान् अङ्गारान् वा । अणुकुटिलिकायाः इत्यण् ॥

कौटिल्यम् । न । अपसरणे ॥ चाणक्यमुनौ ॥ कुटिलतायाम् ॥

कौडविकः । त्रि । कुडवपरिमितव्रीह्यादिवापयोग्ये क्षेत्रे ॥ कुडवस्य वापः । तस्य वाप इति ठञ् ॥ पाचविशेषे ॥ कुडवं सम्भवति । सम्भवत्यवहरति पचतीति ठञ् । कुडवं स्वस्मिन् समावेशयतीत्यर्थः । टिड्ढाणञिति ङीपि कौडविकी ब्राह्मणी । कुडवमुपसंहरति पचति वेत्यर्थः ॥

 

वियोगेन प्रकृतिरूपंनिपात्यते ॥ कौसल्यादयस्त्वा त्वयमध्यापि बोध्याः ॥

कौसीद्यम् । न । आलस्ये । तन्द्रायाम् ॥ कुसीदस्यभावे ॥

कौसुमम् । न । कुसुमाञ्जने । पुष्पाञ्जने ॥

कौसुम्भः । पुं । अरण्यकुसुम्भे ॥ न । शाकविशेषे ॥ यथा । कौसुम्भं कोमलं शाकं कासमर्दविमर्दितम् । पाचितं तप्तसर्पिषि सौवीरमरिचविमिश्रितम् ॥ कौसुम्भं कासजिच्छ्वं रूक्षमुष्णञ्च पित्तलम् । सुस्वादु मधुरं पाके लघु रुच्यं सरं हितमिति ॥ त्रि । कुसुम्भपुष्परागयुक्ते । कसुंभा कसुंभी इति भाषा ॥ कुसुम्भेन रक्तम् । तेनरक्तं रागादित्यण् ॥ तस्येदमित्यण् वा ॥

कौसृतिकः । त्रि । मायाकारे ॥ कुसृत्याचरति । ठक् ॥

कौस्तुभः । पुं । विष्णोर्मणिप्रभेदे ॥ यथा । आत्मानमस्य जगतो निर्लिप्तमगुणामलम् । बिभर्त्ति कौस्तुभमणिस्वरूपं भगवान् हरिरिति विष्णुपुराणम् ॥ कुत्सितं स्तुभ्नाति स्तोभते इति कुस्तुभोऽब्धिः । तत्रभवः । अण् ॥ कुं स्तोभते इति कुस्तुभो विष्णुः । तस्यायमिति वा ॥

कौस्तुभलक्षकः । पुं । विष्णौ ॥

कौस्तुभवक्षाः । पुं । पृश्निगर्भे । विष्णौ ॥

क्रकचः । पुं । ग्रन्थिलाख्यतरौ ॥ पुं । न । करपत्रे । करवत् करौत आरा इति भाषा ॥ योगविशेषे ॥ षष्ठ्यादितिथयो मन्दा दिलोमं क्रकचः स्मृतः ॥ क्र० इति कचति । कचशब्दे । पचाद्यच् ॥

क्रकचच्छदः । पुं । केतकीवृक्षे ॥ क्रकचसदृशा च्छदाः यस्य सः ॥

क्रकचपत्रः । पुं । शाकवृक्षे ॥

क्रकचपात् । पुं । }
क्रकचपादः । पुं । } कृकलासे ॥

क्रकचपृष्ठी । स्त्री । कवयी इतिप्रसिद्धे मत्स्ये ॥

क्रकणः । पुं । कयार इतिगौडभाषाप्रसिद्धे पक्षिविशेषे । क्रकरे ॥ क्र इति कणति । कण० । अच् ॥

क्रकरः । पुं । करीरवृक्षे ॥ क्रकणे ॥ दीने ॥ क्रकचे ॥ क्रइतिकरोति । अच् ॥ क्रइतिशब्दकरणशीलः । कृञो हेतुताच्छील्येतिटः ॥

क्रतुः । पुं । यज्ञे । अग्निष्टोमादौ ॥ सोमसाध्ययागे । यूपयुक्ते यज्ञे ॥ कामः क्रतुः कर्म जन्मस्त्येषामेव

क्रमोभवेत्। तथकामक्रत्वोरभेदमा भङ्ग्याह । पुंसो या विषयापेक्षा स काम इति भण्यते ॥ स एव वर्द्धमान: सन् क्रतुत्वं प्रति पद्यते । रुचेरति शय: काम्ये विषये क्रतुरीर्यते इति ॥ सङ्कल्पे ॥ ब्रह्मण: कराज् जातेम रीच्याद्यन्तर्गते मुनिविशेषे ॥ अध्यवसाये । एवमेवनान्यथेत्य विचल प्रत्यये ॥ विश्वदेववि० ॥ करोति क्रियते वा । कृञ:कतु: ॥ इन्द्रियेषु ॥

क्रतुच्छद: । पुं । वुद्रभेदे ॥

क्रतुदोषनुत् । पुं । प्राणायामे ॥ क्रतु शब्देनेन्द्रियाणि सङ्कल्पोत्पादकत्वात्तेषांदोषा: । विहितानुष्ठानमिषिद्धाचरणाकृता: तान् नुदति उपशमयतीति क्रतुदोषनुत् । उक्तंच । दह्यन्तेध्मायमा नानां धातूनाञ्च यथा मला: । प्राणायामैस्तथा दोषा शाम्यन्तीन्द्रियगोचराइति ॥

क्रतुध्वंसी । पुं । असुरे ॥ नास्तिके ॥

क्रतुद्विट् । पुं । असुरे ॥ नास्तिके ॥ क्रतुंद्वेष्टि । द्विष अप्रीतै । सत्सूद्विषेतिक्विप् ॥

क्रतुध्वंसी । पुं । वृषाङ्के । शिवे ॥ क्रतुं दक्षयज्ञं ध्वंसयति । ध्वंसु० । सुप्यजातावितिणिनि: ॥

क्रतुपशु: । पुं । अश्वे ॥ इतिहारावली ॥

क्रतुपुरुष: । पुं । विष्णौ ॥

क्रतुभुक् । पुं । अमरे । देवे ॥ क्रतुंक्रतौ वा भुङ्क्ते । भुजपालनाभ्यवहारयो: । अन्येभ्योऽपिदृश्यते इति क्विप् ॥

क्रतुराज: । पुं । राजसूययज्ञे ॥ क्रतूनांराजा । टच् ॥

क्रतुविक्रयी पुं । क्रतुविक्रायके । मदीययागस्य फलं तव भवत्विन्त्यभिभायधनग्रहीतरि ॥

क्रतूत्तम: । पुं । राजसूययज्ञे ॥ क्रतुषुउत्तम: ॥

क्रथकैशिका: । पुं । भूम्नि । विदर्भदेशेषु ॥

क्रथनम् । न । मारणे ॥ क्रथहिंसायाम् । भावे ल्युट् ॥ मुक्तामुक्तवि ॥

क्रथनकम् । न । क्रथनार्थे । स्वार्थेक: ॥

क्रन्दनम् । न । रोदने । शोकादिनाऽश्रुपतने ॥ आह्वाने ॥ क्रदिआह्वानेरोदनेच । भावे ल्युट् ॥ योधसंरावे ॥ पुं । विडाले ॥ इतिशब्दमाला ॥

क्रन्दितम् । न । आह्वाने ॥ रुदिते ॥ युधिवीतकृतै ॥ क्रदि० । क्त: ॥

क्रम: । पुं । अनुक्रमे । नियतपूर्वापरभावात्मनि ॥ शक्तौ ॥ विधाने । कल्पे ॥ आक्रमणे ॥ चरणे । अङ्घ्रौ ॥ विततिविशेषे ॥ भिषजांमते चिकित्सायाम् ॥ क्रम्यत अनेन वा । क्रमु०

॰। घञ्। नोदात्तोपदेशेति न वृद्धिः॥ क्रामतिगच्छति वा। क्रमेः पचाद्यच्॥ पादविक्षेपे॥

क्रमकः। पुं। क्रमज्ञे॥ क्रममधीते वेद वा। क्रमादिभ्योवुन्॥

क्रमणः। पुं। चरणे॥ न। अतिक्रमे॥

क्रमनिग्रहः। पुं। हठनिग्रहादन्यस्मिन्मनसो निग्रहे॥ क्रमनिग्रहेचाऽध्यात्मविद्याप्राप्त्यादयउपायाः। अध्यात्मविद्याच दृश्यमिथ्यात्वं दृग्वस्तुनः स्वप्रकाशत्वञ्चबोधयति। तस्मिंश्च सति एतन्मनः स्वगोचरेषु दृश्येषु प्रयोजनाभावंप्रयोजनवति दृग्वस्तुनि अगोचरत्वञ्च बुद्ध्वा निरिन्धनाग्निवत् स्वयमेवोपशाम्यति। तथा चश्रुतेः। यथानिरिन्धनो वह्निः स्वयोनावुपशाम्यति। तथा वृत्तिच याच्चित्तं स्वयोनावुपशाम्यतीति॥ योनिरात्मा॥

क्रमपूरकः। पुं। वकवृक्षे॥

क्रमशः। अ। क्रमेण क्रमेणेत्यर्थे। ढवढवसे इतिभाषा॥

क्रमागतम्। त्रि। क्रमायाते। पितृपितामहादिक्रमेण प्राप्ते॥ यथा। अस्वतन्त्राः स्त्रियः सर्वाः पुत्रदासपरिग्रहाः। अस्वतन्त्र स्तच गृही यत्र तत्क्रमात् क्रमागतमिति नारदः॥

क्रमायातः। त्रि। क्रमागते॥

क्रमुः। पुं। गुवाके॥ क्रामति। क्रम॰। वाहुलकाद्उः॥

क्रमुकः। पुं। भद्रमुस्तके॥ ब्रह्मदारुणि॥ कार्पासिकायाःफले॥ पट्टिकालोध्रे॥ पूगे। गुवाके॥ क्रमति। क्रम॰। वाहुलकाद्उः। कन्॥

क्रमुकफलम्। न। गुवाके॥

क्रमुकी। स्त्री। गुवाकद्रुमे॥

क्रमेलः। पुं। उष्ट्रे॥

क्रमेलकः। पुं। उष्ट्रे। महाङ्गे॥ क्रामति। क्रम॰। विच्। एलति इलगतौ। एलयति वा। इलक्षेपे। ण्वुल्। क्रम् चासौ एलकश्च॥

क्रयः। पुं। मूल्येनपरस्माद्द्रव्यग्रहणे द्रव्यदानेनान्यस्यस्वीकारे॥ यथा। निश्चित्य वस्तु तन्मूल्यमुभयोः सम्मतौ सिते। परस्पराभाकरणं क्रयसिद्धिस्ततोभवेदिति॥ अपिच। क्रयसिद्धिरदृष्टानां गुणश्रवणतोभवेत्। विपर्यये तद्गुणानामन्यथाभवतिक्रयइतिश्रीमहानिर्वाणतन्त्रम्॥

क्रयलेख्यम्। न। भूम्यादिक्रयलिपौ। क्रयालाकवाला इतिभाषा॥ यथा। गृहंक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम्। पत्रंकारयतेयत्तु क्रयलेख्यं तदुच्यते॥ इतिवृहस्पतिः॥

क्रयविक्रयः । पुं । वाणिज्ये । बणज इति भाषा ॥

क्रयविक्रयानुशयः । पुं । क्रयविक्रययोः पश्चात्तापे । अष्टादशविवादान्तर्गत विवादविशेषे ॥ यथा । क्रीत्वा विक्रीय वा किञ्चिद्यस्येहानुशयो भवेत् । सोऽन्तर्दशाहात्तद्‌द्रव्यं दद्याच्चैवाददीत वेतिमनुः ॥

क्रयविक्रयिकः । पुं । वणिजि ॥ क्रयविक्रयाभ्यां जीवति । वसक्रयविक्रया-ट्ठन् ॥

क्रयविक्रयी । त्रि । क्रयविक्रयकर्त्तरि ॥

क्रयशीर्षम् । न । } कपिशीर्षे । प्राकाराग्रे ॥ इतित्रिकाण्डशेषः ॥
क्रयशीर्षकम् । न । }

क्रयारोहः । पुं । हट्टे । हाट इति भाषा ॥

क्रयिकः । त्रि । क्रायके । क्रेतरि ॥ क्रयजीवातौ । वणिजि ॥ क्रयेण जीवति । वसक्रयविक्रयाट्ठन् । क्रयविक्रयग्रहणं सङ्घातविगृहीतार्थम् ॥ यद्वा । क्रीणाति । डुक्रीञ् द्रव्यविनिमये । क्रियइकन् ॥

क्रयी । त्रि । क्रयकर्त्तरि । क्रेतरि ॥ क्रयोऽस्यास्ति । इनिः ॥

क्रय्यम् । त्रि । एकासादितवस्तुनि । क्रेतारोग्राहकाः क्रीणीयुरंक्रीयुरिति बुध्या आपणे प्रसारिते द्रव्ये ॥ क्रीयते । डुक्रीञ्० । अचोयत् । क्रय्यस्तदर्थे इति साधु ॥

क्रव्यम् । न । मांसे ॥

क्रव्यघातनः । पुं । मृगे ॥

क्रव्यात् । पुं । कौणपे । राक्षसे ॥ त्रि । आममांसभोजिनिगृध्रादौ ॥ क्रव्यमाममांस मत्तीतिविग्रहे क्रव्येत्तिविट् ॥

क्रव्यादः । पुं । अस्रपे । राक्षसे ॥ सिंहे ॥ श्येने ॥ क्रव्यादोऽस्रतभक्षके इत्युक्तेः शवभक्षकाग्नौ ॥ त्रि । मांसाऽशिनि ॥ मांसमत्तीतिविग्रहे अदः कर्मण्यण् । पृषोदरादित्वादुपपदस्य क्रव्यादेशः ॥ कृत्तं छिन्नं तदेव पुनर्विशेषतःकृत्तं पक्वं भुङ्क्ते इतिक्रव्यादः । कृत्तविकृत्तपक्वशब्दस्य पृ० क्रव्यादेशःइतिकाशिका ॥

क्रशितः । त्रि । कृशीकृते ॥ कृशशब्दात् तत्करोतीतिण्यन्तात् कर्मणि क्तः । णाविष्ठवद्भावे । रऋतोहलादेर्लघोरित्यृकारस्यरेफादेशः ॥

क्रशिमा । पुं । कार्श्ये ॥ कृशस्य भावः । पृथ्वादित्वादिमनिच् । रऋतोहलादेरितिरेफादेशः ॥

क्रशीयान् । त्रि । अत्यन्तकृशतरे ॥ चीणे ॥ तनीयसि ॥ अयमनयोरतिशयेनकृशः । द्विवचनविभज्येतीयसु

नि रक्तत्वमिरेफादेशः ॥

क्रान्तः । पुं । अश्वे । पथे ॥ क्रामति । क्रमु० । क्तः ॥ त्रि । आक्रान्ते ॥ निष्क्रान्ते ॥ व्याप्ते ॥ सङ्क्रान्ते ॥

क्रान्तदर्शी । त्रि । कवौ । अतीतानागताद्यशेषवस्तुदर्शिनि ॥ क्रान्तमस्मादीन्द्रियविषयतामतिक्रान्तं वस्तु सर्वविषयव्यापियथा ज्ञानतयाद्रष्टुं शीलमस्य ॥

क्रान्ता । स्त्री । बृहत्याम् ॥

क्रान्तिः । स्त्री । आक्रमे ॥ गतौ ॥ खगोलमध्यवर्त्तिसूर्यगमनार्थं तिर्य्यग्गोचरेखायाम् ॥ यथा । अयनाद्दर्क्षं यावत् यथा तिर्यक् तथापरा । क्रान्तिसंज्ञा तया सूर्यः सदापर्य्येति भावयन्निति ॥

क्रान्तिपातः । पुं । क्रान्तिमण्डले । विषुवद्वृत्तात्तुल्यैः प्रतिभागैर्द्विक्षेपोपरे यद्वर्त्ततस्मिन् ॥

क्रान्तुः । पुं । खगे । पक्षिणि ॥ क्रामति । क्रमु० । क्रमिगमिक्षमिभ्यस्तुन् वृद्धिश्च ॥

क्रामन् । त्रि । पादविक्षेपति ।

क्रायकः । पुं । क्रयिके । क्रेतरि । ग्राहके ॥ क्रीणाति । डुक्रीञ् द्रव्यविनिमये । ण्वुल् ॥ क्रयजीविनि ॥

क्रिमिः । पुं । कृमौ । कीटके । लू[illegible] ॥ लाक्षायाम् ॥ कृमिले ॥ ज्वरे ॥ रोगविशेषे ॥ अस्य निदानम् । यथा । अजीर्णभोजी मधुराम्लनित्यो द्रवप्रियः पिष्टगुडोपभोक्ता । व्यायामवर्जी च दिवाशयानो विरुद्धभोजी लभते क्रिमींश्चेति ॥ क्रामति । क्रमु० । क्रमितमिशतिस्तम्भामत इच्चेतीन् ॥

क्रिमिकण्टकम् । न । कृमिकण्टके ॥

क्रिमिघ्नः । पुं । विडङ्गे ॥ क्रिमीन् हन्ति । हन० । अमनुष्यकर्त्तृकेऽपि चेति टक् । अत्पूर्वस्येति नियमाभावत्वम् ॥

क्रिमिघ्नी । स्त्री । सोमराज्याम् ॥ टित्वान् ङीप् ॥

क्रिमिजम् । न । अगुरुणि ॥

क्रिमिजा । स्त्री । लाक्षायाम् ॥ क्रिमिभ्यो जायते । जनी० । डः ॥

क्रिमिशत्रुः । पुं । पालितामादार इति गौडप्रसिद्धे रक्तपुष्पके मन्दारे ॥ क्रिमीणां शत्रुः ॥

क्रिमिशासनः । पुं । विट्खदिरे ॥

क्रिमिशैलः । पुं । वल्मीके । नाकौ । वाँवी इति वमई इति च भाषा ॥

क्रियः । पुं । मेषराशौ ॥

क्रियमाणम् । न । वर्त्तमानदेहनिर्व्वर्त्त्यकर्म्मणि ॥

यथा । क्रियाभ्युपगमात् क्षेत्रबीजा र्थं यत् प्रदीयते । तस्येहभागिनौ दृष्टौ बीजी क्षेत्रिक एवचेतिमनुः॥

क्रियायोगः । पुं । देवाराधनतदाधार निर्माणरूपायां पुण्यक्रियायाम् ॥ अथनारदं प्रतिब्रह्मोवाच । आत्मयो गस्तु योगस्य यत्तु साधनमात्मना । यत्तुवाह्यार्थ संयोगः क्रियायोगः सउच्यते ॥ प्रधानं कारणं योगोमु क्तेर्मुनिवरोत्तम । क्रियायोगस्तुयो गस्य परमं तातसाधनमिति वह्नि पुराणम् ॥

क्रियावान् । त्रि । कर्मनिरते । कर्मठ यते ॥ क्रियास्त्यस्य । तद्स्यास्तीति मतुप् ॥

क्रियावसन्नः । त्रि । साक्ष्यादिनाप्राप्त पराजये ॥ यथा । स्वयमभ्युपपन्नोपि स्वचर्यावसितोपि सन् । क्रियावस न्नो वादेनु परंसभ्यावधारणमिति ॥

क्रियावादी । त्रि । प्रमाणवादिनि ॥ कार्यवादिनि । पुकारुफर्यादीइति भाषा ॥

क्रियासमभिहारः । पुं । पौनः पुन्ये ॥ भृशार्थे ॥ क्रियायाः क्रियाविशेष याःसमभिहारः समुच्चयः ॥

क्रियासाधनम् । न । ज्ञाने ॥ द्रव्ये ॥ ज्ञानद्रव्याभ्यां सम्यकस्य कृतः क्रिया

पञ्चा... ॥

क्रियेन्द्रियम् । न । कर्मेन्द्रिये ॥ क्रिया साधक मिन्द्रियम् ॥

क्रीडः । पुं । परीहासे ॥ इतिशब्दर त्नावली ॥

क्रीडनम् । न । खेलायाम् ॥

क्रीडनकम् । न । क्रीडासाधने । खि लौना इति भाषा ॥ नेमस्यपेताऽ खिलचापले ऽर्भके ह्यान्ते ऽभृतक्रीड नके ऽनुवर्तिनि । इति भागवत म् ॥ पुंसिक्लीबेपि यथा । इष्ट्वात्मजवि नोच्यान् स्वपान्वसति मूर्तिम् । अक्षोणां विजिगीषमिस्त्रस्तः क्री डनकामरा इति ॥

क्रीडा । स्त्री । खेलायाम् । परीहासे ॥ अवमाने । अनादरे ॥ केलिप्रकारे ॥

क्रीडाताल: । पुं । तालविशेषे ॥ एक एवप्लुतो यत्रक्रीडातालःसकथ्यते । अपरं नियमं विनेतिहामोदरोक्तेः ॥

क्रीडायानम् । न । क्रीडारथे । पु ष्परथे ॥

क्रीडारत्नम् । न । रतौ ॥

क्रीडारथः । पुं । क्रीडार्थरथे ॥ अथैपुष्प रथः क्रीडार्थीं न समराय यत् ॥

क्रीडोपस्करम् । न । क्रीडासाधने ॥

क्रीतः । त्रि । क्रयकर्मणि । कृतक्रये । मूल्यप्रदानेन गृहीते । क्रीता इ

ति भाषा ॥ दीयमानं न गृह्णाति क्रीतम् पण्यमनुशयः क्रयी । अथवा ऽस्य भवेत्क्रोधो विक्रेतुर्वा ऽप्रयच्छतः इति नारदः ॥

क्रीतकः । पुं । द्वादशपुत्रान्तर्गतपुत्रविशेषे ॥ यथा । क्रीणीयाद् यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् । स क्रीतकः सुतस्तस्य सदृशो ऽसदृशो ऽपि वेति ॥ न । क्रये ॥ विनिमये ॥

क्रीतानुशयः । पुं । द्रव्यं क्रीत्वा क्रयानुतापे ॥ यथा । क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते । क्रीतानुशय इत्येतद्विवादपदमुच्यते इति याज्ञवल्क्यः ॥

क्रुङ् । पुं । स्त्री । क्रौञ्चपक्षिणि ॥ क्रुञ्चति गच्छति । क्रुञ्च कौटिल्याल्पीभावयोः । ऋत्विगिति साधुः ॥

क्रुञ्चः । पुं । क्रौञ्चखगे ॥ क्रौञ्चगिरौ ॥

क्रुञ्चा । स्त्री । क्रौञ्चविहङ्गमायाम् ॥ अजादित्वाट्टाप ॥ वीणाभेदे इति कश्चित् ॥

क्रुञ्ची । स्त्री । वीणाभेदे ॥

क्रुद्धः । त्रि । उत्पन्नक्रोधे । क्रोधयुक्ते ॥ क्रुद्धमनसः कुतो विवेकः ॥

क्रुध्यत् । त्रि । सञ्जातक्रोधे ॥

क्रुध् । स्त्री । कोपे ॥ क्रुधकोपे । सम्पदादित्वात् क्विप् ॥

क्रुधा । स्त्री । कोपे । क्रोधे ॥ क्रुध० । सं० क्विप् । भागुरिमते टाप् ॥

क्रुश्वा । स्त्री । शृगाले ॥ क्रोशति । क्रुश० । श्वोक्क्रुशीत्यादिना क्वनिप् ॥

क्रुष्टम् । न । रोदने ॥ रावे ॥ क्रुश आह्वाने रोदने च । भावे क्तः ॥

क्रूरः । त्रि । कठिने ॥ घोरे ॥ नृशंसे ॥ परद्रोहकामिनि ॥ उष्णे ॥ पुं । भूताङ्कुशवृक्षे ॥ रक्तकरवीरे ॥ श्येनपक्षिणि ॥ कङ्कखगे ॥ कृन्तति । कृती छेदने । कृतेश्छ क्रू चेति रक् प्रत्ययो धातोः क्रूरादेशश्च ॥ न । नक्षत्रविशेषेषु ॥ पूर्वात्रयं याम्यमघे उग्रं क्रूरं कुजस्तथेत्युक्तेः ॥

क्रूरकर्म्मा । पुं । कटुतुम्बीवृक्षे । कटुतुम्बिन्याम् ॥ त्रि । भयानककार्यकर्त्तरि ॥

क्रूरगन्धः । पुं । गन्धके ॥

क्रूरगन्धा । स्त्री । कन्थार्याम् । तीक्ष्णकण्टकायाम् ॥

क्रूरदृक् । पुं । शनैश्चरे ॥ त्रि । पिशुने ॥

क्रूरधूर्त्तः । पुं । कृष्णधत्तूरके ॥

क्रूरप्रसादनः । पुं । भल्ले ॥

क्रूररावी । पुं । द्रोणकाके ॥

क्रूरलोचनः । पुं । शनौ । शनैश्चरे ॥

क्रूरसत्त्वः । पुं । व्याघ्रादौ ॥

यक्रोधविजये समर्थो निर्विवेकिनः ॥ क्रोधकार्यं विभङ्गायेतिशकुनेशास्त्रम् । क्रोधनम् । क्रुधकोपे । भावे घञ् ॥ ३८ संवत्सरे ॥ विषमस्थं जगत्सर्वं स्यात्कुलसमुदाहृतम् । जनानां जायते भद्रे क्रोधे क्रोधः परस्परम् ॥

क्रोधजः । पुं । मोहे ॥ क्रोधाद्भवतिसम्मोहइतिस्मृतेः ॥ त्रिधाव्यसनाष्टगणे व्यसनगणे ॥ यथा । पैशुन्यं साहसं द्रोह ईर्ष्या ऽसूयार्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोपि गणोष्टकइति ॥ क्रोधाज्जायते । जनी० डः ॥

क्रोधनः । त्रि । कोपिनि । अमर्षणे । क्रोधविशिष्टे ॥ क्रोधशीलः । क्रुध० । क्रुधमण्डेतियुच् ॥ ५९ वत्सरे ॥ रोगामरणदुर्भिक्षंविरोधोबहुसङ्कटः । क्रोधनेतुविपमंसर्वंसमाख्यातंहरप्रिये ॥

क्रोधना । स्त्री । कोपवत्यांस्त्रियाम् । भामिन्याम् ॥ क्रुध्यतितच्छीला । क्रुध० । युच् । टाप् ॥

क्रोधमूर्च्छितः । पुं । चोरनामगन्धद्रव्ये ॥ त्रि । अतिकोपने ॥

क्रोधरात्रिः । स्त्री । चैत्रायेनवरात्रे ॥ क्रोधरात्रिर्महेशानी चैत्रीयंनवरात्रकमित्यागमात् ॥

क्रोधी । त्रि । क्रोधसंयुक्ते । क्रोधने ॥

महिषे ॥ क्रोधोस्त्यस्य । इनिः ॥

क्रोशः । पुं । अष्टसहस्रहस्तपरिमाणे । द्रव्यसहस्रहस्तमितये । इतिलीलावती ॥ चतुःसहस्रहस्तपरिमाणे । सहस्रधनुषि । गव्यूते । कोस इतिभाषा । इतिहेमचन्द्रः ॥ मुहूर्ते ॥ यथा । दण्डदण्डेतु या पूजा तत् सर्वमक्षयं भवेत् । षष्ठक्रोशे महेशानि तत् सर्वं मत्सेतोपमम् ॥ सप्तमक्रोशके देवि सर्वं चौरोपमं भवेत् । अष्टमक्रोशके देविरुध्यतुल्यं न संशयः ॥ अतः परं महेशानि विषतुल्यं न संशयइति गुप्तसाधनतन्त्रे ६ पटलः ॥

क्रोशतालः । पुं । ढक्कायाम् ॥

क्रोशध्वनिः । पुं । ढक्कायाम् ॥

क्रोशयुगम् । न । गव्यूतौ । गोरुते । क्रोशद्वये ॥ क्रोशयोर्युगम् ॥

क्रोष्टा । पुं । शृगाले ॥ क्रोशति । क्रुश आह्वाने । सितनिगमीतितुन् । तृज्वत् क्रोष्टुः ॥

क्रोष्टकपुच्छिका । स्त्री । } पृश्निपर्याम् । गोलोमिकायाम् ॥
क्रोष्टकमेखला । स्त्री । }
क्रोष्टपुच्छी । स्त्री । }

क्रोष्टुफलः । पुं । इङ्गुदीवृक्षे ॥

क्रोष्टुविन्ना । स्त्री । पृश्निपर्याम् ॥ क्रोष्टुभिर्विन्ना विचारितेयदन्नेनेतिवा ॥

क्रोष्टेषुः । पुं । श्वेतेषौ ॥

क्रोष्ट्री । स्त्री । शृगालिकायाम् ॥ कृष्ण विदार्याम् ॥ लाङ्गल्याम् ॥ शुक्लविदार्याम् ॥ क्रोशति । क्रुशआह्वाने । सितनिगमीतितुन् । स्त्रियाञ्चेति तृज्वत् । ऋन्नेभ्य इतिङीप् ॥

क्रौञ्चः । पुं । कोँचवक इतिगौडभाषाप्रसिद्धे पक्षिणि । क्रुञ्च ॥ ढोँक इतिलोकप्रसिद्धे शरद्विहङ्गे ॥ पर्वतविशेषे ॥ कुररपक्षिणि ॥ अर्द्दतांब्ध जे ॥ दैत्यविशेषे ॥ दधिमण्डोदसमुद्रेणावृते षोडशलक्षयोजनपरिमिते द्वीपविशेषे । इतिश्रीभागवतम् ॥ क्रौञ्चे क्रौञ्चो हतो दैत्यः क्रौञ्चाद्रौ हेमकन्दरे । स्कन्देन युद्धा सुचिरं विषमायी सुमायिना ॥ तस्येव तस्य दैत्यस्य ख्यात श्चिरेण कर्मणा । केतुना मगमत् तस्य नाम्ना क्रौञ्चःसउच्यते इतिमुग्धेन्द्रसंहिता ॥ क्रुञ्चति । क्रुञ्च० । ऋत्विगादिनाकिन् । प्रज्ञाद्यण् ॥

क्रौञ्चदारणः । पुं । कार्त्तिकेये ॥ दारयति । दृविदारणे । ण्यन्तात्ल्युः । क्रौञ्चस्य गिरिविशेषस्य दारणः ॥

क्रौञ्चनिसूदनः । पुं । क्रौञ्चमर्द्दने । षडानने । कार्त्तिकेये ॥

क्रौञ्चा । स्त्री । क्राञ्चखगस्य भार्यायाम् ॥ राजस्याम् ॥

क्रौञ्चादनम् । न । घेञ्चुली घेंचु इति गौडभाषाप्रसिद्धे घेञ्चुलिकायाम् ॥ चिञ्चोटके । चेंचर्की इतिगौडभाषा ॥ मृणाले ॥ पिप्पल्याम् ॥

क्रौञ्चादनी । स्त्री । पद्मवीजे ॥

क्रौञ्चारण्यम् । न । जनस्थानात् क्रोशत्रयान्तरे दण्डकारण्यपार्श्ववर्त्तिन्यरण्ये ॥

क्रौञ्चारातिः । पुं । कार्त्तिकेये । कुमारे ॥ क्रौञ्चस्य अरातिः ॥ परशुरामे ॥

क्रौर्य्यम् । न । कोपजार्य्यामनैष्ठुर्य्ये ॥ क्रूरत्वे ॥

क्रौशशतिकः । पुं । भिक्षौ ॥ क्रोशशतादभिगमन मर्हति । ततोभिगमनमर्हतीति ठञ् ॥ त्रि । शतक्रोशगमनकर्त्तरि ॥ क्रोशशतङ्गच्छति । क्रोशशतयोजनशतयोरिति ठञ् ॥

क्लमः । पुं । व्यायामे । श्रमे ॥ यो ऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः । क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः ॥ ग्लानौ ॥ क्लमनम् । क्लमुग्लानौ । घञ् । नोदात्तोपदेशस्येतिनवृद्धिः ॥

क्लमथः । पुं । क्लमे ॥ क्लमनम् । क्लमु० । शमादिभ्योथच् ॥

सिवसितर्गिक्लादिव्धिमनिभ्यश्चे त्यु: । क्लिन्दति वा । क्लिदि परिदेवने ॥

क्लेश: । पुं । दु:खे ॥ कोपे ॥ व्यवसाये ॥ रोगादौ ॥ अविद्यास्मितारागद्वेषाभिनिवेशेषु ॥तत्र विद्याविरोधिनी अविद्या । अहं ममेत्यहङ्कारो ऽस्मिता । इच्छाविशेषो रागः । वैरभावो द्वेषः । मरणभय मभिनिवेशः ॥ क्लिश्यन्त्यनेन । क्लेशनं वा । क्लिशू विबाधने । घञ् । अध्याकर्त्तरि ॥

क्लेशक: । पुं । क्लेशशीले ॥ क्लिश्यते तच्छीलः । क्लिशउपतापे क्लिशू० वा । निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् इति वुञ् ॥

क्लेशापह: । पुं । पुत्रे ॥ क्लेशमपहन्ति इति विग्रहे अपेक्लेशतमसोरिति अपपूर्वाद्धन्तेः क्लेशकर्मोपपदे डः प्रत्ययः ॥

क्लेशित: । त्रि । क्लेशयुक्ते ॥

क्लैतकिकम् । न । मद्ये ॥

क्लैब्यम् । न । चोदनालेखनादिभग्नरूपाधैर्ये । निर्वीर्यत्वे ॥ क्लीबस्यभावः कर्म वा । ष्यञ् ॥

क्लोम । न । फुप्फुसे । औदर्यजलाधारे । तिलके ॥ वाग्भटो ह्येयोर्मध्यमंवक्ष:तन्मध्ये हृदयम् तस्यास्त्रे क्लोमपिपासास्थानमिति वैद्याः । अधस्तु दक्षिणे भागे हृदयात् क्लोम तिष्ठति । जलवाहि शिरामूलं तृष्णाच्छादनकं मतम् ॥ एतत्तु वातरक्तजम् । तदुक्तं हद्धवाग्भटेन । रक्तात्फेनिलसंयुक्तात् कालेयकसमुद्भवः इति ॥

क्वणते । क्वणन्तौ । अमिन् ॥

क । अ । कुत्सार्थे । कहाँ इति भाषा ॥ कचिम् । किमोदिच्यति प्रत्यये का सोतिविभः कादेशः ॥ अप्रयुक्तास म्भावनायां क्वचं प्रयुज्यते ॥ वैक शब्दो महदन्तरं सूचयत: ॥

क्वचन । अ । कचिदर्थे ॥

क्वचित् । अ । कस्मिंश्चित्काले ॥ कस्मिंश्चिद्देशे ॥ कदाचिदर्थे ।

क्वण: । पुं । वीणायाः क्वणिते । निक्वणे ॥ ध्वनिमात्रे ॥ कटकादिभूषणशब्दे ॥ शब्दकरणे ॥ क्वणनम् । क्वण शब्दे । क्वणो वीणायाश्चेत्यप् ॥

क्वणनम् । न । वीणायाः क्वणिते । क्वणे ॥ क्वणो वीणायाञ्चेत्यभावे ल्युट् ॥ पुं । क्षुद्रकाप्सुते । कोठीकोडी इति भाषा ॥ मञ्जुमञ्जट इति पर्वतीयभाषा इति त्रिकाण्डशेषः ॥

क्वथित: । त्रि । अतिशयपक्वक्वथनद्रव्यमूलादौ । निष्पक्वे । कषाये । क्वाथे

। काढा इति भाषा ॥ क्वथ्यते स्म । क्वथेनिष्पाके । क्तः । इट् ॥

क्वथिता । स्त्री । कढी इतिप्रसिद्धे व्यञ्जने ॥ यथा । स्थाल्यां घृतेवातैले वा हरिद्रां हिङ्गु भर्जयेत् । अवलेहन संयुक्तंतक्रंतत्रैवनिः क्षिपेत् ॥ एषा सिद्धा समरिचा कथिता क्वथिता बुधैः । क्वथिता पाचनी रुच्या लघ्वीवह्निप्रदीपनी ॥ कफानिलविबन्धघ्नीकिञ्चित् पित्तप्रकोपनी ॥ अस्तीक्षमत्स्याः शुष्कावा किञ्चित् क्वथितसंयुताः । रूक्षका रोचना रुच्या बल्या वातगदापहाः ॥ कोष्ठशुद्धिकराः शुक्ताः किञ्चित् पित्तप्रकोपनाः । अर्दिते तदनुस्तम्भे विशेषेण हिताः स्मृता इति ॥

क्वाथः । पुं । क्वथे ॥ क्वथो वीप्सायाम्वेत्यवभावे पाचिको घञ् ॥

क्वाथः । पुं । अतिदुःखे ॥ व्यसने ॥ द्रव्यस्यनिष्पाके ॥ तुर्यांशशेषपक्के ॥ यथा । क्वाथे विचूर्णितं क्षिप्ता तत् षोडशगुणम्पचेत् । पादशेषं प्रकर्त्तव्य मेष क्वाथविधिः स्मृतः ॥ क्वाथ्यमानंतोयं त्रिविधम् । पादावशेषम् । अर्द्धावशेषम् । त्रिपादावशेषञ्च । कस्तनाम पारिभाषिकमुष्णोदकम् । तत्रपादावशेषंकफनाशकं लघु अग्निवर्द्धकञ्च । अर्द्धावशेषं पित्तनाशकम् । त्रिपादावशेषं वातनाशकम् । तेषां मध्ये त्रिपादावशेषं जलं हेमन्ते शिशिरेचप्रशस्तम् । वसन्ते पादावशेषम् । शरद्ग्रीष्मेचार्द्धावशेषम् । वर्षायामष्टभागावशेषं जलं प्रशस्तम् ॥ दिनपक्वं जलं रात्रौगुरु रात्रिपक्वंजलं दिवागुरु भवतीति विवेकः ॥

क्वाथोद्भवम् । न । कर्पूरेम् । कृत्रिमरसाञ्जने ॥

क्षः । पुं । संवर्त्ते ॥ राक्षसे ॥ नरसिंहे ॥ विद्युति ॥ क्षेत्रे ॥ नाशे ॥ क्षेत्रपाले ॥ एकपञ्चाशन्मातृकावर्णानामन्तिमेवर्णे ॥ अस्यककारषकारसंयोगजन्यत्वेन पृथग्वर्णत्वं केचिन्नमन्यन्ते । तेषां मते तन्त्रोक्तपञ्चाशद्वर्णाऽनुपपत्तिरागमोक्तदीक्षाक्षकारस्य मेरुत्वेन कथनाऽनुपपत्तिश्च । तस्मात् क्षकारस्य पृथग्वर्णत्वं मन्तव्यम् । यथोक्तमागमे । अकारादिलकारान्ता वर्णाः पञ्चाशदीरिताः । संयोगात् कषयोरेष क्षकारोमेरुरीरितइति ॥ तथापिमेदिनीहेमचन्द्राद्विकोषानुरोधात् कषसंयोगजत्वेन कादिवर्गमध्ये लिखितः ॥

क्षणः । पुं । पर्व्वणि ॥ उत्सवे ॥ यथा । क्षणेऽस्याःकुशलमिति ॥ व्यापारे ॥ व्यापारविकलत्वे । निर्व्यापारस्थितौ ॥ अवसरे ॥ परतन्त्रतायाम् ॥ मध्ये ॥ अनेहसोमानविशेषे । त्रिंशत्कलापरिमितेकाले । द्वयपलपरिमिते ॥ लवद्वये ॥ निमेषक्रियावच्छिन्नस्यकालस्य चतुर्थभागे ॥ यथा । आयुषःक्षणएकोपिनलभ्यःस्वर्णकोटिभिः । सचेत्तु विफलोयाति कानो हानिस्ततोऽधिकेति ॥ क्षणोतिदुःखम् । क्षणुहिंसायाम् । अच् ॥

क्षणक्षेपः । पुं । क्षणविलम्बे ॥

क्षणदः । पुं । गणके ॥ न । जले ॥ क्षणं ददाति । डुदाञ् । आत इति कः ॥

क्षणदा । स्त्री । निशि । रात्रौ ॥ क्षणमुत्सवं निर्व्यापारस्थितिं वा ददाति । कः । टाप् ॥ हरिद्रायाम् ॥

क्षणनम् । न । वधे ॥ क्षणोतेर्भावे ल्युट् । त्यागे । दाने ॥

क्षणनिःश्वासः । पुं । शिशुमारे ॥ क्षणेनिःश्वासोऽस्य ॥

क्षणप्रभा । स्त्री । विद्युति ॥ क्षणं प्रभायस्याः ॥

क्षणभङ्गः । पुं । क्षणनाशे ॥

क्षणभङ्गुरः । त्रि । क्षणेकनाश्ये ॥ हृष्ट नष्टे ॥

क्षणिकः । त्रि । अनित्ये ॥ क्षणमात्रस्थायिनि ॥

क्षणिकत्वम् । न । तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वे ॥ यथा । आकाशे शब्दस्य प्रथमक्षणेउत्पत्तिः द्वितीयक्षणे स्थितिः तृतीयक्षणे विनाशः ॥

क्षणिका । स्त्री । तडिति । विद्युति ॥

क्षणिनी । स्त्री । निशि ॥

क्षतम् । न । ईर्म्मे । व्रणे । स्रवद्रक्तपूयादौ । घाव इतिभाषा ॥ क्षणनम् । क्षणु० । नपुंसके भावे क्तः । अनुदात्तोपदेशस्येत्यादिना नलोपः ॥ खण्डिते ॥ षष्ठगृहे ॥ नष्टे ॥

क्षतकासः । पुं । पञ्चविधकासरोगान्तर्गतकासरोगविशेषे ॥

क्षतघ्नः । पुं । कुकुरोंधा इतिप्रसिद्धे क्षुपविशेषे ॥ क्षतं हन्ति । हन० । हन्तेरमनुष्येत्यादिना टक् ॥

क्षतघ्नी । स्त्री । द्रुमामये । लाक्षायाम् ॥ टित्त्वात् ङीप् ॥

क्षतजम् । न । रक्ते । रुधिरे ॥ पूये ॥ क्षताज्जातम् । जनी० । पञ्चम्यामिति डः ॥

क्षततृष्णा । स्त्री । शस्त्रादिक्षतयुक्तस्य पिपासायाम् ॥

क्षतविध्वंसी । पुं । वृद्धदारकवृक्षे ॥

क्षतव्रणः । पुं । षट्प्रकारव्रणरोगान्तर्गतव्रणरोगविशेषे ॥

क्षतव्रतः । त्रि । ध्वस्तव्रते । अवकीर्णिनि । खण्डितव्रह्मचर्यादिव्रते ॥ क्षतं खण्डितं व्रतमस्य ॥

क्षतहरम् । न । अगुरुणि ॥ त्रि । क्षतघ्ने ॥

क्षतिः । स्त्री । क्षते ॥ अपचये । क्षये । घटती इति भाषा ॥ यथा । जलमुचि सितरश्मिमुखे का क्षतिरद्य खिलाम्बुपातृणाम् । केवलघनरसभक्ती चातकपक्षी कमाश्रयतीत्युद्भटः ॥

क्षतोदरः । पुं । उदररोगविशेषे ॥

क्षत्ता । पुं । शूद्रात् क्षत्रियाया मुत्पन्ने ॥ शूद्रा दायोगवः क्षत्ता चण्डालश्चाधमो नृणाम् । वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्कराः ॥ प्रतीहारे ॥ सारथौ ॥ भुजिष्यातनये । दासीपुत्रे ॥ नियुक्ते ॥ वेधसि ॥ क्षदति क्षयते वा । क्षदिः सौत्रः संभृतौ । तृन्तृचौ शंसि क्षदादिभ्यः संज्ञायांचानिटौ ॥ क्षत्तार्यशूद्रयोः सुतइत्यमरः ॥

क्षत्रः । पुं । क्षत्रिये ॥ न । नगरे ॥ शरीरे ॥ क्षदति । क्षदसंवरणे सौत्रः । गुधृवीपचिवचियमिसदिक्षदिभ्य



स्त्रः ॥ क्षतात् त्रायते वा । सुपीति योगविभागात् कप्रत्ययः । पृषोदरादित्वात् पूर्वपदस्याकारलोपः ॥ यद्वा । क्षणनम् । क्षणु हिंसायाम् । सम्पदादित्वात् क्विप् । गमादित्वादनुनासिकलोपः । तुक् । क्षतोऽनाशात् त्रायते । त्रैङ् पालने । सुपीतियोगविभागात्कः ॥ क्षत्रियजातेःकर्मणि ॥

क्षत्रबन्धुः । पुं । क्षत्रियजातिमात्रे ॥ निन्द्यक्षत्रिये । कुत्सितक्षत्रिये ॥ क्षत्रस्य क्षत्रियजाते र्बन्धुरेवा ऽनुष्ठानाभावादिति जातिक्षत्रियो ऽभिधीयते ॥

क्षत्रविद्या । स्त्री । धनुर्वेदे ॥

क्षत्रवृक्षः । पुं । मुचुकुन्दे ॥

क्षत्रियः । पुं । सत्त्वोत्कटसर्जोगुणप्रधानायां जातौ । मूर्द्धाभिषिक्ते । राजन्ये । बाहुजे ॥ क्षदति रक्षति जनान् । क्षदेःत्रन् । गुधृवीपचीत्यादिना त्रोवा । क्षतात् त्रायते वा । सुपीति योगविभागात् कप्रत्ययः । पृषोदरादिः ॥ यद्वा क्षदति क्षिणोतिपद्दात् त्रायते: कप्रत्ययः । [illegible] त्यम् । क्षत्रादृघः ॥ क्षत्र[illegible]कर्मे [illegible]धर्मसंयुक्तः । [illegible] [illegible] क्षत्रियजाते ॥ क्षत्रि

ण्याः सूर्यचन्द्रवंशजा राजानः । क्षेत्रक लेः सहस्रवर्षपर्यन्तमासन् । ततो महानन्दिसुतो नन्दः शूद्रायां मुत्प न्नः शतवर्षपर्यन्तं राज्यं चकार । त दन्ते चाणक्यनामा ब्राह्मणो नन्दं त त्पुत्रांश्च हत्वा मुरवंशजं चन्द्रगुप्तं रा जानं कृतवान् । कलौ नन्दान्तः क्ष त्रियवंशः । इति श्रीभागवते १२ स्क न्धे १ ऽध्यायात् संगृहीतम् ॥

क्षत्रिया । स्त्री । क्षत्रियाण्याम् ॥ अर्य क्षत्रियार्य्यां वा स्वार्थे इत्यानुगाग मोभावपत्वे ॥ क्षत्रियजातौ ॥ यो पधत्वान्न ङीष् ॥

क्षत्रियाणी । स्त्री । क्षत्रियजातीयाया म् ॥ अर्य क्षत्रियाभ्यामितिपाक्षिक आनुगागमो ङीषच ॥

क्षत्रियी । स्त्री । क्षत्रिययोषायाम् ॥ क्ष त्रियस्य स्त्रीत्यर्थे पुंयोगादाख्याया मिति ङीष् ॥

क्षन्तव्यः । त्रि । क्षमणीये ॥

क्षन्ता । त्रि । क्षमायुक्ते । सहिष्णौ ॥ क्षमते । क्षमूष० । तच्छीलः । तृन् ॥

क्षपणः । त्रि । निर्लज्जे ॥ इतित्रिका- ण्डशेषः ॥

क्षपणकः । पुं । बुद्धभेदे । दिगम्बरसि द्धान्ते ॥ सन्न्यासिनि ॥ यथा । एकः क्षपणक आकाशस्ती तत्र क्षपणक

स्य आकाशा । यत्र क्षपणक स्य आकाशा तत्र क्षपणक का आका शा ॥ इत्युद्भटः ॥

क्षपण्युः । पुं । अपराधे ॥

क्षपयिता । त्रि । नाशयितरि ॥ क्षपय ति । क्षै० । तृच ॥

क्षपा । स्त्री । निशि । रात्रौ ॥ क्षपयि ति चेष्टाम् । क्षैक्षये । अन्तर्भावित ण्यर्थात् पचाद्यच् ॥ हरिद्रायाम् ॥

क्षपाकरः । पुं । चन्द्रे । नक्तचेषे ॥ क्ष पां करोति । कृञो हेतुताच्छील्यानु लोम्येषु इति टः ॥ कर्पूरे ॥

क्षपाचरः । पुं । राक्षसे ॥

क्षपाटः । पुं । राक्षसे ॥ क्षपायामटति । अट० । पचाद्यच् ॥

क्षपितः । त्रि । दूरीकृते ॥ नाशिते ॥ विस्मृते ॥

क्षमम् । न । युक्ते ॥ त्रि । शक्ते ॥ हि ते ॥ क्षमापति ॥ पुं । धूसरे ऽतिक्षु द्रे चटके । धान्यभक्षणे ॥ क्षमते क्षम्यते वा । क्षमूषसहने । पचाद्य च् । घञ्वा । नोदात्तोपदेशस्येति नवृद्धिः ॥

क्षमणीयः । त्रि । क्षन्तव्ये ॥ क्षमेरनी यर् ॥

क्षमता । स्त्री । योग्यतायाम् । साम र्थ्ये ॥ अर्थप्रकाशनसामर्थ्ये ॥ यथा

क्षयः । पुं । कासरोगविशेषे । यक्ष्मणि । क्षेपे ॥ क्षयति देहम् । क्षि क्षये । क्षिनिवास गत्योर्वा । अन्तर्भावितण्यर्थात् क्षियः एरच् । क्षिकाक्षयकरत्वात् क्षय इत्युच्यते बुधैः ॥ अस्यौषधम् । यथा । श्वेतकोकिलाक्षमूलं छागीक्षीरेण संयुतम् । क्षिप्तसाक्षेत्रवैपीतं क्षयरोगं क्षयं नयेत् । रोगकाके ॥ वेश्मनि । निवासे ॥ संवर्ते । कल्पान्ते ॥ क्षीयन्ते प्राणिनोऽत्र ॥ अपचये । हानौ ॥ क्षयश्च ॥ नीतिवेदिनां त्रिवर्गान्तर्गते प्रकमवर्गे ॥ स्वराष्ट्रामत्यवर्गेस्यापचय. ॥ यथा । क्षयःस्थानञ्चवृद्धिश्चत्रिवर्गोनीतिवेदिनामित्यमरः ॥ ध्वंसे । शरीरसामर्थ्यस्य धनस्य सेनायाश्च नाशे ॥ पश्चिमोत्तरद्वारगृहे ॥ विरामे ॥ हिंसायाम् ॥ क्षीषहिंसायाम् । एरच् ॥ धातुक्षयहेतौ ॥ क्षीयते ऽनेनेतिव्यु० पुंसिसंज्ञायामितिघः ॥ ह० वत्सरे ॥ मेदिनी क्षयते देवि सर्वभूतंचराचरम् । देशभङ्गस्तदुर्भिक्षंक्षये संक्षीयते प्रजाः॥सौराष्ट्रमालवेदेशेदक्षिणे कोङ्कणे तथा । दुर्भिक्षंजायतेघोरं क्षये संवत्सरेप्रिये ॥ कौमुदीधर्मनद्योस्यमुनानर्मदातटे । विन्ध्यायांसैन्धवेचापि विन्ध्यप्रान्ते संशयः ॥ सिंहलं मध्यदेशश्च काश्मरं तथैव च । क्षयेक्षयन्तिसर्वाणिनान्यथा[illegible]

क्षयतरुः । पुं । बेलियापीपर इति ख्याते नन्दीवृक्षे । स्थालीवृक्षे ॥

क्षयथुः । पुं । कासे ॥

क्षयनाशिनी । स्त्री । जीवन्तीवृक्षे ॥

क्षयपक्षः । पुं । कृष्णपक्षे ॥

क्षयमासः । पुं । रविसङ्क्रान्तिद्वयसहितमासे ॥ यथा । द्विसङ्क्रान्तिमासः क्षयाख्योमासः स च कदाचिदेव भवति । स च कार्त्तिकादित्रये नान्यतः स्यात् तदावर्षमध्येऽधिमासद्वयंस्यादिति ॥ अपिचाह कालिदासः । सौराद्दा चन्द्रमसो गरीयान् मासो द्विसङ्क्रान्तिरसौ क्षयाख्यः । स यस्तदा स्यात् क्षितिवे दरूपे १४१ रब्दे मिते वाक्वचिद इन्द्रैरिति ॥

क्षयितः । त्रि । नाशिते ॥

क्षयी । त्रि । नाशिनी ॥ क्षयशीलः । जिद्दक्षिविश्रीण्वमाव्यथाभ्य मपरिभूप्रसूभ्यश्चेति इनिः ॥ राजयक्ष्मान्विते ॥ क्षयोऽस्यास्ति । अतइनिठनाविति इनिः ॥

क्षय्यः । त्रि । क्षेतुंशक्ये ॥ क्षि० । अचो यत् । क्षय्यजय्यौशक्यार्थे ॥

क्षरः । पुं । मेघे ॥ विनाशिनि कार्ये

र्थे ॥ येषः । कार्यकारणरूपन्तु न श्वरं क्षरमुच्यते । क्षरादिवरुद्धधर्मत्वा दक्षरं ब्रह्म भण्यते इति ॥ क्षरः सर्वाणि भूतानि कूटस्थोऽक्षरउच्यत इतिच ॥ न । नीरे । जले ॥ क्षरति । क्षरसञ्चलने । पचाद्यच्

क्षरणम् । न । च्युतौ । चूवना इति भाषा ॥

क्षरितः । त्रि । च्युते । चूवा गिरा इतिच भाषा ॥

क्षरी । पुं । वर्षाकाले ॥ त्रि । क्षरण विशिष्टे ॥

क्षवः । पुं । क्षुते । छिक्कायाम् । छींक इतिभाषा ॥ राजिकायाम् ॥ राजिकाप्रभेदे ॥ क्षौति । टुक्षुशब्दे । पचाद्यर्थः । पचाद्यच् ॥ क्षवणम् । क्षुद्रोरप्‌वा ॥

क्षवकः । पुं । राजिकायाम् ॥ अपामार्गे ॥ भूताङ्कुशे ॥

क्षवकृत् । स्त्री । छिक्कन्याम् ॥ क्षवङ्करोति । कृञः क्विप् ॥

क्षवथुः । पुं । क्षुते ॥ कासे ॥ क्षौत्यनेन । टुक्षु० । द्वितोऽथुच् ॥

क्षवपत्रा । स्त्री । द्रोणपुष्प्याम् ॥ क्षवः पत्रेषुयस्याः ॥

क्षविका । स्त्री । दन्तीप्रभेदे । पीत [illegible]यायाम् । पुत्रप्रदायाम् । बहु फलायाम् ॥

क्षात्रम् । त्रि । क्षत्रियसम्बन्धिनि ॥

क्षात्रकर्म्म । न । क्षत्रियजातेः कर्म्मणि ॥ यथा । शौर्यं तेजो धृतिर्दाक्ष्यं युद्धेचाप्यपलायनम् । दानमीश्वरभावश्चक्षात्रं कर्मस्वभावजमिति ॥ क्षात्त्रञ्चतत् कर्मचेतिविग्रहः ॥

क्षान्तः । त्रि । सहिष्णौ । सोढे ॥ केनचित् पीडितोपि यः समर्थः संस्तत्पीडापराङ्मुख स्तस्मिन्नित्यर्थः ॥ क्षम्यते स्म । क्षमूष० । क्तः । अनुनासिकस्येतिदीर्घः ॥

क्षान्तिः । स्त्री । क्षमायाम् । तितिक्षायाम् । क्रोधप्राप्तौ चित्तसंयमने । सत्यपिसामर्थ्ये अपकारिण्यपकाराचिकीर्षायाम् ॥ यथा । क्षमायाञ्च संबद्ध स्तमसो भास्करोदयः । क्षान्तिः काले रघौघस्तुनामसङ्कीर्त्तनंच रेरिति ॥ क्षमणम् । क्षमूसहने । दिवादिः । अस्याषित्वात् क्तिन् । अनुनासिकस्येतिदीर्घः ॥ तुक्षमानोपि परुषंनोत्तरं प्रतिपद्यते ॥

क्षान्तुः । त्रि । क्षमाशीले । मर्षके ॥ क्षाम्यति । क्षमू० । क्रमिगमिक्षमिभ्यस्तुन् वृद्धिश्च ॥

क्षामः । त्रि । क्षीणे ॥ अबले ॥ क्षैक्षये । गत्यर्था कर्मकेत्यादिना क्तः ।

क्षायोम इति निष्ठातत्त्वम्। । श्राद्धे क्षउपदेशेष्विती त्व्यास्त्वम् ॥

क्षामवती। स्त्री। } यागविशेषे ॥
क्षामवतीष्टिः। स्त्री। } यथोक्तम्भविष्ये। क्षामवत्त्यादिना यद्वत् कर्मणां पूतनापते। दैवदोषादकरणे जाते दोषकदम्बके॥ होमेनैकेन दोषाणां सर्वेषां क्षयमादिशेत्। एवञ्च एका प्रायश्चित्तेनानेकदोषक्षयाय क्षामवतीष्टिः सर्वत्रदृष्टान्तः। इति प्रायश्चित्ततत्त्वम् ॥

क्षामास्यम्। न। अपथ्ये। अहिते। रोग्ये ॥ त्रि। क्षीणवदने ॥ क्षामं मास्येयस्य। क्षामं क्षतदास्यञ्चेतिवा॥

क्षारः। पुं। खार इति प्रसिद्धे रसे ॥ धूर्त्ते ॥ लवणे ॥ काचे ॥ भस्मनि ॥ गुडे ॥ न। टङ्कणे ॥ यवक्षारे॥ विड्लवणे॥ सर्ज्जिकाक्षारे॥ पलाशधवपूतीकशरञ्जपाटलादिजाः। क्षारा स्तुपाचनाः सर्वे रक्तपित्तकराः सराः ॥ गुल्मार्शः कृमिपुंस्त्वघ्नाः शर्करा ऽश्मरिनाशनाः इति राजवल्लभः ॥ क्षरति। क्षरसञ्चलने। ज्वलिति कसन्तेभ्योणः। उपधावृद्धिः॥

क्षारकः। पुं। पक्षिमत्स्यादिपिटके॥ जालके। नवकलिकावृन्दे॥ क्षरति। क्षर॰। ण्वुल् ॥ पक्ष्यादिपाशे ॥

क्षारकर्द्दमः। पुं। नरकविशेषे ॥

क्षारतैलम्। न। पक्वतैलविशेषे॥ यथा। शुष्कमूलकशुण्ठीनां क्षारो हिङ्गु लनागरम्। शतपुष्पावचाकुष्ठं दारुशिग्रुरसाञ्जनम् ॥ सौवर्चलं यवक्षारसामुद्रं सैन्धवं तथा। भुर्ज्जग्रन्थिविडं मुस्तं मधुशुक्तं चतुर्गुणम् ॥ मातुलुङ्गरसञ्चैव कदलीरसमेव च। तैलमेभिर्विपक्तव्यं कर्णशूलापहं परम् ॥ बाधिर्यं कर्णनादश्च पूयस्रावश्च दारुणः। पूरणादस्य तैलस्य कृमयः कर्णयोर्विनाः ॥ क्षिप्रं विनाशमायान्ति शशाङ्ककृतशेखर। क्षारतैलमिदं श्रेष्ठं मुखदन्तामयापहम् ॥ इति गारुडे १९८ अध्यायः॥

क्षारत्रयम्। न। त्रिविधक्षारे॥ यथा। सर्जिकञ्च यवक्षारं टङ्कणक्षारमेव च। क्षारत्रयञ्च विक्षारं क्षारत्रितयमेव च ॥

क्षारदला। स्त्री। चिल्याम्। चुत्रवास्तूकशाके॥ क्षारोदलेष्वस्याः ॥

क्षारदशकम्। न। दशविधक्षारे॥ यथा। शिग्रुमूलकपलाशचुक्रिकाचित्रकार्द्रकसनिम्बसम्भवैः। इक्षुशेखरिकमेचिकोद्भवैःक्षारपूर्वदशकं प्रकीर्त्तितम् ॥

क्षारद्रुः। पुं। घण्टापाटलिवृक्षे॥

क्षारद्वयम् । न । सर्जिकायावशूकयोः ॥ क्षारयोर्द्वयम् ॥

क्षारपत्रः । पुं । } वास्तूकशाके ॥
क्षारपत्रकः । पुं । }

क्षारभूमिः । पुं । समुद्रोपान्तदेशे ॥ यथा । जीवनं जीवनं हन्ति प्राणान् हन्ति समीरणः । किमाश्चर्यं क्षारभूमौ प्राणदा यमदूतिका ॥ स्त्री । लवणभूमौ ॥

क्षारमध्यः । पुं । अपामार्गे ॥

क्षारमृत्तिका । स्त्री । ऊषे ॥ क्षाराचासौमृत्तिका च ॥

क्षारमेलकः । पुं । क्षारसङ्घे ॥

क्षारवृक्षः । पुं । मुष्कके ॥

क्षारश्रेष्ठः । पुं । पलाशे । किंशुके ॥ मुष्कवृक्षे ॥ न । वज्रक्षारे ॥

क्षारषट्कम् । न । षड्विधक्षारे ॥ यथा । धवापामार्गकुटजपालाशतिलमुष्ककैः । क्षारैरेतैस्तु मिलितैः क्षारषट्कमुदाहृतम् ॥

क्षारसिन्धुः । पुं । लवणसमुद्रे ॥ स तु जम्बुद्वीपस्यद्दक्षिणे शाकद्वीपस्यो त्तरे वर्त्तते ॥

क्षाराच्छम् । न । सामुद्रलवणे ॥

क्षाराब्धिः । पुं । क्षारसिन्धौ ॥

क्षाराष्टकम् । न । अष्टप्रकारक्षारे ॥ यथा । पलाशवज्रशिखरिचिञ्चार्कतिलनालजाः । यवजः सर्जिका चेति क्षाराष्टकमुदाहृतम् ॥ क्षारा एतेऽग्निना तुल्याः शूलगुल्महराभृशमिति ॥ क्षाराणामष्टकम् ॥

क्षारिका । स्त्री । भोगपिपासिकायाम् । क्षुधायाम् ॥

क्षारितः । त्रि । स्राविते ॥ क्षारे ॥ अभिशस्ते । अपवादग्रस्ते । प्रासदोषे ॥ क्षार्य्यते स्म । क्षर० । णिच् क्तः । क्तः ॥

क्षारोदः । पुं । लवणोदे ॥ क्षारमुदकं यस्मिन् । उत्तरपदस्योदकस्योदादेशः ॥

क्षालनम् । न । निर्णेजने । प्रक्षालने ॥

क्षालितम् । त्रि । धौते । निर्णिक्ते । कृत प्रक्षालने ॥

क्षिः । पुं । निवासे ॥ गतौ ॥ क्षये ॥

क्षितः । त्रि । हिंसिते ॥ क्षिधातोः कर्मणि क्तः ॥

क्षितिः । स्त्री । निवासे ॥ मेदिन्याम् ॥ महालयेक्षयं यातिक्षितिस्तेन प्रकीर्त्तिता ॥ क्षये ॥ रोचनाख्यगन्धद्रव्ये ॥ क्षियति । क्षिनिवासगत्योः । क्तिच्क्तौ चेतिक्तिच् ॥ क्षयणम् क्षीयतेऽस्यांवा । क्षिक्षये । क्षिनिवासगत्योः । स्त्रियांक्तिन् ॥ कालभेदे । प्रलयकाले ॥

क्षितिकणः । पुं । } धूलौ । रजसि ॥
क्षितकणा । स्त्री । }

क्षितिक्षमः । पुं । खदिरद्रुमे ॥

क्षितिक्षित् । पुं । क्षितीशे ॥ क्षितिङ् क्षियति । क्षि॰ तुदादिः । क्विपि तुक् । क्षितिपतिष्वेवायौ क्षितिक्षिदितिभट्टमल्लः ॥

क्षितिजः । पुं । उपरसविशेषे । भूनागे ॥ मङ्गलग्रहे ॥ वृक्षे । मधीवृक्षे ॥ क्षितेर्जातः । उमी॰ । डः ॥ न । खगोले आकाशमध्यात्मवस्वंशान्तरे तिर्य्यग्वृत्ते ॥ त्रि । भूमिजाते ॥

क्षितिजन्तुः । पुं । भूनागे ॥ क्षितेर्जन्तुरिव ॥

क्षितिधरः । पुं । पर्वते ॥ कूर्मवासुकिदिग्गजेषु च ॥

क्षितिनागः । पुं । उपरसविशेषे । भूनागे ॥

क्षितिनाथः । पुं । राजनि ॥

क्षितिपः । पुं । भूपतौ ॥

क्षितिपतिः । पुं । न्वपे । भूपे ॥

क्षितिपालः । पुं । भूपाले । राज्ञि ॥

क्षितिपालभाक् । पुं । राजनि ॥

क्षितिपुत्रः । पुं । नरकराजे । नरकासुरे ॥

क्षितिरन्ध्रम् । न । अवटे ॥ क्षितेः रन्ध्रम् ॥



क्षितिरुहः । पुं । वृक्षे ॥ रोहति । रुह॰ । इगुपधत्वात्कः । क्षितौ रुहः । सप्तमीतिसमासः ॥ क्षितौ रोहतिवा । रुहेरिगुपधेतिकः ॥

क्षितिवदरी । स्त्री । भूवदर्याम् । भूँइबेरी इतिभाषा ॥

क्षितिवर्द्धनः । पुं । शवे ॥ त्रि । भूमिवर्द्धके ॥

क्षितिव्युदासः । पुं । भुंइरा इतिप्रसिद्धे भूमिगृहे ॥

क्षितिसुतः । पुं । भौमे ॥ नरकासुरे ॥

क्षितीशः । पुं । राज्ञि ॥ श्रीरामे ॥ क्षितेर्भूमेरीशः ॥

क्षित्यदितिः । स्त्री । देवक्याम् ॥

क्षित्वा । पुं । वायौ ॥ क्षयति क्षियतिवा ॥ क्षिक्षये क्षिनिवासगत्योर्वा । शीङ्क्रुशीत्यादिनाक्वनिपितुक् ॥ काले ॥

क्षिपः । पुं । क्षेपके ॥ क्षेप्तरि ॥ क्षिपेरिगुपधेतिकः ॥

क्षिपकः । त्रि । योधे ॥ क्षिपति । क्षिपप्रेरणे । इगुपधज्ञाप्रीकिरःकः । ततोऽज्ञातादौकः ॥ स्त्री । क्षिपका । क्षिपकादीनाञ्चेतीत्वाभावः ॥

क्षिपणम् । न । क्षेपणे । क्षिपायाम् ॥

क्षिपणिः । स्त्री । नौकादण्डे ॥ आयुधे ॥ वक्षिशे ॥ क्षिप्यते ऽनयेतिवा ।

क्षिपेः कर्म्मणि यनिः । क्षिपणिर्व्वेपणमिति वेदभाष्यम् ॥

क्षिपणी । स्त्री । क्षेपणम् । नौकादण्डे ॥ कृदिकारादिति ङीष् ॥

क्षिपणुः । पुं । वायौ ॥ क्षिपति । क्षिप० । अनुङ्नदेशश्चेतिचकारात् क्षिपेरप्यनुङ् ॥

क्षिपण्युः । पुं । वसन्ते । इत्युज्ज्वलदत्तः ॥ देहे ॥ त्रि । सुरभौ ॥

क्षिपा । स्त्री । क्षेपणे ॥ क्षेपणम् । क्षिप० । भिदाद्यङ् । टाप् ॥

क्षिप्तः । त्रि । प्रेरिते ॥ निक्षेपीकृतवस्तुनि । त्यक्ते । नुन्ते । नुन्ने ॥ विकीर्णे ॥ अवज्ञाते ॥ न । रागद्वेषादिवशाद्विषयेष्वभिनिविष्टचित्ते । चित्तस्य प्रथमभूमौ ॥ क्षिप्यते स्म । क्षिप० । क्तः ॥ वायुग्रस्ते ॥

क्षिप्तकुक्कुरः । पुं । अलर्के ॥

क्षिप्ता । स्त्री । रात्रौ ॥ इतिहलायुधः ॥

क्षिप्नुः । त्रि । निराकरिष्णौ । निराकरणशीले ॥ क्षेपणशीलः । क्षिप० । त्रसिगृधिधृषिक्षिपेः क्नुः ॥

क्षिप्रम् । न । शीघ्रे ॥ नक्षत्रविशेषाणां संज्ञायाम् ॥ पुष्याश्विन्यभिजिद्धस्ता लघु क्षिप्रं गुरु तथा ॥ क्षिप्यति । क्षिप० । स्फायितञ्चीति रक् ॥ शीघ्रार्थे क्रियाविशेषणत्वाद द्रव्ये वर्त्तमानः क्लीवे । द्रव्ये तु त्रिलिङ्गः ॥ शीघ्रगे च ॥

क्षिप्रकारी । त्रि । शीघ्रप्रयोक्तरि ॥

क्षिप्रपाकी । पुं । गन्धमुण्डे । गर्द्दभाण्डे । गेंडीति भाषाप्रसिद्धे वृक्षे । गन्धभादालिया इति गौडभाषा ॥ त्रि । शीघ्रपाकिनि ॥

क्षिप्रा । स्त्री । अवन्तीतलवाहिन्यां सरिति ॥

क्षिया । स्त्री । अपचये । क्षये ॥ क्षिक्षये । क्षि निवासगत्योर्वा । भिदाद्यङ् । टाप् ॥

क्षीजनम् । न । कीचकानां नादे ॥

क्षीणः । त्रि । अमांसे । दुर्बले । क्षामे ॥ क्षिक्षये । क्तः । निष्ठायामण्यदर्थे इति दीर्घः । क्षियो दीर्घादिति नः ॥ धर्मार्थं क्षीणकोषस्य क्षीणत्वम् अपि शोभते । सुरैः पीतावशेषस्य कृष्णपक्षे विधोरिवेति कामन्दकः ॥

क्षीणचन्द्रः । पुं । विनष्टेन्दुभयाष्टम्योर्म्मध्यस्थेन्दौ ॥ यथा । कृष्णाष्टमीदृक्वा दृष्टं यावच्छुक्लाष्टमीदलम् । तावत् कालं शशी क्षीणः पूर्णस्ततोपरि स्मृत इति ॥

क्षीणवान् । त्रि । क्षयविशिष्टे ॥

क्षीणाष्टकर्म्मा । पुं । जिने ॥

क्षीयमाणः । त्रि । अपक्षीयमाने ॥

क्षीरपर्णी । स्त्री । अर्कवृक्षे । विक्षीरके ॥

क्षीरपायी । त्रि । दुग्धपानकर्त्तरि ॥

क्षीरमोचकः । पुं । शोभाञ्जने ॥

क्षीरमोरटः । पुं । मोरटे । मधुस्रवे । क्षीरमोरटा इति गौड भाषा प्रसिद्धायांलतायाम् ॥

क्षीरवल्ली । स्त्री । क्षीरविदार्य्याम् ॥ क्षीरवतीवल्ली ॥

क्षीरविकृतिः । स्त्री । क्षीरसा इति गौडभाषाप्रसिद्धायां कूर्चिकायाम् ॥ दध्ना सह पयःपक्वं यत् तत् स्याद् दधि कूर्चिका । तक्रेण पक्वं यत् क्षीरं सभवेत्त तक्रकूर्चिका ॥ क्षीरस्य विकृतिः ॥

क्षीरविदारिका । स्त्री । क्षीरविदार्य्याम् ॥

क्षीरविदारी । स्त्री । शुक्लभूकुष्माण्डे । महाश्वेतौषधौ ॥ क्षीरवतीविदारी ॥ शुक्लकृष्णभूकुष्माण्डयोः ॥ क्षीरकन्दो द्विधा प्रोक्तो विनालस्तु सनालकः । विनालो रोगहर्त्ता स्यात् द्वयकर्म्मी सनालकः ॥

क्षीरविषाणिका । स्त्री । क्षीरकाकोल्याम् ॥ दृश्चिकाल्याम् ॥

क्षीरवृक्षः । पुं । राजादन्याम् ॥ उदुम्बरे ॥

क्षीरशरः । पुं । आमिक्षायाम् । छाना इति गौडभाषा ॥

क्षीरशाकम् । न । दुग्धविकृतौ ॥ अपक्व मेव यत्क्षीरं क्षीरशाकंहितत्प्रयः ॥

क्षीरशीर्षः । पुं । श्रीवासे ॥

क्षीरशुक्ला । स्त्री । क्षीरकाकोल्याम् ॥ क्षीरविदार्य्याम् ॥

क्षीरशुक्लः । पुं । जलकण्टके । शृङ्गाटके । सिंघाडा इतिभाषा ॥ राजादने ॥

क्षीरशुक्ला । स्त्री । शुक्लभूकुष्माण्डे ॥ विदार्य्याम् । क्षीरकाकोलिकायाम् । कृष्णभूकुष्माण्डे ॥ क्षीरविषशुक्ला ॥

क्षीरसः । पुं । क्षीरसारे ॥

क्षीरसन्तानिका । स्त्री । छाना इति नटक्षीर इति गौडभाषाप्रसिद्धे दुग्धविकार विशेषे । क्षीरसन्तानिका वृष्या स्निग्धा पित्तानिलापहा ॥

क्षीरसमुद्रः । पुं । क्षीराब्धौ ॥ अयंश्वेतद्वीपे वर्त्तते ॥

क्षीरसागरः । पुं । क्षीरसमुद्रे ॥

क्षीरसागरसुता । स्त्री । लक्ष्म्याम् ॥

क्षीरसारः । पुं । मालजिन्‌ इति भाषा प्रसिद्धे क्षीर विशेषे । क्षीरसे ॥ यथा । ईषत्श्लेष्मकरं गौल्यं पित्तघ्नं तर्पणं गुरु । पुष्टिरेषाभिधा तस्य क्षीरसारस्तु क्षीरसः ॥ इति रा० नि० ॥ नवनीते ॥ यथा । क्षीरसारमपमीय शङ्कया स्वीकृतं यदि पलायनं त्व

या । मानसे मम नितान्ततामसे मन्दमन्दम कथं न क्षीयसे" क्षीरसारः ॥

क्षीरसिन्धुः । पुं । क्षीरार्णवे ॥

क्षीरस्फटिकः । पुं । क्षीरवर्णस्फटिकविशेषे ॥

क्षीरडिण्डीरः । पुं । दुग्धफेने । मार्करे ॥

क्षीरा । स्त्री । काकोल्याम् ॥

क्षीराब्धिः । पुं । क्षीरसागरे ॥ क्षीरस्य अब्धिः ॥

क्षीराब्धिजः । पुं । चन्द्रे । इन्द्रे ॥ शेषे ॥ तार्क्ष्ये ॥ अमृतादिसमूहे ॥ न । सामुद्रलवणे ॥ मौक्तिके ॥

क्षीराब्धिजा । स्त्री । इन्दिरायाम् । लक्ष्म्याम् ॥ क्षीराब्धेर्जाता । जनी० । डः ॥

क्षीराब्धितनया । स्त्री । रमायाम् । लक्ष्म्याम् ॥ क्षीराब्धेः तनया ॥

क्षीरामृतम् । न । मधुरमांसे ॥

क्षीराविका । स्त्री । क्षीराव्याम् ॥

क्षीरावी । स्त्री । दुद्धीतिप्रसिद्धौषधौ । दुग्धिकायाम् ॥ क्षीरमवति । अवरक्षणादौ । कर्मण्यण् । ङीप् ॥

क्षीराह्वः । पुं । सरलद्रुमे ॥

क्षीरिका । स्त्री । राजादने । फलाध्यक्षे । खिरणी इतिभाषा ॥ क्षीरिकायाः फलं वृष्यं बल्यं स्निग्धं हिमम । तृष्णामूर्च्छामदभ्रान्तिक्षयदोषत्रयास्रजित् । अपिच । क्षीरिकायाः फलं पक्वं गुरु विष्टम्भि शीतलम् । कषायं मधुरं साम्लं नातिवातप्रकोपनम् ॥ क्षीरमस्त्यस्याः । अतइनिठनाविति ठन् ॥ परमान्ने । पायसे । खीर इतिभाषा ॥ यथा । शुद्धे ऽर्द्धपक्वे दुग्धे तु घृताक्तान् तण्डुलान् पचेत् । ते सिद्धाः क्षीरिका ख्याता सा सिताज्ययुतोत्तमा ॥ क्षीरिका दुर्जरा बल्या धातुपुष्टिप्रदा गुरुः । विष्टम्भिनी हरेत् पित्तरक्तपित्ताग्निमारुतान् ॥ नालिकेरक्षीरिकातु प्रोच्यते भावतोमया ॥ नालिकेरं तनूकृत्य छिन्नं पयसि गोः क्षिपेत् । सिताग्व्याज्यसंयुक्तं तत् पचेत् मृदुना ग्निना ॥ नालिकेरोद्भवा क्षीरी स्निग्धा शीता तिपुष्टिदा । गुर्वी सुमधुरा वृष्या रक्तपित्तानिलापहा ॥ एवं कुष्माण्डमज्जाद्रीं स्तथा वंशाङ्कुरानपि । कदलीनां फलान्मूलान् कर्त्तव्याक्षीरिकाबुधैरिति ॥ नारक्षीरिणोम्पश्य ॥

क्षीरिणी । स्त्री । काञ्चनक्षीरीलतायाम् । तिक्तदुग्धायाम् । पीतदुग्धायाम् । हिमाद्रिजायाम् ॥ क्षीरिणी तिक्तशीता च रेचनी शोफतापनुत् ।

कृमिदोषकफघ्नी च विषज्वरहराप
रा ॥ क्षीरकाकोल्याम् ॥ दुग्धिका
याम् ॥ कुटुम्बिन्याम् ॥ मेदायां ॥ गम्भा
र्याम् ॥ क्षीरमवल्ल्याम् । इन् । ङीप् ॥

क्षीरी । पुं । सुक्षाम् ॥ खर्ज्जूरवृक्षे ॥ राजा
दने ॥ दुग्धपाषाणे ॥ वटे ॥ अर्के ॥
सोमवल्ल्याम् ॥ आक्षोटवृक्षे ॥ क्षी
रमस्यास्तीति वा । अतइनिठना
विती नि: ॥

क्षीरिवृक्ष: । पुं । न । क्षीरयुक्तवृक्षप
ञ्चके ॥ यथा । न्यग्रोधोडुम्बराश्वत्थ
पारिशप्लक्षपादपा: । पञ्चैते क्षीरि
णो वृक्षास्तेषां त्वक् पञ्चवल्कलम्
॥ केचित्तु पारिशस्थाने शिरीषं वे
तसं परे । वदन्तीति शेष: ॥ क्षीरिवृ
क्षा हिमा वर्ण्या योनिरोगव्रणाप
हा: । रूक्षा: कषाया मेदोघ्ना वि
सर्पामयनाशना: ॥ शोथपित्तकफा
स्रघ्ना: स्तन्या भग्नास्थियोजका: । ए
षां त्वग्गुणा: । त्वक्पञ्चकं हिमं
ग्राहि व्रणशोथविसर्पजित् । तेषां प
ञ्चगुणा: । तेषां पत्रं हिमञ्च ग्राहि
कफवातास्रनुत्तथा । विष्टम्भाध्मान
जित् तिक्तं कषायं लघु लेखनमि
ति राजनिर्घण्ट: ॥

क्षीरी । स्त्री । क्षीरिवृक्षे ॥ क्षिरगो
का इति गौडभाषाप्रसिद्धे वृक्षे । दु
ग्धपाषाणे । वज्राके ॥ दुग्धिकायाम् ॥

क्षीरीश: । पुं । क्षीरकञ्चुकी इति
गौडप्रसिद्धे खक्छदे ॥

क्षीरेयी । स्त्री । पायसे ॥ यथा । क्षी
रेय पायस प्रोक्तं परमान्नं च सू
रिभिरिति हलायुध: ॥

क्षीरोद: । पुं । दुग्धसमुद्रे । क्षीराब्धौ
॥ क्षीरमुदकं यस्मिन् । उत्तरपदस्य
चेत्युदकस्योदादेश: ॥

क्षीरोदतनया । स्त्री । लक्ष्म्याम् ।
श्रियाम् ॥ क्षीरोदस्य तनया ॥

क्षीरोदतनयापति: । पुं । विष्णौ ॥

क्षीरोदतनय: । पुं । चन्द्रे ॥

क्षीव: । त्रि । मत्ते ॥ क्षीवते स्म । क्षी
वृ मदे । अकर्मकत्वात् कर्त्तरि क्त:
। अनुपसर्गात् फुल्लक्षीवेतिसाधु: ।
कोवा ॥

क्षीवा । त्रि । मत्ते ॥ पाकुलकान्तमिम् ॥

क्षु: । पुं । सिंहे ॥

क्षुण: । पुं । अरिष्टवृक्षे ॥

क्षुण्ण: । त्रि । अभ्यस्ते ॥ प्रहते । चू
र्णीकृते । सम्पिष्टे ॥ क्षुदे: क्त: ॥

क्षुत् । स्त्री । क्षुते । क्षवे । छिक्कायां
म् ॥ क्षवणम् । टुक्षु शब्दे । सं०
क्विप् । तुक् ॥ वल्लिनात्क्षुतंसकृत् ॥

क्षुतम् । न । नासिकान्त:सम्बद्धवायो
र्नि: सरणे । क्षवे ॥ अक्षमकुम् ।

नित्यं प्रक्षाविः कार्यविद्विरतुवामके क्षुताग्रे भयं याम्यामग्निभयं सुरद्विषिकारे वाम:समुद्राग्रये । वायव्यां प्रबलगन्धसलिलं दिव्याङ्गनाभोगदे ऐशान्यां मरणं ध्रुवंमिगदितं हिमुखवधांसजने ॥ ज्येष्ठीवते क्षुतेऽप्येव मूक्षु:किञ्चिन्न कोविदा: ॥ आसने शयने दाने भोजने वस्त्रसङ्ग्रहे । विवादेच विवाहेच क्षुतं सततु शोभनम् ॥ असंभृतमुख क्षुद्धिषेधो यथा । मासंहतमुख: कुर्याद्धास्यं जृम्भां तथा क्षुतम् ॥ यतुक्तं वचनकृते क्षुतेमेवं तदेव चि ॥ चि । शाकादिनातीक्ष्णीकृते ॥ चवगम् । टुक्षु शब्दे । भावेक्त:॥

क्षुतक: । पुं । राजिकायाम् ॥

क्षुताभिजनन: । पुं । कृष्णसर्षपे । राजी इति भाषा ॥ क्षुतमभिजनयति । नन्द्यादित्वात् ल्यु: ॥

क्षुत्करी । स्त्री । सर्पाक्ष्याम् ॥

क्षुत्पिपासे । स्त्री । द्वि० । लोभभार्ययो: ॥ यथा । क्षुत्पिपासे लोभभार्ये धन्येमान्येचपूजिते । याभ्यांव्याप्तं जगत्सर्वं नित्यंचिन्तातुरं भवेदिति ॥ चिन्तातुरम् क्षुत्पिपासा माम्रकामजखचिन्तातुरमित्यर्थ: ॥

क्षुद्र: । त्रि । अधमे ॥ क्रूरे ॥ कृपणे ॥ अल्पे ॥ दरिद्रे ॥ छलानेषिष्वि ॥ क्षुणत्ति । क्षुदिर् सम्पेषणे । स्फायितञ्चीतिरक् ॥

क्षुद्रकण्टकारी । स्त्री । अग्निदमन्याम् ॥

क्षुद्रकण्टकी । स्त्री । इत्यस्याम् ॥

क्षुद्रकण्टारिका । स्त्री । क्षुपविशेषे । अग्निदमन्याम् ॥

क्षुद्रकण्टिका । स्त्री । कण्टकारिकायाम् ॥

क्षुद्रकम्बु: । पुं । शङ्खनखे । शम्बूके ॥

क्षुद्रकारवेल्ली । स्त्री । कारवेल्लविशेषे । कारवेल्ल्याम् । वमकरेला इतिभाषा ॥

क्षुद्रकारलिका । स्त्री । क्षुद्रकारवेल्ल्याम् ॥ इतिराजनिर्घण्ट:

क्षुद्रकुलिश: । पुं । न । वैक्रान्तमणौ ॥

क्षुद्रकुष्ठम् । न । स्वल्पकुष्ठरोगे ॥ तदेकादशविधं यथा । एकं कुष्ठं स्मृतं पूर्वं गजचर्मतत: परम् । ततश्च र्मदलं प्रोक्तं ततश्चापिविचर्चिका ॥ विपादिकाभिधासैवपामा कच्छूस्तत:परा । ततोदद्रुस्त्वविस्फोट: किटिभन्तत: परम् ॥ ततश्चालसकंप्रोक्तं शतारुश्च तत: परम् । क्षुद्रकुष्ठानि चैतानि कथितानि भिषग्वरैरिति ॥

क्षुद्रखदिर: । पुं । दुष्खदिरे ॥

क्षुद्रगोक्षुरक: । पुं । छोटागोखरू इति

भाषा प्रसिद्धे त्रिकण्टके ॥

क्षुद्रघण्टिका । स्त्री । किङ्किण्याम् । घुं घुरु कौँधनी कर्धनी इति च भाषा ॥ घण्टेव । इवेतिकन् । यद्वा । घण्टयति घण्टतिवा । घटिदीप्तौ । ण्वुल् । क्षुद्राचासौ घण्टिकाच ॥

क्षुद्रघोली । स्त्री । चिविल्लिकाक्षुपे ॥

क्षुद्रचञ्चुः । पुं । क्षुपविशेषे । त्वक्सार भेद्रिन्याम् ॥ स्त्री । पञ्चिणांस्वल्पचञ्च्याम् ॥

क्षुद्रचन्दनम् । न । रक्तचन्दने ॥

क्षुद्रचिर्भिटा । स्त्री । गोपालकर्कट्याम् । कचरी इति भाषा ॥

क्षुद्रचूडः । पुं । ग्ररबल्लखगे । गृधखगे ॥

क्षुद्रजन्तुः । पुं । स्वल्पजन्तौ ॥ आनकुलात् क्षुद्रजन्तवः । क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव यः । शतं वाप्रसृतौ येषाञ्च केचिदानकुलादपि ॥ क्षुद्रश्चासौजन्तुश्च ॥ शतपद्याम् ॥

क्षुद्रजम्बूः । स्त्री । भूमिजम्ब्वाम् । ह्रस्वफलायाम् ॥

क्षुद्रजातीफलम् । न । आमलके ॥

क्षुद्रजीरकम् । न । कणाजीरके । सुगन्धे ॥

क्षुद्रजीवा । स्त्री । जीवन्त्याम् ॥

क्षुद्रतुलसी । स्त्री । अर्जके ॥

क्षुद्रदंशी । स्त्री । क्षुद्रदंशिकायाम् । छोटाडांस इति भाषा । मसड़ इति पर्वतीय भाषा ॥

क्षुद्रदुःस्पर्शा । स्त्री । अग्निदमन्याम् ॥

क्षुद्रदुरालभा । स्त्री । स्वल्पदुरालभायाम् । मरुस्थायाम् । मरुसम्भवायाम् ॥

क्षुद्रदुस्पर्शा । स्त्री । अग्निदमन्याम् ॥

क्षुद्रधात्री । स्त्री । कर्कटवृक्षे ॥

क्षुद्रधान्यम् । न । कङ्ग्वादिकुधान्ये । तृणधान्ये ॥ क्षुद्रधान्य मनुष्णं स्यात् कषायं लघु लेखनम् । मधुरं कटुकं पाके रूक्षञ्च क्लेदशोषकम् ॥ वातकृद्बद्धविट्कञ्च रक्तपित्तकफापहम् ॥

क्षुद्रनासिकः । त्रि । स्वल्पनासायुक्ते । नःक्षुद्रे ॥

क्षुद्रपत्रा । स्त्री । चाङ्गेर्याम् ॥

क्षुद्रपत्री । स्त्री । वचायाम् ॥ इतिराजनिर्घण्टः ॥

क्षुद्रपनसः । पुं । डहौ । लकुचे ॥ क्षुद्रश्चासौ पनसश्च ॥

क्षुद्रपर्णः । पुं । अर्जके ॥ त्रि । सूक्ष्मपत्रे ॥

क्षुद्रपाषाणभेदा । स्त्री । क्षुपविशेषे । चतुष्पत्र्याम् । कन्दरोद्भवायाम् । शैलोद्भवायाम् ॥

क्षुद्रपिप्पली । स्त्री । वनपिप्पल्याम् ॥

क्षुद्रपोतिका । स्त्री । मूलपोत्याम् ॥

क्षुद्रफलः । पुं । } जीवद्रुमे । जीक्षुद्रफलकः । पुं । } वनष्टक्षे ॥

क्षुद्रफला । स्त्री । इन्द्रवारुण्याम् । गवाद्न्याम् ॥ गोपालकर्कव्याम् ॥ कण्टकार्य्याम् ॥ अग्निदमन्याम् ॥ भूमिजम्ब्वाम् ॥

क्षुद्रभण्टाकी । स्त्री । वृहत्याम् । कण्टकार्याम् ॥

क्षुद्रमत्स्यः । पुं । छोटीमच्छीतिलोकप्रसिद्धेमत्स्ये । क्षुद्रमत्स्याः स्वादुरसा दोषत्रयविनाशनाः । लघुपाका रुचिकराः सर्वदाते हितामताः ॥ अतिवृष्याः पुंस्त्वकराः कथ्याः कासानिलापहाः ॥

क्षुद्रमुस्ता । स्त्री । कशेरुकन्दे ॥

क्षुद्ररोगः । पुं । द्विचत्वारिंशद्भेदभिन्ने भावप्रकाशोक्ते स्वल्पव्याधौ ॥

क्षुद्रवर्वणा । स्त्री । वरटायाम् ॥

क्षुद्रवल्ली । स्त्री । मूलपोत्याम् ॥

क्षुद्रवारुणी । स्त्री । सुरायाः प्रभेदे ॥

क्षुद्रवार्त्ताकी । स्त्री । वृहत्याम् ॥

क्षुद्रवार्त्ताकिनी । स्त्री । श्वेतकण्टकार्याम् ॥

क्षुद्रशङ्खः । पुं । शङ्खनखे । क्षुद्रश्चासौ शङ्खश्च ॥

क्षुद्रशर्करा । स्त्री । यावनालशर्करायाम् ॥

क्षुद्रशार्दूलः । पुं । चित्रके । मृगान्तके । चीता इतिभाषा ॥

क्षुद्रशीर्षः । त्रि । अल्पमस्तके ॥ पुं । मयूरशिखावृक्षे ॥ क्षुद्रंशीर्षमस्य ॥

क्षुद्रशुक्तिः । स्त्री । } जलशुक्तिकायाम् ॥
क्षुद्रशुक्तिका । स्त्री । }

क्षुद्रश्यामा । स्त्री । कटभ्याम् ॥

क्षुद्रश्लेष्मातकः । पुं । भूकर्बुदारके ॥

क्षुद्रसहा । स्त्री । मुद्गपर्ण्याम् । माषारगन्धायाम् ॥ इन्द्रवारुण्याम् ॥ सहतिसहतेवा । षह० । अच् । टाप् क्षुद्रसहा ॥

क्षुद्रसुवर्णम् । न । रीतौ । पित्तले ॥

क्षुद्रश्वासः । पुं । अल्पश्वासरोगे ॥

क्षुद्रहिङ्गुलिका । स्त्री । } कण्टकार्याम् ॥ क्षुद्राचासौहिङ्गुलीच ॥
क्षुद्रहिङ्गुली । स्त्री । }

क्षुद्रा । स्त्री । व्यङ्गायाम् ॥ नट्याम् ॥ कण्टकारिकायाम् ॥ कामेवलग्राम् लंग्राह्यम् ॥ सरघायाम् ॥ चाङ्गेर्याम् ॥ वेश्यायाम् ॥ हिंस्रायाम् ॥ मक्षिकामात्रे ॥ क्षुणत्ति क्षुद्यतेवा । क्षुदिर्सञ्चूर्णने । स्फायितञ्चीतिरक् । टाप् ॥ गवेधुकायाम् ॥ बादरतायाम् ॥

क्षुद्राग्निमन्थः । पुं । दशमूलान्तर्गतवृक्षविशेषे । लघुमन्थे । तनुच्छायाम् । छोटीअगियारी इतिभाषा ॥ अग्निमन्थद्वयञ्चैव तुल्यं वीर्यरसादिषु । तत्प्रयोगानुसारेण योजयेत् स्वबुद्धितः ॥

क्षुद्राञ्जनम् । न । सुश्रुतोक्तचक्षूरोगौषधे ॥

क्षुद्राण्डमत्स्यसङ्घातः । पुं । पोनामाछ इतिगौडभाषा ॥ क्षुद्राण्डयुक्ताःमत्स्याःक्षुद्राण्डमत्स्याः । तेषांसङ्घातः ॥

क्षुद्रापामार्गः । पुं । रक्तापामार्गे ॥

क्षुद्रामलकम् । न । आमलके । काठआमला इतिभाषा ॥

क्षुद्रामलकसंज्ञः । पुं । कर्कटवृक्षे ॥

क्षुद्राम्रः । पुं । कोषाम्रे । सुकोशके ॥

क्षुद्राम्रपनसः । पुं । लकुचे ॥

क्षुद्राम्ला । स्त्री । चाङ्गेर्याम् ॥ अथवा चुक्रायाम् ॥

क्षुद्राम्लिका । स्त्री । आम्लाम्लायाम् । चाङ्गेर्याम् ॥

क्षुद्रिका । स्त्री । दंशे ॥

क्षुद्रिमा । पुं । क्षुद्रत्वे ॥ क्षुद्रस्य भावः । इमनिच् ॥

क्षुद्रेङ्गुदी । स्त्री । यवासे ॥

क्षुद्रेवारुः । पुं । गोपालकर्कट्याम् ॥

क्षुद्रोदुम्बरिका । स्त्री । काकोदुम्बरिकायाम् ॥

क्षुद्रोपायः । पुं । मायादिषु । मायोपेक्षेन्द्रजालानि क्षुद्रोपायाइमेस्मृताः ॥

क्षुद्रोपोदकनाम्नी । स्त्री । मूलपोत्याम् ॥

क्षुद्रोपोदकी । स्त्री । स्वल्पपूतिकाशाके । मत्स्याक्ष्याम् ॥ रसवीर्यविपाकेषु सदृशी पूर्वयास्त्वयम् । पूर्वया उपोदक्या ॥

क्षुद्रोलूकः । पुं । डुण्डुले । शाकुनेये । लघुउल्लूइतिभाषा ॥

क्षुत् । स्त्री । क्षुधायाम् । बुभुक्षायाम् ॥ क्षोधनम् । क्षुधबुभुक्षायाम् । क्विप् ॥

क्षुधा । स्त्री । भोजनेच्छायाम् । बुभुक्षायाम् । अशनायायाम् ॥ बुभुक्षोत्पादकौदर्याग्निविकारे ॥ भावादिमतेन टाप् ॥

क्षुधाकुशलः । पुं । बिल्वान्तरवृक्षे ॥

क्षुधातुरः । त्रि । क्षुधापीडिते ॥ यथा । अर्थातुराणां न सुहृन्न बन्धुः कामातुराणां नभयं न लज्जा । चिन्तातुराणां नसुखं न निद्रा क्षुधातुराणांनबलंनतेजइति ॥

क्षुधाभिजननः । पुं । राजिकायाम् ॥ त्रि । क्षुज्जनके ॥ क्षुधामभिजनयति । जनी० । नंद्यादित्वाल्ल्युः ॥

क्षुरधानम् । न । नापितोपस्कराधाने । गुच्छी इतिपर्वतीयभाषा ॥ क्षुरो धीयतेऽस्मिन् । धाञोल्युट् ॥

क्षुरधारः । पुं । महानरकविशेषे ॥ अस्त्रविशेषे ॥

क्षुरपत्रः । पुं । शरे ॥ त्रि । क्षुरतुल्यपत्रयुक्ते ॥

क्षुरपत्रिका । स्त्री । पालङ्क्यशाके । पालङ् इतिभाषा ॥

क्षुरप्रः । पुं । शरविशेषे ॥ घासच्छेदनास्त्रे । खुरपा इतिभाषा ॥

क्षुरभाण्डम् । न । क्षुराधारे । गुच्छी इतिपर्वतीयभाषा ॥

क्षुरमर्दी । पुं । नापिते ॥

क्षुरमुण्डी । पुं । नापिते ॥ मुण्डं करोतीतिमुण्डी । क्षुरेणमुण्डी ॥

क्षुराङ्गः । पुं । गोक्षुरे ॥

क्षुरिका । स्त्री । पालङ्क्यशाके ॥

क्षुरिकापत्रः । पुं । शरे ॥

क्षुरिणी । स्त्री । वमस्कार्याम् । वराहक्रान्तायाम् ॥ नापितभार्यायाम् ॥

क्षुरी । पुं । नापिते ॥ क्षुरोऽस्यास्ति इनिः ॥

क्षुरी । स्त्री । छुरिकायाम् ॥

क्षुल्लः । त्रि । अल्पे ॥ लघौ ॥ चोदनम् । क्षुदिर्सम्पेषणे । सं० क्विप् । क्षुदंलाति । आतोनुपेसिकः । लोपिः ॥ यद्वा । क्षु यते । स्फायितञ्चीतिरक् । रलयोरेकत्वम् । कपिलकादित्वाल्लत्वम् ॥

क्षुल्लकः । पुं । क्षुद्रशङ्खे ॥ नीचे । पामरे ॥ अल्पे ॥ कनिष्ठे ॥ दुःखिते ॥ खले ॥ क्षुल्लशब्दात् स्वार्थेकन् ॥ यद्वा । क्षु णत्ति क्षुयते वा । क्षुदिर् ० क्षुदघोदेवा । स्फायीतिरक् । क० लत्वम् ॥ यद्वा । क्षुधालक्यते । लकआस्वादने । पुंसीतिघः ॥

क्षेत्रम् । न । शरीरे । इन्द्रियात्मकः करणसंश्रिते भोगायतने ॥ यथोक्तम् । इन्द्रियाणि दशैकञ्च पञ्चचेन्द्रियगोचराः । इच्छाद्वेषः सुखं दुःखं सङ्घात श्चेतना धृतिः ॥ एतत् क्षेत्रंसमासेनसविकारमुदाहृतमिति ॥ सस्यस्यैवाश्चिमसकृत्कर्मणः फलस्यनिर्वृत्तेः ॥ केदारे । व्रीह्याद्युत्पत्तिस्थाने ॥ सिद्धस्थाने ॥ कलत्रे । पत्न्याम् ॥ भारतादौ ॥ भगे ॥ अङ्गे ॥ मेषादिराशौ ॥ यथा । मेषस्वङ्गारकक्षेत्रंवृषः शुक्रस्यकीर्त्तितम् । मिथुनस्यबुधक्षेत्रं सोमस्य कर्कटस्तथा ॥ सूर्यक्षेत्रंभवेत्सिंहः कन्याक्षेत्रं बुधस्यच । तुलाक्षेत्रंतुशुक्रस्य भौमस्य वृश्चिकस्तथा । धनुः सुरगुरोःक्षेत्रंमेषमेकरकुम्भकौ ॥ मीनः सुरगु

रोपचैव यद्धमेधं प्रकीर्त्तितम् ॥ लीलावत्यादि प्रसिद्धे गणितव्यवहारे ॥ क्षयति चीयते अनेन वा । चित्य ये चितिनिवासगत्योर्वा । ष्ट्रन् ॥

क्षेत्रकरः । पुं । क्षेत्रस्य कर्त्तरि ॥ क्षेत्रं करोति । दिवाविभेत्यादिनाटः ॥

क्षेत्रकर्कटी । स्त्री । वालुक्याम् ॥

क्षेत्रचिर्भिटा । स्त्री । चिर्भिटायाम् । पाण्डुफलायाम् ॥

क्षेत्रजः । पुं । द्विपितृके पुत्रविशेषे । स्वपत्न्यामन्यदाराजनितेपुत्रे ॥ यथाह बोधायनः । मृतस्यच प्रसूतो यः क्लीवस्य व्याधितस्य वा । अन्येनानुमतो वा स्यात् स्वक्षेत्रे क्षेत्रजः स्मृत इति । अस्यार्थः । क्लीवादेः स्वे क्षेत्रे तदनुमतोऽन्येन प्रसूतः क्षेत्रजो भवति । मनुरप्याह । यस्तल्पजः प्रमीतस्य क्लीवस्य व्याधितस्य वा । स्वधर्मेणानियुक्तायां सपुत्रः क्षेत्रजः स्मृत इति ॥ त्रि । क्षेत्रजाते ॥

क्षेत्रजा । स्त्री । तामकुइ इति गौड भाषा प्रसिद्धेतृणविशेषे । गोमूत्रिकायाम् । रक्ततृणायाम् ॥ चणिकायाम् ॥ शशाण्डुल्याम् ॥ शिल्पिकायाम् ॥ श्वेतकण्टकार्याम् ॥

क्षेत्रज्ञः । पुं । आत्मनि । पुरुषे । शरीरस्य कर्मसु प्रवर्त्तयितरि । शरीराधिदैवते ॥ योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते । इति मनुः ॥ क्षेत्राण्याणि शरीराणि, तेषांश्चैव यथासुखम् । आत्मानं वेत्ति संयोगा दतः क्षेत्रज्ञउच्यते इति च पुराणम् ॥ क्षेत्रज्ञो नाम अधिदेवो दक्षिणेचक्षुषि व्यवस्थितो द्रष्टा चक्षुषोः करणानां नियन्ता कार्यकरणस्वामी हिरण्यगर्भविराड्भ्यां समष्टिदेहाभ्यामन्य इतिव्याख्यातारः ॥ त्रि । छेके । निपुणे । विदग्धे ॥ कृषके ॥ चीयते इति क्षेत्रं शरीरं तज्जानाति । ज्ञा अवबोधने । आतोनुपसर्गेकः ॥

क्षेत्रदूतिका । स्त्री । दुःस्पर्शायाम् ॥

क्षेत्रदूती । स्त्री । श्वेतकण्टकार्याम् ॥

क्षेत्रपतिः । पुं । क्षेत्रपाले ॥ कृषाविदि ॥ यथा । कत्रु क्षेत्रपतिम् प्राहुः केचि दपि मथा परे । स्वामस्य एव वा कश्चित् क्षेत्रस्य पतिरुच्यते इति ॥

क्षेत्रपर्पटी । स्त्री । खेतपापड़ा इति प्रसिद्धे क्षुप विशेषे ॥

क्षेत्रपालः । पुं । देवताविशेषे ॥ भेदा एकोनपञ्चाशत् क्षेत्रपालस्य कीर्त्तिताः । मातृकाक्षरभेदेन सम्भिन्ना नाम भेदत इति ॥ प्रयोजनन्त्वेतत् । नामधेयस्यवर्णानांयोवर्णो मातृकाक्षरे

। दृश्यते प्रथमं तत्र तत्रायं क्षेत्रपालकः ॥ क्षेत्रपालमसम्पूज्य यः कर्म कुरुते क्वचित् । तस्य कर्मफलं हन्ति क्षेत्रपालो नसंशयइत्यादि ॥ विशेषः प्रयोगसारे द्रष्टव्यः ॥

क्षेत्ररुहा । स्त्री । वालुकीकर्कट्याम् ॥ त्रि । क्षेत्रजाते ॥

क्षेत्रवित् । पुं । जीवात्मनि ॥ क्षेत्रज्ञे ॥

क्षेत्रसम्भवः । पुं । चम्पकक्षुपे ॥ भिण्डाक्षुपे ॥ त्रि । भूमिजे ॥

क्षेत्रसम्भूतः । पुं । कुन्दरे ॥ त्रि । क्षेत्रोद्भवे ॥

क्षेत्राजीवः । त्रि । कर्षके । किसाण इति प्रसिद्धे ॥ क्षेत्रम् आजीवो जीविकास्य ॥

क्षेत्राधिदेवता । स्त्री । तीर्थाधिपदेवतायाम् ॥ देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम् । सिद्धं सिद्धाधिकारांश्च श्रीपूर्वं समुदीरयेत् ॥ इति प्रयोगसारः ॥

क्षेत्राधिपः । पुं । मेषाद्यधिपतिग्रहेषु ॥ कुजशुक्रबुधेन्द्वर्कसौम्यशुक्रावनीभुवाम् । जीवार्किभानुजेज्यानां क्षेत्राणामीश्वराः क्रमात् ॥ इतिज्योतिषम् ॥

क्षेत्रामलकी । स्त्री । भूम्यामलक्याम् ॥

क्षेत्रिकः । पुं । क्षेत्रस्वामिनि ॥

क्षेत्री । पुं । क्षेत्रविशिष्टे । कृषीवले ॥ इनि: ॥ भर्त्तरि ॥

क्षेत्रियः । पुं । असाध्यरोगे ॥ परदाररते । पारदारिके ॥ अन्यदेहचिकित्सार्हे ॥ परक्षेत्रेचिकित्स्यः । शरीरान्तरेचिकित्स्यइत्यर्थः । क्षेत्रियच् परक्षेत्रेचिकित्स्य इति परक्षेत्रशब्दात् घच् परशब्दस्यलोपश्चनिपात्यते ॥ अन्यस्यभार्यायामन्येनोत्पादिते । यथा विचित्रवीर्यस्य क्षेत्रे क्षत्रियायां ब्राह्मणोत्पादिता धृतराष्ट्रादयः क्षेत्रियाः ॥ न । क्षेत्रजतृणे ॥

क्षेपक्षुः । पुं । यावनाले । जुन्हरी जुवार इति भाषा ॥

क्षेपः । पुं । निन्दायाम् ॥ विक्षेपे ॥ लेपने ॥ गर्वे ॥ प्रेरणे ॥ लङ्घने ॥ विलम्बे ॥ हेलायाम् ॥ गुच्छे ॥ क्षेपणम् । क्षिपप्रेरणे । घञ् ॥

क्षेपकः । त्रि । क्षेपकर्त्तरि ॥

क्षेपणम् । न । प्रेरणे । क्षिपायाम् ॥ प्रस्तरादीनां दूरप्रक्षेपणार्थं रज्जुनिर्मिते शिक्ययन्त्रे । गोफिया इति भाषा ॥ यापने ॥ यथा । विधवा यौवनस्थाच नारी भवति कर्कशा । आयुषः क्षेपणार्थन्तु दातव्यं स्त्रीधनं सदेति हारीतः ॥

क्षेपणिः । स्त्री । डाँड इतिख्याते नौ

काद्दण्डे ॥ क्षिप्यतेऽनया । क्षिप प्रेरणे । क्षिपेः किच्चेत्यनिः । बाहुलकात् गुणः ॥ जालभेदे ॥

क्षेपणी । स्त्री । नौकादण्डे ॥ जालभेदे ॥ कृदिकारादक्तिन इति ङीष् ॥

क्षेपणीयः । पुं । भिन्दिपाले । पाषाणप्रक्षेपणास्त्रे ॥ त्रि । क्षेपणार्हे ॥

क्षेपिमा । पुं । क्षिप्रत्वे ॥ क्षिप्रस्य भावः । पृथ्वादिभ्य इमनिच् । स्थूलदूरेति साधुः ॥

क्षेपिष्ठः । त्रि । अतिक्षिप्रे ॥ अयमेषामतिशयेन क्षिप्रः । स्थूलदूरेतीष्ठनि साधुः ॥ वायुर्वै क्षेपिष्ठा देवतेति श्रुतिः ॥

क्षेपीयान् । त्रि । क्षिप्रतरे ॥ अयमनयोः क्षिप्रः । द्विवचनविभज्येतीयसुनि स्थूलदूरेति साधुः ॥

क्षेप्ता । त्रि । क्षेपणकर्त्तरि ॥ क्षिपति । क्षिप० । तृच् ॥

क्षेमः । पुं । चण्डायाम् । चोरनामगन्धद्रव्ये ॥ पुं । न । लब्धरक्षणे ॥ कल्याणे । कुशले ॥ मोक्षे ॥ चतुर्थतारायाम् ॥ त्रि । तद्वति ॥ क्षयत्यशुभम् । क्षि० । मन् ॥ क्षिणोति वा । क्षि हिंसायाम् । अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मनिति मन् ॥

क्षेमकः । पुं । चोरनामगन्धद्रव्ये ॥ पाण्डुवंशजे राजपुत्रे ॥ परीक्षिदादयः क्षेमकान्ताः कलेः सहस्रद्वयसंवत्सरपर्यन्तं राजानो भवन् । ततोऽस्य वंशस्य विश्रान्तिः । ततः सोमवंशशाखान्तरे मगधवंश्याराजानः कलौ बहुकालं स्थिताः ॥ नागविशेषे ॥ भारतप्रसिद्धे राक्षसे ॥

क्षेमकरः । त्रि । मङ्गलकारके ॥ क्षेमङ्करः ॥

क्षेमकरी । स्त्री । भवान्याम् ॥

क्षेमकारः । त्रि । शुभङ्करे ॥ क्षेमप्रियमद्रेऽण्चेत्यण् ॥

क्षेमङ्करः । त्रि । क्षेमकारे । अरिष्टतातौ ॥ क्षेमप्रियमद्रेऽण्चेति चकारात् खच् । मुमागमः ॥

क्षेमङ्करी । स्त्री । देवीविशेषे ॥ भगवत्यामूर्त्त्यन्तरे शङ्खचिल्याम् ॥ यथा । कुङ्कुमारुण सर्वाङ्गि कुन्देन्दुधवलानने । मत्स्यमांसप्रिये देवि क्षेमङ्करि नमोऽस्तु ते इति दर्शने नमस्कारमन्त्रः ॥

क्षेमफला । स्त्री उदुम्बरवृक्षे ॥ क्षेमाय फलान्यस्याः ॥

क्षेमवान् । त्रि । मङ्गलयुक्ते ॥

क्षेमधूरः । त्रि । निर्भयस्थाने बलप्रकाशके ॥

क्षेमा । स्त्री । उमायाम् । कात्यायन्याम् ॥ क्षेमङ्कर्याम् ॥ धनकर्याम् ॥ मयक्षेमशुभम् । क्षि° । क्षिणोति दुःखम् । क्षिहिंसायाम् । मन् । टाप् ॥

क्षेम्यः । त्रि । कुशलयोग्ये ॥

क्षेयम् । त्रि । क्षेतुंयोग्येपापादौ ॥ क्षि° । अक्षेयत् । गुणः ॥

क्षैणम् । न । क्षेत्रवृन्दे । कैदार्ये ॥ क्षेत्राणां समूहः । भिक्षादिभ्योऽण् ॥

क्षैरेयम् । त्रि । क्षीरसंस्कृते ॥ क्षीरेसंस्कृतम् । क्षीराड्ढञ् ॥

क्षैरेयी । स्त्री । यवाग्वाम् ॥ ङीप् ॥ पायसे ॥

क्षोडः । पुं । आलाने । गजबन्धन्याम् ॥

क्षोणिः । स्त्री । धरित्र्याम् ॥ क्षौति । टुक्षु शब्दे । बाहुलकान्निः ॥

क्षोणी । स्त्री । भूमौ ॥ कृदिकारादितिङीष् ॥

क्षोणीप्राचीरः । पुं । समुद्रे ॥

क्षोदः । पुं । रजसि । चूर्णे ॥ पेषणे ॥ क्षुद्यते । क्षुदिर्सम्पेषणे । घञ् ॥

क्षोदक्षमः । त्रि । । विचारसहे ॥

क्षोदतम् । न । चूर्णे ॥ त्रि । पेषिते ॥

क्षोदिमा । पुं । क्षुद्रत्वे ॥ क्षुद्रस्य भावः । पृथ्वादित्वादिमनिच् । स्थूलनिदूरेतिसाधुः ॥

क्षोदिष्ठः । त्रि । अतिक्षुद्रे ॥ अयमेषामतिशयेनक्षुद्रः । अतिशायनेतमविष्ठनावितीष्ठनि स्थूलदूरेतिसाधुः ॥

क्षोदीयान् । त्रि । क्षुद्रतरे ॥ अयमनयोरतिशयेनक्षुद्रः । द्विवचनविभज्येतीयसुनि स्थूलदूरेतिसाधुः ॥

क्षोद्यः । त्रि । क्षोदनीये । चूर्णितुंयोग्ये ॥

क्षोभः । पुं । अधर्मितसञ्चलनः सञ्चलने ॥ क्षोभणे ॥ चित्तचाञ्चल्ये ॥

क्षोभकः । पुं । कामाख्यास्थपर्वतविशेषे ॥ त्रि । क्षोभजनके ॥

क्षोभकृत् । त्रि । विघ्नकारिणि ॥

क्षोभणः । पुं । कामबाणविशेषे ॥ क्षोभकारके ॥ विष्णौ ॥ प्रकृतिम् पुरुषञ्चैव प्रविश्य स्वेच्छया हरिः । क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ ॥ परिणाम्यपरिणामिनौ उपादाननिमित्तौ ॥ इत्यर्थः ॥ क्षोभयति । क्षुभसञ्चलने । ल्युः ॥

क्षोभितः । त्रि । क्षोभयुक्ते । सञ्चालिते ॥

क्षोमः । पुं । न । मण्डपोपरिशालायाम् । हट्टे ॥ क्षौति । टुक्षु शब्दे । अर्त्तिस्तुस्वितिमन् ॥

क्षोमकः । पुं । गणहासके । चोरनामगन्धद्रव्ये ॥

क्षौद्रम् । न । मधुनि ॥ पानीये ॥ कपिलवर्णे मधुनि ॥ मक्षिकाः कपिलाः सूक्ष्माः क्षुद्राख्या स्तत्कृतम्मधु । मुनिभिः क्षौद्र मित्युक्तं तद्वर्णात् कपिलम् भवेत् ॥ गुणैर्माक्षिकवत् क्षौद्रं विशेषान्मेहनाशनम् ॥ क्षुद्राभिर्मक्षिकाभिः कृतम् । क्षुद्राभ्रमरवटरपादपादञित्यण् ॥ पुं । क्षितिकर्षे । पांशौ ॥ चम्पकवृक्षे ॥ सजातीयान्मागध्यांजाते सङ्करजातिविशेषे ॥ वागुरादिनाऽस्यजीविका ॥

क्षौद्रजम् । न । सिक्थे । मधूच्छिष्टे ॥ त्रि ॥ मधुजातमात्रे ॥

क्षौद्रधातुः । पुं । माक्षिके ॥

क्षौद्रप्रियः । पुं । जलमधूकवृक्षे ॥ त्रि । मधुप्रिये ॥

क्षौद्रमेहः । पुं । प्रमेहरोगविशेषे ॥ तस्यलक्षणं यथा । कषायं मधुरं रूक्षं क्षौद्रमेहं वदेद्बुधः । कषायं कषायवर्णम् ॥

क्षौद्रेयम् । न । सिक्थके । सिया मैण मोम इति भाषा ॥

क्षौमः । पुं । न । अट्टे । अट्टा अटारी इति भाषा ॥ दुकूले ॥ न । वल्कलांशुके ॥ शाणजेवस्त्रे ॥ अतसीवस्त्रे ॥ पट्टवस्त्रे ॥ त्रि । क्षुमायाविकारे ॥ क्षौमाहतेरथे ॥ क्षुवन्त्यन । टच्यु० । कत्तिस्तुस्त्विनिरः, न् । ततःप्रज्ञाद्यण् ॥ क्षुमायाः विकारः । तस्यविकारइत्यण् ॥ क्षौमेणदुकूलेनपरिहतोरथः । परिवृतोरथइत्यण् ॥

क्षौमी । स्त्री । अतस्याम् ॥ क्षुमानिर्मितकन्यायाम् ॥

क्षौरम् । न । क्षुरकर्मणि । मुण्डने । वपने ॥ केशश्मश्रुनखादीनां कर्त्तनंसम्प्रसाधनम् । सम्प्रसाधनम् पवित्रीकरणम् ॥ व्रतादिसंयमे क्षौरकर्माकरणेदोषो यथा । व्रताना मुपवासानां श्राद्धादीनाञ्चसङ्गमे । न करोति क्षौरकर्म सोऽशुचिः सर्वकर्मसु ॥ स्वयंमाल्यंस्वयंपुष्पं स्वयं घृष्टञ्च चन्दनम् । नापितस्य गृहे क्षौरं शक्रादपि हरेत् श्रियम् ॥ रवौ दुःखं सुखं चन्द्रे कुजेमृत्यु र्बुधेधनम् । मानं हन्तिगुरोर्वारे शुक्रे शुक्रक्षयोभवेत् ॥ शनौचसर्वदोषाः स्युः क्षौरमत्र विवर्जयेत् ॥ अत्रदृढगर्गः । केशवमानर्त्तपुरं पाटलिपुत्रं पुरीमहिच्छत्राम् । दितिमदितिञ्चस्मरतां क्षौरविधौ भवतिकल्याणमिति ॥ क्षुरेणनिर्वृत्तम् । तेननिर्वृत्तमित्यण् ॥

क्षौरपव्यम् । न । क्षुरवज्जतुल्यतीक्ष्णाद्दवगृहे ॥

क्षौरिकः । पुं । नापिते ॥ इतिशब्द

भराग्रौ ॥ खन्यते खनति वा । खनुअवदारणे । अन्येभ्योपीतिडः ॥ खर्वेऽस्मिन् वा । खर्वगतौ । डः ॥ अभ्रके ॥

खकुन्तलः । पुं । शर्मे । शिवे ॥

खक्खटः । पुं । कक्खटे । कठिने ॥ खक्खति । खक्खहसने । शकादिभ्योऽटन् ॥

खगः । पुं । सूर्ये ॥ ग्रहे ॥ देवे ॥ मार्गेण । शरे ॥ पक्षिणि । विहङ्गमे ॥ वायौ ॥ खेगच्छति । गम्लृगतौ । अन्येभ्योपीतिडः ॥

खगगतिक्रिया । स्त्री । पक्षिणां डीनादिगतिचेष्टायाम् ॥ यथा । डीनंप्रडीन मुड्डीनं सण्डीनं परिडीनकम् । विडीन मवडीनञ्च निडीनं डीनडीनकम् ॥ गतागतप्रगतित सम्पाताश्चपक्षिणाम् । गतिप्रभेदाः पक्षिगृहं कुलायोनीडमस्त्रिया मितिजटाधरः ॥

खगतिः । स्त्री । आकाशगमने ॥

खगपः । पुं । गरुडे ॥ खगान् पाति । पारक्षणे । आतोनुपेतिकः ॥

खगपतिः । पुं । गरुडे ॥ खगानाम् पतिः ॥

खगमः । पुं । खेचरे ॥

खगवक्रः । पुं । लकुचवृक्षे ॥

खगवती । स्त्री । भूमौ । क्षितौ ॥

खगशत्रुः । पुं । पृश्निपर्ण्याम् ॥

खगस्थानम् । न । कोटरे । निष्कुहे ॥ खगानांस्थानम् ॥

खगान्तकः । पुं । श्येनपक्षिणि ॥

खगासनः । पुं । उदयाचले ॥ विष्णौ ॥ खगस्य खगानांवा आसनं यस्मिन् सः ॥ खगो गरुडः आसनं यस्य वा ॥

खगेन्द्रः । पुं । गरुडे । वैनतेये ॥ खगानामिन्द्रः ॥

खगेन्द्रध्वजः । पुं । विष्णौ । हरौ ॥ खगेन्द्रो ध्वजे यस्य । खगेन्द्रो ध्वजश्चिह्नं यस्य वा ॥

खगेश्वरः । पुं । गरुडे । सुपर्णे ॥ खगानामीश्वरः ॥

खगोलः । पुं । आकाशमण्डले ॥ तस्य विवरणंयथा । एतद्ब्रह्माण्डं सच्छिद्रं कटाहद्वयस्य गोलाकारसम्पुटतुल्यम् । यत्र भूर्भुवःस्वर्महर्लोकजनतपःसत्यसंज्ञकानि सप्तभुवनानि सन्ति । ब्रह्माण्डमध्ये यः परिधिः सआकाशकक्ष्या । तन्मध्ये परावहपरिवहसुवहसंवहोद्वहाख्यानां पञ्चानां वायूनांस्थानानि अधोधःक्रमेणसन्ति । तदधस्तात् अधोधःस्थितपूर्वाभिमुखशनिवृहस्पतिराहुकेतुमङ्गलसूर्यशुक्रबुधचन्द्रग्रहयुक्तां दक्षिणो

त्तरस्थितध्रुवाख्यतारोद्वयेन बद्धं न
क्षत्रचक्रं सदापश्चिमगतिना प्रवहवा
युना भ्रमति । ततोधोधः क्रमेण
सिद्धविद्याधरमेघविद्युदादियुक्तः स
दोत्तरगति रावहवायुर्भ्रमति । ए
तद्ब्रह्माण्डस्य मध्ये समन्तादीश्वर
स्य धारणात्मिकां शक्तिं विभ्राणो भू
गोलः शून्ये तिष्ठति । पृथ्व्यन्तर्गता
नाग सुरसमाश्रया दिव्यौषधिरसो
पेता रम्याः पातालरसातलमहात
लतलातलसुतलवितलातलसंज्ञका
ऊर्द्ध्वोर्द्ध्वक्रमेण सप्तपातालभूमयश्च
सन्ति । सुमेरुपर्वतोपरि शून्ये एका
ध्रुवताराभ्रमति । एवं वडवानलो
परि शून्येऽन्याध्रुवतारा भ्रमतीति॥

खगगडः । पुं । खागडा इतिगौडभाषा
प्रसिद्धे तृणविशेषे । पोटगले । इ
क्षत्काशे ॥

खङ्कुरः । पुं । सूर्यकुन्तले ॥

खचमसः । पुं । चन्द्रे ॥ खेचमसइव ॥

खचरः । पुं । वायौ ॥ राक्षसे ॥ सूर्ये
॥ वराणामुदाहरणंयथा । खचरस्य
सुतस्य सुतः खचरः खचरस्यपिता
न पुनः खचरः । खचरस्यसुतेन ह
तः खचरःखचरी परिरोदिति हा
खचर ॥ मेघे ॥ रूपकभेदे ॥ यथा
। खचरो रङ्गताले स्यात् गुरुरादौ

लघु स्तथा । शान्ते ऽथवा हास्यरसे
भवे देषदशाचरइतिसङ्गीतदामो
दरः ॥ त्रि । आकाशगामिनि ॥ खेच
रति । चर० । चरेष्टः ॥

खचितः । त्रि । कल्मिते । रचिते ।
संयुक्ते । छुरिते । व्याप्ते ॥

खजः । पुं । दर्व्वाम् । करछो इति
भाषा ॥

खजकः । पुं । वैशाखे । मन्थानदण्डे ॥

खजपम् । न । घृते ॥ दभ्रि ॥ खज्यते ।
खजमन्थने । उषिकुटिदलिकचिख
जिभ्यःकपन् ॥

खजलम् । न । नीहारे ॥ खस्यजलम्
॥ दिव्योदके । आकाशवारिणि ॥ य
था । वर्षासु चरन्ति घनैः सहोर
गा वियति कीटलूताश्च । तद्विष
जुष्टमपेयं खजल मगस्त्योदयात् पू
र्वम् ॥

खजा । स्त्री । मन्थे॥ प्रहस्ते॥ दर्व्वाम्॥

खजाकः । पुं । खगे । पक्षिणि ॥ खज
ति । खज० । खजेराकः ॥

खजाका । स्त्री । दर्व्वाम् । करछी च
मचा इतिभाषा ॥ खजेराकप्रत्य
यान्तात् टाप् ॥

खजिका । स्त्री । खाजाख्योपदंशे ॥

खजित् । पुं । बुद्धभेदे ॥ खंजयति ।
जि० । क्विप् । तुक् ॥

खद्योतिः। पुं। खद्योते॥

खञ्जः। त्रि। विकलगतौ। खोडं। खोडा लंगडा इतिभाषा॥ खञ्जति। खजि गतिवैकल्ये। पचाद्यच्। तल्लक्षणं यथा। वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेद्यदा। खञ्जस्तदा भवेज्जन्तुः पङ्गुः सक्थ्नो र्द्वयोर्वधात्॥

खञ्जकः। त्रि। खोरे। खञ्जे॥

खञ्जकारिः। पुं। सुखायाम्। खिसारी इतिभाषा॥

खञ्जखेटः। पुं। खञ्जनाख्यविहङ्गमे॥

खञ्जखेलः। पुं। खञ्जनपक्षिणि॥

खञ्जनः। पुं। खञ्जरीटे। ममोला इतिभाषा॥ अस्य लक्षणाध्यायः। खञ्जननामा योऽयं विहङ्गमस्तस्य दर्शने प्रथमे। प्रोक्तानि यानि मुनिभिः फलानि तानि प्रवक्ष्यामि॥ तत्रच त्वारः खञ्जना भवन्ति। तेषांनामान्याह। स्थूलोऽभ्युन्नतकण्ठः कृष्णगलो भद्रकारको भद्रः १। आकण्ठमुखात् कृष्णः सम्पूर्णः २ पूरयत्याशाम्॥ कृष्णोगलेऽस्य बिन्दुः सितकरटान्तः स रिक्तकृद्रिक्तः ३। पीतोगोपोत ४ इतिक्लेशकरः खञ्जनोदृष्टः॥ अथ कस्मिन्स्थाने दृष्टः कीदृक्फलङ्करोतीत्याह। अथ मधुरसुरभिफल



कुसुमतरुषु सलिलाश्रयेषु पुण्येषु। करितुरगभुजगमूर्द्धसु प्रासादोद्यानहर्म्येषु॥ गोगोष्ठसत्समागमयज्ञोत्सवपार्थिवद्विजसमीपे। हस्तितुरङ्गमशालाछत्रध्वजचामरा द्येषु॥ हेमसमीपसिताम्बरकमलोत्पलपूजितोपलिप्तेषु। दधिपात्रधान्यकूटेषुच श्रियं खञ्जनः कुरुते॥ अन्येष्वप्याह। पङ्के स्वाद्वन्नाप्तिर्गोरससम्पन्नगोमयोपगते। शाद्वलगे वस्त्राप्तिः शकटस्थे देशविभ्रंशः॥ गृहपटले ऽर्थभ्रंशो बन्धोऽशुचौभवतिरोगः। पृष्ठे त्वजाविकानां प्रियसङ्गममावहत्याशु॥ अन्यदप्याह। महिषोष्ट्रगर्दभास्थिश्मशानगृहकोणशर्करादृस्थः। प्राकारभस्मकेशेषु चाशुभोमरणरुग्भयदः॥ पक्षौ धुन्वन्नशुभः शुभः पिबन् वारि निम्नगासंस्थः। सूर्योदये प्रशस्तो नेष्टफलः खञ्जनोऽस्तमये॥ नीराजने निवृत्ते ययादिशाखञ्जनो व्रजयात्नम्। पश्येत् तया गतस्य क्षिप्रमरातिर्वशमुपैति॥ अथप्रत्ययप्रदर्शनार्थमाह। तस्मिन्निधिर्भवति मैथुनमेति यस्मिन् यस्मिंस्तु छर्दयति तत्र तले ऽस्ति काचः। अङ्गार मप्युपदिशन्ति पुरीषणेऽस्य त-

क्षौतकोपनयनाय खने हरिणीम्॥ अन्यच्छुभाशुभमाह। मृतविकल विभिन्नरोगितः स्वतनुसमानफलप्रदः खगः। वनकृद्भिनिर्जीयमानको वियतिच बन्धुसमागमप्रदः॥ अथशुभखञ्जने दृष्टे विधानमाह। नृपति रपि शुभं शुभप्रदेशेखग मवलोक्य महीतले विदध्यात्। सुरभिकुसुमधूपयुक्तमर्घं शुभ मभिनन्दित मेव मेति वृद्धिम्॥ अथाशुभे खञ्जने दृष्टे विधानमाह। अशुभ मपि विलोक्य खञ्जनं द्विजगुरुसाधुसुरार्चने रतः। न नृपति रशुभं समाप्नुयान्नयदि सप्तदिनानिमांसभुक् स्यात्॥ अथ कालफलप्रदर्शनार्थ माह। आवर्षात् प्रथमे दर्शने फलं प्रतिदिनन्तु दिनशेषात्। दिक्स्थानमूर्त्तिलग्नर्क्षशान्तादीप्तादिभिश्चोह्यम्॥ इतिवाराह्यांसंहितायांखञ्जनचरित्रंनामैकचत्वारिंशोध्यायः॥ ४३ विशेषः शाकुने॥ दिग्विशेषे ऽस्य शस्फलम। वित्तं ब्रह्मणि कार्यसिद्धिरतुला शक्रे हुताशेभयं याम्यामग्निभयं सुरद्विषिकलिः सौमः समुद्रालये। वायव्यां वरवस्त्रगन्धसहितं दिव्याङ्गनाचोत्तरे ऐशान्यां मरणं ध्रुवंबिगदितंदिग्लक्षणं ख

ञ्जने॥ ज्येष्ठीवतच्चनेप्यवं...॥ न। गमने॥ खञ्जति। खजि०। नन्द्यादित्वाल्ल्युः॥

खञ्जनकः। पुं। खञ्जने॥

खञ्जनरतम्। न। यतीनां गोपनीये रते॥ यमिनां यद्रतं गोप्यं तत् खञ्जनरतं विदुरित्युक्तेः॥

खञ्जना। स्त्री। खञ्जरीटसमपक्षिणि। क्षुद्रखञ्जनजातौ। सर्षप्याम्॥

खञ्जनिका। स्त्री। खञ्जनाकृतौ। सर्षप्याम्। क्षापुत्रिकायाम्॥ खञ्जनेव। स्वार्थेकः। टाप्। इत्वम्॥

खञ्जरीटः। पुं। खञ्जने॥ असिधारायाम्॥ व्रतचारिणि॥ खञ्जइवचरति। खञ्जगतौ। बाहुकात् कीटन्॥

खञ्जा। स्त्री। छन्दः प्रभेदे॥

खटः। पुं। अन्धकूपे॥ कफे॥ प्रहारान्तरे॥ टङ्के॥ तृणे॥ लाङ्गले॥ कतृणे॥ खटकाङ्गायाम्। अच्॥

खटकः। पुं। नागवीटे। टाङ्करे॥

खटकामुखः। पुं। शराकर्षणमुद्रायाम्॥ हस्तकविशेषे॥

खटिकः। पुं। कुञ्चितपाणौ॥

खटिका। स्त्री। शैलखडी इति प्रसिद्धायां कठिन्याम्। लेखनद्रव्ये॥ कर्णरन्ध्रे॥ क्षीरणे॥

खटिनी। स्त्री। खट्याम्। खटिका

याम् ॥

खटी । स्त्री । कठिन्याम् । धवलमृत्तिकायाम् ॥ खटी दाहास्रजि च्छीता मधुरा विषशोथजित् । लेपादौ तद्गुणाः प्रोक्ता भक्षिता मृत्तिकासमा ॥ खटी गौरखटी द्वे च गुणैः स्तुल्ये प्रकीर्त्तिते ॥

खट्टनः । त्रि । खर्वे ॥

खट्टाशः । पुं । गन्धोतौ । वनवासने ॥ खाटास गन्धगोकुला इतिच गौड भाषा ॥

खट्टाशी । स्त्री । पूतिशारिजायाम् ॥

खट्टिः । पुं । शवयाने । अन्तशय्यायाम् ॥

खट्टिकः । पुं । खटीक इतिख्याते मांसविक्रयिणि ॥ मत्स्यिषीचीरफेने ॥ शाकुनिके । चिडीमार इतिभाषा ॥

खट्टिका । स्त्री । क्षुद्रखट्वायाम् । निषद्यायाम् ॥ शवयाने ॥

खट्टेरकः । त्रि । खर्बे ॥

खट्वका । स्त्री । खट्विकायाम् ॥ अभाषितपुंस्काश्चेति पक्षे इत्त्वाभावः ॥

खट्वा । स्त्री । पर्य्यङ्के । शयने । मञ्चे ॥ खट्यते निद्रालुभिः । खटकाङ्क्षायाम् । अशूप्रुषीतिक्वन् । टाप् ॥ अष्टाभिः काष्ठखण्डैस्तु खट्वेति प्रतिपद्यते ॥ विशेषोयुक्तिकल्पतरौ ॥ कोलशिंब्याम् ॥

खट्वाका । स्त्री । खट्विकायाम् ॥ आदाचार्यीणामितिपक्षे आत्त्वम् ॥

खट्वाङ्गः । पुं । सूर्यवंशीयराजर्षिविशेषे ॥ न । नरपञ्जरे ॥ दण्डारोपितनरशिरस्के ईशायुधविशेषे ॥ पृष्ठवंशे ॥ खट्वापादे ॥

खट्वाङ्गभृत् । पुं । शिवे ॥

खट्वाङ्गी । पुं । शिवे ॥

खट्वारूढः । त्रि । खट्वाश्रिते ॥ अविनीते । प्रमादिनि ॥ जाल्मे । निषिद्धाऽनुष्ठानपरे ॥ वेदं व्रतानिच समाप्य समावृत्तेन हि खट्वारोढव्या ब्रह्मचर्यएव भूमिशयनार्थोऽपि यः खट्वामारोहति सजाल्मः । रूढस्रायम् । तेन खट्वा मारोहतु माना निषिद्धानुष्ठानपरः सर्वोपिखट्वारूढउच्यते । खट्वाक्षेप इति निन्द्यतत्पुरुषः ॥

खट्विका । स्त्री । शयने । क्षुद्रखट्वायाम् । खटिया खटोला इतिभाषा ॥ खल्पाखट्वा । कन् । ह्रस्वः । अभाषितपुंस्काश्चेतीत्त्वम् ॥

खडः । पुं । पानान्तरे ॥ भेदे ॥ पुं । न । लघुतृणे । खड इतिभाषा ॥

खडक्किका । स्त्री । } पक्षद्वारे । खि
खडक्की । स्त्री । } डकीइतिभाषा

॥ इति हारावली ॥

खडयूषः । पुं । यूषवि० ॥ यथा । तक्रं

कपित्थैश्चाङ्करीमरिचाजाजिचित्र-कैः। सुपक्वं खडयूषोऽयं चक्रदत्तेन भाषितः॥

खडिका। स्त्री।) सेलखडी इतिभा
खडी। स्त्री।) षा प्रसिद्धायां कठिन्याम्॥

खडुः। पुं। मृतशय्यायाम्॥

खड्गम्। न। लोहे॥

खड्गः। पुं। खागइतिख्याते गण्डकमृङ्गे॥ बुद्धभेदे॥ गण्डके। गैंडा इति प्रसिद्धवनमृगे॥ चोरकनामगन्धद्रव्ये॥ खाँडा तरवारिइतिच ख्याते शस्त्रे। असौ। चन्द्रहासे॥ खण्डति। खडिभेदने। छापूखडिभ्यः कित् इतिगन्। आगमशास्त्रस्याऽनित्यत्वान्नुम्॥ अथ खड्गविषयकत्रयोदशविधसञ्चरणं महाभारते। यथा मण्डलाकारतः खड्गभ्रामणंभ्रान्तमुच्यते १। तदेवबाहुमुत्क्षिप्यकृतमुद्भ्रान्तमीरितम् २॥ भ्रामणं स्वस्य परितः खड्गस्याविद्धमुच्यते ३। परप्रयुक्तशस्त्रस्य वारणार्थमिदंत्रयम्॥ शत्रो राक्रमणार्थायगमनन्त्वाप्लुतं मतम् ४। खड्गस्याग्रेण तद्देहस्पर्शनंप्रसृतं मतम् ५॥ बन्धयित्वा रिपौ शस्त्रपातनं गदितं स्मृतम् ६। परिहृत्य भवे च्छत्रो र्वामदक्षिणतो गतिः ७॥ पश्चात्पदापसरणं निवृत्त्यं सम्प्रचक्षते ८। अन्योन्यताडनं प्राहुः सम्पातमुभयो रपि ९॥ आधिक्यमात्मनो यत् तत् समुदीर्णं मुदीरितम् १०। अङ्गप्रत्यङ्गदेशेषु भ्रामणं भारतं स्मृतम् ११॥ विचित्रखड्गसञ्चारदर्शनं कौशिकं स्मृतम् १२। निर्जीय चर्मणि क्षेपो यदसेः सात्वतं हितत् १३॥ इति॥

खड्गकोषः। पुं। असिपिधाने। खड्गपत्रे॥

खड्गज्ञानम्। न। खड्गपरीक्षायाम्॥

खड्गटः। पुं। इक्षुकाशे॥

खड्गधेनुः। स्त्री। खड्गपुत्रिकायाम्। छुरी इति भाषा॥ गण्डकस्त्रियाम्॥

खड्गपत्रः। पुं। असिकोषे। खड्गलतायाम्॥

खड्गपरीक्षा। स्त्री। खड्गज्ञाने॥ यथा। अङ्गं रूपं तथा जाति र्नेत्रारिष्टे च भूमिका। ध्वनि र्मान मिति प्रोक्तं खड्गज्ञानाष्टकं शुभम्॥ अभिन्ने दृश्यते यादृक् विभिन्ने घटिते तथा। यदेव दृश्यते चिह्नं तदङ्गं सम्प्रचक्षते १॥ नीलकृष्णादिकं खड्गे रूप मित्यभिधीयते २। तेनैव यत्प्रतीतं स्यात् तज्जाति रिति गद्यते ३॥ अङ्गातिरिक्तं यज्जातिस्तन्मात्राल्पो महत्तमम्। तन्नेत्र

मिति। जानीयात् खड्गे खड्गविशारदः ४॥ अङ्गातिरिक्तं खड्गादि यच्छुद्रुस्थापमूचकम्। तदरिष्ट मिति प्राहु ५ भूमि रङ्गादिधारणम् ६॥ यः खड्गे जायते शब्दो नख दण्डादिना हते। स ध्वनि ७ स्तु बना मानं ८ ज्ञानमष्टविधन्त्विदम्॥ पश्चाद्या निपुणैः खड्गे सम्भाव्यन्ते पिकृत्रिमाः। अन्त्या वकृत्रिमैा ज्ञेयैा ता वेव सहजा विति॥ शत मङ्गानि चत्वारि रूपाणि जातय स्तथा। त्रिंश न्नेत्राणि जानीया दरिष्टानि तथैव च॥ भूमिश्च द्विविधा ज्ञेया ध्वनि रष्ट विधो मतः। मानन्तु द्विविधं प्रोक्तमित्येषांसङ्ग्रहोमतः॥ इति॥ विशेषस्तुलैाहार्णवलैाहदीपयुक्तिकल्पतरुप्रभृतिग्रन्थेषु द्रष्टव्यः॥

खड्गपिधानम्। न। } खड्गकोशे। पखड्गपिधानकम्। न। } रीवारे। प्रत्याकारे। कोषे॥

खड्गलक्षणम्। न। खड्गस्वरूपमाने॥ तत्रादैा खड्गस्यप्रमाणं व्रणानाञ्च शुभाशुभज्ञानार्थमाह। अङ्गुलशतार्द्धं मुत्तम ऊनः स्यात् पञ्चविंशतिः खड्गः। अङ्गुलमानाज् ज्ञेयो व्रणोशुभोविषमपर्वस्थः॥ *॥ व्रणानामाकृतिलक्षणमाह। श्रीहरवर्द्धमानात



पत्रश्रीवत्सलिङ्गकुण्डलाब्जानाम्। सदृशा व्रणाः प्रशस्ताः ध्वजायुधस्वस्तिकानाञ्च॥ *॥ अशुभव्रणानि। कृकलासकाककङ्कक्रव्यादकबन्धवृश्चिकाकृतयः। खड्गेव्रणा न शुभदा वंशानुगताःप्रभूताश्च॥ स्फुटितो ह्रस्वः कुण्ठो वंशच्छिन्नो नदृष्टिमनोनुगतः। अस्वनइतिचानिष्टः प्रोक्तविपर्यस्तइष्टफलः॥ *॥ खड्गचेष्टितमाह। क्वणितं मरणायोक्तं पराजयायाप्रवर्त्तनं कोशात्। स्वयमुद्गीर्णे युद्धं ज्वलिते विजयो भवित खड्गे॥ *॥ अथपरिभाषामाह। नाऽकारणं विवृणुयात् खड्गं कुर्वीत पश्येन्नतत्रवदनं नवदेत्तमूल्यम्। देशं नचास्य कथयेत् प्रतिमानयेत्त नैवस्पृशेन्नृपति रप्रयतोऽसियष्टिम्॥ *॥ अन्यल्लक्षणमाह। गोजिह्वासंस्थानो नीलोत्पलवंशपत्रसदृशश्च। करवीरपत्रशूलाग्रमण्डलाग्राः प्रशस्ताः स्युः॥ निष्पन्नो न च्छेद्यो निकषैः कार्यः प्रमाणयुक्तः सः। मूले म्रियते स्वामी जननी तस्याग्रतश्छिन्ने॥ *॥ अथ मुष्टौदृष्टायां व्रणज्ञानमाह। यस्मिन् तत्समप्रदेशे व्रणोभवेत्तद्देहखड्गस्य। वनितानामिव तिलका गुह्यवाच्या मु

खेदृष्ट्वा ॥ * ॥ अथ व्रणोपायमाह ।
अथवा स्पृशति यदङ्गं प्रष्टा निस्त्रिंश
भृत् तदङ्गव्रणाय । कोशस्थस्यापि दृश्यो
व्रणोऽपि शास्त्रं विदित्त्वैवम् ॥ शिर
सि स्पृष्टे प्रथमेऽङ्गुले द्वितीये ललाट
संस्पर्शे । भ्रूमध्ये च तृतीये नेत्रस्पर्शे च
तुर्थे च ॥ नासौष्ठकपोलहनुश्रवणग्री
वांसके च पञ्चाद्याः । उरसि द्वादश
संस्थस्तयोर्दशःकक्षयोर्ज्ञेयः ॥ स्तन
हृदयोदरकुक्षौ नाभौ तु चतुर्दशा
दयोज्ञेयाः । नाभीमूलेकट्यां गुह्ये
एकोनविंशतितः ॥ ऊर्व्वोर्द्वाविंशत्या
दूर्व्वोर्मध्ये व्रणस्त्रयोविंशे । जानुनि च
चतुर्विंशजङ्घायां पञ्चविंशे च ॥ जङ्घा
मध्ये गुल्फे पार्ष्णीपादे तथाङ्गुलिष्व
पि च । षड्विंशादिषु यावत् त्रिंशदि
ति मतेन गर्गस्य ॥ * ॥ अथैतेषां व्र
णानां फलान्याह । पुत्रमरणं धना
प्तिर्धनहानिः सम्पदश्च वन्धश्च ।
एकाद्यङ्गुलसंस्थे व्रणैः फलं निर्द्दिशे
त् क्रमशः ॥ सुतलाभः कलहो ह
स्तिलब्धिः पुत्रमरणधनलाभः । क्रम
शो विनाशवनिताप्तिचित्तदुःखानि
षट्प्रभृति ॥ लब्धिर्हानिः स्त्रीलब्ध
यो वधहृद्धिमरणपरितोषाः । ज्ञेया
श्चतुर्द्दशादिषु धनहानिश्चैकविंशे
स्यात् ॥ वित्ताप्तिर्निर्व्वाणिर्धनाग



मोऽमृत्युसम्पदोऽस्वत्वम् । ऐश्वर्यं
मृत्यु राज्यानि च क्रमात् त्रिंशदिति
यावत् ॥ अनिर्व्वाणिर्मृत्युः ॥ परतो
न विशेष फलं विषमसमस्थाश्च पा
पशुभफलदाः। केचिदफलाः प्रदिष्टा
स्त्रिंशतःपरतोऽग्रमितियावत् ॥ * ॥
अथ गन्धलक्षणमाह । करवीरोत्प
लगजमदघृतकुङ्कुमकुन्दचम्पकसग
न्धः । शुभदोऽनिष्टो गोमूत्रपङ्कजमे
दसःसदृशगन्धः ॥ कूर्म्मवसासृक्क्षी
रोपमश्चभयदुःखदो भवति गन्धः। वै
दूर्य्यकनकविद्युत् प्रभोजयारोग्यवृ-
द्धिकरः ॥ * ॥ अथ शस्त्रपानम् । वृ
दमौशनसञ्च शस्त्रपानं रुधिरेण
श्रियमिच्छतः प्रदीप्ताम् । हविषा
गुणवत्सुताभिलिप्सोः सलिलेनाक्ष
यमिच्छतश्च वित्तम् ॥ वडवोष्ट्रकरेणु
दुग्धपानं यदि पापेन समीहतेऽर्थसि
द्धिम् । झषपित्तमृगाश्ववस्तदुग्धैः क
रिहस्तच्छिदये सतालगर्भैः ॥ आर्कं
पयो हुडविषाणमसीसमेतं पाराव
ताखुशकृता च युतः प्रलेपः । शस्त्रस्य
तैलमथितस्य ततोऽस्य पानं पश्चाच्छि
तस्य न शिलासु भवेद्विघातः ॥ क्षारे
कदल्या मथितेन युक्ते दिनोषिते पा
यसमायसंतत् । सम्यक् छितं चाश्म
नि नैति भङ्गं न चान्यलोहेष्वपितस्य

कौण्व्यम् ॥ इतिवाराह्याम् ४८ ऽ ध्यायः ॥

खड्गिकः । पुं । मह्दिषीक्षीरफेने ॥ सौनिके । मांसविक्रयिणि ॥

खड्गी । पुं । गण्डके । तङ्कमुखे । वज्र चर्म्मणि ॥ खड्गःशृङ्गमस्यास्य । इनिः ॥ मञ्जुघोषे ॥ त्रि । खड्गधरे ॥

खण्डः । पुं । इक्षोर्विकारविशेषे । ऐक्षवे । चीनी इतिभाषाप्रसिद्धे ॥ प्रयुज्यतेचरसालायाम् । खण्डस्यपोडशपलानिशशिप्रभस्येत्युच - ॥ खण्डस्तुमधुरोवृष्यश्चक्षुष्योवृंह - णोहिमः । वातपित्तहरःस्निग्धोवल्योवान्तिहरःपरः ॥ मणिदोषे ॥ न । विडलवणे ॥ * ॥ पुं । न । भित्ते । शकले ॥ खण्ड्यते । खण्डिभेदने । कर्मणि भावेवा घञ् ॥ खन्यते वा । खन् ० । अमन्ताड्डः ॥

खण्डकः । पुं । सितायाम् । चीनी इतिभाषा ॥ त्रि । छेदकारिणि ॥

खण्डकथा । स्त्री । वाङ्मयप्रभेदे ॥

खण्डकर्णः । पुं । आलुविशेषे । वज्रकन्दे । सकरकन्द इतिभाषा ॥ कटुपाकी खण्डकर्णः कफपित्तविनाशनः ॥

खण्डकाल्लु । न । आलुविशेषे ॥

खण्डखर्जूरम् । न । खजूरइतिख्याते पक्वान्ने ॥



खण्डजः । पुं । गुडे ॥ यवासशर्करायाम् ॥

खण्डजोद्भवजः । पुं । यवराजोद्भवखण्डे ॥ इतिराजनिर्घण्टः ॥

खण्डतालः । पुं । तालविशेषे ॥ यथा । द्रुतमेकं भवेद्यत्र खण्डतालः स उच्यते । अपरं नियतं विनेति दामोदरः ॥

खण्डधारा । स्त्री । कर्त्तर्याम् । कैंची इतिभाषा ॥

खण्डनम् । न । भञ्जने ॥ निराकरणे ॥ छेदने । भेदने ॥

खण्डपरशुः । पुं । शिवे ॥ खण्डयतीति खण्डः । खण्डः परशुरस्य ॥ जामदग्न्ये ॥ खण्डयति शत्रून् । खण्डि० । पचाद्यच् । खण्डः परशुरस्य ॥

खण्डपर्शुः । पुं । पर्शुरामे । भार्गवे ॥ शङ्करे । शिवे ॥ चूर्णलेपिनि ॥ खण्डामलकभैषज्ये ॥ राहौ । सैंहिकेये ॥ खण्डयतीति खण्डः । सदाऽसुरवधे खण्डः पर्शुरस्य ॥ भव्यदन्तस्तिनीतिशब्दरत्नावली ॥

खण्डपालः । पुं । शूद्रायां क्षत्रियाज्जाते । मयरा इतिगौडभाषा प्रसिद्धे वर्णसङ्करविशेषे । खाण्डिके । मोदके ॥ इतिहारावली ॥

खण्डमोदकः । पुं । यवासशर्करायाम् ॥

खण्डलवणम् । न । धूर्ते । विडलवणे ॥

खण्डविकारः । पुं । मत्स्यण्ड्याम् ॥ खण्डोविकारोऽस्याः ॥

खण्डविकृतिः । स्त्री । शर्करायाम् ॥ खण्डस्य चीनीतिख्यातस्य विकृतिः ॥

खण्डशाखा । स्त्री । मत्स्यण्ड्याम् ॥

खण्डसरः । पुं । यवासशर्करायाम् ॥

खण्डाभ्रम् । न । अभ्रलेशे । फटामेघ इतिभाषा ॥ स्त्रीणांदन्तक्षता न्तरे ॥

खण्डिः । स्त्री । खण्डने ॥

खण्डिकः । पुं । कलाये ॥ कण्टकान्तरे ॥ काचे । काक इतिभाषा ॥ खण्डोऽस्त्यस्य । अतइनिठनाविति ठन् ॥

खण्डिका । स्त्री । ह्रस्वखण्डे ॥

खण्डितः । त्रि । भेदिते ॥ छिन्ने । छेदिते । लूने ॥ यथा । चन्द्रे कलङ्कः सुजनेदरिद्रता विकाशलक्ष्म्याः कमलेषु चञ्चला । मुखेऽप्रसादः सधनेषु सर्वदा यशोविधातुः कथयन्ति खण्डितमिति ॥ ह्रासङ्गमिते ॥ खण्डाः सञ्जाताअस्य । ता० इतच् ॥

खण्डिता । स्त्री । स्वीयादिनायिकाभेदे । भर्त्तुरन्यासङ्गज्ञानकलुषितायाम् ॥ कान्ते ऽन्यासङ्गविकृते खण्डितेर्ष्याकषायितेत्युक्ते । अपिच । नीत्वा ऽन्यत्र निशां प्रातरागते प्राणवल्लभे । अन्यासम्भोगचिह्नैस्तु खण्डितेर्ष्याकषायितेति ॥

खण्डी । पुं । वनमुद्गे ॥

खण्डिनी । स्त्री । धरित्र्याम् ॥

खण्डिमा । पुं । खण्डतायाम् ॥ खण्डस्य भावः । इमनिच् ॥

खण्डोरः । पुं । पीतमुद्गे । सोनामूंग इति भाषा ॥

खतमालः । पुं । पयोधरे । मेघे ॥ धूमे ॥

खदिका । स्त्री । लाजासु । खील इतिभाषा ॥

खदिरः । पुं । खैरसार इतिप्रसिद्धे गायत्रिणि । बालतनयद्रुमे । दन्तधावने । वक्रकण्टे ॥ खदिरः शीतलो दन्त्यः कण्डूकासारुचिप्रणुत् । तिक्तः कषायो मेदोघ्नः कृमिमेहज्वरव्रणान् ॥ श्वित्रशोथामपित्तास्रपाण्डुकुष्ठकफान् हरेत् ॥ इन्द्रे ॥ चन्द्रे ॥ खदति । खदस्थैर्ये हिंसायाञ्च । कजिरशिशिरशिथिलखिरस्थिरादिषु खदिरः इतिकिरच् ॥

खदिरपत्रिका । स्त्री । अरिखदिरे ॥ लज्जालुलतायाम् ॥

खदिरपत्री । स्त्री । लज्जालुलतायाम् ॥

खदिरसारः । पुं । खादिरे । खैरसार

इतिभाषा॥

खदिरिका। स्त्री। लाक्षायाम्।

खदिरी। स्त्री। शाकभेदे। लज्जालुकायाम्। नमस्कार्याम्। छायाजोडी इतिभाषा॥ खदति। खदेःकिरच्। ङीप्॥

खदिरोपमम्। न। खदिराभे। श्वेतखदिरे। सोमवल्के। काँटावावला इतिगौडभाषा॥

खदूरवासिनी। स्त्री। तारायाम्। वुद्धशक्तिविशेषे॥

खद्योत:। पुं। ज्योतिरिङ्गणे कीटमणौ। प्रभाकीटे॥ खेद्योतते। द्युत दीप्तौ। अच्॥ खंद्योतयति वा अण्॥ सूर्ये॥

खद्योतन:। पुं। अर्के। सूर्ये॥ खस्य द्योतन:॥

खधूप:। पुं। अग्निक्रीडाविशेषे। हवाई इतिभाषा॥ यथा। उर्वीं प्रचक्षु मणारस्य मार्गान् खजान् ववन्धु र्मुमुचु: खधूपान्। इतिभट्टि:॥ वन्धूक इति सिद्धे वन्धूके॥

खनक:। पुं। उन्दुरौ॥ सन्धिचौरे॥ त्रि। अवदारके। खननकर्त्तरि॥ भूमिविच्छन्ने। स्वर्णादुत्खनिस्तांना भिज्ञे॥ खनति। खनु अवदारणे। शिल्पिमिण्वुन्॥ स्त्रियांटित्त्वात् ङी खनकी॥

खननम्। न। विदारणे। खोदना इतिभाषा॥

खनयित्री। स्त्री। अस्त्रप्रभेदे॥

खनि:। स्त्री। आकरे। गङ्गायाम्। धातुरत्नाद्युत्पत्तिस्थाने॥ खन्यते। खनु०। खनिकष्यज्यसीति इ:। खनने॥

खनित्रम्। न। अवदारणे। कुद्दाल इतिभाषा॥ खन्यतेऽनेन। खनखनने। अर्त्तिलूधूस्विति इत्र:॥

खनित्रिम:। त्रि। खननेननिर्वृत्ते॥

खनी। स्त्री। खनौ॥ कृदिकारादिति पाक्षिकोङीष्॥

खपाच्य:। पुं। ग्रहे॥ खस्थपाच्य:॥

खपुर:। पुं। क्रमुके। गुवाके। सुपारी इति भाषा॥ भद्रमुस्तके॥ व्यालमखे॥ न। घटे॥ कर्द्धगेपुरे। नभ:पर्य्याम्। हरिश्चन्द्रपुरे। हरचंदावली इति भाष॥ त्रि। अलसके॥ खम् इन्द्रियम् आकाशं वा पिपर्त्ति। पूपालनपूरणयो:। मूलविभुजादित्वात् क:। उदोष्ठ्यपूर्वस्य॥

खभ्रान्ति:। पुं। चिल्ले। चील इति प्रसिद्धे खगे। नभो भ्रमे॥ खेआकाशे भ्रान्तिर्भ्रमिरस्य॥

खमणि:। पुं। सूर्ये॥ खस्यमणिरिव॥

खमीलनम् । न । तन्द्रायाम् ॥

खमूलिः । स्त्री । वारिपर्ण्याम् । कुम्भिकायाम् ॥

खमूलिका । स्त्री ।
खमूली । स्त्री । } वारिपर्ण्याम्॥

खरः । पुं । गर्दभे । रासभे ॥ खं मुखविलमतिशयित मस्य । रप्रकरणे खमुखकुञ्जेभ्यउपसंख्यानमितिरः ॥ घर्मे ॥ राक्षसान्तरे । रावणभ्रातरि दैत्ये ॥ कण्टकिवृक्ष विशेषे ॥ कङ्के ॥ काके ॥ कुररपक्षिणि ॥ २५ वत्सरे ॥ उपद्रुतं जगत्सर्वं तस्करैर्मृषिकैः खगैः । पीडिताश्चप्रजाः सर्वादेशभङ्गः खरेप्रिये ॥ पश्चिमद्वारगृहे ॥ रवेःपार्श्वगे ॥ तिग्मे । तीक्ष्णे ॥ त्रि । तद्वति ॥ दुःस्पर्शे ॥ कठिने ॥ यथा । खरविशदमभ्यवहार्यं भक्ष्यमिति ॥ खमिन्द्रियं राति अभिभवति । रा० । कः ॥

खरकाष्ठिका । स्त्री । बलायाम् ॥

खरकुटी । स्त्री । नापितशालायाम् ॥

खरकणः । पुं । तित्तिरिखगे ॥

खरगन्धा । स्त्री । नागबलायाम् ॥

खरगृहम् । न । } गर्दभशालाया
खरगृहः । पुं । } म् ॥

खरघातनः । पुं । नागकेशरे ॥

खरच्छदः । पुं । उलखड इति गौड भाषा प्रसिद्धे तृण विशेषे । उलूके ॥ इत्कटे । ओकडा इति गौडभाषा ॥ कुन्दरतृणे ॥ शाखोटे ॥ भूमीसहे ॥

खरणाः । त्रि । खरणसे ॥ खरा तीक्ष्णा नासिकास्य । खुरखराभ्यांवानस् । पूर्वपदात्संज्ञायामिति णत्वम् ॥

खरणसः । त्रि । तीक्ष्णनासिके । खरणसि । खरा तीक्ष्णा नासिकास्य । खुरखराभ्यांवानसितिपक्षे अच्नासिकायाइत्यच् नसादेशश्च । णत्वम् ॥

खरत्वक् । स्त्री । अलम्बुषायाम् । लक्षालुप्रभेदे ॥

खरदण्डम् । न । पद्मे ॥

खरदला । स्त्री । काष्ठोदुम्बरे ॥

खरदूषणः । पुं । धत्तूरे । धुस्तूरे ॥ खरेणासहदूषणे ॥ दोषवत्कुले ॥

खरध्वंसी । पुं । रघूत्तमे । श्रीरामचन्द्रे ॥ खरंध्वंसयति । ध्वंसु० सुप्यजातौ णिनिः ॥

खरनादिनी । स्त्री । रेणुकानामगन्धवस्तुनि ॥

खरपत्रः । पुं । शाकाख्यद्रुमे ॥ क्षुद्रपत्रतुलस्याम् । मरुवके ॥ यावनालशरे ॥ खराणि पत्राणियस्य ॥

खरपत्रकः । पुं । तिलकवृक्षे ॥

खरपत्री । स्त्री । गोजिह्वायाम् । दा- र्विकायाम् । अधःपुष्प्याम् ॥ काकोदुम्बरिकायाम् ॥

खरपात्रम् । न । लौहपात्रे ॥

खरपादाढ्यः । पुं । कपित्थद्रुमे ॥

खरपुष्पः । पुं । मरुवके ॥

खरपुष्पा । स्त्री । वर्बराशाके । कवर्याम् । वावुइतुलसी इति गौडभाषा ॥ खराणि पुष्पाण्यस्याः ॥

खरपुष्पी । स्त्री । वर्वराम् ॥ पाककर्णे तिङीष् ॥

खरप्रियः । पुं । कपोते । पारावते ॥

खरमञ्जरी । स्त्री । अपामार्गे ॥ खरा मञ्जरिरस्याः गौरादित्वान्ङीष् ॥

खररोमा । पुं । नागभेदे ॥

खरवल्लिका । स्त्री । नागबलायाम् ॥

खरशब्दः । पुं । कुररखगे ॥ खरस्य शब्दे ॥

खरशाकः । पुं । फञ्जिकायाम् । भार्ग्याम् ॥

खरशालम् । न । } खरगृहे ॥ खरा
खरशाला । स्त्री । } शाला विभाषासेनेतिपाक्षिकं क्लीवत्वम् ॥ च । खरशाले जाते ॥ स्थानान्तगोशालेति जातार्थस्यलुक् ॥

खरस्कन्धः । पुं प्रियालवृक्षे ॥

खरस्कन्धा । स्त्री । खर्जूर्याम् ॥

खरस्वरा । स्त्री । वनमल्लिकायाम् ॥

खरा । स्त्री । देवताडवृक्षे ॥ तीक्ष्णत्वात् ॥

खरांशुः । पुं । सूर्ये ॥ खरास्तीक्ष्णा अंशवोऽस्य ॥

खराग्निः । पुं । अग्नीर्थमग्निविशेषे ॥

खराब्दाङ्कुरकम् । न । वैदूर्यमणौ ॥

खराश्वा । स्त्री । मयूरशिखायाम् । बद्रजटा इति गौडभाषा । कारव्याम् । खेचयमानिकेतिकेचित् ॥ खरमश्नुते खरैरश्यते वा । अशूव्याप्तौ सङ्घाते च अशभोजने वा । उलल्वादयश्चेतिवः ॥

खराह्वा । स्त्री । अजमोदायाम् ॥

खरिका । स्त्री । कस्तूरीविशेषे । सातु चूर्णाकृतिरिति जरानिर्घण्टः ॥

खरी । स्त्री । गर्दभ्याम् ॥

खरुः । पुं । दर्पे ॥ हरे ॥ हये ॥ दन्ते ॥ श्वेतवर्णे ॥ कामदेवे पीतिन्दीचित ॥ त्रि । शठे ॥ निषिद्धेकृचौ ॥ निर्बोधे । मूर्खे पीतिदशपादीवृत्तिः ॥ क्रूरे ॥ स्त्री । पतिम्वराकन्यायाम् ॥ खरुसंयोगेोपधात्मेतिनङीष् ॥ खनति । खनु । खनशङ्कुपीयुनीलङ्गुलिगु इतिकुः रेफश्चान्तादेशः ॥

खर्जनम् । न । कण्डूयने ॥

खर्ज्जिका । स्त्री । अवदंशे ॥

खर्ज्जुः । पुं । खर्ज्जूरीम् ॥

खर्ज्जूः । स्त्री । कीटान्तरे । कानखजूरा गोजर इतिचभाषा ॥ खर्ज्जूरीपादपे ॥ कण्डूम् ॥ खर्जनम् खर्जति वा । खर्जपूजनेच चाद्यथने । कृषिचमितनिधनिसर्जिखर्जिभ्यऊः ॥

खर्ज्जूघ्नः । पुं । चक्रमर्दे ॥ धत्तूरे ॥ अर्कवृत्ते ॥

खर्ज्जूरः । पुं । वृश्चिककीटे ॥ न । रूप्ये ॥ खर्जूरफले ॥ पुं । स्त्री । तृणद्रुमे ॥ खर्जति । खर्ज० । खर्जपिञ्जादिभ्यऊरोलचाविस्थूरः ॥ खर्जूरस्य फलम् । फलेविहितस्याणोलुप् ॥

खर्ज्जूरी । स्त्री । वनखर्जूरे ॥ जातेरस्त्रीतिङोष् ॥ गौरादिर्वा ॥

खर्ज्जूरीत्रितयम् । न । छोहारा पिण्डखर्जूरी क्षुद्रखर्जूरिका तथा । खर्जूरीत्रितयं प्रोक्तं ग्रन्थेभावेननिर्मिते ॥ खर्जूरीत्रितयं शीतं मधुरं रसपाकयोः । स्निग्धं रुचिकरं हृद्यं क्षतक्षयहरं गुरु ॥ तर्पणं रक्तपित्तघ्नं पुष्टिविष्टम्भशुक्रदम् । कोष्ठमारुतकृद्बल्यं वान्तवातकफापहम् ॥ ज्वराभिघातक्षुत्तृष्णाकासश्वासनिवारणम् । मदमूर्च्छामरुत्पित्तमद्योद्भूतगदान्तकृत् ॥ महतीभ्यां गुणैरल्पा स्वल्पाखर्जूरिकास्मृता ॥ खर्जूरीमस्तोयन्तुमदपित्तकरम्भवेत् । वातश्लेष्महरंरुच्यंदीपनंवलशुक्रकृत् ॥

खर्प्परः । पुं । तस्करे ॥ धूर्त्ते ॥ भिक्षाभाण्डे । भिक्षापात्रे ॥ कपाले । भिन्नभाण्डशकले ॥ न । धातुभेदे । खर्परीतुत्थे ॥ अस्यशोधनम् । नरमूत्रे च गोमूत्रे सप्ताहं रसकं पचेत् । दोलायन्त्रेण शुद्धः स्यात् ततःकार्येषु योजयेत् ॥ खर्परं कटुकं क्षारं कषायं वामकं लघु । लेखनं भेदनं शीतं चक्षुष्यं कफपित्तहृत् । विषाश्मकुष्ठकण्डूनां नाशनं परमंमतम् ॥

खर्प्परी । स्त्री । } खर्परीरसके । चक्षुष्ये ॥
खर्प्परीतुत्थम् । न । }

खर्व्वः । पुं । कुब्जकवृक्षे ॥ निधिभेदे ॥ न । दशहस्रे । दशाब्जसंख्यायाम् । १०००००००००० ॥ त्रि । नीचे । वामने ॥ खर्वति । खर्वगतौ । पचाद्यच् ॥

खर्व्वटः । पुं । न । गिरितटग्रामे ॥ एकतो यत्रतुग्रामो नगरञ्चैकतः स्थितम् । मिश्रन्तु खर्वटं नाम नदीगिरिसमाश्रयम् ॥ चतुश्शतग्राममध्यस्थले ॥

खर्व्वशाखः । त्रि । ह्रस्वे । वामने ॥ ह्र

स्वर्णाखर्ज्जूरे ॥

खर्ज्जा । स्त्री । खर्ज्जप्रमाणायाम्भुवि ॥

खर्ज्जुरा । स्त्री । तरदीदृक्षे ॥

खर्ज्जूजम् । न । दयाङ्कुले लताफलवि शेषे ॥ खर्ज्जूजं मूचलं वल्यं कोष्ठशुद्धि कर ङ्गुरु । स्निग्धं स्वादुतरं शीतं वृष्यं पित्तानिलापहम् ॥ तेषु सत्त्वाम्लमधुरं सचार क्षरसाद्भवेत् । रक्तपित्तकरं तत्तु मूत्रकृच्छ्रकरंपरम् ॥

खर्म्मम् । न । पौरुषे ॥ कौषशांशुके । चौमे ॥

खलः । पुं । सूर्य्ये ॥ तमालवृक्षे ॥ धत्तूरवृक्षे ॥ न । भुवि ॥ स्थाने ॥ कल्के ॥ खलाधाने । सस्यमर्द्दनस्थाने ॥ त्रि । क्रूरे ॥ कर्णेजपे । नीचे । परस्परभेदके ॥ अधमे ॥ खलति । खलसञ्चये । पचाद्यच् ॥ खं छिद्रंलातिवा । लादाने । कः ॥

खलता । स्त्री । खलत्वे ॥ अद्रोहिणि तथा शान्ते विद्वेषः खलता स्मृता ॥ भावकर्मयोस्तल् ॥ गगनलतिकायाम् ॥ खस्यलता ॥

खलतिः । पुं । खल्वाटे । शिपिविष्टे । ऐन्द्रलुप्तिके । इन्द्रलुप्तरोगवति ॥ स्खलति । स्खलसञ्चलने । खलतिरिति स्खलतेः सलोपोऽतच् प्रत्ययान्तस्य दृत्वश्च निपात्यते ॥



खलतिकः । पुं । पर्वते ॥

खलपूः । त्रि । बहुकरे । भुवंमार्जयति । भूमिमार्जनकारिणि । फरास झाड़ूबरदार इति भाषा ॥ खलंभूस्थानकल्केषु । खलंपुनाति । पूञ् पवने । क्विप् ॥

खलमूर्त्तिः । पुं । पारदे ॥

खलाधानम् । न । खले । शस्यमर्द्दनस्थाने खलान इति भाषा ॥

खलाधारा । स्त्री । तैलपायिकायाम् । तिलचट्टा इति भाषा ॥

खलिः । पुं । तैलकिट्टे । खल इति भाषा ॥

खलिनः । पुं । न । कविकायाम् ॥ खलिनं हयाय दद्यादितिलक्ष्यम् ॥

खलिनी । स्त्री । तालमूल्याम् ॥ खलवृन्दे । खल्यायाम् । धीनोंके अनेक खल्यान इति भाषा ॥ खलानांसमूहः इनित्रकट्यचश्चेतीनिः ॥

खलिवर्द्धनः । पुं । दन्तरोगविशेषे ॥ मारुतेनाधिको दन्तो जायते तीव्रवेदनः । खलिवर्द्धन संज्ञोऽसौ जाते रुक् च प्रशाम्यति ॥

खलिशः । पुं । खलिशामाछ इति गौभाषा प्रसिद्धे मत्स्ये । कङ्कत्रोटे । खलेशये ॥

खलीकारः । पुं । अपकारे । द्रोहे ॥

निर्भर्त्सने ॥

खलीनः । पुं । न । कविकायाम् ॥ खे ऽश्वमुखबिले लीनः ॥

खलीनकः । पुं । कविकायाम् । कडियाली इति गौडभाषा ॥ स्वार्थे कन् ॥

खलु । अ । वाक्यभूषायाम् ॥ जिज्ञासायाम् ॥ सान्त्वने ॥ वीप्सायाम् ॥ माने ॥ निषेधे ॥ पदपूरणे ॥ वाक्यपूरणे ॥ अनुनये ॥ निश्चये ॥ खलति । खलसञ्चये । बाहुलकादुः ॥

खलुक् । पुं । अन्धकारे ॥ जान्तः ॥

खलुरेषः । पुं । मृगभेदे ॥

खलूरिका । स्त्री । शस्त्राभ्यासभूमौ ॥

खलेवाली । स्त्री । मेधिकाष्ठे ॥ वली वहवन्धनाय निखातामेढिः खलेवालीतिमीमांसकाः ॥

खलेशः । पुं । } खलिशे । खले
खलेशयः । पुं । } शये ॥

खल्या । स्त्री । खलिन्याम् ॥ खलानां समूहः । खलगोरथादित्वियत् ॥ त्रि । खलहिते ॥ खलायहितम् । खलयवमाषतिलवृषब्रह्मणश्चेतियत् ॥

खल्लः । पुं । वस्त्रभेदे ॥ गर्त्ते ॥ निम्ने ॥ चर्मणि ॥ चातके ॥ औषधमर्द्दनपात्रे । खरल इति भाषा ॥ द्वितौ । खाल पयखालमसक इति च भाषा ॥

खल्ली । स्त्री । हस्तपादावमर्द्दनाख्यरोगे ॥ तल्लक्षणं यथा । खल्ली तु पादजङ्घोरुकरमूलावमोटनी ॥ तस्यौषधं यथा । कुष्ठसैन्धवयोः कल्कश्चुक्रतैलसमन्वितः । सुखोष्णो मर्द्दने योज्यः खल्लीशूलनिवारणः ॥

खल्लीटः । त्रि । खलतौ । खल्वाटे ॥

खल्वपि । अ । निश्चयार्थे ॥ खलु च अपि चेति विग्रहः ॥

खल्वाटः । पुं । इन्द्रलुप्ते । निष्केशशिरसि ॥

खल्विका । स्त्री । ऋजीषे । पिष्टकादिभर्जनपात्रे ॥

खवल्लरी । स्त्री । खवल्याम् ॥

खवल्ली । स्त्री । आकाशवल्याम् ॥ खवल्ली ग्राहिणी तिक्ता पिच्छिला ऽक्ष्यामयापहा । तुवराऽग्निकरी हृद्या पित्तश्लेष्मामनाशिनी ॥

खवारि । न । दिव्योदके ॥

खवाष्पः । पुं । रजनीजले । हिमे । ओस इति भाषा ॥

खशः । पुं । देशविशेषे । हिमालयप्रान्तिकदेशे ॥ खशदेशोद्भवे । आदौ क्षत्रिये पश्चाद्विहितक्रियालोपाद्ब्राह्मणानामदर्शनाच्च याजनाध्यापनप्रायश्चित्तार्थदर्शना भावेन शनैः शनैः शूद्रतामापन्ने इत्युपदबाच्ये ॥

खसा । स्त्री । तालपर्ण्याम् । मुराना मगन्धद्रव्ये ॥ कश्यपपत्न्यां दक्षक- न्यायाम् । यक्षरक्षसांमातरि ॥

खसेटः । पुं । खलेशे । खसिशामच्छी इतिभाषा ॥

खश्वासः । पुं । पवने । वायौ ॥

खष्पः। पुं । क्रोधे ॥ बलात् कृतौ ॥ खनति । खनुअवदारणे । खष्पशि ल्पशष्पवाष्परूपपर्पतल्पाः इतिपः नि पातनात् खनतेर्नकारस्यषत्त्वम् ॥

खसः । पुं । पामरोगे । विचर्चिकाया म् ॥ ब्रात्यात् क्षत्रियात् सवर्णाया मुत्पन्ने सङ्कीर्णजातौ । तस्यनामा नियथा । भल्लो मल्लश्च राजन्यात् ब्रात्याल्लिच्छिवि रेवच । नटश्चकर णश्चैव खसो द्रविडएवचेति ॥

खसकन्दः । पुं । क्षीरकञ्चुकी वृक्षे ॥

खसतिलः । पुं । खाखसे । खस्खसे ॥

खसमः । पुं । सौगते । बुद्धे ॥

खसम्भवा । स्त्री । आकाशमांस्याम् ॥

खसर्पणः । पुं । बुद्धविशेषे ॥

खसवीजम् । न । खाखसतिले ॥ खसवी जानि बल्यानि वृष्याणि सुगुरूणि च । जनयन्ति कफं तानिशमयन्ति समीरणम् ॥ तैलन्तु खसवीजानां बल्यं वृष्यं गुरु स्मृतम् । वातघ्नं क फकृच्छीतं स्वादुपाकरसञ्चतत् ॥

खसा । स्त्री । राक्षसमातरि ॥

खसात्मजः । पुं । राक्षसे ॥ खसायाः अ त्मजः ॥

खसूमः । पुं । विप्रचित्तेःपुत्रे ॥

खस्खसः । पुं । वृक्षविशेषे । खस्खसवी जे। पोस्त इतिभाषा ॥

खस्खसरसः । पुं । अहिफेने । अफीम् इतिभाषा ॥

खस्तनी । स्त्री । भूमौ । धरायाम् ॥

खस्फटिकः । पुं । चन्द्रकान्तमणौ ॥ सू र्यकान्तमणौ ॥

खाखसः । पुं । खसतिले । खस्खसे ॥ स्या त्खाखसफलोद्भूतं वल्कलं शीतलं लघु । ग्राहि तिक्तं कषायञ्च वातकृ त् कफकासहृत् ॥ धातूनां शोषकं रूक्षं मदकृद्वाग्निवर्द्धनम् । मुहुर्मो हकरं रुच्यं सेवनात् पुंस्त्वनाशनम् ॥

खाखसतिलम् । न । खसवीजे ॥

खाङ्गाहः । पुं । श्वेतपिङ्गलाश्वे ॥

खाजिकः । पुं । लाजेषु ॥

खाटिः । स्त्री । असत्गृहे ॥ किणे ॥ शव रथे ॥ खटति । खटकाङ्क्षायाम् । बाहुलकादिञ् ॥

खाटिका । स्त्री । } खाटिशब्दार्थे ॥
खाटी । स्त्री । }

खाडवम् । न । चूर्णविशेषे ॥ यथा । कोलामलकजं चूर्णं गुडव्योषाम्लक

रान्वितम् । मातुलुङ्गरसेनाक्तं शोषितं सूर्यरश्मिभिः ॥ एवन्तु बहुशो ऽभ्यक्तं शोषितञ्च पुनःपुनः । ईषल्लवणसंयुक्तं चूर्णं खाण्डवमुच्यते ॥ खाण्डवं मुखवैशद्यकारकं रुचिधारणम् । हृद्रोगशमनञ्चेतिमुखवैरस्यनाशनम् ॥ भोजनान्ते विशेषेण भोक्तव्यं खाण्डवं सदा ॥

खाण्डवः । पुं । इन्द्रस्यवने ॥

खाण्डवी । स्त्री । पुरीविशेषे ॥

खाण्डिक्यः । पुं । खण्डपाले ॥ खण्डजीविनि ॥ न । खण्डिकानां समूहे ॥ खण्डिकादिभ्यश्चेत्यञ् ॥

खातम् । न । पुष्करिण्याम् ॥ शतेनधनुर्भिः पुष्करिणीति तत्परिमाणम् ॥ यथा । चतुर्विंशाङ्गुलोहस्तो धनुस्तच्चतुरुत्तरः । शतधन्वन्तरञ्चैव तावत्पुष्करिणी शुभा ॥ गर्त्ते ॥ खनु० । क्तः । जनसनखनामित्यात्वम् ॥

खातकः । पुं । अधमर्णे । रिणी इति भाषा ॥ यथा । उत्तमर्णो धनस्वामी अधमर्णस्तु खातक इतिकश्चित् ॥ न । खातार्थे ॥ परिखायाम् । खाई इतिभाषा ॥

खातभूः । स्त्री । परिखायाम् । प्रतिकूपे ॥

खात्रम् । न । खाते ॥ खनित्रे ॥ जलाधारे ॥ खन्यते । खनु० । उषिखनिभ्यांकिदितिष्ट्रन् ॥

खादकः । त्रि । भक्षके ॥ यथा । विक्रये गोविनिमये दत्त्वा गोमांसखादके । व्रतं चान्द्रायणं कुर्याद्वधे साक्षाद्वधीभवेदितिगोभिलः ॥ ऋणग्रहीतरि ॥ खादति तच्छीलः तद्धर्मः तत्साधुकारी वा । खादृ० । निन्दहिंसेतिवुञ् ॥

खादनः । पुं । दन्ते ॥ न । आहारे । भक्षणे । खाना इतिभाषा ॥

खादितः । त्रि । गिलिते । खाया इति भाषा ॥ खाद्यतेस्म । खादृ० । क्तः ॥

खादिरः । पुं । यूपे ॥ त्रि । खदिरविकृतौ ॥ खदिरस्यविकारः । पलाशादिभ्यो वेत्यण् ॥ खदिरसार इतिप्रसिद्धे । अद्भुतसारे ॥

खादिरसारः । पुं । खदिरवृक्षनिर्यासे । खादिरे । सत्सारे ॥

खादुकः । त्रि । हिंसालुके ॥ इतिहारावली ॥

खाद्यः । त्रि । भक्षणीयद्रव्ये ॥

खानः । पुं । हिन्दुधर्मप्रलोपकरिम्लेच्छजाति विशेषे ॥

खानिः । स्त्री । खनौ । धातुरत्नाद्याकरे ॥ खनु० । इयन्तादच्यः ॥

खानिकम् । न । कुड्यच्छेदे । भीतकी

गढा इति भाषा। आखा इतिच॥

खानोदकः। पुं। नारिकेले। शिरःफले॥

खापगा। स्त्री। गङ्गायाम्॥

खारः। पुं। खारीपरिमाणे॥ इतिहड्डुचन्द्रः॥

खारिः। स्त्री। खार्य्याम्। द्रोणचतुष्टये॥

खारिकम्। न। मद्यापारे वर्त्ते॥

खारिम्पचः। त्रि। खारीपरिमितान्नादिपाककर्त्तरि॥ पुं। कटाहे॥ खारिम्पचतीतिविग्रहे। परिमाणे पचः इति पचेः कर्त्तरिखश्॥

खारी। स्त्री। धान्यमानभेदे॥ यदाहुः। पलं प्रकुञ्चकं मुष्टिः कुडवस्तच्चतुष्टयम्। चत्वारः कुडवाः प्रस्थश्चतुः प्रस्थमथाढकम्॥ अष्टाढको भवेद्द्रोणो द्विद्रोणः शूर्पउच्यते। सार्द्धशूर्पो भवेत्खारीद्वे खार्य्यौ गोण्युदाहृता॥ तामेव भारं आनीयात् वाहोभारचतुष्टयम्। इतिभरतः॥ षोडशद्रोणपरिमाणे। इतिलीलावती॥ गोणीचतुष्टये॥ तत्तुपञ्चवस्थधिकचतुस्सहस्रपलानीति वैद्यकपरिभाषा॥ द्रोणचतुष्टये॥ यथा। चतुराढकोभवेद्द्रोणः खारीद्रोणचतुष्टमितिस्मृतिः॥

खारीकम्। त्रि। खारीवापे। खारीपरिमितव्रीह्यादिवापयोग्यक्षेत्रे॥ खार्य्याः वापः। खारीपरिमाणमस्यवा। खार्य्याईकन्निन्त्यार्हीयईकन्॥

खारीवापः। त्रि। खारीके॥ खार्य्यावापः॥

खार्कारः। पुं। गर्दभजातिशब्दे॥

खार्ज्जूरः। पुं। वेधवि०॥ यथा। व्याघातगण्डव्यतिपातपूर्वशूलान्त्यवज्रोपरिघातिगण्डे। योगे विरुद्धे त्वभिजित्समेते खार्जूरमर्काद्विषमेशशीचेत्॥ यस्मिन्दिने व्याघातादिविरुद्धयोगेसति अर्कनक्षत्रात् चन्द्रोऽभिजित्समेते विषमे विषमसंख्यकनक्षत्रे चेत् स्यात् तदाखार्जूराख्यो दोषः। यदातु समः स्यात् तदा नदोषः॥

खार्बुजेयम्। न। रसालप्रभेदे॥ यथा। मधुरदधनि मध्ये शर्करां सन्नियोज्य शुचिविदलितखण्डं प्रक्षिपेत् खार्बुजेयम्। करविलुलित मेणो वासितं नाभिगन्धे र्जिगमिषुजठराग्निं स्थापयत्येव नूनम्॥ रसालं खार्बुजस्येदं विष्टम्भि रुचिकारकम्। हृद्यञ्च कफदं बल्यं पित्तघ्नं मूत्रकृद्गुरम्॥

खिखिः। स्त्री। उल्कामुख्याम्। लोम्

डी इतिभाषा ॥

खिङ्गिरः । पुं । उल्कामुख्याम् ॥ खट्वाङ्गे । शिवस्यास्त्रविशेषे ॥ वारिवालके । ह्रीबेरे ॥

खिदिरः । पुं । इन्दौ । कुमुदबान्धवे ॥ खिद्यते । खिद दैन्ये । इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् ॥

खिद्यमानः । त्रि । खेदयुक्ते । दैन्यग्रस्ते । उपतप्ते ॥

खिद्रः । पुं । रोगे ॥ दरिद्रे ॥ श्रमे ॥ खिद्यते ऽनेन । खिद० । स्फायितञ्चीतिरक् ॥

खिन्नः । त्रि । अलसे ॥ खेदयुक्ते । दैन्यग्रस्ते ॥ खिद० । क्तः ॥

खिरहिट्टी । स्त्री । महासमङ्गायाम् ॥

खिलम् । त्रि । हलादिना ऽकृष्टभूमौ । अप्रहते ॥ पुं । सारसङ्ग्रहे ॥ वेधसि ॥ शून्ये ॥ न्यूने ॥ पूर्वत्रानुक्तं परिशिष्टं वस्तु खिलशब्दवाच्यमिति व्याख्यातारः ॥ श्रीमद्भक्तशिवसङ्कल्पादौ ॥ खिलो नारायणः प्रोक्तः इषवस्तद्गुणाः स्मृताः । इति खिलेषु हरिवंशे इत्यत्र नीलकण्ठटीका ॥ खिलति । खिल उञ्छे । इगुपधेतिकः ॥ खिल्यते ऽस्मिन्वा । हलश्चेतिघञ् ।

संज्ञापूर्वकत्वान्नगुणः ॥

खिलीकृतः । त्रि । दुर्गमीकृते ॥

खुङ्गाहः । पुं । कृष्णवर्णघोटके ॥

खुज्जाकः । पुं । देवताडवृक्षे ॥ इति रत्नमाला । खुञ्जाक इति क्वचित्पाठः ॥

खुरः । पुं । कोलदले । नखीनामगन्धद्रव्ये ॥ शफे ॥ खट्वादीनां पादुके । पाया इतिभाषा ॥ खुरति । खुर च्छेदने । इगुपधज्ञाप्रीकिरःकः ॥ यद्वा । ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्रेरामालाः । इतिरन् रलोपो गुणाभावश्च ॥

खुरणाः । त्रि । खुरणसे ॥ खुरइवनासिकास्य । खुरखराभ्यां वानस् । पूर्वपदादितिणत्वम् ॥

खुरणसः । त्रि । खुरणसि । पशुखुरसदृशनासिके । चिपटीनाकवाला इतिभाषा ॥ खुरइव नासिकाऽस्य । खुरखराभ्यां वानसितिपक्षे अच् नासिकायाद्यच्च नसादेशश्च । पूर्वपदात् संज्ञायामगइतिणत्वम् ॥

खुरली । स्त्री । शरशिक्षणे । शराभ्यासे ॥

खुराका । पुं । पशौ ॥

खुराणकः । पुं । लोहमयेबाणे ॥

खुरालिकः । पुं । ग्रामणीभाण्डनारा

 

चे । नापितक्षौरधान इतिभाषा ॥ उपधाने ॥ खराश्विकेत्यपिपाठः ॥

खुरासान: । पुं । देशविशेषे ॥ हिङ्गुपीठं समारभ्य मक्केशान्तं महेश्वरि । खुरासानाभिधो देशो म्लेच्छमार्गपरायण: ॥

खुल्लम् । न । नखीनामगन्धद्रव्ये ॥ त्रि । नीचे ॥ अल्पे ॥ खदनम् । खदहिंसायाम् । संपदादित्वात् क्विप् । पृ० । खुदंलाति । कः ॥

खुल्लक: । पुं । नीचे ॥ स्वल्पे ॥ खुदंलाति । ला० । क्वुन् ॥

खुल्लम: । पुं । अयने । पथि । मार्गे ॥

खेखीरक: । पुं । सशब्दयष्ट्याम् ॥

खेगमन: । पुं । कालकण्ठविहगे ॥

खेचर: । पुं । विद्याधरे ॥ ग्रहे ॥ शिवे ॥ पारदे ॥ त्रि । आकाशचारिणि ॥ न । कासीसे ॥

खेचरी । स्त्री । मुद्राविशेषे ॥ यथा । चित्तं चरति खे यस्मा ज्जिह्वाचरति खेगता । भ्रुवोरन्तर्गता दृष्टिर्मुद्राभवति खेचरी ॥ नचासमं सिद्धसमं नकुम्भसदृशोनिल: । नखेचरीसमा मुद्रा सत्यंसत्यम्वनारदेति ॥

खेट: । पुं । ग्रहे ॥ कफे ॥ यष्ट्याम् ॥ ग्रामभेदे । कर्षकग्रामे ॥ पुं । न० । चर्मणि ॥ त्रि । स्फारे ॥ मृगव्ये ॥ अर्वति । अधमे ॥ खेटति । खिटत्रासे । पचाद्यच् ॥

खेटक: । पुं । कर्षकग्रामे ॥ यष्ट्यभिधाने ऽस्त्रे ॥ न । चर्मणि । फलके ॥ मूलार्थवृद्धौ । वसुनन्दके ॥ स्वार्थेक: ॥

खेटिताल: । पुं । खेडिताले ॥

खेटी । पुं । नागरे ॥ त्रि । खेटवति ॥

खेड्डम् । न । तृण विशेषे ॥

खेडिताल: । पुं । वैतालिके ॥

खेद: । पुं । अवसादे ॥ शोके ॥ निर्वेदे ॥ खेदयतीति खेदोरोग इतिकैयट: ॥

खेदित: । त्रि । खेदंयुक्ते ॥

खेदिनी । स्त्री । लतायाम् ॥ अशनपर्याम् ॥

खेयम् । न । परिखायाम् । दुर्गादिपरित: खाते । खाई इति भाषा ॥ खन्यते । खनु० । ईचखन इतिक्यप् । ईकारश्चान्तादेश: । गुण: ॥ त्रि । खननीये ॥

खेलनम् । न । क्रीडने । विहरणे ॥

खेलनी । स्त्री । शारिफले ॥ शारौ ॥

खेला । स्त्री । कूर्दने । क्रीडायाम् ॥ खेलनम् । खेलृचलने । गुरोश्चेत्त्य: ॥

खेलि: । स्त्री । गीते ॥ वाणे ॥ सूर्ये ॥ पक्षिणि ॥ जन्तौ ॥

खेसर: । पुं । खच्चर इति प्रसिद्धे अश्वखरजे । मिश्रशब्दे । अश्वगे ॥

खोङ्गाहः । पुं । श्वेतपिङ्गलाश्वे ॥
खोटिः । स्त्री । चतुरायां नार्याम् ॥
इतिशब्दमाला ॥ पालङ्क्याम् ॥
खोटी । स्त्री । पालङ्कीवृक्षे ॥ चतुरायाम् ॥
खोडः । त्रि । खञ्जे । खोडा इतिप्रसिद्धे विकलगतौ ॥ खोडति । खोडृङ्गगति प्रतिघाते । पचाद्यच् ॥
खोडकशीर्षकम् । न । प्राकाराग्रे । कपिशीर्षे ॥
खोरः । त्रि । }
खोरकः । त्रि । } खञ्जे ॥
खोलः । त्रि । खञ्जे ॥ दृढे ॥ खोडतेरच् । डलयोरभेदः ॥
खोलकः । पुं । पाके ॥ शिरस्त्रे ॥ वल्मीके ॥ पूगकोषे । सुपारीकाछिलका इतिभाषा ॥
खोल्मुकः । पुं । मङ्गलग्रहे ॥
ख्यातः । त्रि । प्रतीते । प्रथिते । ख्यातियुक्ते ॥ आख्यायि । ख्याप्रकथने । चक्षिङःख्याञ्वा । क्तः । नध्याख्येति नत्वाभावः ॥
ख्यातगर्हणः । त्रि । विख्यातनिन्दने । अपगीते ॥ ख्याता गर्हणायस्य ॥
ख्यातगर्हितः । त्रि । ख्यातगर्हणे ॥
ख्यातिः । स्त्री । प्रसिद्धौ । प्रथायाम् ॥ आख्यायाम् । नामनि ॥ ज्ञाने ॥ ख्यातिस्तुविधा । असत्ख्यात्यात्मख्यात्य सत्ख्यात्यन्यथाख्यातिभेदात् । ख्यानम् । ख्याप्रकथने । चक्षिङादेशो वा । क्तिन् ॥
ख्यापनम् । न । प्रकाशने ॥
ख्यापितः । त्रि । प्रकाशिते ॥

---

गः

गः । पुं । गकारे ॥ गणेशे ॥ गन्धर्वे ॥ गुर्वक्षरे ॥ न । गीते ॥ गम्यते । गम्लृगतौ । गमेर्डः ॥
गगनम् । न । अन्तरिक्षे । नभसि । अनन्ते ॥ गच्छन्त्यनेनास्मिन्वा । गमेर्गश्चेतियुच् गश्चान्तादेशः ॥
गगनगः । पुं । रव्यादिग्रहे ॥ विद्याधरादौ ॥
गगनध्वजः । पुं । मेघे ॥ दिवाकरे ॥
गगनाङ्गनम् । न । मात्रावृत्तप्रभेदे ॥ यथा । षट्कल मादौ विरचय शेषे रगणविभूषितं मध्ये नियमविहीनं द्वादशके यतिसङ्गतम् । फणिपति पिङ्गलवर्णितं कविकुलहृदयरञ्जनं पञ्चाधिकविंशतिकलवृत्तमिदं गगना

ङ्गनम् ॥ यथा । गिरिवरतनयाकुच रसपानविमुद्रितलोचने निश्वसितसमीरणदूरदुरितभवमोचने । अतिवलविचरदसुरवरतारितसुरवरनायके अनुगतजनतातारिणि मम नतिरस्तु विनायके ॥

गगनाध्वगः । पुं । सूर्ये ॥

गगनेचरः । पुं । ग्रहे ॥ नक्षत्रे ॥

गगनोल्मुकः । पुं । कुजे । मङ्गलग्रहे ॥

गगनोपमः । त्रि । सर्वगते ॥ गगनमुपमा यस्यसः ॥

गङ्गका । स्त्री । गङ्गायाम् ॥ अज्ञाताद्यर्थेकः । अभाषितपुंस्काच्चेति पाक्षिक ह्रस्वाभावः ॥

गङ्गा । स्त्री । स्वनाम्नातिप्रसिद्धायां देवनद्याम् । भागीरथ्याम् ॥ विष्णुपादविनिष्क्रान्ता प्लावयित्वेन्दुमण्डलम् । समन्ताद्ब्रह्मणःपुर्यां गङ्गापतति वै दिवः ॥ सा तत्र पतिता दिक्षु चतुर्द्धा प्रतिपद्यते । सीता चालकनन्दा च वक्षुर्भद्रा च वै क्रमात् ॥ ध्यानमस्या लिखाम्यत्र येनसा ध्याता भवेत् ॥ सितमकरनिषण्णां शुभ्रवर्णां त्रिनेत्रां करधृतकलसोद्यत्सूत्पलाभीत्यभीष्टाम् । विधिहरिहररूपां सेन्दुकोटीरजूटां कलितसितदुकूलां जाह्नवीं तां नमामीति । गच्छति गम्यते ऽर्थिभिर्वा । गम्लृ० । गमनं गम्यद्योरितिगन् ॥

गङ्गाका । स्त्री । गङ्गायाम् ॥ अज्ञाताद्यर्थेकः । केण इति ह्रस्वः । आदाचार्याणामितिपाक्षिक आदादेशः ॥

गङ्गाक्षेत्रम् । न । गङ्गातीरविशेषे ॥ तीराद्गव्यूतिमात्रन्तु परितः क्षेत्रमुच्यते । अत्रयत्र कृतं कर्मगङ्गायां नात्रसंशयः ॥ अत्रस्थास्त्रिदिवं यान्ति येमृतास्ते ऽपुनर्भवाः ॥

गङ्गागर्भः । पुं । गङ्गायाः गर्भे ॥ सयथा । भाद्रकृष्णचतुर्दश्यां यावदाक्रमते जलम् । तावद्गर्भं विजानीयात्तदूर्द्ध्वं तीरमुच्यते ॥ तीरे प्रतिग्रहस्त्याज्यस्त्याज्यो धर्मस्य विक्रयः ॥

गङ्गाचिल्ली । स्त्री । चिल्लविशेषे । टेट्याम् । विश्वकायाम् ॥

गङ्गाजः । पुं । कार्त्तिकेये । षडानने ॥ भीष्मे ॥ गङ्गायाः जातः । जनी० । डः ॥

गङ्गाटेयः । पुं । चिङ्गिडिमाच्छ इतिगौडभाषाप्रसिद्धे मत्स्ये । गलाटिले ॥

गङ्गातीरम् । न । गङ्गागर्भादूर्द्ध्वप्रदेशे ॥ सार्द्धहस्तशतं यावद्गर्भतस्तीरमुच्यते । तीरे प्रतिग्रहस्त्याज्यस्त्याज्यो धर्मस्य विक्रयः ॥

गङ्गाधरः । पुं । शिवे ॥ अब्धौ ॥ धर

ति । धृध्० । अच् । गङ्गायाः धरः ॥ जीर्णातिसारनामके चूर्णे ॥ यथा वृन्दोक्तिस्मराजः । धातक्यामलकी पयोधरहरीकट्वङ्गयष्टीमधुश्रीअंब्वाम्रफलास्थिनागरविषाह्रीबेरलोध्रेन्द्रजैः । तुल्यांशं विहितं सतण्डुलजलं गङ्गाधराख्यं महच्चूर्णं तूर्णमपाकरोति सकलं जीर्णातिसारं परमिति ॥

गङ्गापत्री । स्त्री । वृक्षविशेषे । गन्धपत्रिकायाम् ॥

गङ्गापुत्रः । पुं । भीष्मपितामहे ॥ वर्णसङ्करजातिविशेषे । लेटात् तीवरकन्यायांजाते । मुरदारफरोस इतिपारस्यभाषा ॥ इतिब्रह्मवैवर्त्तपुराणम् ॥

गङ्गासुतः । पुं । कार्त्तिकेये ॥ भीष्मे॥ गङ्गायाः सुतः ॥ गङ्गापुत्रे ॥

गङ्गास्वरूपम् । न । तद्ध्याननिरूपितस्वरूपे ॥

गङ्गिका । स्त्री । गङ्गायाम् ॥ अज्ञातार्थेकः । ह्रस्वः । अभाषितपुंस्काच्चेतिपाक्षिकोतइदादेशः ॥

गच्छः । पुं । वृक्षे । गाछ इति भाषा ॥ इति त्रिकाण्डशेषः ॥

गजः । पुं । मानविशेषे ॥ अरत्नीनां शतान्यष्टावे कषष्ट्यधिकानि च । गजप्रमाण माख्यातं मुनिभि र्ब्रह्मवादिभिः ॥ मानसामान्ये ॥ साधारणो नराङ्गुल्या चिंशदङ्गुलको गजः ॥ हस्तद्वये पादोनहस्तद्वयेच ॥ हस्तिनि । मतङ्गजे ॥ भद्रो मन्दो मृगश्चैव विज्ञेया स्त्रिविधागजः ॥ वास्तुस्थान विशेषे । प्रस्तारे दैर्घ्यमानन्तु स्वहस्तेन तथानरैः । कृत्वा विभ्रंगजैर्हृत्वा वास्तुस्थाननिरूपणम् ॥ ध्वजो धूमश्च सिंहश्च श्वा वृषः खर एवच । गजः काकपदश्चैव स्यान्मान्यष्टौच वास्तुनः ॥ ध्वजे विभूति र्मरणञ्चधूमे सिंहेजयः श्वावकरोत्यनर्थम् । वृषेचभोगी चयर्ण खरेच पुष्टिर्गजे काकपदे विनाशः ॥ औषधपाकार्थं गर्त्तविशेषे । गजपुटे॥ अष्टसु ॥ चतुर्मात्रिकस्यादिमे ऽऽ पर्याये ॥ ङगणे । ऽ । मध्यगुरु संज्ञायाम् ॥ गजति । गजमदे । पचाद्यच् ॥

गजकन्दः । पुं । हस्तिकन्दे । स्थूलकन्दे ॥

गजकर्णी । स्त्री । औषधिविशेषे ॥ गजकर्णीतु तिक्तोष्णा तथा वातकफान् जयेत् । शीतज्वरहरी स्वादुः पाके तस्यास्तुकन्दकः ॥ पाण्डुरोग कृमिप्लीह गुल्मानाहोदरापहः । ग्रहण्यर्शोविकारघ्नोवनसूरण

कन्दवत् ॥

गजकूर्म्माशी । पुं । गरुडे ॥ इति शब्द रत्नावली ॥

गजकृष्णा । स्त्री । कपिवल्ल्याम् । गज पिप्पल्याम् ॥ गजइवकृष्णा । वृक्षत्वात् ॥

गजगतिः । स्त्री । अनुष्टुप्वृत्तभेदे ॥ यथा । नभलगागजगतिः । यथा । रविसुतापरिसरे विहरतो दृशिहरेः । व्रजवधूगजगति र्मुद मलं व्यतनुत ॥

गजचिर्भटा । स्त्री । इन्द्रवारुण्याम् ॥

गजचिर्भिटः । पुं । गोडुम्बायाम् ॥

गजचिर्भिटा । स्त्री । महेन्द्रवारुण्याम् ॥

गजच्छाया । स्त्री । दर्शापराह्णे ॥ हिगुणाद्यात्मन स्छाया दर्शस्था दापराह्णिकी । गजच्छायेति सा प्रोक्ता पितृणां तृप्तिकारिणी ॥ कुञ्जरच्छायायाम् ॥ योगविशेषे ॥ यदेन्दुःपितृदैवत्ये हंसश्चैवकरेस्थितः । याम्यातिथिर्भवेत् साहिगजच्छायाप्रकीर्त्तितेतिमिताक्षरापरिभाषा ॥ अपिच । कृष्णपक्षे त्रयोदश्यांमघास्विन्दुःकरेरविः । यदा तदा गजच्छायाश्राद्धेपुण्यैरवाप्यत इति कृत्यचिन्तामणिः ॥ अमावास्याश्राद्धकाले ॥ यथा । अमावास्यां गतेसोमे छायायामाङ्मुखीभवेत् । गजच्छायातुसा प्रोक्ता तत्रश्राद्धंप्रकल्पयेदिति ॥ चन्द्रार्कयोर्ग्रहणकाले ॥ यथा । सैंहिकेयो यदाभानुंग्रसते पर्वसन्धिषु । गजच्छायातुसा प्रोक्ता श्राद्धं तत्र प्रकल्पयेदितिवराहः ॥

गजढक्का । स्त्री । महानाते । गजोपरिस्थवृहड्ढक्कायाम् ॥

गजता । स्त्री । गजसमूहे हास्तिके ॥ गजानांसमूहः । गजसहायाभ्यामितितल् ॥

गजतुरगविलसितम् । न । ऋषभगजविलसिताख्यवृत्ते ॥

गजदघ्नः । त्रि । गजपरिमाणे ॥

गजदन्तः । पुं । श्रीगणेशे ॥ गजस्यदन्ताविव दन्तावस्य ॥ गजस्यदन्ते । हाथीदांत इति भाषा ॥ नागदन्ते । द्रव्यस्थापनार्थं भित्तिस्थेदण्डद्वये । खूंटा इति भाषा ॥

गजदन्तफला । स्त्री । डङ्गरीलतायाम् ॥

गजदानम् । न । हस्तिमदे ॥ मतङ्गजस्यत्यागे ॥ गजस्यदानम् ॥

गजपादपः । पुं । नन्दीवृक्षे । स्थालीवृक्षे ॥

गजपिप्पली । स्त्री । इभकणायाम् ।

करिपिप्पल्याम् ॥ चविकायाः फल प्राचैः कथिता गजपिप्पली । गज कृष्णा कटुर्वातश्लेष्मनुद्वह्निवर्द्धिनी ॥ उष्णा निहन्त्यतीसारश्वासकण्ठा मयक्रिमीन् ॥ गजइवपिप्पली । वृ हत्त्वात् ॥

गजपुटः । पुं । औषधपाकार्थं हस्तपरि मिते गर्त्ते ॥ यथा । हस्तप्रमाणो गर्त्तायः पुटः सतु गजाह्वयः । इत्थं चारत्निके कुण्डे पुटो वाराह उच्यते ॥

गजपुष्पी । स्त्री । नागपुष्प्यां लता याम् ॥

गजप्रिया । स्त्री । शल्लकीवृक्षे ॥

गजबन्धः । पुं । आकरेभ्योगजग्रहणे ॥

गजबन्धनी । स्त्री । हस्तिबन्धनशाला याम् । वार्य्याम् । हथीयान इति भाषा ॥ बध्यन्त ऽस्याम् । बन्धबन्ध ने । ल्युट् । ङीप् । गजस्य बन्धनी ॥

गजभक्षकः । पुं । अश्वत्थवृक्षे ॥

गजभक्ष्या । स्त्री । शल्लकीद्रुमे । सा लैं इति भाषा ॥ गजैर्भक्ष्यते । दध्या ॥

गजमाचलः । पुं । स्त्री । सिंहे ॥

गजमात्रः । त्रि । गजदघ्ने ॥

गजवदनः । पुं । लम्बोदरे । हेरम्बे ॥ गजस्यवदनमिव वदनमस्य ॥

गजवल्लभा । स्त्री । गिरिकदल्याम् । व हुवीजायाम् । वनरम्भायाम् ॥ श ल्लक्याम् ॥

गजवीथी । स्त्री । उत्तरमार्गे । नक्षत्र विशेषाणां संज्ञायाम् ॥ यथा । रो हिण्यार्द्रामृगशिरो गजवीथ्यभिधीय त इति ॥

गजसाह्वयम् । न । हस्तिनापुरे ॥ गजे नसहित आह्वयो नामयस्य । हस्ती नामराजा तेन निर्मितत्वात् ॥

गजाख्यः । पुं । चक्रमर्द्दवृक्षे ॥

गजाग्रणीः । पुं । ऐरावतगजे ॥ गजा नामग्रणीः ॥

गजाजीवः । पुं । आधोरणे । हस्तिप के । इभपालके ॥ गजआजीवोयस्य ॥

गजाण्डम् । न । पिण्डमूले ॥

गजाननः । पुं । गजवदने । विनायके ॥ यथा । वागीशाद्याः सुमनसः स र्वार्थानामुपक्रमे । यं नत्वा कृतकृ त्याः स्युस्तं नमामि गजाननमिति ॥ गजआननमस्य । समुदायशब्दा अवयवेऽपिवर्त्तन्तइति गजमुखपरो गजशब्दः ॥ गजाननमिवाननम स्येतिवा । उष्ट्रमुखवत् समासोत्तर पदलोपो ॥

गजारिः । पुं । तरुविशेषे ॥ सिंहे ॥ इ तिहड्डचन्द्रः ॥

गजारोहः । पुं । हस्तिपके ॥ गजमारो

इति । वृद्धे: कर्मणदस्य ॥

गजाशन: । पुं । पिप्पलवृक्षे ॥ गजेन अश्यते । अश० । कर्मणिल्युट् ॥

गजाशना । स्त्री । भङ्गायाम् ॥ पद्ममूले ॥ शल्लक्याम् ॥

गजास्य: । पुं । गणाधिपे । द्वैमातुरे ॥ गजस्य आस्यमिव आस्य मस्य ॥

गजाह्वम् । न । हस्तिनापुरे ॥

गजाह्वयम् । न । हस्तिनापुरे ॥

गजाह्वा । स्त्री । गजपिप्पल्याम् ॥

गजेष्टा । स्त्री । विदार्याम् ॥

गजोषणा । स्त्री । करिपिप्पल्याम् ॥

गञ्ज: । पुं । रीढायाम् । अवज्ञायाम् ॥ पुं । न । भाण्डागारे ॥ खनौ ॥ गोष्ठागारे ॥

गञ्जनम् । न । नाशे ॥

गञ्जा । स्त्री । मदिरागृहे ॥ खन्याम् ॥ पामरसद्मनि ॥ मद्यभाण्डे ॥ गञ्ज्यस्याम् । गजिशब्दे । गुरोश्चहलइत्यप्रत्यय: ॥

गञ्जिका । स्त्री । मदिरागृहे ॥ गञ्जैव स्वार्थे क: । प्रत्ययस्थादितीत्त्वम् ॥

गड: । पुं । गडुइमाछ् इतिगौडभाषाप्रसिद्धेमत्स्ये ॥ पुच्छशीर्षेण'रहिता: कासमर्दविमर्दिता: । हिङ्गुतैलेच सन्तप्ता गडमत्स्यस्यखण्डका: ॥ गडो वातहरो वल्योहृद्य: पथ्यो ऽग्निवर्द्धनः । मुख्य: शुक्रदो रुच्यो किञ्चित्कफकर: सर: ॥ अन्तराये ॥ परिखायाम् ॥ व्यवधाने ॥ शाकम्भरीये । साँभर इतिभाषाप्रसिद्धे लवणे ॥ गडाख्यं लघु वातघ्नं मत्त्युष्णं भेदि पित्तलम् । तीक्ष्णं व्यवायि सूक्ष्मञ्च अभिष्यन्दि कटुपाकिच ॥ गडति । गड० । अच् ॥ देशविशेषे ॥



गडक: । पुं । मत्स्यविशेषे । शकुलार्भके । गडुइमाछ् इतिगौडभाषा ॥ गडति । गडसेचने । कुन् शिल्पि संज्ञयोरितिकुन् ॥

गडयन्त: । पुं । मेघे ॥ गडेस्तृभूवहीति झच् । घटादित्वान् मित्त्वं ह्रस्व: । अयामन्तेतिणेरयादेश: ॥

गडदेशजम् । न । साम्बरे । साँभर नून इतिभाषा ॥

गडलवणम् । न । सांभर इति प्रसिद्धे लवणे । साम्बरे । शुभ्रे । पृथ्वीजे ॥

गडाख्य: । पुं । शाकम्भरीयेलवणे ॥

गडि: । पुं । वत्सतरे ॥ अलसेगवादौ । गडिया इति भाषा ॥ यथा । गणानामेव दौरात्म्या द्धुरि धुर्यो नियुज्यते । असञ्जातकिणस्कन्ध: सुखं स्वपिति गौर्गडिरितिकाव्यप्रकाश: ॥

गडु: । पुं । पृष्ठगुडे । घोटामस्तकयोर्मध्येमांसवृद्धौ ॥ कुब्जे ॥ किञ्चलु

 

के ॥ विषमग्रन्थौ ॥ अस्त्रप्रभेदे । श ल्यास्त्रे ॥ गडति गद्यते वा । गड सेचने । बाहुलकादुः ॥
गडुरः । त्रि । कुब्जे ॥
गडुलः । त्रि । कुब्जे ॥ गडुरस्यास्ति । सि० लच् । गौ०ङीषि गडुली ॥
गडेरः । पुं । मेघे ॥ गडति । गड० । पतिकठिकुठि गडिगुडीत्येरक् ॥
गडोत्थम् । न । गडलवणे ॥
गडोलः । पुं । गुडे ॥ गुडके ॥ ग्रासे ॥ गडति । गड० । कपिगडिगण्डी त्यो लच् ॥
गड्डरिका । स्त्री । मेषयूथैरनुगम्यमा नायां मेष्याम् ॥ अज्ञातप्रवाहागम मूले धारावाहिनि ॥
गडुः । पुं । } गडुआ० इति प्रसिद्धे ज
गडुकः । पुं । } लपात्रविशेषे ॥ इति
गडूकः । पुं । } शब्दरत्नावली ॥
गणः । पुं । प्रमथे । रुद्रानुचरे ॥ स ङ्ख्यायाम् ॥ ओघे । समूहे ॥ चण्डाया म् । चोरनामगन्धद्रव्ये ॥ सैन्यप्रभे दे । त्रिषु गुल्मेषु । इभाः २ र थाः २७ अश्वाः ८१ पदातिकाः १३५ समस्तसङ्ख्यया २७० । एततपरिमा णविशिष्टायां सेनायाम् ॥ गणेशे ॥ यथा । गणपस्तु महेशानि गण दीक्षा प्रवर्त्तक इति ॥ गण्यते गण यति वा । गणसङ्ख्याने । घञ् ,अ च्वा । अप्लोपस्य स्थानिवत्त्वान्न वृद्धिः ॥ धातुसमूहे ॥ यथा । भ्वाद्यदादी जुहोत्यादि दिवादिः स्वादिरेवच । तुदादरुधातनुक्र्यादि श्चुरादिश्च ग णा दशेति ॥ अश्विन्यादिजन्मनक्षत्रा नुसारेण देवमानुष राक्षस इति पारिभाषिके ॥ यथा । देमरा मदे मा दे देरा राममदरादरा । देरा राम मदेरा रा म मदेतिगणत्रयम् ॥ अपिच । पूर्वोत्तरात्रयश्चैव भर ण्यार्द्राचरोहिणी । इमानिमानुषा ण्याहुर्नक्षत्राणि मनीषिणः ॥ ज्येष्ठा शत भिषा मूल धनिष्ठा श्लेषकृत्तिकाः । चित्रामघाविशाखाः स्युस्तारा राक्ष सदेवताः ॥ अश्विनी रेवतीपुष्यः स्वातीहस्तः पुनर्वसुः । अनुराधा मृगशिरःश्रवणं देवतारका इति ॥ अस्यफलन्तु । स्वकुलेचोत्तमा प्रीति र्मध्यमा देवमानुषे । देवासुरेक निष्ठाच मृत्युर्मानुषराक्षसे ॥ रा क्षसी च यदाकन्या मानुषस्य वरो भवेत् । तदा मृत्युर्न दूरस्थो जि ह्वनत्त्वम याविवेतिश्रीपतिराह । निजनिजगणमध्ये प्रीति रत्युत्तमा स्या दमरमनुजयोः सामध्यमा संप्र दिष्टा । असुरमनुजयोः श्चेन् मृत्यु

रेव प्रदिष्टो द्विभुजविबुधयोः स्याद्रमेकान्त मेवेति रामः ॥

गणकः । पुं । सांवत्सरे । ज्यौतिषिके । दैवज्ञे ॥ वर्णसङ्करजातिविशेषोयम् । देवलाद्वैश्यागर्भजातः । तिथिवारादिज्ञापनञ्च तस्यकर्मोक्तं पराशरपद्धतौ ॥ तल्लक्षणंयथा । ज्योतिःशास्त्रविशेषज्ञः सुन्दराङ्गसभापटुः । कुलक्रमागतः शुद्धो गणकःस्यान्मनीषी पतेरितियुक्तिकल्पतरुः ॥ अस्पृश्योयंधर्मानुष्ठाने । यथा । कलिकाले महेशानि पाषण्डा बहवो जनाः । सङ्गदोषान् महेशानि तत्क्षणाद्वानितां व्रजेत् ॥ तस्मात् प्रयत्नतो देविसंसर्गं वर्जयेत् सुधीः । वरं चण्डालसंस्पर्शं कुर्यात्तु साधकोत्तमः । तथाप्यस्पृश्यगणकं सर्वदातं परित्यजेदिति मत्स्यिषमर्दिनीतन्त्रम् ॥ त्रि । गणनकर्त्तरि ॥ सङ्ख्याया इतिकन् ॥ गणयतिवा । गण० । ण्वुल् ॥

गणकर्णिका । स्त्री । इन्द्रवारुण्याम् ॥

गणकारः । पुं । धातुसङ्ग्रहकर्त्तरि भीमसेने ॥

गणकी । स्त्री । गणकयोषायाम् ॥ गणकस्यस्त्री । पुंयोगादितिङीष् ॥

गणकूटः । पुं । न । गजमेषे ॥

गणचक्रम् । न । धार्मिकाणांसम्भूय भोजने ॥ गणानां चक्रं ॥

गणता । स्त्री । गणसमूहे ॥

गणतिथः । त्रि । गणानाम्पूरणे ॥ तस्य पूरणेडट् । तस्यतिथुगागमः ॥

गणदीक्षी । पुं । बहुयाजके ॥

गणदेवता । स्त्री । सङ्घचारिदेवताविशेषे ॥ यथा । आदित्यविश्ववसवस्तुषिता भास्वरानिलाः । महाराजिकसाध्याश्च रुद्राश्च गणदेवताः इति ॥ तत्र आदित्याद्वादशप्रोक्ता विश्वेदेवादशस्मृताः । वसवश्चाष्टसङ्ख्याताः षट्त्रिंशत्तुषितामताः ॥ आभास्वरास्तुःषष्टि र्वाताःपञ्चाशदूनकाः । महाराजिकनामानो द्वेशतेविंशतिस्तथा ॥ साध्याद्वादशविख्याता रुद्राश्चैकादश स्मृताः । गतेष संहता देवाः पुराणेषुनिरूपिताइतिविशेषः ॥ समुदायेहत्ताःशब्दा अवयवेष्वपिवर्त्तन्ते इतिन्यायादमीषां शब्दानामेकवचनमपिसाधु ॥

गणद्रव्यम् । न । साधारणद्रव्ये ॥

गणनम । न । सङ्ख्याने । गिणना ठीकदेना इतिभाषा ॥ येनैवलिखितं मङ्ख्यात् तेनैवगणनं स्मृतम् ॥

गणना । स्त्री । गणने । सङ्ख्यायाम् ॥

गणनाथ । पुं । गणेशे ॥ गणानां प्रमथानां नाथः ॥

गणनायकः । पुं । गणेशे ॥

गणनायिका । स्त्री । दुर्गायाम् ॥

गणनीयः । त्रि । सङ्ख्येये । गणेये ॥ गण्यते । गणसङ्ख्याने । अनीयर् ॥

गणपतिः । पुं । श्रीगणेशे ॥ गणानां प्रमथानां पतिः ॥ पुष्टिर्गणपतेःपत्नी ॥

गणपर्वतः । पुं । कैलासाचले ॥

गणपीठः । पुं । न । } वक्षसि ॥
गणपीठकम् । न । }

गणभर्त्ता । पुं । प्रमथनाथे ॥

गणमैत्रम् । न । गणकूटे ॥ पश्यास्यवि वरणं गणशब्दे । अश्विन्यादिजन्मनक्षत्रानुसारेण देवमानुषराक्षसगण इतिपारिभाषिकइस्यच ॥

गणयाजकः । पुं । विनायकादिगणयागकृति ॥ गणानांयाजकः ॥

गणरात्रम् । न । रात्रिवृन्दे ॥ गणानां वह्वीनां रात्रीणां समाहारः । गणशब्दस्यसङ्ख्यात्वात् तद्धितार्थेतिद्विगुः । अहःसर्वैकदेशेत्यच् । सङ्ख्यापूर्वरात्रंक्लीवमिति लिङ्गानुशासने क्लीवत्वविधानात् रात्राह्नाहाःपुंसीतिपुंस्त्वंन ॥

गणरूपः । पुं । अर्कपादपे ॥ श्वेतार्के ॥ नानात्वात् गणा वहूनि रूपाण्यस्य ॥

गणरूपकः । पुं । राजार्के ॥

गणरूपी । पुं । श्वेतार्के ॥

गणवतीसुतः । पुं । दिवोदासे ॥

गणशः । अ । बहुशः । गणान् इति । वह्वल्पार्थाच्छस्कारकादन्यतरस्यामितिगणाच्छस् ॥

गणहासः । पुं । } चोरकनामगन्धद्रव्ये । चण्डायाम् ॥ गणंहासयति । हसे० । णि
गणहासकः । पुं । }
न्तः । अच् ॥ ण्वुल् कृन्वा ॥

गणाग्रणीः । पुं । गणेशे ॥ गणानामग्रणीः ॥

गणाचलः । पुं । कैलासपर्वते ॥ गणानामचलः ॥

गणाधिपः । पुं । गणेशे ॥ शिवे ॥ गणानां प्रमथानामधिपः ॥

गणाधिपतिः । पुं । गणेशे ॥ शिवे ॥ गणानामधिपतिः ॥

गणान्नम् । न । मठत्राह्मणसङ्घान्ने ॥

गणाभ्यन्तरः । पुं । गणार्थोपसृष्टमठधनाद्युपजीविनि । गणार्थोपसृष्टसम्बन्धिधनाद्युपजीविनि ॥

गणिका । स्त्री । वेश्यायाम् ॥ गणःसमूहोऽस्त्यस्याः भर्त्तृत्वेन । ठन् ॥ यूथिकायाम् ॥ चित्ताकर्षकत्वात् गणिकेव ॥ गणकारिकाद्रव्ये ॥ इभ्याम । हस्तिन्याम् ॥ गणयति । गण० ।

ण्वुल् ॥

गणिकारिका । स्त्री । श्रीपर्णी अग्नि मन्थे । वडगणियारी इति गौडभाषा । अरणी इति भाषा ॥ गणनम् । गणु॰ । इकृकृष्यादिभ्यः । गणं करोति । कर्मण्यण् । स्वार्थे कन् ॥ यद्वा । कृञ्कृति । कृ॰ । ण्वुल् । गणिका चासौ कारिका च ॥ जयपर्णी ॥

गणिकारी । स्त्री । गणियारी इति गौडभाषाप्रसिद्धे पुष्पवृक्षविशेषे । काञ्चनिकायाम् । वसन्तदूत्याम् । अलिमोदायाम् ॥

गणितम् । न । अङ्कशास्त्रे ॥ तद्द्विविधम् । द्विविधगणितमुक्तं व्यक्तमव्यक्तयुक्तमित्युक्तः । व्यक्तं पाटीगणितम् । अव्यक्तं बीजगणितम् ॥ गणने ॥ त्रि । सङ्ख्याते । कृतगणने ॥ गण्यते स्म । गण॰ । क्तः ॥

गणिपिटकः । स्त्री । जिनानां विद्याविभागे । द्वादशाङ्ग्याम् ॥

गणेयः । त्रि । गणनीये । सङ्ख्येये । गाणेये ॥ गणेरेयः ॥

गणेरुः । पुं । कर्णिकारवृक्षे ॥ स्त्री । करिण्याम् ॥ वेश्यायाम् ॥

गणेरुका । स्त्री । कुट्टन्याम् ॥

गणेरूः । स्त्री । करिण्याम् ॥ वेश्यायाम् ॥

गणेशः । पुं । विनायके । विघ्नराजे । एकदन्ते ॥ यथा । योऽयं कश्चित्तीर्थयात्रां तु गच्छेत् सुसंयतः स च पूर्वं गृहस्थे । कृतोपवासः शुचिरप्रमत्तः सम्पूजयेद्भक्तिनम्रो गणेशमिति ब्रह्मपुराणम् ॥ शिवे ॥ गणानामीशः ॥

गणेशकुसुमम् । न । रक्तकरवीरे ॥

गणेशभूषणम् । न । सिन्दूरे ॥

गणोत्साहः । पुं । खड्गे । गण्डके । गेंडा इति भाषा ॥

गण्डः । पुं । खड्गिनि । तुङ्गमखे । वज्रचर्मणि ॥ वीथ्यङ्गे ॥ पिटके ॥ चिह्ने ॥ वीरे ॥ कपोले । गाल इति भाषा ॥ यथा । गण्डं गण्डे सन्दधत्या आदात् ताम्बूलचर्वितमिति श्रीभागवते कोलचर्या ॥ हयभूषणबुद्बुदे ॥ करिकपोले । कटे । करटे ॥ गण्डति । गडिवदनैकदेशे । अच् ॥ ग्रहभेदे ॥ विष्कम्भादिषु दशमे योगे ॥ तत्रजातस्य फलम् । स्वकार्यकर्त्ता परकार्यहर्त्ता गण्डोद्भवः स्यादिति गण्डवाक्यः । अत्यन्तधूर्त्तः पुरुषः कुरूपः सुहृज्जनानामतितापदाता ॥ दोषजनकेऽश्विन्यादीनां भागविशेषे ॥ यथा । अश्विनीमघमूलानां तिस्रो गण्डाद्यनाडिकाः । अन्त्याः पौष्णोरगेन्द्राणां पञ्चैव जवनाजगः

॥ मूलेन्द्रयो द्विवागण्डो भिन्नायां पितृसर्पयोः । सन्ध्याद्वये तथाग्नेयो रेवतीतुरगर्क्षयोः ॥ तत्रोत्पन्नस्य दोषो यथा । सन्ध्यारात्रिदिवाभागे गण्डयोगोद्भवः शिशुः । आत्मानं मातरं तातं विनिहन्ति यथाक्रमम् ॥ चतुष्कले ऽ ॥ आदिगुरोःसंज्ञायाम् ॥ गच्छति । गम्लृ० । अमन्ताड्डः ॥

गण्डकः । पुं । खङ्गे । गैंडा इति भाषा । एकचरे ॥ सङ्ख्याप्रभेदे । गण्डा इति भाषा ॥ विद्याप्रभेदे ॥ अवच्छेदे ॥ अन्तराये । विघ्ने ॥ स्वा०कः॥

गण्डकारी । स्त्री । वराहक्रान्तायाम् । समङ्गायाम् । छायाजोडी इति भाषा ॥ गण्डेषुग्रन्थिषु कारी ॥

गण्डकाली । स्त्री । खदिर्याम् । नमस्कार्याम् । समङ्गायाम् ॥ गण्डे षु ग्रन्थिषु काली ॥

गण्डकी । स्त्री । नदीविशेषे ॥ गण्डक्याश्चैकदेशेच शालग्रामस्थलंस्मृतम् । पाषाणं तद्भवं यत् तत्शालग्राममितिस्मृतम् ॥

गण्डकीपुत्रः । पुं । शालग्रामे ॥

गण्डकीशिला । स्त्री । शालग्रामे ॥

गण्डकुसुमम् । न । उत्कटे । सञ्जातमदे हस्तिनि ॥ इति हारावली ॥

गण्डकूपः । पुं । पर्वतस्योच्चस्थले ॥ उक्तंश्च गण्डकूपस्तु पर्वतस्याभिधीयते ॥

गण्डगात्रम् । न । आतृप्ये । सीताफल सारीफा इति भाषा । आता इति गौडभाषा ॥ गण्डाः गात्रेयस्य ॥

गण्डदूर्वा । स्त्री । गोलोम्याम् । श्वेतदूर्वायाम् । मत्स्याक्ष्याम् । गांडरदुर्वी इति भाषा ॥ गण्डदूर्वा हिमा लोहद्राविणी ग्राहिणी लघुः । तिक्ता कषाया मधुरा वातकृतकटुपाकिनी ॥ दाहतृष्णा बलासास्रकुष्ट पित्तज्वरापहा ॥

गण्डमाला । स्त्री । रोगविशेषे ॥ तस्य सम्प्राप्तिरूपे यथा । कर्कन्धुकोलामलकप्रमाणैः कक्षासमन्यागलवङ्क्षणेषु । मेदः कफाभ्यांचिरमन्दपाकैः स्याद्गण्डमाला बहुभिश्चगण्डैरिति ॥

गण्डमालिका । स्त्री । लज्जालुकाम् ॥

गण्डमाली । त्रि । गण्डमालाख्यव्याधियुक्ते ॥

गण्डयन्तः । पुं । मेघे ॥ गण्डयति । गडि० । तृभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्चेतिझच् . सम्बपित् । गडघंटादिस्वान्निस्त्वम् । ह्रस्वः । अयामन्तेतिणेरयादेशः ॥

गण्डलेखा । स्त्री । गण्डस्थल्याम् ॥

गण्डशैल: । पुं । गिरेश्च्युते स्थूलोपले ॥ भूकम्पादिना शैलात् स्खलिते महति प्रस्तरे ॥ ललाटे ॥ गण्ड इव शैल: । शैल-शब्द: शैलावयवे वर्त्तते । विशेषणं विशेष्येण बहुलमितिसमास: ॥ शैलस्य गण्ड इवेति वा । राजदन्तादि: ॥

गण्डाङ्ग: । पुं । खड्गिनि । गण्डके ॥

गण्डान्तम् । न । तिथिनक्षत्रलग्नानां सन्धौ ॥ नक्षत्रतिथिलग्नानां गण्डान्तं त्रिविधं स्मृतम् । नवपञ्चचतुर्थानां द्व्येकार्द्धघटिकामितम् ॥

गण्डारि: । पुं । कोविदारवृक्षे ॥

गण्डाली । स्त्री । श्वेतदूर्वायाम् । शतवीर्यायाम् ॥ गण्डयति । गडि० । वाहुलकादालच् । गौ० ङीष् ॥ यद्वा गण्ड मलति । अल० । कर्मण्यण् । ङीप् ॥

गण्डि: । पुं । वृक्षस्य मूलाच्छाखावधि भागे ॥ इति हेमचन्द्र: ॥

गण्डीर: । पुं । गंडरदुबीति प्रसिद्धे शाके । समष्ठिलायाम् ॥ शूरे ॥ गण्डयति । गडि० । गण्ड्यते वा । वा० ईरन् ॥ यद्वा । गण्डान् ग्रन्थीन् ईरयति । ईरप्रेरणे । कर्मण्यण् ॥

गण्डीरी । स्त्री । मञ्जिष्ठायाम् ॥ सेहुण्डे ॥

गण्डु: । पुं । स्त्री । ग्रन्थौ ॥ उपधाने ॥

गण्डूपद: । पुं । किञ्चुलुकै । केंचुआ इति भाषा ॥ गण्डौ ग्रन्थय: पदान्यस्य ॥

गण्डूपदी । स्त्री । किञ्चुलुकस्त्रियाम् । क्षुद्र किञ्चुलुकजातौ । शिल्याम् ॥ जातेरस्त्रीति ङीष् ॥

गण्डूष: । पुं । मुखपूर्णौ । मुखपूर्णतोये ॥ यथा । अपांद्वादशगण्डूषैर्मुखशुद्धिर्विधीयतेइति ॥ इभशुण्डाग्रे । पुष्करे ॥ प्रसृतोन्मिते । प्रसृत्याप्रमिते ॥ कराङ्गुलौ ॥ गण्ड्यते । गडि० । गण्डेश्चेच्छूषन् ॥

गण्डूषा । स्त्री । गण्डूषशब्दार्थे ॥ उक्तनाभौ ॥ टाप् ॥

गण्डोल: । पुं । गुडे ॥ ग्रासे ॥ गण्डति । गडि० । कपिगडिगण्डिकटीभ्य ओलच् ॥

गण्य: । पुं । गणनीये । सङ्ख्येये ॥ गणलभ्यरि ॥ गणांलब्धा । धनगणंलब्धेतियत् ॥

गत: । त्रि । विज्ञाते ॥ याते ॥ समासे ॥ पतिते ॥ प्राप्ते ॥ न । गमने ॥ गम्लृ० । गत्यर्थाकर्मकेतिक्त: । अनुदात्तोपदेशेति मलोप: ॥

गतत्रप: । त्रि । त्यक्तलज्जे ॥ गतात्रपायस्मात्स: ॥

गतनासिक: । त्रि । नासिकारहिते ।

विशेषे ॥ गता नासिकास्य ॥

गतबुद्धिः । त्रि । ज्ञानशून्ये ॥ गता बुद्धिर्यस्य ॥

गतरसः । त्रि । विरसतां प्राप्ते । उद्धृतसारे मथितदुग्धादौ ॥ गतो रसोऽस्मात् ॥

गतव्यथः । त्रि । अनुत्पन्नदुःखे ॥ गता व्यथा यस्य यस्माद्वा ॥

गतसङ्गः । त्रि । फलासङ्गशून्ये ॥ गतः सङ्गो यस्य सः ॥

गतसन्देहः । त्रि । निरस्तसर्वसंशये ॥ गतः सन्देहो यस्य सः ॥

गतसन्नकः । पुं । निर्मदे हस्तिनि ॥

गतस्मयः । त्रि । निरहङ्कारे ॥ गतः स्मयो गर्वो यस्य ॥

गतागतम् । न । यातायाते ॥ गतागतं कामकामा लभन्ते ॥ पक्षिणां गतिविशेषे ॥

गतार्त्तवा । स्त्री । वन्ध्यायाम् ॥ वृद्धायाम् ॥

गतिः । स्त्री । मार्गे ॥ दशायाम् ॥ ज्ञाने ॥ पादयोर्व्यापारे । यात्रायाम् ॥ अभ्युपाये ॥ नाडीव्रणसरण्याम् । वृद्धगणे ॥ कर्मफले स्वर्गादौ ॥ मुक्तौ ॥ आश्रये ॥ प्राप्तौ ॥ गम्यते । गम्लृ° । क्तिन् ॥ शरणे ॥

गतिला । स्त्री । नदीविशेषे ॥ पर्म्परा विशेषे ॥

गत्वरः । त्रि । गमनशीले ॥ गच्छति । तच्छीलादिः । गम्लृ° । गत्वरश्चेति करप् अनुनासिकलोपश्च निपात्यते । ङीपि गत्वरी ॥

गदः । पुं । श्रीकृष्णानुजे ॥ आमये । रोगे ॥ भाषणे ॥ गदति । गद व्यक्तायां वाचि । पचाद्यच् ॥ न । विषे ॥

गदनम् । न । निगादे ॥ गद° । ल्युट् ॥

गदयित्नुः । पुं । कन्दर्पे । अनङ्गे ॥ शरासने । कार्मुके ॥ जल्पाके ॥ गदयति । गद° । स्तनिहृषिपुषिगदिमदिभ्योणेरित्नुच् । अयामन्तेतिणेरयादेशः ॥

गदा । स्त्री । आयुधे । स्वनाम्ना प्रसिद्धे लोहमये शस्त्रे ॥ पाटलावृक्षे ॥ अजन्ताट्टाप् ॥

गदाख्यम् । न । कुष्ठौषधौ । कूठ इति भाषा ॥

गदागदौ । पुं । अश्विनीकुमारयोः । स्वर्वैद्ययोः ॥

गदाग्रजः । पुं । श्रीकृष्णे । श्रीहरौ ॥ निगदेन मन्त्रेणाग्रे जायते । निशब्दलोपं कृत्वा गदाग्रजः ॥ यद्वा । गदोनाम वासुदेवस्यावरः । तस्मादग्रेजातः । सप्तम्यामलुक् ॥

गदाग्रणीः । पुं । क्षयरोगे ॥

गदाधरः । पुं । हरौ ॥ धरतीतिधरः । कुत्सितस्वात्मिका कौमोदकी नाम गदा । तस्याः धरः ॥ त्रि । गदाधारिणि ॥

गदाभृत् । न । विष्णौ ॥

गदाम्बरः । पुं । घने । मेघे ॥

गदारातिः । पुं । औषधे ॥

गदार्त्तः । त्रि । रोगिणि ॥ गदेन रोगेण आर्त्तः ॥

गदावान् । त्रि । गदिनि ॥ पुं । अच्युते ॥

गदाह्वम् । न ।
गदाह्वयम् । न । } कुष्ठौषधे ॥

गदी । पुं । कौस्तुभवक्षसि । विष्णौ ॥ गदा अस्ति अस्य । व्रीह्यादित्वादिनिः ॥ त्रि । गदाविशिष्टे । रोगयुक्ते ॥

गदिनी । स्त्री । गदावत्याम् ॥ नान्तलक्षणो ङीप् ॥ रोगिण्याम् ॥

गद्गदः । पुं । वाचःस्खलिते । कण्ठकम्पने ॥ अव्यक्तस्पष्टवक्तरि ॥ तस्यस म्यासिपूर्वकं लक्षणम् । यथा । आवृत्य वायुः सकफो धमनीः शब्दवाहिनीः । नरान् करोत्यक्रियचनान् मूकमिन्मिनगद्गदानिति ॥

गद्गदध्वनिः । पुं । हर्षशोकादिना अस्फुटध्वनौ । मन्मने ॥ गद्गदस्यासौध्वनिश्च ॥ मन्थाने ॥ गद्गदोध्वनिर्यत्र ॥

गद्यम् । न । पद्यभिन्नेकविकृते । अपादे पदसन्ताने ॥ अपादं पदसन्तानं गद्यं तत्तु त्रिधामतम् । वृत्तकोत्कलिकाप्रायवृत्तगन्धिप्रभेदतः ॥ गद्यते । गद० । गदमदचर यमश्चानुपसर्गेइति यत् ॥

गद्याणकः । पुं । अष्टचत्वारिं शद्रक्तिकापरिमाणे ॥ वैद्यकमतेचतुः षष्टिगुञ्जापरिमाणे ॥

गन्तव्यः । त्रि । प्राप्ये ॥

गन्तुः । पुं । पथिके ॥ गच्छति । गम्लृ गतौ । सितनीतनन् ॥

गन्ता । त्रि । गामुके । गमनशीले ॥ गच्छति तच्छीलः । गम्लृ० । ताच्छीलिकेषु वासरूपविधिर्नास्तित्यस्य प्रायिकत्वात्तृन् ॥

गन्त्री । स्त्री । कम्बलिवाह्यके । वृषवहनीयशकटे । गाडीइतिभाषा ॥ गम्यतेऽनया । गम्लृ० । ष्ट्रन् । ङीष् ॥

गन्त्रीरथः । स्त्री । मठे । शकटे ॥ इतिहारावली ॥

गन्धः । पुं । सम्बन्धे ॥ लेशे ॥ गन्धके ॥ गर्वे ॥ शिग्रौ ॥ घृष्टचन्दने ॥ चन्दनकुङ्कुमादिषु गन्धाः । यथोक्तम् । गन्धस्तु सौरभेये गे गन्धकेसर्वलेशयोः । सएवद्रव्यवचनो बहुत्वेपुंसि

च स्मृतः इति ॥ सपञ्चविधो यथा । चूर्णीकृतोवा घृष्टोवा दाहाकर्षित-एववा । रसःसम्मर्द्दजोवापि प्राण्य ङ्गोद्भवएववा । गन्धः पञ्चविधः प्रोक्तो । देवानां प्रीतिदायक इति । तच्च यांतस्तच्छब्देद्रष्टव्यम् ॥ गन्धोमलय जो यस्तु देवे पैचेच सम्मतः ॥ कर्पूरगन्धसाराद्याः घोदे घृष्टेच संस्थिताः । चन्द्रभागादयश्चापि रसेपङ्केच सङ्गताः ॥ गन्धसारस्तु सर्वत्र संसर्गादौ प्रयुज्यते । मृगनाभिर्भवेद् घृष्टश्चूर्णो ऽप्यन्यस्ययोगतः ॥ एवं सर्वस्तु सर्वत्र गन्धो भवति पञ्चधा । घृष्टादिभावादन्योन्यं गन्धः प्रीतिकरः परः ॥ गन्धस्य विस्तरोभेदः प्रोक्तः कालीयकादयः । सर्वः पञ्चविधेष्वेवप्रविष्टो भवतीत्यगादिति कालिकापुराणम् ॥ आमोदे ॥ सतुघ्राणग्राह्यः पृथिवीगुणः । यथा । घ्राणग्राह्योभवेद् गन्धो घ्राणस्यैवोपकारकः । सौरभश्चा ऽसौरभश्चसद्वेधा परिकीर्त्तितः ॥ सतुदशविधोयथा । इष्टः १ कस्तूरिकादौ । अनिष्टः २ शवादौ । मधुरः ३ मधुपुष्पादौ । कटुः ४ मरिचादौ । निर्हारी ५ हिङ्ग्वादौ । संहतः ६ चित्रगन्धो ऽनेककल्कगतः । स्निग्धः ७ सद्यस्तप्तघृतादौ । रूक्षः ८ सार्षपतैलादौ । विशदः ९ शाल्यन्नादौ । अम्लः १० आम्रातकादौ ॥ मात्रा मात्रे ॥ न । कृष्णागुरुणि ॥ त्रि । प्रतिवेशिनि ॥ गन्धयते । गन्धअर्द्दने । प चाद्यच् ॥



गन्धकः । पुं । शिग्रौ । शोभाञ्जने ॥ गन्धाश्मनि । सौगन्धिके । उपधातुविशेषे ॥ अस्योत्पत्तिर्यथा । श्वेतद्वीपे पुरा देव्याःक्रीडन्त्या रजसा प्लुतम् । दुकूलं तेन वस्त्रेण स्नातायाः क्षीरनीरधौ ॥ प्रसृतं यद्रजस्तस्माद्गन्धकः समजायत ॥ तद्भेदाः । चतुर्द्धागन्धकः प्रोक्तो रक्तःपीतः सितोऽसितः । रक्तोहेमक्रियासूक्तः पीतश्चैव रसायने । व्रणादिलेपनेश्वेतः कृष्णः श्रेष्ठः स दुर्लभः ॥ श्रेष्ठो हेमक्रियादिषु सर्वत्रप्रशस्ततरइत्यर्थः । अस्य गुणाः । गन्धकः कटुकस्तिक्तो वीर्योष्णस्तुवरः सरः । पित्तलः कटुकःपाके कण्डुवीसर्पजन्तुजित् ॥ हन्तिकुष्ठक्षयप्लीहकफवातान् रसायनः ॥ अशोधितो गन्धक एष कुष्ठं करोति तापं विषमं शरीरे । सौख्यञ्च रूपञ्च बलं तथौजः शुक्रं निहन्त्येव करोतिचास्रम् ॥ शोधितो यस्तु गन्धः स्यात् जरामृत्युरुजापहः । अग्निस

न्दीपनः श्रेष्ठो वीर्यवृद्धिकरोऽस्थिकृत् ॥ शोधनविधिस्तु । लोहपात्रे विनिःक्षिप्य घृतमग्नौ प्रतापयेत् । तप्ते घृते तत्समानं क्षिपेद्गन्धकजं रजः ॥ विद्रुतं गन्धकं दृष्ट्वा तनुवस्त्रे विनिःक्षिपेत् । यथा वस्त्राद्विनःसृत्य दुग्धमध्येऽखिलं क्षिपेत् ॥ एवं स गन्धकः शुध्येत् सर्वकर्मोचितो भवेत् ॥ गन्धोऽस्त्यास्ति । अर्श आद्यच् । स्वार्थे कन् ॥

गन्धकन्दकः । पुं । कशेरुणि ॥

गन्धकचूर्णः । पुं । न । दारू बरुद इति प्रसिद्धे पदार्थे ॥ गन्धकप्रधानश्चूर्णः ॥

गन्धकान्तम् । न । कैरवे ॥

गन्धकारिका । स्त्री । सैरन्ध्र्याम् ॥

गन्धकालिका । स्त्री । } व्यासमातरि ॥
गन्धकाली । स्त्री । }

गन्धकाष्ठम् । न । शम्बरचन्दने ॥ अगुरुकाष्ठे ॥

गन्धकुटी । स्त्री । मुरानामगन्धद्रव्ये ॥ लेख्यस्थाने ॥ गन्धस्य कुटी इव ॥

गन्धकुसुमा । स्त्री । गणिकार्याम् ॥

गन्धकेलिका । स्त्री । कस्तूर्याम् ॥

गन्धकोकिला । स्त्री । ओषधिविशेषे ॥ स्निग्धोष्णा कफकृत् तिक्ता सुगन्धा गन्धकोकिला ॥

गन्धखेडम् । न । गन्धवीरणे । भूतृणे । रौहिषे । गन्धरोणा इति गौड भाषा ॥

गन्धखेडकम् । न । गन्धतृणे । सुगन्धभूतृणे ॥

गन्धचेलिका । स्त्री । कस्तूर्याम् ॥

गन्धजलम् । न । केतकादिजले ॥

गन्धजातम् । न । तेजपत्रे ॥

गन्धज्ञा । स्त्री । नासिकायाम् ॥

गन्धतूर्य्यम् । न । वाद्यविशेषे । रणतूर्ये । महास्वने ॥

गन्धतृणम् । न । सुगन्धभूतृणे । सुरसे । सुवासे ॥

गन्धतैलम् । न । गन्धद्रव्याणाम् गुर्व्वादीनां संनियोगेन निष्कासिते स्नेहे । अतर इति भाषा ॥

गन्धत्वक् । न । एलवालुके ॥

गन्धदला । स्त्री । अजमोदायाम् ॥

गन्धधूमजः । पुं । स्वादुनामगन्धद्रव्ये ॥

गन्धधूलिः । स्त्री । कस्तूर्याम् ॥

गन्धनम् । न । उत्साहे ॥ प्रकाशने ॥ सूचने ॥ हिंसायाम् ॥ तृणविशेषे ॥ गन्ध० । भावकर्मकरणाधिकरणे ल्युट् ॥

गन्धनकुलः । पुं । छुछुन्दर्य्याम् ॥

गन्धनाकुली । स्त्री । रास्नायाम् । नाइ इति भाषाप्रसिद्धे रास्नाभेदे ॥ का

न्दविशेषे ॥ महासुगन्धायाम् । म हाविगन्धायाम् ॥ गन्धवर्त्ती ना कुली ॥

गन्धनामा । पुं । रक्ततुलस्याम् ॥ गन्ध पाषाणे ॥

गन्धनाम्नी । स्त्री । कच्चासदृशे क्षुद्ररोगे ॥

गन्धनाली । स्त्री । नासिकायाम् ॥

गन्धनिलया । स्त्री । नवमल्लिकायाम् ॥

गन्धनिशा । स्त्री । पलाश इति मालव देशप्रसिद्धगन्धपत्रायाम् ॥

गन्धपत्रः । पुं । श्वेततुलस्याम् ॥ मरुवे ॥ वर्धरे ॥ नारङ्गे ॥ बिल्वे ॥

गन्धपत्रा । स्त्री । शटीभेदे । एकपत्रि कायाम् । तवक्षीर्याम् ॥

गन्धपत्रिका । स्त्री । गन्धपत्रायाम् । दी र्घपत्रायाम् । शटीविशेषे ॥ अजमो दायाम् ॥

गन्धपत्री । स्त्री । अजमोदायाम् ॥ अ श्वष्ठायाम् ॥ अश्वगन्धायाम् ॥

गन्धपलाशिका । स्त्री । हरिद्रायाम् ॥

गन्धपलाशी । स्त्री । शठ्याम् । गन्धमू ल्याम् ॥ भवेद् गन्धपलाशी तु कषा या ग्राहिणी लघुः । तिक्ता तीक्ष्णा च कटुका ऽनुष्णास्यमलनाशिनी । शोथकासव्रणश्वासशूलहिध्माग्रहा- पहा ॥

गन्धपाषाणः । पुं । गन्धके ॥ गन्धयुक्त पाषाणः । शाकपार्थिवादिः ॥

गन्धपिशाचिका । स्त्री । धूपे ॥

गन्धपीता । स्त्री । गन्धपत्रायाम् ॥

गन्धपुष्पः । पुं । अङ्कोठे ॥ वेतसपादपे ॥ अशोकद्रुमे ॥ बहुवारवृक्षे ॥

गन्धपुष्पा । स्त्री । केतक्याम् ॥ गणि कार्याम् ॥ नील्याम् ॥

गन्धफणिज्झकः । पुं । रक्ततुलस्याम् ॥

गन्धफलः । पुं । कपित्थे ॥ बिल्वे ॥ ते जः फलवृक्षे ॥

गन्धफला । स्त्री । प्रियङ्गुवृक्षे ॥ मेथि कायाम् ॥ विदार्याम् ॥ शल्लक्याम् । गजभक्ष्यायाम् ॥ गन्धः फलेऽस्याः ॥

गन्धफली । स्त्री । प्रियङ्गुवृक्षे ॥ गन्धव न्तिफलान्यस्याः । पाककर्णोति ङी ष् ॥ चम्पककलिकायाम् ॥ गन्धःफ लसाध्यमस्याः ॥

गन्धबन्धुः । पुं । आम्रवृक्षे ॥ गन्धोबन्धु रस्य ॥ गन्धद्रव्यविशेषे । चोडायाम् ॥

गन्धभद्रा । स्त्री । गन्धाल्याम् । गन्धभा दालिया इति गौडभाषा ॥ गन्धेन भद्रा ॥ गन्धः भद्रो ऽस्या वा ॥

गन्धभाण्डः । पुं । गर्दभाण्डवृक्षे ॥ न । गन्धार्थं भाण्डे ॥

गन्धमांसी । स्त्री । भूतकेश्यामोषधौ ॥

गन्धमाता । स्त्री । भूमौ ॥ गन्धस्य माता ॥

गन्धमादनः । पुं । न । पर्वतविशेषे ।

कुबेरस्य शैले । इलावृतस्य पूर्वे उत्तरतो नीलपर्यन्तं दक्षिणतो निषधपर्यन्तश्च दीर्घे भद्राश्ववर्षस्य सीमापन्ने द्विसहस्रयोजनविस्तीर्णे ॥ मेरोर्याम्यतः पीतवर्णे विष्कम्भशैले । अयश्च पञ्चाशत् सहस्रोच्छ्रायः । यत्र सहस्रयोजनोन्नतिमाम् जम्बूपादपोऽस्ति ॥ गन्धेन मादयति । मदीचर्षे णिजन्तः । नंद्यादित्वात् ल्युः ॥ पुं । गन्धके ॥ भ्रमरे ॥ रामायणप्रसिद्धे वैवस्वतपुत्रे वानरविशेषे ॥

गन्धमादनी । स्त्री । सुरायाम् ॥ वन्दाके ॥ चौडानाम्नि गन्धद्रव्ये ॥

गन्धमादिनी । स्त्री । लाक्षायाम् ॥ सुगन्धिद्रव्यविशेषे । मुरायाम् ॥

गन्धमार्जारः । पुं । खट्टासे ॥ गन्धमार्जारवीर्यन्तु वीर्यकृत् कफवातहृत् । कण्डुकोठहरं नेत्र्यं सुगन्धं स्वेदगन्धनुत् ॥ गन्धेनोपलक्षितो मार्जारः ॥

गन्धमालती । स्त्री । ओषधिविशेषे ॥ गन्धकोकिलया तुल्या विज्ञेया गन्धमालती ॥

गन्धमुखी । स्त्री । छुच्छुन्दर्याम् ॥ गन्धो मुखेऽस्याः ॥

गन्धमुण्डः । पुं । गन्धभादालिया इति गौडभाषाप्रसिद्धे लताविशेषे । मन्दीवृक्षे । गर्दभाण्डे ॥

गन्धमूलः । पुं । कुलञ्जनवृक्षे ॥ कर्पूरे ॥

गन्धमूलकः । पुं । शठ्याम् ॥

गन्धमूला । स्त्री । शठ्याम् ॥ शल्लक्याम् ॥

गन्धमूलिका । स्त्री । माकन्द्याम् ॥ शठ्याम् ॥

गन्धमूली । स्त्री । शठ्याम् ॥ गन्धं मूलमस्याः पाककर्णेति ङीष् ॥

गन्धमूषा । स्त्री । } छुच्छुन्दर्याम् ।
गन्धमूषकः । पुं । } चिक्के । वेश्म
गन्धमूषी । स्त्री । } नकुले ॥

गन्धमृगः । पुं । खट्टासे ॥ गन्धेनोपलक्षितो मृगः ॥

गन्धमैथुनः । पुं । वृषे ॥

गन्धमोदनः । पुं । गन्धके ॥

गन्धमोहिनी । स्त्री । चम्पककलिकायाम् ॥

गन्धयुक्तिः । स्त्री । कुङ्कुमादिसम्पादने ॥ अस्या विवरणं वाराहाः पञ्चसप्ततितमेऽध्याये द्रष्टव्यम् ॥

गन्धरसः । पुं । गन्धद्रव्यविशेषे । बोले ॥ फुलसस्य इति गौडभाषाप्रसिद्धे उपधातुविशेषे ॥ गन्धवान् रसोऽस्य ॥

गन्धरसाङ्गकः । पुं । श्रीवेष्टनामसुगन्धिद्रव्ये ॥

गन्धराजः । पुं । कणगुग्गुलौ ॥ मुद्गरवृक्षे ॥ न । चन्दने ॥ जवादिनामगन्धद्रव्ये ॥ स्वनामख्याते पुष्पवृक्षे पु०

ध्वनिविशेषे ॥ खर्वकृतायाम् ॥ इति कश्चित् ॥

गन्धराजी । स्त्री । नखीनामगन्धद्रव्ये ॥

गन्धर्वः । पुं । पशुप्रभेदे । सतुकस्तूरीमृग इति कश्चित् ॥ पुंस्कोकिले ॥ घोटके । तुरङ्गे ॥ अन्तराभवसत्त्वे ॥ अन्तरा मरणजन्मनोर्मध्ये भवं सत्त्वं यातनाशरीरम् तस्मिन्नित्यर्थः ॥ गुप्तप्राणीतिकेचित् । यथा । गन्धर्वाःपतयोममेतिविराटे ॥ गायनधर्मिणि ॥ खेचरे ॥ स्वर्गगायके । देवयोनिविशेषे । हाहाहूहूप्रभृतिषु ॥ यथा । हाहा हूहू श्चित्ररथो हंसो विश्वावसु स्तथा । गोमायु स्तुम्बुरु र्नन्दिरेवमाद्याश्चतेस्मृताः । इति ॥ गानधर्मीगन्धर्वोद्विविधः । मर्त्यगन्धर्वोदेवगन्धर्वश्चेति । यथाहुः । अस्मिन कल्पे मनुष्यः सन्-पुण्यपाकविशेषतः । गन्धर्वत्वं समापन्नोमर्त्यगन्धर्वउच्यते ॥ पूर्वकल्पेकृतात्पुण्यात् कल्पादावेवचेद्भवेत् । गन्धर्वत्वं तादृशो ऽत्रदेवगन्धर्वउच्यते इति ॥ गन्धं सौरभम् अर्वति इतिगन्धर्वः । अर्वगतौ । कर्मण्यण् । श० ॥ गन्धयति गन्ध्यते वा । गन्ध । चु० । अच् घञ् वा । अर्वति । अर्वगतौ । अच् । गन्धश्चासावर्वश्च । शकन्ध्वादित्वा ॥ गन्धो ऽर्वो ऽस्येति वा ॥

गन्धर्वतैलम् । न । एरण्डतैले ॥

गन्धर्वनगरम् । न । राजनगराकारे नीलपीतादिमेघरचनाविशेषे ॥ तत्सद्दिग्वशेन फलप्रदर्शनार्थमाह । उदगादिपुरोहितनृपबलपतियुवराजदोषदंखपुरम् । सितरक्तपीतकृष्णं विप्रादीना मभवाय ॥ दोषदमशुभप्रदम् ॥ नागरनृपविजयावहमुद ग्विदिक्स्थं विवर्णमाशाय । शान्तायां तद्दृष्टं सतोरणं नृपतिविजयाय ॥ विवर्णाःसङ्कराः ॥ सर्वदिगुत्थं सततोत्थितञ्चभयदं नरेन्द्रराष्ट्राणाम् । चौराटविकान् हन्यादूमानलशक्रचापाभम् ॥ गन्धर्वनगर मुत्थितमापाण्डुर मशनिपातवातकरम् । दीप्ते नरेन्द्रमृत्यु र्वामे रिभयंजयप्रदंसव्ये । अनेकवर्णाकृति खे प्रकाशते पुरं पताकाध्वजतोरणान्वितम् यदा तदा नागमनुष्यवाजिनांपिबत्यसृग् भूरिरणे वसुन्धरा॥ गन्धर्वाणांनगरमिव ॥ इन्द्रजाले ॥

गन्धर्वपुरम् । न । गन्धर्वनगरे । शून्याऽधिष्ठाने मायाविनिर्मितेपत्तने ॥ गन्धर्वाणां पुरमिव ॥

गन्धर्वलोकः । पुं । गुह्यकलोकोपरि विद्याधरलोकाधोवर्त्तमानेलोके॥

गन्धर्व्ववेदः । पुं । सङ्गीतविद्यायाम् । सामवेदस्योपवेदे ॥

गन्धर्व्वहस्तः । पुं । } गन्धर्व्वहस्तकः । पुं । } मुक्तरण्डे ॥ गन्धर्वस्य मृगभेदस्य हस्तइवपत्रमस्य ॥

गन्धलता । स्त्री । प्रियङ्गौ ॥

गन्धलोलुपा । स्त्री । मक्षिकायाम् ॥ गन्धेलोलुपा ॥

गन्धवणिक् । पुं । गन्धी इतिप्रसिद्धे अम्बष्ठात् राजपुत्र्यां जाते वर्णसङ्करजातिविशेषे । गन्धाजीवे । गान्धिके ॥ अस्यकर्मलिखनं गन्धदानञ्चेति पराशरभाष्यम् ॥

गन्धवती । स्त्री । पृथिव्याम् ॥ पुरीभेदे । वरुणपुर्याम् ॥ योजनगन्धायाम् । व्यासमातरि ॥ सुरायाम् । गन्धोत्तमायाम् ॥ वायोर्नगर्याम् ॥ यथा । वायोर्गन्धवती तुङ्गश्वेतपीतध्वजाकुला । वलवद्भूतसञ्जुष्टा सर्वरत्नविनिर्मितेतिमृगेन्द्रसंहिता ॥ वनमल्लिकायाम् ॥ मुरानामनिगन्धद्रव्ये ॥ गन्धोस्त्यस्याम् । रसादिभ्यश्चेतिमतुप् । ङीप् ॥

गन्धवधूः । स्त्री । शट्याम् ॥ चीडाख्यगन्धद्रव्ये ॥

गन्धवल्कलम् । न । त्वचे । दारचीनी इतिभाषा ॥

गन्धवल्लरी । स्त्री । सहदेव्याम् ॥

गन्धवल्ली । स्त्री । डामिपोला इतिगौडभाषाप्रसिद्धे पीतपुष्पे दुग्धोत्पले । गोवन्दन्याम् । सहदेव्याम् ॥

गन्धवहः । पुं । वायौ ॥ वहति । वहप्रापणे । अच् । गन्धस्य वहः ॥ त्रि । गन्धयुक्ते ॥

गन्धवहलः । पुं । सितार्जके ॥

गन्धवहा । स्त्री । नासिकायाम् ॥ वहति । वह० । पचाद्यच् । टाप् । गन्धस्यवहा ॥

गन्धवहुला । स्त्री । गोरक्षीक्षुपे ॥

गन्धवारि । न । गन्धवासितोदके । गन्धजले ॥

गन्धवाहः । पुं । वायौ ॥ कस्तूरीमृगे ॥ गन्धं वहति । वह० । कर्मण्यण् ॥

गन्धवाहा । स्त्री । घ्राणे । नासिकायाम् ॥ गन्धस्य वाहो वहनं यस्यां सा ॥

गन्धविह्वलः । पुं । गोधूमे ॥

गन्धवीजा । स्त्री । मेथिकायाम् ॥

गन्धवृक्षकः । पुं । सालवृक्षे ॥

गन्धव्याकुलम् । न । कक्कोले ॥

गन्धशटी । स्त्री शट्याम् ॥

गन्धशाकम् । न । गौरसुवर्णशाके ॥

गन्धशालिः । पुं । आसमतीतिख्याते कलमोत्तमे । गन्धतण्डुले ॥

गन्धशुण्डिनी । स्त्री । छुच्छुन्दर्याम् ॥

गन्धशेखरः । पुं । कस्तूर्याम् ॥

गन्धसलिलम् । न । गन्धद्रव्याणामग्नि संयोगेन निष्कासितेजले ॥

गन्धसारः । पुं । चन्दनवृक्षे ॥ गन्धवान् सारः स्थिरभागो ऽस्य । गन्धएव सारोऽस्य वा । मुद्गरवृक्षे ॥

गन्धसारणः । पुं । वृहन्नख्याम् ॥

गन्धसोमम् । न । कुमुदे । कैरवे ॥

गन्धहस्ती । पुं । मत्तेभे ॥ यस्य मदगन्धेन अन्ये गजाः पलायन्ते स गन्धहस्तीत्युच्यते ॥

गन्धहारिका । स्त्री । परगृहं गत्वा कर्मकारिण्यां शिल्पिन्याम् ॥ गन्धहरणकर्त्र्याम् ॥

गन्धा । स्त्री । शट्याम् ॥ शालपर्ण्याम् ॥ चम्पककलिकायाम् ॥

गन्धाखुः । पुं । छुच्छुन्दर्याम् ॥

गन्धाजीवः । पुं । गन्धवणिजि ॥ गन्ध आजीवोऽस्य ॥

गन्धाढ्यः । पुं । नारङ्गवृक्षे ॥ न । चन्दने ॥ जवादिनामगन्धद्रव्ये ॥ त्रि । गन्धयुक्ते ॥

गन्धाढ्या । स्त्री । गन्धपत्रायाम् ॥ स्वर्णयूथ्याम् ॥ तरुण्याम् ॥ आरामशीतलायाम ॥ गन्धाल्याम् ॥

गन्धाधिकम् । न । तृणकुङ्कुमे ॥

गन्धाम्ला । स्त्री । वनवीजपूरके ॥

गन्धारः । पुं । रागे ॥ सिन्दूरे ॥ स्वरविशेषे ॥ पुंबहुत्वे नीवृदन्तरे । खन्धार इति भाषा ॥

गन्धाला । स्त्री । जियतीति गौडभाषाप्रसिद्धे वृक्षविशेषे ॥ इति शब्दचन्द्रिका ॥

गन्धालिका । स्त्री । } लताविशेषे । प्रसा-
गन्धाली । स्त्री । } रण्याम् । भद्रपर्ण्याम् ॥

गन्धालीगर्भः । पुं । सूक्ष्मैलायाम् ॥

गन्धाश्मा । पुं । गन्धके ॥ गन्धयुक्तो ऽश्मा । शाकपार्थिवादिः ॥

गन्धाष्टकम् । न । शक्त्यादिदेवताभ्योदीयमाने गन्धानामष्टके ॥ यथा । चन्दनागुरुकर्पूरचोरकुङ्कुमरोचनाः । जटामांसी कपियुता शक्तेर्गन्धाष्टकं विदुः ॥ १ ॥ चन्दनागुरुह्रीबेरकुष्ठकुङ्कुमसेव्यकाः । जटामांसी पुरमिति विष्णो र्गन्धाष्टकं विदुः ॥ २ ॥ चन्दनागुरुकर्पूरतमालजलकुङ्कुमम् । कुशीदं कुष्ठसंयुक्तं शैवं गन्धाष्टकं विदुः ॥ ३ ॥ स्वरूपं चन्दनं चोरं रोचना ऽगुरु मेव च । मदं दूगदयोर्ज्ञातं कस्तूरी चन्द्रसंयुतम् ॥ गन्धाष्टकं विनिर्दिष्टं गणेशस्य महेशितुः ॥ ४ ॥ इति शारदातिलकम् ॥ अपिच । चन्दनागुरुकर्पूररोचना

कुङ्कुमं मदम् । रक्तचन्दनह्रीवेरं गागापत्यमुदाहृतम् ॥ ४ ॥ जलका श्मीरकुष्ठे स्तु रक्तचन्दनचन्दनैः । उशीरागुरुकर्पूरैः सौरं गन्धाष्टकं विदुरितिमेरुतन्त्रम् ॥ ५ ॥ भिष जांगन्धाष्टकं यथा । जातीपत्रं लव- ङ्गञ्च त्वगेला नागकेसरम् । मरि चंमृगनाभिश्च विद् गैन्धाष्टकंत्विद मिति ॥

गन्धि । न । तृणकुङ्कुमे ॥ इति राज निर्घण्टः ॥

गन्धिकः । पुं । गन्धके ॥ गन्धोऽस्यास्ति । अतइनिठना विति ठन् ॥

गन्धिनी । स्त्री । गन्धकुट्याम् । मुरा याम् ॥ प्रशस्तोगन्धोऽस्याः । इनिः ॥

गन्धिपर्णः । पुं । सप्तच्छदवृक्षे ॥

गन्धोतुः । पुं । खट्टाशे ॥

गन्धोत्कटा । स्त्री । दमनकवृक्षे ॥

गन्धोत्तमा । स्त्री । मदिरायाम् । मद्ये ॥ गन्धेनोत्तमा । गन्धः उत्तमोयस्या वा । राजदन्तादिः ॥

गन्धोली । स्त्री । वरटायाम् । ततैया वरडे इतिचभाषाप्रसिद्धे सपक्षकी टे ॥ शुण्ठ्याम् ॥ भद्रायाम् ॥ गन्ध यति । गन्धअर्द्दने । शाहुलकात् ओ लच् । गौरादि ङीष् ॥

गभस्तिः । पुं । किरणे ॥ सूर्ये ॥ स्त्री । वह्निप्रियापिति । स्वाहायाम् ॥ गम्यते ऽन्यत्राणीतिडः । गो ज्ञेयङ्गौः तंब भस्तिदीपयतीति इति गभस्तिः । भस भर्त्सनदीप्त्योः । जः । क्तिच्क्तौ चेतिक्तिच् ॥

गभस्तिनेमिः । पुं । गभस्तिचक्रस्य मध्ये सूर्यात्मनास्थिते हरौ ॥ नेमिपदे न चक्रावयववाचिना ऽवयविचक्रं ल क्ष्यते । गभस्त्यात्मिका नेमिश्चक्रमस्य । गभस्तिचक्रमध्यवर्त्तिन सूर्यात्म नः परमेश्वरस्येति गभस्तिनेमिः ॥

गभस्तिमान् । पुं । सूर्ये ॥ न । तलात लाख्ये पातालभेदे ॥ भारतवर्षीये पदीपविशेषे ॥ गभस्तयो विद्यन्ते ऽस्याऽस्मिन वा । मतुप् ॥

गभस्तिहस्तः । पुं । सूर्ये ॥ गभस्तयोह स्तायस्यसः ॥

गभीरः । त्रि । निम्ने । गम्भीरे ॥ अगा धे ॥ गच्छे ॥ गच्छति जलमत्र गच्छति वा । गाङ्गतौ गम्लृगतौ वा । गम्भीरा दयश्चेति गभीरगम्भीरावितिवा ग मेरीरन् भश्चान्तादेशः ॥

गभीरिका । स्त्री । दण्डढक्कायाम् । वृहड्ढक्कायाम् । दमामा नगारा इति च भाषा ॥

गभोलिकः । पुं । मसूरे ॥

गमः । पुं । द्यूतप्रभेदे । अक्षविव

र्त्ते ॥ अपर्यालोचने ॥ अध्वनि। वर्त्मनि॥ सट्टकपाठे॥ याने। जिगीषोर्गमने ॥ गमनम्। गम्लृ गतौ। ग्रहवृद्रिश्चेत्यप् ॥

गमकः। पुं। बोधके। ज्ञापके॥ स्वरविशेषे ॥

गमकारित्वम्। न। रभसे। हर्षे ॥

गमथः। पुं। पथि ॥ त्रि। अध्वगे। पथिके॥ गच्छति गम्यते वा। गम्लृ०। शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथद्दत्यथ प्रत्ययः ॥

गमनम्। न। यात्रायाम्। जिगीषोः प्रयाणे। कूंच इति पारसीक भाषा ॥ पादविहरणे। पञ्चविधकर्मान्तर्गतकर्मविशेषे। तस्यभेदा यथा। भ्रमणं रेचनं स्यन्दनो र्द्धज्वलनमेवच। तिर्य्यग्गमनमप्यत्र गमना देवगृह्यते ॥ गम्लृ०। ल्युट् ॥

गमनीयः। त्रि। पदनीये ॥ गन्तुमर्हः। अर्हे कृत्यतृचश्चेति गमेरनीयर् ॥

गमयिता। त्रि। प्रापयितरि ॥

गमितः। त्रि। प्रापिते।

गमी। त्रि। गमिष्यति॥ गम्लृ०। गमेरिनिः। सचभविष्यति गम्यादय इति भविष्यत्काले ॥ गमनकर्त्तरि॥

गम्भारिका। स्त्री। गम्भार्य्याम् ॥

गम्भारी। स्त्री। सर्वतोभद्रायाम्। काश्मीर्याम् ॥ गम्भार्याः फलंमूलञ्च गम्भारी। अनुदात्तादेश्चेत्यञः फलपाकशुषामितिलुपि युक्तवद्भावः। कंजलं विभर्त्ति। डुभृञ् धारणपोषणयोः। कर्मण्यण्। पृ० गत्वम् ॥

गम्भीरः। पुं। जम्बीरे ॥ पङ्कजे। पद्मे ॥ ऋङ्मन्त्रे ॥ त्रि। गभीरे। निम्ने॥ गहने। दुरवगाहे॥गाते जलमत्र गच्छति वा। गाङ्० गम्लृ० वा। गम्भीरादयश्चेति गभीर गम्भीराविति वा गमेरीरन् भश्चान्तादेशो नुमागमश्च निपातसिद्धः॥ स्वरः सत्त्वञ्च नाभिश्च गम्भीरस्त्रिषु शस्यते ॥

गम्भीरवेदी। पुं। दुर्द्धरहस्तिनि। अवमताङ्कुशे। चालके ॥ अस्य लक्षणं यथा। चिरकालेन यो वेत्ति शिक्षां परिचितामपि। गम्भीरवेदी विज्ञेयः स गजो गजवेदिभिरिति ॥ अन्यच्च। त्वग्भेदाच्छोणितस्रावान्मांसस्यमथनादपि। आत्मानं यो न जानाति स स्याद्गम्भीरवेदितेति ॥ गम्भीरं मन्दं वेत्तीति ॥

गम्यः। त्रि। प्राप्ये ॥ गमनयोग्ये॥ गम्यते। गम्लृ०। पोरदुपधादितियत् ॥

गम्यदिक्। स्त्री। गन्तुमिष्टायां दिशि॥

गम्यमानः। त्रि। बुध्यमाने॥ वर्त्तमान

गमनाश्रये ग्रामादौ ॥

गम्या । स्त्री । पतन्याम् ॥ खेदात् स्त्रीषु प्रवृत्तिर्भवति । समानस्तु खेदविगमो गम्यायामगम्यायाञ्च । तत्र नियमः क्रियते इयङ्गम्येतिभाष्यम् । खेदयतीति खेदोरोगः । इन्द्रियनियमासामर्थ्यं वा खेद इतिकैयटः ॥ एवञ्चागम्यानिषेधस्येतराभ्यनुज्ञाफलकतयास्वदारगमने दोषाभावः ॥

गयः । पुं । असुरविशेषे ॥ अमूर्त्तरयःपुत्रे राजर्षिप्रभेदे ॥ वैवस्वतपुत्रे रामायणप्रसिद्धे वानरविशेषे ॥

गयपुरी । स्त्री । गयातीर्थे ॥

गया । स्त्री । तीर्थविशेषे । गयराजर्षिपुर्याम् ॥ गयाशिरआदिपरिमाणम् । नागा ज्जनार्दना द्ब्रह्मयूपाच्चोत्तरमानसात् । एतद् गयाशिरः प्रोक्तं फल्गुतीर्थं तदुच्यते ॥ पितामहं समासाद्य यावदुत्तरमानसम् । फल्गुतीर्थं तु विज्ञेयं देवानामपि दुर्लभम् ॥ क्रौञ्चपादात् फल्गुतीर्थं यावत् साक्षाद्गयाशिरः । मुखं गयासुरस्यैतत् तस्माच्छ्राद्धमथाक्षयम् ॥ मुण्डपृष्ठाच्च पूर्वस्मिन् पश्चिमे दक्षिणोत्तरे । सार्द्धक्रोशद्वयं मानं गयायां ब्रह्मणेरितम् ॥ पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः । तन्मध्येसर्वतीर्थानि त्रैलोक्ये यानि सन्ति वै ॥ गयायां नहि तत् स्थानं यत्रतीर्थं न विद्यते । सान्निध्यं सर्वतीर्थानां गयातीर्थं ततो वरम् ॥ ब्रह्मज्ञानेन किंसाध्यं गोग्रहे मरणेन किम् । वासेन किङ् कुरुक्षेत्रे यदि पुत्रो गयां व्रजेत् ॥ श्राद्धकृद् यो गयाक्षेत्रे पितृणामनृणोपि सः । शिरसि श्राद्धकृद् यस्तु कुलानांशतमुद्धरेत ॥ गयाशिरसियः पिण्डान् येषां नाम्नातु निर्वपेत् । नरकस्थादिवं यान्ति स्वर्गस्थामोक्षमाप्नुयुः ॥ गत्वा वणिग् गयाशीर्षे प्रेतराजस्य पिण्डकम् । प्रददौ मनुजैः सार्द्धं स्वपितृभ्यस्ततो ददौ ॥ प्रेताः प्रेतत्वनिर्मुक्ता वणिक् च गृहमागतः । प्रेतराजः सह प्रेतै र्गयाश्राद्धा द्दिवंगतः ॥ ॥ गयायां सर्वकालेषु पिण्डं दद्या द्विचक्षणः । अधिमासे जन्मदिने चास्तेऽपि गुरुशुक्रयोः ॥ न त्यक्तव्यं गयाश्राद्धं सिंहस्थेऽपिवृहस्पतौ । तथा दैवप्रमादेन प्रवृत्तसुव्रतेषु च ॥ पूतः कर्म्माधिकारी च श्राद्धकृद् ब्रह्मलोकभाक् ॥ मीने मेषेस्थिते सूर्ये कन्यायां कार्मुके घटे । नारदत्रिषु लोकेषु गयाश्राद्धं सुदुर्लभम् ॥ ॥ मुण्डनञ्चोपवा

सप्तसप्ततीर्थेष्वयं विधिः । वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम् ॥ दण्डं प्रदर्शयेद्भिक्षुर्गयां गत्वा न पिण्डदः । दण्डं न्यस्य विष्णुपदे पितृभिः सह मुच्यते ॥ गयागजो गयादित्यो गायत्री च गदाधरः । गया गयासुरश्चैव षड्गया मुक्तिदायिकाः ॥ इति गयामाहात्म्यादिकं वायुपुराणे ॥ गयायां सर्वमङ्गलास्थानं वर्त्तते इति देवीगीता । गयायाञ्च गयेश्वरीत्यागमः ॥

गयाशेषम् । न । पञ्चक्रोशात्मके प्रसिद्धक्षेत्रे ॥

गरः । पुं । उपविषे ॥ विषे ॥ रोगे ॥ न । पञ्चमकरणे ॥ तज्जातस्य फलम् । विचारदक्षो विजितारिपक्षः शूरोऽतिधीरो मृदुहास्ययुक्तः । दाता दयालुर्गुणवान् नरः स्याद्गरे परेषामुपकारकर्त्तेति ॥ वत्सनाभाख्यविषे ॥ गरणे ॥ गरणम् । गृ निगरणे । ऋदोरप् ॥ गिरति वा । गृ० । पचाद्यच् ॥

गरघ्नः । पुं । कृष्णार्जके ॥ वर्व्वरे ॥

गरघ्नी । स्त्री । गरइ इति प्रसिद्धे मत्स्यविशेषे ॥ गरघ्नी मधुरा तिक्ता तुवरा वातपित्तहृत् । कफघ्नी रुचिकृल्लघ्वी दीपनी बलवीर्यकृत् ॥

गरणम् । न । निगारे । भक्षणे ॥ सेचने ॥

गरदम् । न । विषे ॥ त्रि । विषप्रदे । मरणहेतुद्रव्यस्य दातरि ॥ गरं ददाति । डुदाञ्० । आतइति कः ॥

गरभः । पुं । गर्भे ॥ गिरति गृणाति वा । गृ० । वा० अभच् ॥ मृगे ॥

गरलम् । न । तृणपूले । घासका पूला इति भाषा ॥ पन्नगविषे ॥ विषे ॥ माने ॥ गिरति जीवम् । गृ० । अच् । गरं लाति । ला० । कः । भावपरत्वं गरशब्दस्य ॥ गिरतेः बाहुलकात् लच् वा ॥

गरलारिः । पुं । मरकतमणौ ॥

गरव्रतः । पुं । मयूरे ॥

गरा । स्त्री । देवदालीलतायाम् ॥ निगरणे ॥

गरागरी । स्त्री । देवताडद्रुमे ॥ मूषिकविषघ्नत्वात् गरम् आगिरति । अच् । ङीप् ॥

गरात्मकम् । न । शिग्रुवीजे ॥

गराधिका । स्त्री । लाक्षायाम् ॥

गरिमा । पुं । गुरुत्वे ॥ गुरोर्भावः । पृथ्वादित्वादिमनिच् । प्रियस्थिरेत्यादिना गुरोर्गर् आदेशः ॥

गरिष्ठः । त्रि । अतिशयेन गुरौ । गुरुतमे ॥ प्रियस्थिरेति साधुः ॥

गरी । स्त्री । देवताडद्रुमे ॥ गृणाति । गृशब्दे । अच् । गौरादि: ॥ यद्वा दो गरत्तितिपाठान् ङीप् वा ॥

गरीयान् । त्रि । प्रभूते ॥ गुरुतरे ॥ यथा । उत्पादकब्रह्मदात्रो र्गरीयान् ब्रह्मद: पितेति ॥ अयमनयो रतिशयेन गुरु: । द्विवचनविभज्योपपदेतरबी यसुनाविति यसुन् ॥

गरुड: । पुं । गरुत्मति । तार्क्ष्ये । वैनतेये ॥ गरुद्भिर्डयते । डीङ् विहायसागतौ । अन्येभ्योपीतिड: । पृषोदरादित्वात् तलोप:॥ गिरउड्डयितिउड्डवा । केचिदिमंनपठन्ति । तदा पूर्ववदेव विग्रह: ॥ पञ्चमाचिकस्य द्वितीये ऽ । ऽ पर्याये ॥

गरुडध्वज: । पुं । विष्णौ ॥ गरुडोध्वजश्चिह्नमस्य ॥

गरुडपुराणम् । न । गारुडे ॥

गरुडरुतम् । न । अष्टिसंज्ञकषोडशाचरवृत्तिभेदे ॥ यथा । गरुडरुतं नजौ भजतमायदासुन्दरा ॥ अमरमयूरमानसमुदे पयोदध्वनिर्गरुडरुतं सुरारि भुजगेन्द्रसन्त्रासने । धरणिभरावतारविधिडिण्डिमाडम्बर: सजयतिकंसरङ्गभुवि सिंहनादोहरे रिति ॥

गरुडव्यूह: । पुं । गरुडाकृतिवत् कृतरचने व्यूहप्रभेदे ॥ यत्र व्यूहे मुखपक्षाङ्गा: पृथुतरमध्यो गरुडव्यूहो भवति । अनेन पार्श्वयो र्भये सति मार्गं ब्रजेत ॥

गरुडाग्रज: । पुं । अरुणे । सूरसूते ॥ गरुडस्य अग्रज: ॥

गरुडाङ्कितम् । न । }<br>गरुडाश्मा । पुं । } मरकतमणौ ॥<br>गरुडोत्तीर्णम् । न । }

गरुत् । पुं । पक्षे । पंख इति भाषा प्रसिद्धे ॥ गिरति । गृनि गरणे । गृणाति वा । गृशब्दे । मृग्रोरुति: ॥

गरुत्मान् । पुं । पक्षिमात्रे ॥ गरुडे । तार्क्ष्ये ॥ गरुत:पक्षा:सन्त्यस्य । मतुप् । यवादित्वाज्झय इति वत्वं न । तसौमत्वर्थे इति भत्वम् ॥

गरुयोधी । पुं । भारतीखगे । भारद्ध इति गौड भाष ॥

गर्ग: । पुं । ब्रह्मण:पुत्रे मुनिविशेषे ॥ वृषे ॥ किञ्चुलुके ॥ गृणाति । ग० । मुद्ग्रोर्गग्गाविति ग: ॥ तालविशेषे ॥ यथा । चतुर्द्रुतं विरामान्तं तालो ऽयंगर्गसंज्ञित इति ॥

गर्गर: । पुं । बेलगगरी इति प्रसिद्धे मीनविशेषे । गागरा इति गौड भाषा ॥ गर्गर: पितल: किञ्चिद्वातजित् कफकोपन: ॥ अस्याकारगुणौ यथा

। यः पीतवर्णोऽपिचपिच्छिलाङ्गः पृष्ठेषु रेखा बहुलःसशल्कः । सगर्गरो बर्बरनादवश्यो जडश्च शीतःकफवातकारी इति ॥ तद्रूपपश्रौ ॥ दधिमन्थनभाण्डे । गर्ग इति शब्दं राति रा० । आतइति कः ॥ गिरतिवा । गॄ० । वा० गरन् ॥ गॄ० । पचाद्यच् उणादयो बहुलमितिबहुलवचनाद्द्विर्वचनमभ्यासेरुगागमश्च ॥

गर्गरी । स्त्री । मन्थनपात्रे । मन्थन्याम् । मथानी इति भाषा ॥ कलश्याम् । गगरी इति भाषा ॥ यथा ॥ मेषा दैासक्तबे देया वारिपूर्णा चगर्गरी इति ॥ गैाराद्दि ङीष् ॥

गर्गाटः । पुं । मत्स्यविशेषे । योगनाविके ॥

गर्ज्जम् । न । हस्तिशब्दे ॥ मेघादिशब्दे ॥

गर्ज्जकः । पुं । गजाड इति गौडभाषाप्रसिद्धे शालमत्स्ये । शालजे ॥

गर्ज्जनम् । न । निनदे । स्वनिते ॥ कोपे ॥ गर्ज शब्दे । ल्युट् ॥

गर्ज्जरम् । न । गाजर इतिप्रसिद्धे मूले । स्वादुमूले । नारङ्गे । पीतकन्दे ॥ इति राजनिर्घण्टः ॥

गर्ज्जाफलः । पुं । विकङ्कतवृक्षे ॥ युद्धे ॥

गर्ज्जिः । पुं । मेघशब्दे ॥

गर्ज्जितम् । न । मेघनिर्घोषे ॥ पुं । मत्तकुञ्जरे ॥ गर्ज० । भावे क्तः ॥ गर्जयति । अकर्मकत्वात् कर्त्तरि वा क्तः ॥ गर्जोजातोऽस्यत्र । तः० इतच् ॥

गर्त्तः । पुं । अवटे । क्षितिरन्ध्रे । गढा इति भाषा ॥ त्रिगर्त्तदेशेऽपि ॥ कुकुन्दरे । नितम्बस्थकूपे ॥ अष्टधनुःसहस्रेभ्यो न्यूनगतौजलाशयविशेषे ॥ तदुक्तं परिशिष्टे । धनुः सहस्राण्यष्टौच गतिर्यासां न विद्यते । न ता नदीशब्दवहागर्त्तास्ताः परिकीर्त्तिताः इति ॥ गिरति । गॄ० । हसिमृग्रिणितन् ॥

गर्त्ता । स्त्री । अवटे । भूरन्ध्रे ॥ टाप् ॥

गर्त्तिका । स्त्री । तन्तुशालायाम् । तांतघर इति भाषा ॥

गर्द्दभः । पुं । गधा इति प्रसिद्धे जन्तुविशेषे । चक्रीवति । रासभे ॥ यथा । अविश्रामं वहेद्भारं शीतोष्णञ्च न विन्दति । ससन्तोष स्तथा नित्यं त्रीणि शिक्षेत गर्दभादिति ॥ गन्धविशेषे ॥ न । श्वेतकुमुदे ॥ विडङ्गे ॥ गर्द्दति । गर्द शब्दे । दृशशलिकलिगर्दिभ्योऽभच् ॥

गर्द्दभगदः । पुं । जालगर्द्दभरोगे ॥

गर्द्दभशाकः । पुं । ब्रह्मयष्ट्याम् । भार्ग्याम् ॥ गर्दभभक्ष्यशाकत्वात् गर्दभशाकः ॥

गर्दभशाका । स्त्री । ब्रह्मयष्ट्याम् ॥

गर्दभशाखी । स्त्री । भार्ग्याम् ॥ इति राजनिर्घण्टः ॥

गर्दभाण्डः । पुं । निर्गोडी पीलरा इति प्रसिद्धे वृक्षे । कन्दराले । कपीतने । प्लक्षे ॥ अयं पञ्चकाण्डफलादिभि रश्वत्थाकारः ॥ गर्दभं गन्धविशेषम् अमति । अमगत्यादिषु । अ मस्ताड्डः ॥

गर्दभाह्वयः । पुं । कुमुदे ॥

गर्दभिका । स्त्री । क्षुद्ररोगविशेषे ॥ तस्यरूपं यथा । मण्डलं वृत्त मुत्सन्नं सरक्तं पिडकावृतम् । रुजाकरीं गर्दभिकां तां विद्याद्वातपित्तजामिति ॥

गर्दभी । स्त्री । क्षुद्रजन्तुविशेषे । गोमयकीटे ॥ गर्दभिकारोगे ॥ रासभ्याम् ॥ अपराजितायाम् ॥ श्वेतकण्टकार्याम् ॥ कटभ्याम् ॥

गर्द्धः । पुं । अभिलाषातिशये । स्पृहायाम् ॥ गृधु अभिकाङ्क्षायाम् । घञ् ॥

गर्द्धनः । त्रि । लुब्धे ॥ गर्द्धनशीलः । गृधु० । जुचङ्क्रम्येतियुच् ॥

गर्द्धी । त्रि । अभिलाषातिशयवति ॥ गर्द्धोऽस्यास्ति । इनिः ॥

गर्भः । पुं । भ्रूणे । जन्मकारणे ॥ तस्य लक्षणं यथा । गर्भाशयगतं शुक्र मार्त्तवं जीवसञ्ज्ञकम् । प्रकृतिः सविकाराञ्च तत्सर्वं गर्भसंज्ञकम् ॥ कालेन वर्द्धितो गर्भो यदाङ्गोपाङ्गसंयुतः । भवेत् तदा स मुनिभिः शरीरीति निगद्यते इति ॥ अपिच । क्षामता गरिमा कुक्षे मूर्च्छा छर्दि ररोचकम् । जृम्भा प्रसेकसदने रोमराज्याः प्रकाशनमिति ॥ अर्भके । शिशौ ॥ कुक्षौ ॥ सन्धौ ॥ नाटकसन्धौ ॥ पनसकण्टके ॥ मध्यमे ॥ अपवरके ॥ गङ्गायुषितस्थले ॥ भाद्रकृष्णचतुर्द्दश्यां याव दाक्रमते जलम् । ताव द्गर्भं विजानीयात् तदूर्द्धं तीरमुच्यते ॥ गिरति गृणाति वा गीर्य्यते वा । गृनिगरणे गृशब्दे वा । अर्त्तिगृभ्यांभन् ॥ गर्भोपवरकेऽग्नौ सुतेपनसकण्टके । कुचौ कुक्षिस्थ जन्तौ चेतिकोशान्तरम् ॥ अत्रप्रावृट्कालपरीक्षार्थं गर्भलक्षणं करोति वराहमिहिरः ॥ तत्रादौ प्रयोजन प्रदर्शनार्थमाह । अन्नं जगतः प्राणाः प्रावृट्कालस्य चान्न मायत्तम् । यस्मा दतः परीक्ष्यः प्रावृट्कालः प्रयत्नेन ॥ तल्लक्षणानि मुनिभि र्यानि निबद्धानि तानि दृष्ट्वे दम् । क्रियते गर्गपराशरकश्यपवज्रादिरचितानि ॥ दैववि दविहितचित्तो द्युनिशं

यो गर्भश्चाषाढे भवति । तस्य मुने
रिव वाणी भवति न मिथ्या मुनि
हैमे ॥ किमतःपरं मन्यच्छास्त्रं
ज्ञायोऽस्ति यद्दिदृक्ष्वैव । प्रध्वंसि
न्यपि काले त्रिकालदर्शी कलौ
भवति ॥ अत्र परमतं स्वमतं चाह ।
केचिद्वदन्ति कार्त्तिकशुक्लान्त मतो
ऽत्र गर्भदिवसाः स्युः । नतु तन्मतं
बहूनां गर्गादीनां मतंवक्ष्ये ॥ मार्ग
शिरः सितपक्षप्रतिपत् प्रभृति क्षपा
करेऽषाढाम् । पूर्वां वा समुपगते
गर्भाणां लक्षणं ज्ञेयम् ॥ यदधृतस्य
गर्भस्य प्रसवकालज्ञान माह । यन्न
क्षत्र मुपगते गर्भ श्चन्द्रे भवेत् स
चन्द्रवशात् । पञ्चनवतिश तद्दिवसे
तत्रैव प्रसव मायाति ॥ सितपक्षभ
वाः कृष्णे शुक्ले कृष्णा द्युसम्भवारा
त्रौ । नक्तं प्रभवा श्चाह्नि सन्ध्या
जाताश्च सन्ध्यायाम् ॥ * ॥ गर्भाणां
विशेष लक्षणं कालनिर्देशमाह ।
मृगशीर्षाद्या गर्भा मन्दफलाः पौष
शुक्लजाताश्च । पौषस्य कृष्णपक्षेण
विनिर्दिशेच्छ्रावणस्यसितम् ॥ माघ
सितोत्था गर्भाः श्रावणकृष्णे प्रसू
ति मायान्ति । माघस्य कृष्णपक्षेण
विनिर्दिशेद्भाद्रपदशुक्लम् ॥ १० ॥
फाल्गुनशुक्लसमुत्था भाद्रपदस्यासि



ते विनिर्देश्याः । तस्यैव कृष्णपक्षो
द्भवास्तु ये तेऽश्वयुक् शुक्ले ॥ चैत्र
सितपक्षजाताः कृष्णेऽश्वयुजस्य वा
रिदा गर्भाः । चैत्रासितसम्भूताः
कार्त्तिकशुक्लेऽभिवर्षन्ति ॥ * ॥ मे
घानांवायोश्चलक्षणम् ॥ पूर्वोद्भूताः
पश्चादपरोत्थाः प्राग्भवन्ति जीमूताः
। शेषास्वपि दिक्ष्वेवं विपर्ययो भव
ति वायोश्च ॥ * ॥ गर्भसम्भव० ।
मृदुरुदक्शिवशक्रदिग्भवो मा
रुतो वियद्विमलम् । स्निग्धसितब
हुलपरिवेषपरिवृतौ हिममयूखा
र्कौ ॥ पृथुबहुलस्निग्धघनं घनसूची
क्षुरकलोहिताभ्रयुतम् । काकाण्ड
मेचकाभं वियद्विशुद्धेन्दुनक्षत्रम् ॥
सुरचापमन्द्रगर्जितविद्युत्प्रतिसूर्य
का शुभा सन्ध्या । शशिशिव शक्रा
शास्थाः शान्तरवाः पक्षिमृगसङ्घाः
॥ विपुलाः प्रदक्षिणचराः स्निग्धमयू
खा ग्रहा निरुपसर्गाः । तरवश्च निरु
पहताङ्कुरा नरचतुष्पदा हृष्टाः ॥
गर्भाणां पुष्टिकराः सर्वेषा मेव यो
त्र तु विशेषः । स्वर्त्तुस्वभावजनितो
गर्भविवृद्ध्यै त मभिधास्ये ॥ तत्र० ।
पौषे समार्गशीर्षे सन्ध्यारागोऽम्बु
दाः सपरिवेषाः । नात्यर्थं मृगशी
र्षे पौषे शीतश्च हिमपातः ॥ माघे

मघत्रो वायुं स्तुषारकलुषक्ष्मी र
श्मिशमाङ्कौ । अतिशीतं सघनञ्च
माघे रक्तोदयौ धन्यौ ॥ २० ॥ फा
ल्गुनमासे रूक्ष श्चण्डः पवनो ऽभ्र
सम्प्लवाः स्निग्धाः । परिवेषाश्चासक
लाः कपिलस्ताम्रो रविश्च शुभः ॥
पवनघनवृष्टियुक्ता श्चैत्रे गर्भाः शु
भाः सपरिवेषाः । घनपवनसलिल
विद्युत्स्तनितैश्च हिताय वैशाखे ॥
* ॥ गर्भकाले मेघानाञ्च० । मु
क्तारजतनिकाशा स्तमालनीलोत्प
लाञ्जनाभासः । जलचरसत्त्वाकारा
गर्भेषु घनाः प्रभूतजलाः ॥ तीव्र
दिवाकरकिरणाभितापिता मन्दमा
रुता जलदाः । रुषिता इव धाराभि
र्विसृजन्त्यम्भः प्रसवकाले ॥ * ॥ ग
र्भोपघातञ्च० । गर्भोपघातलिङ्गा
न्युल्काशनिपांशुपातदिग्दाहाः ।
क्षितिकम्पखपुरकीलककेतुग्रहयुद्ध
निर्घाताः ॥ वृष्टो रुधिरादिवैकृत
परिघेन्द्रधनूंषि दर्शनं राहोः । इ
त्युत्पातै स्त्रिविधै स्ता न्यै श्चैयो ह
तो गर्भः ॥ स्वर्त्तुस्वभावजनितैः सा
मान्यैर्यैश्च लक्षणै र्वृद्धिः । गर्भाणां
विपरीतै स्तै रेव विपर्य्ययो भवति
॥ भद्रपदाद्वयविश्वेदेवाम्बुदेवपैता
महेष्वथ । एतेष्वेषु विदद्धो गर्भो व



हुतोयदो भवति ॥ * ॥ येषु नक्ष
त्रेषु गर्भः सम्भूतो बहून्यहानि वर्ष
तितान्याह ॰। शतभिषगश्लेषार्द्रा
स्वातिमघासंयुतः शुभो गर्भः । पुष्णा
ति बहून् दिवसान् हन्त्युत्पातै
र्हत स्त्रिविधैः ॥ त्रिविधोत्पातञ्च०
। दिव्यं ग्रहर्क्षजातं भुवि भौमं स्थिर
चरोद्भवं यच्च । दिग्दाहोल्कामारु
तपरिवेषाद्यं वियत्प्रभवम् ॥ * ॥
यदन्तरोक्तायां दिवससंख्यायां निय
मं करोति । मृगमासादिष्वऽष्टौ ष
ट् षोडश विंशति श्चतुर्युक्ता । विंश
तिरथ दिवसत्रय मेकतमर्क्षेण प
ञ्चभ्यः ॥ ३० ॥ पञ्चनिमित्तः शत-
योजनं तदर्द्धार्द्ध मेकहान्या ऽत ।:
वर्षति पञ्च समस्ता रूपेणैकेन यो
गर्भः ॥ * ॥ प्रत्येकनिमित्तसंयुक्ता
नां गर्भाणां पानीयसङ्ख्यामाह ॥
द्रोणः पञ्चनिमित्ते गर्भे त्रीण्याढका
नि पवनेन । षड्विद्युता नवाभ्रैः स्त
नितेन द्वादश प्रसवः ॥ * ॥ अत्रैव
विशेषमाह । क्रूरग्रहसंयुक्ते करका
शनिमत्स्यवर्षदा गर्भाः । शशिनि
रवौ वा शुभसंयुते क्षिते भूरिवृष्टि
कराः ॥ * गर्भसम्भवे विशेषञ्च
समाह । गर्भसमये ऽतिवृष्टिर्गर्भा
भावाय निर्निमित्तकृता । द्रोणाष्टां

शेष्यधिके दृष्टे गर्भः परिस्नुतो भ
वति ॥ * ॥ अत्रैव विशेषफलमा
ह । गर्भः पुष्टः प्रसवे ग्रहोपघा
तादिभि र्यदि न दृष्टः । आत्मीयगर्भ
समये करकामिश्रं ददात्यम्भः ॥ * ॥
अत्र दृष्टान्तमाह । काठिन्यं याति
यथा चिरकालधृतं पयः पयस्विन्याः ।
कालातीतं तद्वत् सलिलं काठिन्य
मुपयाति ॥ * ॥ अथ गर्भलक्षणं पु
ष्टिकरमाह । पवनसलिलविद्युद्गर्जि
ताभ्रान्वितो यः स भवति बहुतो
यः पञ्चरूपोऽभ्युपेतः । विसृजति
यदि तोयं गर्भकालेऽतिभूरि प्रसव
समय मित्त्वा शीकराम्भः करोति ॥
३७ ॥ इति वाराह्यामेकविंशोऽध्यायः
॥ २१ ॥ अत्र गर्भवायुधारणापि । तत्र
तासां लक्षणम् । ज्येष्ठसितेऽष्टम्याद्या
श्चत्वारो वायुधारणा दिवसाः । मृदु
शुभपवनाः शस्ताः स्निग्धघनस्थगित
गगनाश्च ॥ विशेषमाह । तत्रैव स्वा
त्याद्ये वृष्टे भचतुष्टये क्रमान्मासाः ।
श्रावणपूर्वा ज्ञेयाः परिस्नुता धारणा
स्तास्तु ॥ यदि ताः स्युरेकरूपा स्त
तः शुभाः सान्तरास्तु न शिवाय । त
स्करभयदाः प्रोक्ताः श्लोकाश्चाप्यत्र
वासिष्ठाः ॥ तानाह । सविद्युतः सपृ
षतः सपांशूत्करमारुताः । सार्कच

न्द्रपरिच्छिन्ना धारणाः शुभधारणाः
॥ यदा तु विद्युतः श्रेष्ठाः शुभाशाप्र
त्युपस्थिताः । तदापि सर्वसस्यानां वृ
द्धिं ब्रूयाद्विचक्षणः ॥ सर्पांशुवर्षाः सा
पश्च शुभा बालक्रिया अपि । पतत्रि
णां सुस्वना वा क्रीडापांशुजलादि
षु ॥ रविचन्द्रपरीवेषाः स्निग्धा नात्य
न्तदूषिताः । वृष्टिस्तथापि विज्ञेया
सर्वशस्यार्थसाधिका ॥ मेघाः स्निग्धाः
संहताश्च प्रदक्षिणगतिक्रियाः । त
दा स्यान्महती वृष्टिः सर्वसस्याभि
वृद्धये ॥ इति वाराह्यां गर्भवायुधार
णाध्यायो द्वाविंशतितमः ॥ २२ ॥

गर्भकः । पुं । केशमध्यस्थितमाल्ये ॥
गर्भ इव । इवेप्रतिकृताविति कन् ॥ न
। रजनीद्वन्द्वे । दोरात इति भाषा ॥

गर्भकरः । पुं । पुत्रजीववृक्षे ॥

गर्भगृहम् । न । गर्भागारे ॥ गर्भ इव
गृहम् ॥

गर्भघातिनी । स्त्री । लाङ्गलिक्याम् ॥

गर्भखण्डः । पुं । नाभिगुल्के । नाभिकी
गांठ इति भाषा ॥ गर्भस्य खण्ड
इव ॥ शकन्ध्वादिः

गर्भदः । पुं । पुत्रजीववृक्षे ॥

गर्भदात्री । स्त्री । क्षुपविशेषे । अप
त्यदायाम् । प्राणिमातरि । तापस
द्रुमसन्निभायाम् ॥

गर्भनाशः । पुं । गर्भध्वंसे ॥ तस्यालक्षणं यथा । अपविद्धशिरा या तु शीताङ्गी निरपत्रपा । नीलोद्धतशिरा हन्ति सा गर्भं स च तां तथा ॥ मानसागन्तुभिर्मातुरुपतापैः प्रपीडितः । गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च प्रपीडितः ॥ तन्मृतगर्भलक्षणं यथा । गर्भास्पन्दनमार्धीनां प्रणाशः श्यावपाण्डुता । भवेदुच्छ्वासपूतित्वं शोथश्चान्तर्मृते शिशाविति ॥

गर्भनुत् । पुं । कलिकार्याम् । विषलाङ्गलिया इति गौडभाषाप्रसिद्धे वृक्षे ॥

गर्भपाकी । स्त्री । षष्टिकाख्यव्रीहौ । सट्टी धान इतिभाषा ॥

गर्भपातः । पुं । पञ्चमषष्ठमासीयस्य कठिनशरीरस्य गर्भस्य पतने ॥

गर्भपातकः । पुं । रक्तशोभाञ्जने ॥

गर्भपातनः । पुं । अरिष्टद्रुमे । फेनिले । रीठा इतिभाषा ॥

गर्भपातनी । स्त्री । कलिकार्याम् ॥

गर्भपातिनी । स्त्री । विशल्यावृक्षे ॥

गर्भरूपः । पुं । तरुणे ॥

गर्भवती । स्त्री । गर्भान्वितायाम् । आपन्नसत्त्वायाम् । गुर्विण्याम् ॥ * सद्योगृहीतगर्भायाः ल० । श्रमः शोणितरोधो योनेः स्रावो ऽथशमोद्भवः । सावसादः पिपासा च ग्लानिः स्फूर्त्तिर्भङ्गो भवेदिति ॥ * ॥ तस्या उत्तरोत्तरकालीनल० यथा । स्तनयोर्मुखकार्ष्ण्यं स्यात् रोमराज्युद्गमस्तथा । अक्षिपक्ष्माणि चाप्यस्याः संमील्यन्ते विशेषतः । छर्दयेत् पथ्यभुक्तापि गन्धादुद्विजते ऽशुभात् । प्रसेकः सदनञ्चैव गर्भिण्या लिङ्गमुच्यते ॥ * ॥ पुत्रगर्भवत्याल० यथा । पुत्रगर्भयुतायास्तु नार्या मासि द्वितीयके । गर्भो गर्भाशये सम्यः पिण्डाकारो ऽपरंशृणु ॥ दक्षिणाक्षिमहत्त्वं स्यात् प्राक्क्षीरं दक्षिणस्तने । दक्षिणोरुः सुपुष्टः स्यात् प्रसन्नमुखवर्णता ॥ पुन्नामधेयद्रव्येषु स्वप्नेष्वपि मनोरथः । आम्रादिफलमाप्नोति स्वप्नेषु कमलादि च ॥ * ॥ कन्यागर्भवतील० यथा । कन्यागर्भवती गर्भे येषां मासि द्वितीयके । पुत्रगर्भस्य लिङ्गानि विपरीतानि वेक्षते ॥ * ॥ नपुंसकगर्भवतील० यथा । नपुंसकं यदा गर्भो भवेद्गर्भो ऽर्बुदाकृतिः । उन्नते भवतः पार्श्वे पुरस्तादुदरं महदितिमाधवप्रकाशः ॥

गर्भशय्या । स्त्री । पित्ताशयपक्वाशययोर्मध्यवर्त्तिनि गर्भाशयस्वरूपे गर्भोत्पत्तिस्थाने ॥ तत्स्वरूपं यथा । शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा

च कीर्त्तिता । तस्या स्तृतीये स्राव र्त्ते गर्भशय्या प्रतिष्ठिता ॥ यथा रोहितमत्स्यस्य मुखं भवति रूपतः । तत्संस्थाञ्च तथा रूपां गर्भशय्यां विदुर्बुधाः ॥ इतिभावप्रकाशः ॥

गर्भस्रावः । पुं । चतुर्थमासपर्यन्तं शोणितरूपगर्भस्य स्रवणे ॥ तन्निदानलक्षणे यथा । भयाभिघाततीक्ष्णोष्णपानाशननिषेवणात् । गर्भे पतति रक्तस्य सशूलं दर्शनं भवेत् ॥ आचतुर्थात्ततो मासात् प्रस्रवेद्गर्भविद्रवः । ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः ॥ गर्भोऽभिघातविषमाशनपीडनाद्यैः पक्कं द्रुमादिव फलं पतति क्षणेन । मूढः करोति पवनः खलु मूढगर्भं शूलञ्च योनिजठरादिषु मूत्रसङ्गम् ॥

गर्भस्रावी । पुं । हिन्तालवृक्षे ॥

गर्भागारम् । न । वासगृहे । गृहमध्यभागे ॥ गर्भइव आगारम् ॥ गर्भाशये ॥

गर्भाधानम् । न । दशसंस्कारान्तर्गतप्रथमसंस्कारे ॥ तत्रायंक्रमः । ऋतुस्नानादूर्द्धं निषेकदिवसे सायं सन्ध्यायां कृतायां पतिः शुचिःसुगन्धिःसुवेशोमन्त्रेण सूर्यायार्घ्यंदत्त्वापूर्वाभिमुखोपविष्टायाश्चपत्न्या दक्षिणस्कन्धे पस्पृष्ट्वा पंढृत्य मन्त्रं मन्त्रमंजपेत् । ततः पुनरप्युपस्थं स्पृशन् मन्त्रंजपेत् । ततो भार्यामुपेयादिति भवदेवभट्टः ॥ विशेषो मन्त्रानिर्णये द्रष्टव्यः ॥

गर्भाशयः । पुं । गर्भवेष्टनचर्मणि । जरायौ ॥ गर्भशय्यायाम् ॥ गर्भ आशेतेऽत्र । शीङ्० । पुंसीतिघः ॥

गर्भाष्टमः । पुं । निषेकतोऽष्टमेमासे । देवमासे ॥ गर्भग्रहणमासः संवत्सरो वाऽष्टमोयस्य ॥

गर्भिणी । स्त्री । अन्तर्वत्न्याम् । गुर्विण्याम् ॥ गर्भोस्त्यस्याम् । अतइनिः ॥ पोयातीहक्के । पोयाति इतिगौड़भाषा ॥

गर्भिणीअवेक्षणम् । न । कुमारभृत्यायाम् । गर्भिणीपरिचर्यायाम् ॥ इतित्रिकाण्डशेषः ॥

गर्भोपघातिनी । स्त्री । वेहति । गर्भपातकारिगव्याम् ॥ गर्भमुपहन्ति । सुप्यजातावितिणिनिः ॥

गर्मुत् । स्त्री । स्वर्णे ॥ लतायाम् ॥ मयना इतिगौड़भाषाप्रसिद्धे तृणधान्यविशेषे ॥ गिरति गीर्य्यते वा । गॄ० । ग्रोमुट्चेत्युतिः ॥

गर्मुटिका । स्त्री । मयुवा इति प्रसिद्धे व्रीहिभेदे । गर्मुति ॥

गर्ब्बोटिका । स्त्री । जरडीतृणे ॥

गर्ब्बः । पुं । अभिमाने । अहङ्कारे ॥ अहङ्कार कथाध्यात्म्यं सर्वसंसारकारणम् । अभिमानोऽधिभूतञ्च रुद्रस्तत्राधिदैवतम् ॥ ऐश्वर्य्यरूपतारुण्यकुलविद्याबलै रपि । इष्टलाभादिनान्येषामवज्ञागर्ब्बईरितः ॥ गर्वमाने । । घञ् ॥ यद्वा । गिरति गृणाति वा । गॄ० । कृगॄषृटृ भ्योवः ॥

गर्ब्बरः । त्रि । अहङ्कारिणि ॥ गिरति । गॄ० । कृगॄशॄदॄभ्यश्चतिभ्यः ष्वरच् ॥ स्त्री । षिद्गौरादित्वान्ङीषि गर्ब्बरी ॥ पुं । गन्धर्वे ॥

गर्ब्बाटः । पुं । दौःसाधिके । द्वारपाले ॥

गर्ब्बितः । त्रि । गर्वसंयुक्ते । अहङ्कृते । दृप्ते ॥ गर्वः सञ्जातोऽस्य । तारकादित्वादितच् ॥

गर्हणम् । न । कुत्सायाम् । निन्दायाम् ॥ गर्ह गलह कुत्सायाम् । ल्युट् ॥

गर्हा । स्त्री । निन्दायाम् ॥ गर्हणम् । गर्ह० । गुरोश्चहल इति स्त्रियाम् अप्रत्ययः । टाप् ॥

गर्हितः । त्रि । निन्दिते ॥ गर्हा सञ्जाताऽस्य । तारकादित्वादि इतच् ॥

गर्ह्यः । त्रि । अधमे । निन्द्ये । कुपूये ॥ गर्ह्यते । गर्ह० । ऋहलोर्ण्यत् ॥

गर्ह्यवादी । त्रि । कद्वदे ॥ गर्ह्यं वदति । वद० । सुप्यजातौणिनि स्ताच्छील्ये इति णिनिः ॥

गलः । पुं । गला इति प्रसिद्धे कण्ठे । ग्रीवाग्रभागे ॥ सर्जरसे । राल इति भाषा ॥ गडक इति गौड प्रसिद्धे मत्स्यविशेषे ॥ वाद्य वि० ॥ गिलति । गॄ० । पचाद्यच् । अचिविभाषेति लत्वम् ॥ यद्वा । गीर्यतेऽनेन । पुंसीति घः ॥ गलति वा । गल अदने । अच् ॥

गलकः । पुं । शकुलार्भके । गडके ॥ डलयोरभेदः ॥

गलकम्बलः । पुं । सास्नायाम् । गवां गलस्थिते कम्बलाकारे मांसे ॥ गलस्य कम्बलः । गले कम्बल इव वा ॥

गलगण्डः । पुं । स्वनामख्याते रोगविशेषे । गिल्लड इति भाषा ॥ तल्लक्षणं यथा । निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले । महान्वा यदि वा ह्रस्वो गलगण्डं तमादिशेदिति ॥

गलग्रहः । पुं । तिथिविशेषे ॥ यथा । कृष्णापक्षे चतुर्थी च सप्तम्यादिदिनत्रयम् । त्रयोदशी चतुष्कञ्च अष्टावेते गलग्रहा इति नारदः ॥ अपि च । आरम्भानन्तरं यत्र प्रत्यारम्भो न विद्यते । गर्गादिमुनयः सर्वे तमेवाहु

गैलग्रहमिति राजमार्त्तण्डः ॥ व्यञ्जनविशेषे । मत्स्यघण्टे ॥

गलत् । त्रि । स्रंसमाने ॥ स्रवति ॥

गलन्तिका । स्त्री । कर्कर्याम् । स्वल्पवारिधान्याम् । आल्वाम् ॥ गलति । गल० । लटः शतृशानचाविति शतृ । उगितश्चेति ङीप् । शप्श्यनो-रितिनुम् । स्वार्थे कन् ॥

गलमेखला । स्त्री । कण्ठाभरणविशेषे । कण्ठसूत्रे । सूत्राल्याम् । सकरी तोडा इतिच भाषा ॥

गलव्रतः । पुं । मयूरे ॥ इति त्रिकाण्डशेषः ॥

गलशुण्डिका । स्त्री । तालुमूलस्थक्षुद्रजिह्वायाम् । घण्टिकायाम् । सुधास्रवायाम् ॥

गलस्तनी । स्त्री । छाग्याम् ॥

गलहस्तः । पुं । अर्द्धचन्द्रे ॥ गलेहस्तः ॥

गला । स्त्री । अलम्बुषायाम् । लज्जालुप्रभेदे ॥

गलाङ्कुरः । पुं । गलरोगविशेषे । रोहिण्याम् ॥ तस्य सम्प्राप्तिपूर्वकं लक्षणं यथा । गले ऽनिलः पित्तकफौच मूर्च्छितौ प्रदूष्य मांसञ्च तथैव शोणितम् । गलोपसंरोधकरैस्तथा ङ्कुरैर्निहन्त्यसून् व्याधिरयञ्च रोहिणीति ॥

गलाविलः । पुं । चिङ्गिडिमत्स्ये इति गौडप्रसिद्धे मत्स्ये । गङ्गाटेये ॥ गलानिलः गलाविलः इतिच क्वचित्पाठः ॥

गलिः । पुं । दुष्टवृषे । शक्तोप्यधुर्वहो वृषो गलिरित्युच्यते । गलियाबैल इति भाषा ॥ गुणानामेव दौरात्म्याद्धुरि धुर्यो नियुज्यते । असञ्जातकिणस्कन्धः सुखंस्वपिति गौर्गलिः ॥

गलितः । त्रि । च्युते । पतिते । स्रस्ते । स्थानादितोभ्रष्टे ॥ गल्यतेस्म । गल० । क्तः ॥ गत्यर्थाकर्मकेतिकर्त्तरि वा क्तः ॥ रिक्ते ॥

गलेगण्डः । पुं । पक्षिविशेषे । मर्कटे । अस्थिगिला हाडगिला इतिच भाषा ॥

गलेस्तनी । स्त्री । छाग्याम् ॥

गलोद्देशः । पुं । निगारे ॥ गलस्योद्देशः समीपभागः ॥

गल्या । स्त्री । गलसमूहे ॥ गलानां समूहः । पाशा० यः । गलोद्वल्काशः ॥

गल्लः । पुं । गण्डे । गाल इति भाषा ॥

गल्लकः । पुं । चषके । मद्यपानपात्रे ॥

गल्वर्कः । पुं । चषके ॥ इन्द्रनीलमणौ ॥

गवयः । पुं । रोझ इति भाषाप्रसिद्धे गलकम्बलहीने गोसदृशपशौ । गवालूके । बलभद्रे । महागन्ध ॥ अस्य मांसपाकविधिर्यथा । तैले स

न्याचिते तते विद्रुमैश्चवसंयुते ।
मांसं गवयसम्भूतं सुस्विन्नं भूरिवा-
णोति ॥ गवयो मधुरो वृष्यः स्निग्धो
ष्णः कफपित्तलः । विदाही गुरुविष्ट
म्भी विपाके विरसः सदेव्ययस्य मां
सस्य गुणाः ॥ वैवस्वतपुत्रे वानरविशे
षे । यथा । रामायणे । पुत्रा वैवस्व
तस्याथ पञ्चकालान्तकोपमाः । गयो
गवाक्षो गवयः शरभो गन्धमादनः
इति ॥ गवते । गुङ् शब्दे । वा० अयः
॥ यद्वा । गवनम् । ऋदोरप् । गवं
गवेनवा याति । या० । मू० कः ॥

गवयी । स्त्री । गवययोषायाम् । वन
धेनौ । भिल्लगव्याम् ॥ योपधप्रतिषे
धे गवयहयमुकयमनुष्यमत्स्यानाम
प्रतिषेधइति जातिलक्षणोङीष् ॥

गवराजः । महोक्षे । वृषे ॥ इति शब्द
चन्द्रिका ॥

गवलः । पुं । वनमहिषे ॥ न । महिष
शृङ्गे ॥ अलति । अलभूषणादौ ।
अच् । गवामलम् ॥ यद्वा । गवनम्
। गुङ्० । ऋदोरप् । गवंलाति । कः ॥

गवाक्षः । पुं । जाली झरोखा इतिच
भाषाप्रसिद्धे वातायने । वधूद्गयने ।
जालके ॥ वैवस्वतपुत्रे कपिविशेषे ॥
गवां किरणा नामक्षीव । अक्षिशब्दो
ऽत्र चक्षुर्वाची । अक्ष्णोऽदर्शनादित्यच्



॥ गावो जलानि किरणानि वा । अ
क्षन्ति व्याप्नुवन्ति एतमनेन वा । अ
क्षूव्याप्तौ । अकर्त्तर्यर्थे घञ् ॥

गवाक्षी । स्त्री । इन्द्रवारुण्याम् ॥ गो
तुम्बायाम् । गोमुक् इति गौडभा
षा ॥ शाखोटे । शेउडा इति भाषा
॥ अपराजितायाम् ॥ गां भूमिम
श्नोति । अश्० । कर्मण्यण् । ङीप् ॥

गवाची । स्त्री । पाँकालमाछ इति
गौडभाषाप्रसिद्धे मत्स्ये ॥

गवादनम् । न । घासे ॥ गोभिरद्यते ।
अद्० । ल्युट् ॥

गवादनी । स्त्री । इन्द्रवारुण्याम् ॥ ग
वादनीद्वयं तिक्तं पाके कटुरसं लघु
। वीर्योष्णं कामलापित्तकफप्लीहोद
रापहम् ॥ श्वासकासापहं कुष्ठगुल्म
ग्रन्थिव्रणप्रणुत् । प्रमेहमूढगर्भामग
ण्डामयविषापहम् ॥ गवांघासादना
श्ये । नांदलडावनी इतिच भाषा ॥
नीलापराजितायाम् ॥ गौ० ङीष् ॥

गवालूकः । पुं । गवये । गोसदृशे ऽर-
ण्यपशौ ॥

गवाशनः । पुं । गोभक्षके । मोचीं इति
भाषा ॥ यथा । मातापेका पिता च्ये
को मम तस्य च पक्षिणः । कथं मु
निभिरानीतः सक्कीतो गवाशनै
रित्युद्भटः ॥

गवाषिका । स्त्री । लाक्षायाम् । जतुनि ॥
गविनी । स्त्री । गवांसमूहे ॥ खला दिभ्य इनिर्वक्तव्यः ॥
गविष्ठः । त्रि । भूमिस्थे ॥ स्वर्गस्थे ॥
गविष्ठिरः । त्रि । गविस्थिरे ॥ हलदन्तादित्यलुक् । गवियुधिभ्यांस्थिरः इतिषत्वम् ॥
गवीश्वरः । पुं । गवांस्वामिनि । गोमति । गोमिनि ॥ गवामीश्वरः ॥
गवेङ्गितम् । न । शुभाशुभाय गवामाकारे ॥ यथा । गावो दीनाः पार्थिवस्याऽशिवाय पादैर्भूमिं कुट्टयन्त्यश्च रोगाय । मृत्युं कुर्वन्त्यश्रुपूर्णायताक्षः पत्युर्भीता तस्करानानुवन्त्यः ॥ अकारणे क्रोशति चेदनर्थो भयाय रात्रौ वृषभः शिवाय । भृशं निरुद्धा यदि मक्षिकाभि स्तदाशु वृष्टिं सरमात्मजो वा ॥ आगच्छन्त्यो वेश्म वम्भारवेण संसेवन्त्यो गोष्ठहृष्टा गवां गाः । आर्द्राङ्ग्यो वा हृष्टरोमण्यः प्रहृष्टा धन्या गावः स्युर्महिष्योऽपिचैवम् ॥ इतिवाराह्यामेकोननवतिः ॥
गवेडुः । स्त्री । आरण्यगोधूमाख्ये मुन्यन्ने । गड़गड़ इतिगौड़भाषा ॥ गवे गवार्थं दीयते । दीङ्क्षये । मृगय्वादित्वात् कुः । नैरुक्तोडकारस्य डः । तत्पुरुषे कृतीत्यलुक् ॥
गवेधुः । स्त्री । गवेडौ ॥ गवेधुः कटुकास्वादी कार्श्यकृत् कफनाशिनी ॥
गवेधुकम् । न । गैरिके ॥ इतिराजनिर्घण्टः ॥
गवेधुका । स्त्री । तृणधान्यविशेषे । गड़गड़इति देधानइतिचगौड़भाषा । गवेडौ ॥ नागबलायाम् ॥ गविभूमौ एधते । एध० । बाहुलकादुः । संज्ञायांकन् ॥
गवेरुकम् । न । गैरिके ॥
गवेरुका । स्त्री । गोरक्षचाकुलिया इतिगौड़प्रसिद्धे वृक्षविशेषे ॥
गवेषणा । स्त्री । अन्वेषणायाम् । पर्येषणायाम् । मार्गणे ॥ धर्माद्यन्वेषणे ॥ गवेषमार्गणे । चु० । ण्यासश्रन्थो युच् ॥
गवेषितम् । त्रि । अन्वेषिते । मार्गिते ॥ गवेष्यतेस्म । गवेष० । क्तः ॥
गव्यम् । न । ज्यायाम् ॥ रामठे ॥ त्रि । गोदुग्धादौ । गोसम्बन्धिनि सर्वस्मिन् ॥ गव्यं त्रिषु गवां सर्वम् । सर्वम् भवविकारावयवादि गवां गव्यम् ॥ गविभवम् गौर्देवतास्य वा । गोरजादिप्रसङ्गे यत् ॥ गोचिते ॥ गवेहितम् । उगवादिभ्यो यत् ॥ गोर्निमित्तं संयोग उत्पातो वा । गोद्यचो ऽसंख्यापरिमाणाश्वादेर्यत्

॥ गोरिदम् । गोपयसोर्यत् । वान्तो यि प्रत्यये ॥

गव्या । स्त्री । गोव्रातम् । गोट्न्दे ॥ गवांसमूहः । खलगोरथात् इतियः ॥ गव्यूतौ ॥ गोरोचनायाम् ॥

गव्यूतम् । न । क्रोशे ॥ गव्यूतौ ॥

गव्यूतिः । स्त्री । क्रोशयुगे । द्विसहस्र धनुषि । गोरुते ॥ धन्वन्तरसहस्रं तु क्रोशः क्रोशद्वयं पुनः । गव्यूतं स्त्रीतु गव्यूति र्गोरुतं गोमतञ्च तत् ॥ गोर्यूतौ छन्दस्युपसंख्यानम् । अध्वपरिमाणेचेत्यवादेशः ॥

गहनम् । न । घना इति भाषा प्रसिद्धे कानने । वने ॥ गह्वरे ॥ दुःखे ॥ त्रि । कलिले । दुर्गमे । दुष्प्रवेशे ॥ पुं । परमात्मनि ॥ दुष्प्रवेशत्वात् अवस्थात्रयभावाभावसाक्षित्वात् वा गहनः परमात्मा । अस्यस्वरूपं सामर्थ्यं चेष्टितं वाज्ञातुंनशक्यते ऽतो गहनः ॥ गाह्यते गाहूविलोडने । बहुलमन्यत्रापीति युच् । पृषोदरादित्वात् ह्रस्वः । कृच्छ्रगहनयोरिति निर्देशाद्वा ह्रस्वः ॥

गहना । स्त्री । अलङ्कारे ॥ इति देवी पुराणम् ॥

गह्वरः । पुं । निकुञ्जे ॥ न । गुहायाम् ॥ दम्भे ॥ वने ॥ विषमस्था ने । अनेकार्थ ऽसङ्कटे ॥ गाह्यते । गाहू० । छित्वर छत्वरेतिसाधुः ॥

गह्वरी । स्त्री । गुहायाम् ॥

गा । स्त्री । गाथायाम् ॥

गाङ्गः । पुं । भीष्मपितामहे ॥ कार्त्तिकेये । गुहे ॥ गङ्गाया अपत्यम् । शिवादिभ्योऽण् ॥ त्रि । गङ्गासम्भूते ॥ न । गङ्गाजले ॥ धाराजले ॥ यदा स्यादाश्विने मासिसूर्यः स्वाति विशाखयोः । तदा त्वन्तु जलदैर्मुक्तं गाङ्गमुक्तं मनीषिभिः ॥ आकाशगङ्गासम्बन्धि जल माहाय दिग्गजाः । मेघै रन्तरिता वृष्टिं कुर्वन्तीतिवचः सताम् ॥ गाङ्ग माश्वयुजे मासि प्रायो वर्षति वारिदः । सर्वथा तज्जलं देयं तथैवचरकेवचः ॥ स्थापिते हैमजेपात्रे राजते मृन्मये ऽपिवा । शाल्यन्नं येन संसिक्तं भवे दक्लेद वर्णवत् । तद् गाङ्गं सर्वदोषघ्नं ज्ञेयं सामुद्र मन्यथा ॥ सामुद्रं त्वाश्विने मासि गुणै र्गाङ्गवदादिशेत् । यतो ऽगस्त्यस्य दिव्यर्षे रुदयात् सकलं जलम् । निर्मलं निर्विषं स्वादु शुक्लं स्या ऽदृदोषलम् ॥ यत आह । फूत्कारविषवातेन नागानां व्योमचारिणाम् । वर्षासु सविषं तोयं दिव्य मप्याश्विनं विनेति ॥

गाङ्गटः । पुं । ⎫ चिङ्गडिमाच् इति
गाङ्गटकः । पुं । ⎬ गौडभाषाप्रसिद्धे-
गाङ्गटेयः । पुं । ⎭ मत्स्ये ॥ इतिशब्दर
त्नावली ॥

गाङ्गायनिः । पुं । भीष्मे । शान्तनवे ॥
गुहे ॥ गङ्गाया अपत्यम् । तिकादि
भ्यः फिञ् ॥

गाङ्गेयः । पुं । भीष्मे ॥ स्कन्दे ॥ इली
ग्रमीने ॥ भद्रमुस्तायाम् ॥ न । क
शेरुणि ॥ मस्ते ॥ स्वर्णे ॥ यं गर्भं सु
षुवे गङ्गा पावकाद्दीप्ततेजसम् ।
तदुल्बं पर्वते न्यस्तं हिरण्यं समपद्य
त ॥ गङ्गाया अपत्यम् । शुभ्रादि
भ्य इति ढक् ॥

गाङ्गेरुकी । स्त्री । गोरक्षतण्डुलायाम्
। नागबलायाम् ॥ गाङ्गं गं जलमीर
यति । ईरगतौ क्षेपणे च । मृगय्वाद
यश्चेति कुः । स्वार्थे कन् । गौरादि
ङीष् ॥

गाङ्गेष्ठी । स्त्री । कटशर्करालतायाम् । न
टा इति गौडभाषा इति हारावली ॥

गाजरम् । न । गृञ्जने । नारङ्गवर्णके
॥ गाजरं मधुरं तीक्ष्णं तिक्तोष्णं
दीपनं लघु । सङ्ग्राहि रक्तपित्तार्शो
ग्रहणीकफवातजित् ॥

गाञ्जिकायः पुं । वर्त्तिकापक्षिणि ॥

गाढम् । न । दृढे ॥ तीव्र ॥ त्रि । तद्व



ति ॥ अवगाढे । सेविते ॥ तपस्वि
गाढांतमसां प्रापेतिरघुः ॥ गाहते
स्म । गाहूविलोडने । क्तः ॥

गाढमुष्टिः । पुं । खड्गे ॥ त्रि । कृपणे ॥
गाढामुष्टिर्यस्य ॥

गाढावटी । स्त्री । चतुरङ्गक्रीडनस्थ
क्रीडाविशेषे ॥ यथा । यैर्वैका शटि
का यस्य विद्यते खेलने यदि । गाढा
वटीति विख्याता पदं तस्य न कुप्य
तीति ॥

गाणपतः । त्रि । गणपतिर्देवताके ॥
गणेशोपासके ॥ गणपतिर्देवता अस्य
। अश्वपत्यादिभ्यश्चेति प्राग्दीव्यतीयोऽ
ऽण् । गाणपत्यो मन्त्र इति तु प्रामादि
कमेव । गणपतिशब्दस्याश्व
पत्यादिषु पाठात् ॥ गणपतिसम्ब
न्धिनि ॥

गाणपत्यम् । न । गणपतित्वे ॥ गणप-
तेः कर्मभावो वा । गुणवचनब्राह्म
णादिभ्यः कर्मणि चेति ष्यञ् । गण
पत्यधिपतिशब्दयोरश्वपत्यादिषु पा
ठात् ॥

गाणिक्यम् । न । वेश्यावृन्दे ॥ गणिका
नां समूहः । गणिकाया यञिति व
क्तव्यमिति यञ् ॥

गाणेयः । त्रि । गणनीये । गणयितुं श
क्ये ॥ गणयते । गणाकुर्व्याने । य

चायत् । संज्ञापूर्वकत्वान्न, खिलोपः । चिन्तिपूजीत्यङ्विधानाद्वा भावार्थाद्वा ॥ अन्यथा अप्रत्ययादित्यनन्तरं पठित्वा अकारमेव विदध्यात् ॥

गाण्डिवः । पुं । न । अर्जुनस्य धनुषि ॥ कार्मुकमात्रे ॥ गाण्डि ग्रन्थि रस्यास्ति । गाण्ड्यजगात्संज्ञायामिति वः ॥

गाण्डीवः । पुं । न । गाण्डिवे ॥ गाण्डी ग्रन्थिरस्यास्ति । कृदिकारादिति ङीषन्तात् गाण्ड्यजगादिति वः ॥

गाण्डीवभूषणः । पुं । अर्जुने ॥ धानुष्के । धनुष्मति ॥ गाण्डीवं भूषणमस्य ॥

गाण्डीवी । पुं । अर्जुने । कौन्तेये ॥ धन्विनि । धानुष्के ॥ अर्जुनवृक्षे ॥ गाण्डीवोऽस्त्यस्य । इनिः ॥

गातुः । पुं । पुंस्कोकिले ॥ भृङ्गे ॥ गन्धर्वे ॥ त्रि । रोषणे ॥ गायति । गैशब्दे । गातेवा । गाङ्गतौ । कमिमनिजनिगाभायाहिभ्यश्चेति तुः ॥ गायने ॥

गाता । पुं । गायके ॥ गायति । गै० ॥ तृच् ॥

गात्रम् । न । गजाग्रजङ्घादौ । गजाग्रभागे ॥ अङ्गे ॥ कलेवरे । इन्द्रियायतने । शिरःपाण्याद्यवयवानां समुदये । गात इति भाषा ॥ गातेऽने मवा । गाङ्गतौ । ष्ट्रन् ॥ एति वा । बहुलंतणीति इणो गा ॥ यद्वा । गच्छति । गम्लृ० । गमेराधितिं त्रन् । आचान्तादेशः ॥

गात्रभङ्गा । स्त्री । शूकशिम्ब्याम् ॥

गात्रशय्यः । पुं । तापसविशेषे ॥ केवलं गात्रैरेव यः शेते सः ॥

गात्रसङ्कोची । पुं । आहकजन्तौ ॥

गात्रसम्प्लवः । पुं । प्लवपक्षिणि ॥

गात्रानुलेपनी । स्त्री । अनुलेपनवर्त्त्याम् । वर्त्तके । विलेपने । गात्रानुलेपयोग्ये पिष्टहृष्टसुगन्धिद्रव्ये ॥ गात्रमनुलिप्यतेऽनया । करणेतिल्युट् । ङीप् ॥

गात्रिका । स्त्री । गाती इति लोकप्रसिद्धे ॥

गाथकः । पुं । गायके । गानोपजीविनि ॥ गायति । गै० । गस्थकन् ॥

गाथा । स्त्री । श्लोके ॥ संस्कृतान्यभाषायाम् । प्राकृतभाषायाम् ॥ गेये ॥ वृत्ते । आर्य्यासङ्ख्यातपद्ये ॥ यथा । पादे द्वादश विषमे मात्रास्त्वष्टादश द्वितीयेऽपि । पञ्चदश चेत्तृतीये कथिता गाथा तथैवार्य्येति ॥ गीयतेऽसौ । गाङ्० । उषिकुषिगार्त्तिभ्यस्थन् ॥

गाधः । पुं । तलस्पर्शे । स्थाने ॥ सुदत

रे। गाइन इति पाँअइतिचभाषा॥ स्त्रियाम्॥

गाधिः। पुं। कान्यकुब्जदेशाधिपेचन्द्र वंशीयकुशिकराजसुपुत्रे विश्वामित्र मुनेःपितरि॥

गाधिजः। पुं। विश्वामित्रमुनौ॥ गाधेर्जातः। जनी०। डः॥

गाधिपुरम्। न। कान्यकुब्जे कनौज इतिख्याते महोदयपुरे॥

गाधिभूः। पुं।
गाधिसुतः। पुं। विश्वामित्रे॥
गाधेयः। पुं।

गानम्। न। गीते। गेये॥ ध्वनौ॥ गै शब्दे। ल्युट्॥ मार्गो देशी च गानस्य प्रकारौ द्वा बुदीरितौ॥

गामिनी। स्त्री। वधायाम्॥

गान्तुः। त्रि। गन्तरि॥ गच्छति। गम्लृ०। क्रमिगमि क्षमिभ्यस्तुन्‌वृद्धिश्च॥

गान्त्रम्। न। शकटे॥ गम्यतेऽनेन। गम्लृ०। अमुजिगमिनमिघ्नमिविश्यशांवृद्धिश्चेतिष्ट्रन्॥

गान्दिनी। स्त्री। श्रीगङ्गायाम्। जाह्नव्याम्॥ अक्रूरयादवमातरि॥

गान्दिनीसुतः। पुं। भीष्मपितामहे॥ अक्रूरयादवे॥

गान्धर्व्वः। पुं। गन्धर्व्वे॥ विवाहविशेषे यथा। इच्छयाऽन्योन्यसंयोगः कन्याया श्च वरस्य च। गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः इति॥ गान्धर्वः समयान्मिथइतिच। यत्र कन्यावरयो रन्योन्यानुरागात् त्वं मे भार्य्या त्वं मेपति रितिनिश्चयःस इत्यर्थः॥ अष्टविधदैवसर्गान्तरे॥ भारतवर्षीयोपद्वीपविशेषे॥ न। गाने॥ सामवेदस्योपवेदे। पदावस्थिततामपरिच्छेदप्रयुक्तावधानेन पृथक्षड्जादिस्वरसमुदाये॥ तदाहदत्तिलः। पदस्थस्वरसङ्घातस्तालेनसम्मितस्तथा। प्रयुक्तश्चावधानेन गान्धर्वमभिधीयते॥ इति॥ गन्धं सौरभम् अर्वति। अर्वगतौ। कर्मण्यण्। शकं ध्वादिः। ततः प्रज्ञाद्यण्॥ त्रि। गन्धर्वसम्बन्धिनि॥



गान्धारः। पुं। सिन्दूरे॥ रागप्रभेदे॥ तत्स्वरूपं यथा। जटां दधानः कृतभूतिभूषः काषायवासा स्सकुदेचयष्टिः। सयोगपट्टः कृतनेत्रमुद्रो गान्धाररागः कथित स्तपस्वीति॥ अयं भैरवरागस्य पुत्रः। प्रत्यूषोऽस्य गानसमयः॥ कन्धार इति भाषाप्रसिद्धे देशे॥ गन्धारदेशे भवः। कच्छादिभ्यश्चेत्यण्॥ गन्धारोऽभिजनोऽस्यवा सिन्ध्वाद्यण्॥ नृपान्तरे॥ गान्धारेः अपत्यम्। साल्वेयगान्धारि-

भ्याम्बेत्यम् । तस्य राजन्यप्येवम् ॥ तन्त्रीकण्ठोत्थिते सप्तस्वरान्तर्गते तृतीयस्वरे ॥ अस्याधिदैवत गान्धारं महतः । तस्योत्पत्त्यादिर्यथा । वायुः समुद्गतो नाभेः कण्ठशीर्षसमाहतः । नानागन्धवहः पुण्यो गान्धारस्तेन हेतुनेति ॥ अपिच । नाभेः समुद्गतो वायुर्गन्धश्रोणे च चालयन् । स शब्दस्तेन निर्याति गान्धारस्तेन कथ्यते ॥ चतस्रः पञ्चमे षड्जे मध्यमे श्रुतयो मताः । ऋषभे धैवते तिस्रो द्वे गान्धारनिषादकेइति ॥ न । गन्धरसे ॥

गान्धारराज । पुं । महाभारतप्रसिद्धे शकुनिनाम्नाख्याते दुर्योधनस्य मातुले ॥

गान्धारी । स्त्री । धृतराष्ट्रस्य पत्न्याम् ॥ जिनानां शासनदेवताविशेषे ॥ यवासे ॥ दुरालभायाम् ॥ नाडीविशेषे ॥ यथा । इडापृष्ठे तु गान्धारी मयूरगलसन्निभा । सव्यपादादिनेत्रान्तागान्धारीपरिकीर्त्तितेति ॥ गाँभा इतिप्रसिद्धे मादकद्रव्यविशेषे ॥ इति विष्णुसिद्धान्तसारावली वैद्यकग्रन्थः ॥

गान्धारेयः । पुं । दुर्योधनन्टपे ॥ गान्धार्या अपत्यम् । स्त्रीभ्योढक् ॥

गान्धिकः । पुं । लेखके ॥ सुगन्धिद्रव्यवारिणि । गन्धशालिनि ॥ सप्त अम्बष्ठात् राजपुत्र्यां जातः सङ्करजातिः । अस्य कर्म लिखनं गन्धदानञ्चेति पराशरः ॥ गांधियोला इति गौडभाषाप्रसिद्धे कीटविशेषे ॥

गामुकः । त्रि । गमनशीले । गन्तरि ॥ गच्छति तच्छीलः । गम्लृ० । लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् इत्युकञ् ॥

गाम्भीर्य्यम् । न । अक्षोभ्यत्वे ॥ गम्भीरे भवम् । गम्भीराञ्ञ्यः ॥ गम्भीरत्वे । अगाधत्वे ॥ पीत्वा गर्जन्त्यपके दिशि दिशि जलदा स्त्वं शरण्यो गरीयां स्तृष्णामात्रासभाजा ममरविटपिनां जन्मभूमि स्त्वमेव । गाम्भीर्यं किन्तु तादृक् त्वयि सलिलनिधे किन्तु विज्ञापयामः सर्वोपायेन मैत्रावरुणिमुनिकृपादृष्टयः काकुत्स्थीयाः ॥

गायकः । त्रि । गातरि । गायने ॥ गन्धर्वे ॥ गायति । गै० । ण्वुल् ॥

गायत्रम् । न । सामविशेषे ॥ त्रि । गायत्री सम्बन्धिनि ॥

गायत्री । पुं । खदिरवृक्षे ॥ वह्निगायत्रिणांतयेति वैद्योक्तेः । व्री० इनिः ॥ गायत्रस्तोत्रवत्युद्गातरि ॥

गायत्री । स्त्री । त्रिपदादेव्याम् । वेद

मातरि ॥ गायन्तं त्रायते । त्रैङ् पा-
लने । आतोऽनुपसर्गे इति कः । गै०
ङीष् ॥ यथाह व्यासः । प्रतिग्रहान्न
दोषाच्च पातकादुपपातकात् । गा-
यत्री प्रोच्यते तस्माद्गायन्तं त्रायते य-
त इति ॥ अपिच । न भिन्नां प्रतिप
द्येत गायत्रीं ब्रह्मणा सह । सोऽहम
स्मीत्युपासीत विधिना येन केनचि-
दिति ॥ अस्याः स्थानं पुष्करे ॥ उपास
भ्य च सावित्रीं नोपतिष्ठेत यो द्विजः
। काले त्रिकालं सप्ताहात् स पतेन्ना-
त्र संशयः ॥ गायत्रीमन्त्रतोयार्घ्यं-
दत्तं येनाञ्जलित्रयम् । काले सान्ध्ये त्रि-
केण स्यात् तेन दत्तं जगत्त्रयमि-
ति पद्मपुराणम् ॥ दुर्गायां देव्याम्
। भवान्याम् ॥ यथा । गायनाद्गम
नाद्वापि गायत्री त्रिदशार्चितेति देवी
निरुक्ताध्यायः ॥ यथा । गामङ् गायः
। भावे घञ् । युक् । गायेन गानेन
त्रायते । त्रैङ् । सुपीति योगविभा
गात् कः ॥ खदिरद्रुमे ॥ षडक्षरे छ
न्दोऽपि । तस्यास्तिस्त्रिविधा । यथा
। तनुमध्या १ शशिवदना २ सोम
राजीति । उदाहरणान्तु तत्तत्स्था
ने द्रष्टव्यम् ॥

गायन । त्रि । गायके । गायके ॥ गा-
यति । गै० । ल्युट्चेति शिल्पिनि
कर्त्तरि ल्युट् । आतोयुक् ॥ ज-
ल्पाके ॥

गायनी । स्त्री । गानकर्त्र्याम् । टित्त्वा
न्ङीप् ॥

गायिका । स्त्री । गायन्याम् ॥ ण्वुलन्ता
त् गायकात् स्त्रियां टाप् । प्रत्यय
स्थादितीत्वम् ॥

गारित्रम् । न । ओदने ॥ गीर्यते । गॄ०
। भूवादिगृभ्यो णित्रन् इति णित्रन्
प्रत्ययः ॥

गारुडम् । न । स्वर्णमन्त्रे ॥ मरकतम
णौ ॥ विषमन्त्रे ॥ गरुडपुराणे ॥
अस्य श्लोकसंख्योक्ता देवीभागवते -
यथा । एकोनविंशत्साहस्रं गारुडं
हरि भाषितमिति ॥ स्वर्णे ॥

गारुडिकः । पुं । विषवैद्ये ॥

गारुडी । स्त्री । पातालगरुडीलताया
म् ॥ विद्याविशेषे ॥

गारुत्मतम् । न । मरकते । हरिन्मणौ ।
। पन्ना इति भाषा ॥ गरुत्मतो जात
म् । तस्येदमित्यण् ॥

गारुत्मतपत्रिका । स्त्री । पाचीलता-
याम् ॥

गार्गी । स्त्री । बृहदारण्यकोपनिषत्प्र
सिद्धायां ब्रह्मवादिन्यां वचक्नुतनया
याम् । वाचक्नव्याम् ॥ गर्गस्यापत्यं
स्त्री । गर्गाद्यञ् । यञश्चेति ङीप् ।

हलसद्धितस्येतियलोपः ॥

गार्गीयम् । त्रि । गर्गप्रोक्ते ॥

गार्ग्यः । पुं । मुनिविशेषे ॥ गर्गस्यगो-त्रापत्यम् । ग० यञ् । बहुत्वे गर्गाः॥

गार्द्ध्यम् । न । लिप्सायाम् । आकाङ्क्षायाम् । तृष्णाभरे ॥ गर्द्ध एव । चतुर्वर्णादित्वात् स्वार्थे ष्यञ् ॥

गार्भपत्रः । पुं । गृध्रपत्रयुक्ते बाणे ॥

गार्भः । पुं । गर्भशुद्ध्यर्थं क्रियमाणे कर्मविशेषे ॥ त्रि । गर्भसम्बन्धिनि ॥ तस्येदमित्यण् ॥ गर्भाधानादौ ॥

गार्भिकम् । त्रि । गर्भसम्बन्धिनि ॥

गार्भिणम् । न । गर्भिणीनां समूहे ॥ तस्यसमूह इत्यधिकारे भिक्षादिभ्योण् इत्यणि भस्याढे इति पुंवद्भावेचकृते इनण्यनपत्ये इति प्रकृतिभावः ॥

गार्ष्टेयः । पुं । गृष्टिवत्से ॥ गृष्ट्याअपत्यम् । गृष्ट्यादिभ्यश्चेतिढञ् ॥

गार्हपत्यः । पुं । यज्ञाग्निविशेषे ॥ गृहपति र्यजमानः तेन संयुक्तः । गृहपतिना संयुक्तेञ्यः । अत्र संज्ञायामित्यनुवृत्ते राजयनीयादौनामिति प्रसङ्गः ॥

गार्हमेधः । पुं । गृहस्थे यागपुत्रादिकारणे द्वितीयाश्रमे ॥ स्वार्थिकोण् ॥

गार्हस्थ्यम् । न । गृहस्थकर्मे ॥ ब्राह्मण

स्य कर्म भावोवा । ष्यञ् ॥

गालनम् । न । क्षरणे । चुवावना पसावना इति गलावना इतिच भाषा ॥

गालवः । पुं । मुनिविशेषे ॥ लोध्रे ॥ तिन्दुके ॥ गालवस्यापत्यम् । तस्य अकेषयम ॥

गालिः । पुं । शापे ॥ इतित्रिकाण्डशेषः । यथा । ददतु ददतु गालिं गालिमन्तो भवन्तो वय मिह तदभावा द्गालिदानेप्यशक्ताः । जगति विदित मेतद्दीयते विद्यमानं नहि शशकविषाणं कोपि कस्मै ददाति ॥ इत्युद्भटः ॥

गालितः । त्रि । कृतगालने । चुवायानिचोडा इतिच भाषा ॥ यथा । गालितं दधि सुस्निग्ध मित्यादिः ॥ द्रवीकृते ॥ यथा । गालितस्य सुवर्णस्य षोडशांशेन सीसकम् इति । गला या इति भाषा ॥

गालिनी । स्त्री । मुद्राविशेषे ॥

गालोड्यम् । न । पद्मबीजे । कमल गट्टा इति भाषा ॥

गावल्गणिः । पुं । सञ्जये ॥ गवल्गणस्यापत्यम् । अतइञ् ॥

गावेधुक । त्रि । गवेधुकायाञ्जनने । तस्मिकारेण ॥ बिल्वादयण् ॥

गाहनम् । न । प्रवेशने ॥ गाहना इति

ख्याते विलोडने ॥

गीः । स्त्री । भाषायाम् । वाचि । सरस्वत्याम् ॥ गृणात्यनेताम् । गृशब्दे । । सं० क्विप् । ऋतइद्धातोः ॥

गिरा । स्त्री । भणितौ । वचने ॥

गिरिः । पुं । गोत्रे । पर्वते ॥ मेरुमन्दरकैलासमलया गन्धमादनः । महेन्द्रः श्रीपर्वतश्च हेमकूट स्तथैव च ॥ अष्टा वेते तु सम्पूज्यागिरयः पूर्वादिक् क्रमात ॥ गिरियके ॥ नेत्ररुक्प्रभेदे ॥ पारदस्यदोषविशेषे ॥ संन्यासिनां नामविशेषे ॥ यथा । सदोर्द्धबाहु र्यो वीरो मुक्तकेशो दिगम्बरः । सर्वत्र समभावेन भावये द्योमरोत्तमः ॥ इष्टदेवीधिया नारीं स गिरिःपरिकीर्त्तितइति ॥ स्त्री । गौर्यो । गिलनादृति भाषा ॥ वालमूषिकायाम् ॥ त्रि । पूज्ये ॥ गिलनम् । गृ० । इक्कृष्यादिभ्यः ॥ वाहुलकात् किवां । ऋतइत् ॥ गिरतिवा । इगुपधकुटीति इः कित् ॥

गिरिकण्टकः । पुं । वज्रे ॥

गिरिकदम्बः । पुं । धाराकदम्बे । नीपे ।

गिरिकदली । स्त्री । वहुबीजायाम् । वनरम्भायाम् ॥

१७ गिरिकर्णिका । स्त्री । पृथिव्याम् ॥ श्वेतक्षिणिहीरवृक्षे ॥ अपराजिता-

याम् ॥

गिरिकर्णी । स्त्री । अपराजितायाम् ॥ यवासे ॥ गिरि र्वालमूषिका कर्णोस्याः तत्कर्णतुल्यपत्रत्वात् । ङीष् ॥

गिरिका । स्त्री । वालमूषिकायाम् ॥ गिरेः संज्ञायांकन् ॥

गिरिकाणः । त्रि । गिरिरोगेणकचक्षुर्हीने ॥

गिरिगुडः । पुं । गेण्डुके ॥

गिरिजः । पुं । मधूकवृक्षविशेषे । गौरशाके ॥ न । अभ्रके ॥ शिलाजतुनि ॥ शैलजे ॥ लोहे ॥ गैरिके ॥ त्रि । गिरिसम्भूते ॥ गिरेर्जातम् । जनी० । पञ्चम्यामितिडः ॥ गिरौ जातं वा । सप्तम्यांजनेर्डः ॥

गिरिजा । स्त्री । गौर्याम् । पार्वत्याम् ॥ मातुलुङ्ग्याम् ॥ श्वेतगुञ्जायाम् ॥ क्षुद्रपाषाणभेदायाम् ॥ त्रायमाणा लतायाम् ॥ कारीवृक्षे ॥ मल्लिकायाम् ॥ गिरिकदल्याम् ॥ गिरेर्जाता । जनी० । पञ्चम्यामजाताविति डः ॥

गिरिजामलम् । न । अभ्रके ॥ गिरौजातं गिरिजम् । अमति । अमगतौ । वृषादित्वात् कलः । न मलमस्ये तिवा । गिरिजञ्चतदमलञ्च ॥ गिरिजायामलं वा ॥

गिरिज्वरः । पुं । वज्रे ॥

गिरित्रः । पुं । शिवे ॥

गिरिदुर्गम् । न । पर्वतपृष्ठे ऽतिदुरारोहे सङ्कटैकमार्गोपेते ऽ न्तर्भूमिप्रस्रवणाद्युदकयुक्ते बहुसस्योत्पन्नक्षेत्रवृक्षान्विते राज्ञां निवासस्थाने ॥ सर्वेषां तु प्रयत्नेन गिरिदुर्गं समाश्रयेत् । एषां हि बाहुगुण्येन गिरिदुर्गं विशिष्यते ॥ एषां धन्वदुर्गादीनाम् । गिरिदुर्गे शत्रुदुरारोहत्वं महत्प्रदेशादल्पप्रयत्नप्रेरितशिलादिना बहुविपक्षसैन्यव्यापादनमित्यादयो बहवो गुणा विद्यन्ते तस्मात् प्रयत्नेन तदाश्रयेत् ॥

गिरिधातुः । पुं । गैरिके ॥

गिरिनदी । स्त्री । शैलापगायाम् ॥ गिरेः प्रसृता नदी । गिरिनद्यादीनां वेतिपाक्षिकोणत्वाभावः । तेन पक्षे गिरिणदीत्यपि बोध्यम् ॥

गिरिनिम्बः । पुं । महारिष्टवृक्षे ॥

गिरिपीलुः । पुं । परूषकवृक्षे । फालसा इति भाषा ॥ इति राजनिर्घण्टः ॥

गिरिपुष्पकम् । न । शैलेये ॥

गिरिप्रिया । स्त्री । चमर्याम् ॥

गिरिभिद् । पुं । पाषाणभेदवृक्षे ॥

गिरिभूः । स्त्री । पार्वत्याम् ॥ क्षुद्रपाषाणभेदे ॥

गिरिमल्लिका । स्त्री । कुटैया इति भाषाप्रसिद्धे कुटजवृक्षे ॥ गिरिमल्ली च । इत्यर्थेकम् ॥

गिरिमल्ली । स्त्री । गिरिमल्लिकायाम् ॥

गिरिमृद् । स्त्री । गैरिके ॥

गिरिमृद्भवम् । न । गैरिके ॥

गिरिमेदः । पुं । विट्खदिरे ॥ इरिमेदइत्यपिपाठः ॥

गिरियकः । पुं । कन्दुके । गेन्दुके ॥ इति हेमचन्द्रः ॥

गिरिवासी । पुं । छ्सिकन्दे ॥

गिरिशः । पुं । सदाशिवे । शङ्करे ॥ गिरि राश्रयत्वेना ऽ स्यास्तीति विग्रहे लोमादित्वात् शः ॥ गिरौ शेते गिरिं श्यति उपभोगेन तनूं करोति वा । गिरौडश्छन्दसि । लोके तु छान्दसानां क्वचिद्भाषायामपि प्रयोग इत्याशुबोधिव दित्याह स्वामी ॥

गिरिशालिनी । स्त्री । अपराजितायाम् ॥

गिरिशृङ्गः । पुं । गणेशे । विनायके ॥ । न । अद्रिशिखरे ॥

गिरिसारः । पुं । लौहे ॥ रङ्गे ॥ मलयाचले ॥

गिरिसुनः । पुं । मैनाकपर्वते ॥

गिरिसुता । स्त्री । पार्वत्याम् ॥ यथा । अवतु वो गिरिसुता शशिभृतः प्रि

यतमा । श्रियतु वो हृदि सदा भग वतः पदयुगमिति ॥

गिरीशः । पुं । स्थाणौ । रुद्रे । शिवे ॥ अद्रिपतौ । हिमाचले ॥ इहस्पतौ ॥ गिरेः कैलासस्य ईशः ॥

गिलः । पुं । जम्बीरे ॥ गिलति । गॄ० । मू० कः । अचिविभाषेति लत्वम् ॥

गिलग्राहः । पुं । कुम्भीरे । नाका इति भाषा ॥

गिलनम् । न । गिरणे । भक्षणे ॥

गिलिः । स्त्री । गिलने ॥ गरणम् । गॄ० । इक् कृष्यादिभ्यः । अचिविभाषेति लत्वम् ॥

गिलितः । त्रि । भक्षिते ॥ गिलिर्जाता ऽस्य । तारकादित्वादितच् ॥

गिष्णः । पुं । सामवेदविदि ॥ गायके ॥

गीतम् । न । गाने ॥ तल्लक्ष० यथा । धातुमातुसमायुक्तं गीत मित्युच्य ते बुधैः । तत्र नादात्मको धातु र्मा तु रक्षरसञ्चय इति ॥ तद्विधं य था । गीतञ्च द्विविधं प्रोक्तं यन्त्रगा त्रविभागतः । यन्त्रं स्याद्वेणुवीणादि गात्रन्तु मुखजं मतम् ॥ अपिच । नि बद्ध मनिबद्धञ्च गीतं द्विविध मुच्य ते । अनिबद्धं भवेद्गीतं वर्णादिनि यमं विना ॥ यदागमकधातुभ्यं रचि तं विना कृतम् । निबद्ध च भवे द्गीतं तालमानरसान्वितम् ॥ * ॥ न्योगमकधातुभ्यो वर्णादिनियमैः कृ तम् ॥ * ॥ ऋषिः पद्मभू गीतं सामभ्यः समपद्यत । यजुर्भ्यो ऽभि नया जाता रसाश्चा ऽथर्वणः स्मृताः ॥ ॥ अङ्गे रालम्बये द्गीतं हस्तेना र्थं प्रदर्शयेत् दृष्टिभ्यां भावयेद्भावं पादाभ्यां ताल निर्णयः ॥ गीतं पी नपयोधरा समदना नारी विचित्रा कथा रम्यं हर्म्यतलं सुधांशुकिरण प्रोद्दीपिता यामिनी । चित्तज्ञाः सु हृदः सुताः सुमनसो भक्ताः पुनः सेवकाः मृद्धं गीतफलं कवित्व मतु लं संसारसारामताः ॥ सङ्गीतकेन रम्येण सुखं यस्य न चेतसि । मनु- ष्यवृषभो लोके विधिना वञ्चितः ॥ संसारदुःखदग्धानां सन्तमानां म नुग्रहात् । प्रभुणा शङ्करेणात्र गीतं वाद्यं प्रकाशितम् ॥ गीतज्ञो यदि गीतेन नाप्नोति परमं पदम् । रुद्र स्यानुचरो भूत्वा तेनैव सह मोदते ॥ गीतेन हरिणा रङ्गं प्राप्नुवन्त्यपि प क्षिणः । वना दायान्ति फणिनः शि शवो न रुदन्ति च ॥ कृतिचमत्कृत ये किमतः परं फणिवरो ऽश्वतरो वत पञ्चमः । अपि ख्याता यदवाप म दालसा मधुरगीतवशीकृतशङ्करः ॥

परमानन्दविवर्द्धन मभिमतफलं व
शीकरणम्। सकलजनचित्तहरणं
विमुक्तिबीजं परंगीतमिति प्रशंसा
॥ चि। शब्दिते॥ गै०। क्तः॥

गीतमोदी। पुं। किन्नरे॥ चि। गा
नानुरागिणि॥

गीता। स्त्री। कृष्णार्जुनसंवादात्मकेशा
स्त्रविशेषे॥ यथा। भारते सर्ववेदाऽ
र्था भारतार्थश्च कृत्स्नशः। गीतायां
मस्ति तेनेयं सर्वशास्त्रमयी मता
॥ इयमष्टादशाध्यायी क्रमात् षट्
कत्रयेण हि। कर्मोपास्तिज्ञानका-
ण्डत्रितयात्मा निगद्यते इति नीलक
ण्ठचतुर्धरः॥ गीतासुगीताकर्त्तव्या
किमन्यैः शास्त्रविस्तरैरित्यादिश्री
धरस्वामी॥ एतदन्याः। आश्वमेधि
कपर्वोक्ते ब्राह्मणगीतानुगीते। दे-
वीभागवतोक्ता भगवतीगीता। अ
ध्यात्मरामायणोक्ता रामगीता। श्री
विष्णुभागवतोक्ता गोपीगीता। शि
वगीताद्याश्चबह्व्यो ऽध्यात्मविद्या
निरूपणपराःसन्ति॥

गीतासारः। पुं श्रीकृष्णार्जुनसंवादा
त्मकेमुक्त्यर्थे ऽष्टाङ्गादियोगग्रन्थे ग
रुडपुराणोक्ते॥

गीतिः। स्त्री। गाने॥ आर्याछन्दोवि
शेषे॥ यथा। आर्याप्रथमार्द्धसमं द्वि
तीयमपि चार्द्धं गीयते यस्याम्।
सा गीतिः फणिपतिना निर्मलम
तिना निवेदिता नूनमिति॥

गीतिका। स्त्री। कृतिसंज्ञकविंशत्य
क्षरावृत्तिविशेषे॥ यथा। सजजा
भरौ सलगा यदा कथिता तदा खलु
गीतिका॥ वरपाणिशोभिसुवर्णक
ङ्कणरत्नरज्जुविभूषिता सुपयोधरा प
दसङ्गिनूपुररूपकुण्डलमण्डिता। फ
णिराजपिङ्गलवर्णिता कविसार्थमा
नसहारिका वरकामिनीव मनोहि
ता नहि कस्य सा किल गीतिकेति॥

गीरथः। न। जीवे। बृहस्पतौ॥

गीर्णः। चि। वर्णिते। स्तुते॥ गिलिते॥
गीर्यतेस्म। गृ निगरणे शब्दे च। क्तः॥

गीर्णिः। स्त्री। गिरौ। गिलने॥ गि-
लनम्। गृ०। क्तिन्। ऋल्वादिभ्यः
क्तिन्निष्ठावत्। तेनलत्वम्॥

गीर्देवी। स्त्री। सरस्वत्याम्॥

गीर्लता। स्त्री। महाज्योतिष्मत्याम्॥

गीर्वाणः। पुं। देवे। सुरे॥ गीरेव
निग्रहाऽनुग्रहसमर्था वाणो ऽस्त्रं
यस्य सः॥ दन्त्योष्ठ्यपाठे गिरं वनुते
याचते स्तुतिप्रियत्वात्। वनु याचने
। कर्मण्यण्। पूर्वपदादिति णत्वम्॥

गीर्वाणकुसुमम्। न। लवङ्गे॥

गीष्पतिः। पुं। धिषणे। गुरौ। बृह

स्वतौ ॥ गिराम्पतिः । अहरादीनामितिरेफाभावपक्षे इदुदुपधस्येति षः । अहरादीनामिति रेफपक्षे गीर्पतिः । रेफाभावपक्षे गीःपतिः गीःपतिः ॥ पण्डिते ॥

गीष्पतीष्टिः । स्त्री । बृहस्पतिसवनाम यागे ॥

गुग्गुलः । पुं । स्वनामप्रसिद्धे वृक्षविशेषस्य निर्यासे । गुग्गुलौ ॥ रक्तशिग्रौ ॥

गुग्गुलुः । पुं । कुम्भे । उलूखलके । पुरे ॥ अस्य भेदाः । महिषाक्षो महानीलः कुमुदः पद्म इत्यपि । हिरण्यः पञ्चमो ज्ञेयो गुग्गुलोः पञ्च जातयः ॥ भृङ्गाञ्जनसवर्णस्तु महिषाक्ष इति स्मृतः । महानीलस्तु विज्ञेयः स्वनामसमलक्षणः ॥ कुमुदः कुमुदाभः स्यात् पद्मो माणिक्यसन्निभः । हिरण्याख्यस्तु हेमाभः पञ्चानां लिङ्गमीरितम् ॥ महिषाक्षमहानीलौ गजेन्द्राणां हितावुभौ । हयानां कुमुदः पद्मः स्वस्थ्यारोग्यकरौ परौ ॥ विशेषेण मनुष्याणां कनकः परिकीर्त्तितः । कदाचिन्महिषाक्षस्तु मतः कैश्चिन्नृणामपि ॥ गुग्गुलुर्विशदस्तिक्तो वीर्योष्णः पित्तलः सरः । कषायः कटुकः पाके कटू



रूक्षो लघुः परः ॥ भग्नसन्धानकृद्वृष्यः सूक्ष्मः स्वर्यो रसायनः । दीपनः पिच्छिलो बल्यः कफवातव्रणापचि । मेदोमेहाश्मवातांश्च क्लेदकुष्ठाममारुतान् ॥ पिडकाग्रन्थिशोफार्शोगण्डमालाकृमीन् जयेत् ॥ माधुर्याच्छमयेद्वातं कषायत्वाच्च पित्तहा । तिक्तत्वात् कफजित्तेन गुग्गुलुः सर्वदोषहा ॥ स नवो बृंहणो वृष्यः पुराणस्त्वतिलेखनः । स्निग्धः काञ्चनसङ्काशः पक्वजम्बूफलोपमः ॥ नूतनो गुग्गुलुः प्रोक्तः सुगन्धिर्यस्तु पिच्छिलः । शुष्को दुर्गन्धकश्चैव त्यक्तप्रकृतवर्णकः ॥ पुराणः स तु विज्ञेयो गुग्गुलुर्वीर्यवर्जितः ॥ अम्लं तीक्ष्णमजीर्णञ्च व्यवायं श्रममातपम् । मद्यं रोषं त्यजेत् सम्यग् गुणार्थी पुरसेवकः ॥ अस्योत्पत्तिविशेषे जन्मादिकथनं यथा । जातस्ते पुरपादपा मरुभुवि ग्रीष्मेऽर्कसन्तापिताः शीतार्त्ताः शिशिरेऽपि गुग्गुलुरसं मुञ्चन्ति ते पञ्चधा । हेमाभं महिषाक्षतुल्यमपरं सत्पद्मरागोपमं भृङ्गाभं कुमुदद्युतिञ्च विधिना ग्राह्या परीक्षा ततः ॥ वह्नौ ज्वलन्ति तपने विलयं प्रयान्ति क्षिप्यन्ति कोष्णसलिले पयसः समा ।

। ग्राह्याः शुभाः परिहरे च्चिरकाल जातान् अङ्गारवर्णसमपूयविगन्धव र्णानितिप्रयोगामृतम् ॥ पक्वस्यास्य पूर्णवीर्यत्वं मासत्रयपर्यन्तं तिष्ठती तिवैद्यकपरिभाषा ॥ गोजति । गु अस्तेये । क्विप् । गुजो व्याधेः गुजति । गुजरवाणे । बाहुलकात् रः । ड लयोरैक्यम् ॥

गुच्छः । पुं । स्तवके । कलिकादिकद म्बे । बहुभिः पुष्पैः फलैर्वा सम्बा धः पल्लवग्रन्थिर्गुच्छः । गुच्छा इति भाषा ॥ स्तम्बे । मूलत एव यत्र ल तासमूहो भवति नच प्रकाण्डानि ते गुच्छा मल्लिकादयः । झुण्ड इति भाषा ॥ हारविशेषे । द्वात्रिंशद्यष्टि केहारे ॥ कलापे । मोरपङ्ख इति भाषा ॥ गुध्यते । गुधपरिवेष्टने । स र्त्यादिभ्यश्छूणिति श्रीभोजः ॥ गूय ते । गुङ्शब्दे । बाहुलकात् छगण ॥ यद्वा । गवनम् । गुङ् । संपत्ति प् । तुक् । गुतं छ्यति । छोछेदने । आतोनुपेतिकः ॥

गुच्छकः । पुं । स्तवके । पुष्पसङ्घाते ॥ स्तम्बे ॥ द्वात्रिंशद्यष्टिकेहारे ॥ कला पे ॥ रीठाकरञ्जे ॥ न । ग्रन्थिपर्ण ॥ गुच्छात्स्वार्थे कन् ॥

गुच्छकणिशः । पुं । रागीधान्ये । तृणधा न्यविशेषोयम् ॥

गुच्छकरञ्जः । पुं । सानन्दे । स्निग्ध दले ॥

गुच्छदन्तिका । स्त्री । कदल्याम् ॥

गुच्छपत्रः । पुं । तालवृक्षे ॥

गुच्छपुष्पः । पुं । सप्तच्छदवृक्षे ॥

गुच्छपुष्पकः । पुं । गुच्छकरञ्जे ॥ री ठाकरञ्जे ॥

गुच्छपुष्पी । स्त्री । धातक्याम् ॥ शिम्ब डीवृक्षे ॥

गुच्छफलः । पुं । रीठाकरञ्जे ॥ राजा दन्याम् ॥ कतके ॥

गुच्छफला । स्त्री । अग्निदमन्याम् ॥ काकमाच्याम् ॥ निष्पाव्याम् ॥ द्रा क्षायाम् ॥ कदल्याम् ॥

गुच्छबध्रा । स्त्री । गण्डालातृणे ॥

गुच्छमूलिका । स्त्री । गण्डासिनी तृणे ॥

गुच्छार्द्धः । पुं । चतुर्विंशतियष्टिके हा रे ॥ न । अर्द्धगुच्छे ॥ गुच्छस्य अर्द्धः । ग्रामार्द्धवत् समासः ॥

गुच्छालः । पुं । भूतृणे । गन्धखेड ॥

गुच्छाल्पकन्दः । पुं । गुलञ्चकन्दे । न घरिटकायाम् । कुली इति गौड भाषा ॥

गुच्छी । स्त्री । गुच्छकरञ्जे ॥

गुञ्जरी । स्त्री । रागिणी विशेषे ॥ अ

स्यारूपं यथा । श्यामा सुकेशी म लयद्रुमाणां मृदूल्लसत्पल्लवतल्पया ता । श्रुतेः स्वराणां दधती विभा गं तस्मात्मुखाद् दक्षिणगुर्ज्जरीयम् ॥ अस्याः कालनियमो यथा । नाटो गौडो वराडीच गुर्ज्जरी देशि रेव च । पूर्वोक्ते गान मेतेषां निषिद्ध मिति तद्विदः ॥ मतभेदेन पूर्वोक्ते पिगीयते ॥

गुञ्ज: । पुं । गुच्छे । पुष्पस्तवके ॥

गुञ्जकृत् । पुं । भ्रमरे ॥ गुञ्जं ध्वनिवि शेषं करोति । उकृञ् । क्विसुकै ॥

गुञ्जनम् । न । भ्रमरादीनां गुणगुण-ध्वनौ । गुञ्जिते ॥

गुञ्जा । स्त्री । लताविशेषे । काकचि ञ्च्याम् । रक्तिकायाम् । घुंघची चिरमुठी रत्ती इत्यादिभाषाप्रसि द्धायाम् भिल्लभूषणायाम् ॥ श्वेत रक्त प्रभेदेन ज्ञेयं गुञ्जाद्वयं बुधैः । गुञ्जाद्वयन्तु केश्यं स्या द्वातपित्तज्व रापहम् । मुखशोषभ्रमश्वासतृष्णा मदविनाशनम् ॥ नेत्रामयहरं दृष्यं बल्यं कण्डूव्रणं हरेत् । कृमीन्द्रलुप्त कुष्ठानि रक्तावद्धबलापिच ॥ मान विशेषे ॥ तुल्या यवाभ्यां कथितात्र गुञ्जेति लीलावती ॥ त्रियवपरिमा णे । इति वैद्याः ॥ चतुर्द्धान्यपरिमा णे ॥ गोधूमद्वयमाने ॥ पटहे ॥ भ धुरध्वनौ ॥ मदिरागृहे ॥ चर्वीया म् ॥ गुञ्जति । गुजिअव्यक्तेशब्दे । प चाद्यच् ॥

गुञ्जिका । स्त्री । गुञ्जार्थे ॥ स्वार्थेकः ॥

गुञ्जितम् । न । गुञ्जने ॥ नगुञ्जितं त त्रजहार यन्मनः इतिभट्टिः ॥

गुटिः । स्त्री । } गोले । जपसङ्
गटिका । स्त्री । } ख्यानसाधने । व
गुटी । स्त्री । } टिकायाम् । गो

ली वडी इतिचभाषा ॥

गुड: । पुं । गोलके ॥ हस्तिसन्नाहे ॥ ग्रासे ॥ कार्पास्याम् ॥ इक्षोर्विकारे । इक्षुसारे । शिशुप्रिये ॥ इक्षो र सो यः सम्पक्वो जायते लोष्टवद्दृढः । स गुडो गौडदेशेतु मत्स्यण्डेव गुडो मतः ॥ गुडो दृष्यो गुरुः स्नि- ग्धो वातघ्नो मूत्रशोधनः । नाऽति- पित्तहरो मेदः कफकृमिबलप्रदः ॥ गुडो जीर्णो लघुः पथ्यो ऽनभिष्य- न्द्यग्निपुष्टिकृत् । पित्तघ्नो मधुरो वृ ष्यो वातघ्नो ऽसृक् प्रसादनः ॥ गुडो नवः कफश्वासकासकृमिकरोग्निकृ त् ॥ श्लेष्माण माशु विनिहन्ति स दार्द्रकेण पित्तं निहन्ति च सएव ह रीतकीभिः । शुण्ठ्या समं हरति वात मशेष मित्थं दोषत्रयक्षयकरा

य नमो गुडाय ॥ गुडति । गुडवेष्टने । इगुपधेति कः ॥ यद्वा । गवते । गुङ् अव्यक्तशब्दे । खादिभ्यः किद्दिति डः ॥ सिता चतुर्गुणा देया वटीषु द्विगुणो गुडः ॥

गुडकः । पुं । गुडखारपक्वौषधविशेषे ॥ अस्य पूर्णं तेजः षण्मासपर्यन्तमिति इतीतिपरिभाषा ॥

गुडकरी । स्त्री । रागिणीविशेषे ॥

गुडतृणम् । न । इक्षौ ॥ गुडस्यतृणम् ॥

गुडत्वक् । न । त्वचे । चोचे । । दारचीनी इतिभाषाप्रसिद्धे गन्धद्रव्ये ॥

गुडत्वचम् । न । त्वक्पत्रे । गुडत्वचि ॥

गुडदारु । न । इक्षौ । रसाले ॥

गुडधानाः । स्त्री । गुडमिश्रितधानासु । गुडधानी इतिभाषा ॥ गुडेन धानाः गुडधानाः । भक्ष्येणमिश्रीकरणमिति समासः । मिश्रणक्रियाद्वारा सामर्थ्यम् । तांविना मिश्रीकरणस्यायोगात् । बहुवचनान्तोयं धानाभृष्टयवेस्त्रियः इतिबहुवचनमिहैशात् ॥

गुडधेनुः । स्त्री । दानार्थं गुडादिनिर्मितायां धेनौ ॥

गुडपुष्पः । पुं । मधूकवृक्षे । महुवां इतिभाषा ॥ गुडइवपुष्पमस्य ॥

गुडफलः । पुं । पीलुवृक्षे ॥

गुडभा । स्त्री । यावनालशर्करायाम् ॥

गुडमूलः । पुं । अल्पमारिषशाके ॥

गुडलम् । न । गौडीमदिरायाम् ॥ त्रि । गुडयुक्त । गुडला गुडली इति भाषा ॥

गुडबीजः । पुं । मसूरे ॥

गुडशर्करा । स्त्री । पिप्पटायाम् ॥ इति शिकाखण्डभेषः ॥

गुडशिग्रुः । पुं । रक्तशोभाञ्जने ॥

गुडा । स्त्री । स्नुह्याम् ॥ गुडिकायाम् ॥ उशीर्याम् । लघुकाशे ॥ गुडात् टाप् ॥

गुडाका । स्त्री । निद्रायाम् इतिश्रीधरस्वामिनः ॥

गुडाकेशः । पुं । सदाशिवे ॥ गुडा स्नुहीतद्वत् केशा अस्य जटाधारित्वात् ॥ अर्जुने ॥ गुडाकायाईशः ॥ त्रि । जितनिद्रे ॥ सर्वत्र सावधाने ॥

गुडालकः । पुं । न । केशचक्रे ॥ मुखं मुकुन्दस्य गुडालकावृतम् ॥

गुडाशयः । पुं । आखोटे ॥ त्रि । गुडेच्छौ ॥

गुडिका । स्त्री । वटवटिकायाम् ॥ वटिका गुडिका चेति संज्ञाऽन्तरभेदतः । इतिवैद्यकपरिभाषा ॥

गुडूची । स्त्री । गुडूच्याम् । अमृतायाम् ॥

गुडूची । स्त्री । गिलोय इतिभाषाप्रसिद्धायां लतायाम् । वत्सादन्याम् । छिन्नरुहायाम् । अमृतायाम् ॥ अस्या उत्पत्त्यादिकं यथा । अथ लङ्केश्वरो मानी रावणो राक्षसाधिपः । रामपत्नीं वनाक्रीतां जहार मदनातुरः ॥ ततस्तं बलवान् रामो रिपुं जायापहारिणम् । हतो वानरसैन्येन जघान रणमूर्द्धनि ॥ हते तस्मिन्नसुराराती रावणे बलगर्विते । देवराजः सहस्राक्षः परितुष्टोऽतिराघवे ॥ तत्र ये वानराः केचिद्राक्षसैर्निहता रणे । तानिन्द्रो जीवयामास संसिच्या ऽमृतवृष्टिभिः ॥ ततो येषु प्रदेशेषु कपिगात्रात् परिच्युताः । पीयूषविन्दवः पेतुस्तेभ्यो जाता गुडूचिका ॥ गुडूची कटुका तिक्ता स्वादुपाका रसायनी । सङ्ग्राहिणी कषायोष्णा लघ्वी बल्याग्निदीपनी ॥ दोषत्रयामतृड्दाहमेहकासांश्च पाण्डुताम् । कामलाकुष्ठवातास्रज्वरकृमिवमीर्हरेत् ॥ गुडति । गुडरक्षणे । बाहुलकादूचट् । ङीप् ॥

गुडूचीकल्कः । पुं । कल्कविशेषे ॥ सयथा । अमृतायाः शतं चूर्णं वाससा परिशोधितम् । पृथक् षोडशभागाः स्युर्गुडमाक्षिकसर्पिषाम् ॥ यथाग्निभक्षये देत नरो हितमिताशनः । नास्य कश्चिद्भवेद्व्याधिर्न जरापलितं न च ॥ न ज्वरा विषमा नैव मेहना निलरक्तकम् । न च नेत्रगता रोगाः परमेतद्रसायनम् ॥ मेधाकरं त्रिदोषघ्नं प्रयोगा दस्य बुद्धिमान् । जीवेद्वर्षशतं साग्रं यथैवादितिजस्तथेति ॥

गुडूचीपत्रम् । न । अमृतापर्णे ॥ गडूचीपत्र मामेयं सर्वज्वरहरं लघु । कषायं कटु तिक्तञ्च स्वादुपाकं रसायनम् ॥ बल्य मुष्णञ्च सङ्ग्राहि हन्याद् दोषत्रयं तृषाम् । दाह प्रमेहवातास्रकामलाकुष्ठपाण्डुताः ॥

गुडेरः । पुं । गुडके ॥ ग्रासे ॥ गुडति गुड० । पतिकठिकुठिगडिगुडिदंशिभ्य एरक् ॥

गुडेरकः । पुं । ग्रासे ॥

गुडोद्भवा । स्त्री । शर्करायाम् ॥

गुणः । पुं ॥ मौर्व्याम् । ज्यायाम् । धनुराकर्षणरज्जौ । चिल्ला इति भाषा ॥ अप्रधाने । शौर्यादौ रसगन्धादौ च ॥ तल्लक्षणं यथा । सत्त्वे निविशते ऽपैति पृथक्जातिषु दृश्यते । आधेयश्च क्रियाजश्च सो ऽसत्त्वप्रकृति र्गुणः ॥ सत्त्वंद्रव्यम् । सत्त्वएव

निविशतेइतिसावधारणं व्याख्येयम्। एतेनसत्ताव्यावर्त्त्यते। साहिनकेवलं द्रव्येवर्त्तते किन्तु द्रव्यगुणकर्मसु। ननुद्रव्यत्वमद्रव्य त्वंवर्त्ततेइतितत्रातिव्याप्तिरतआह। अपैतीति। अपगच्छतीत्यर्थः। अर्थात्सत्त्वादेव। यथापीततायां जातायां फलादेर्नीलतापैति नैवंद्रव्यत्वं द्रव्यादपैति। एवमपि गोत्वंगोषुवर्त्तते अश्वादेश्चापैति तत्रातिव्याप्तिरतआह। पृथग्जातिषुदृश्यतइति। गोत्वं हिद्रव्यत्त्वावान्तरनामाजातिषु नदृश्यते गुणस्तुदृश्यते। यथा अभेदृष्टा नीलताह्यादिष्वपिदृश्यते। एतेन पूर्वार्द्धेनसकलजातेर्व्यवच्छेदः। एवंतर्हिकर्म द्रव्येवर्त्तते ततोऽपैति पृथग्जातिषु दृश्यतेचेतितत्रातिव्याप्तिरतआह। आधेयश्चाक्रियाजश्चेति। उत्पाद्यानुत्पाद्यइत्यर्थः। उत्पाद्योयथा। घटादेःपाकजोरूपादिः। अक्रियाजः अनुत्पाद्यः। सयथा। आकाशादेर्महत्त्वादिः। क्रियातु सर्वाप्युत्पाद्यैव ननित्येति तस्या द्वैविध्याभावान्नगुणत्त्वाभावः। एवमपि द्रव्यस्यगुणत्त्वंप्राप्नोति अवयविद्रव्यंहि अवयवद्रव्येषुनिविशते। असमवायिकारणसंयोगनिवृत्तौ विनाशात्ततोपैति भिन्नजातौ



येषु च हस्तपादादिषुदृश्यते। द्विविधंचभवति नित्यामित्यभेदेन। निरवयवस्यात्मपरमाण्वादेर्नित्यत्त्वादवयविद्रव्यस्यतु घटादेर् नित्यत्वादत आह। असत्त्वप्रकृतिरिति। अद्रव्यस्वभावइत्यर्थः॥ ॥उपैत्यन्यज्जहात्यन्यद्दृष्टो द्रव्यान्तरेष्वपि। वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः॥ इति पारिभाषिकोगुणो ऽप्रधानएवारम्भभवति॥ तेजोवलवीर्यैश्वर्यवैराग्यशक्तयश्चपराश्रितत्त्वा देव गुणाः॥ शुक्लादौ॥ सच शुक्लादिशब्दानां पटादौ प्रवृत्तिनिमित्तंभवति॥ विशेषाधानहेतौ सिद्धे वस्तुधर्मे। शुक्लादयोहि गवादिकं स्वजातीयेभ्यःकृष्णगवादिभ्यो व्यावर्त्तयन्ति॥ अपिच। द्रव्यत्वव्यापकतावच्छेदकसत्तान्यजातिमत्त्वं तदर्थः॥ यथा। रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्त्वापरत्त्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतर्विंशतिगुणाइति॥ कर्मव्यतिरिक्तत्वेसति जातिमात्राश्रये॥ विवेकवैराग्योपरतितितिक्षासमाधनेषु॥ आकाशादौ। सांसिद्धिकवैनयिकप्राकृतिकभेदभिन्ने॥ द्रव्याश्रिते फलादेर्

सगन्धादौ ॥ रूपे ॥ इन्द्रिये ॥ त्यागे ॥ शौर्यादौ ॥ सत्त्वरजस्तमःसु ॥ गुणानाम् परमं रूपं न दृष्टिपथमृच्छति । यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छकमिति भगवान् वार्षगण्यः । गुणानां सत्त्वादीनाम् परमं रूपम् अधिष्ठानमात्मेत्यर्थः ॥ राज्ञः सन्धिविग्रहादौ ॥ यथा । सन्धिविग्रहयानानि संस्थाप्यासनमेव च । द्वैधीभावश्च विज्ञेयाः षड्गुणा नीतिवेदिनामिति ॥ देशकालज्ञतादिचतुर्दशसु ॥ ते च । देशकालज्ञता दार्ढ्यं सर्वक्लेशसहिष्णुता । सर्वविज्ञानता दाक्ष्यमूर्जः संवृतमन्त्रता ॥ अविसंवादिता शौर्यं भक्तित्वं कृतज्ञता । शरणागतवात्सल्यममर्षित्वमचापलम् ॥ एते चतुर्दश गुणाः प्रोक्ताः शास्त्रेषु सूरिभिः ॥ गौतमोक्तगुणा यथा । दया सर्वभूतेषु क्षान्तिः अनसूया शौचम् अनायासः मङ्गलम् अकार्पण्यम् अस्पृहेति ॥ काव्यगुणश्च । यथा । ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः । उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणा इति ॥ तद्भेदा यथा । श्लेषः प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥ इति वैदर्भमार्गस्य प्राणा दशगुणाः स्मृताः । माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश ॥ तस्य दशसङ्ख्याभावे हेतुर्यथा । केचिदन्तर्भवन्त्येषु दोषत्यागात् परे श्रिताः । अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश ॥ आवृत्तौ ॥ रज्जौ ॥ तन्तौ ॥ भीमसेने ॥ उत्कर्षे । दोषान्यस्मिन् विशेषणे ॥ सम्बन्धभागे ॥ यथा । सङ्ख्याया गुणस्य निमाने मयट् ॥ संज्ञाजातिक्रियाशब्दान् हित्वाऽन्ये गुणवाचिनः । चतुष्टयी शब्दानां प्रवृत्तिरित्याकरग्रन्थनिष्कर्षादिषु निर्णयः ॥ गुण्यते । गुण आमन्त्रणे । घञ् ॥ गुणाः कुर्वन्ति दूतत्वं दूरेऽपि वसतां सताम् । केतकीगन्धमाघ्राय स्वयं गच्छन्ति षट्पदाः ॥

गुणकः । पुं । पूरकाङ्के ॥ यथा । गुण्यान्तमङ्कं गुणकेन हन्यादिति ॥

गुणकारः । पुं । भीमसेने ॥ त्रि । गुणकारके ॥

गुणगृह्यः । त्रि । गुणपक्षपातिनि ॥ गुणानां गृह्यः । पदास्वैरिबाह्यापक्ष्येषु चेति गृहेः क्यप् ॥

गुणज्ञः । त्रि । गुणवेत्तरि ॥ यथा । गुणिनि गुणज्ञो रमते नाऽगुणशीलस्य गुणिनि परितोषः । अलिरेति

वन्नाम्न कर्म्मणा नहि भेक स्त्रैकवासेऽपि ॥

गुणत्रयविनिर्म्मितः । पुं । मायाकल्पिते संसारवृक्षे ॥

गुणधर्म्मः । पुं । गुणाश्रितधर्म्मे ॥ यथा । यो गुणेन प्रवर्त्तेत गुणधर्मः स उच्यते । यथा मूर्द्धाभिषिक्तस्य प्रजानां परिपालनमिति ॥

गुणनिका । स्त्री । नृत्ये ॥ शून्याङ्के ॥ पाठनिश्चये ॥ मालायाम् ॥ आम्रेडिते ॥ गुणआम्रेडने । चु० । गणास न्योयुजितियुच् । कात्पूर्वस्येकारः ॥ शास्त्रादीनामभ्यासने ॥

गुणनी । स्त्री । पाठनिश्चये । शीलने ॥

गुणनीयः । पुं । शास्त्राभ्यासे ॥ इति हारावली ॥

गुणप्रवाहः । पुं । चेतनाचेतनात्मके प्रपञ्चे ॥

गुणप्रवृद्धः । पुं । संसारवृक्षे ॥ तच्छायायाम् ॥ गुणैः सत्त्वरजस्तमोभिर्देहेन्द्रियविषयाकारपरिणतैः जलसेचनीयैरिव स्थूलीभूतत्वात् ॥ गुणैः प्रवृद्धः ॥

गुणभोक्तृ । न । जीवेब्रह्मणि ॥ सत्त्वरजस्तमसां शब्दादिद्वारा सुखदुःखमोहाकारेण परिणतानामुपलब्धृत्वात् ॥

गुणभ्रंशः । पुं । गुणनाशे । पर्य्यन्तिकायाम् ॥

गुणलयनिका । स्त्री । वस्त्रनिर्म्मितगृहे । कोणिकायाम् ॥ इति हेमचन्द्रः ॥

गुणलयनी । स्त्री । गुणलयनिकायाम् । पटकुट्याम् ॥ इति हलायुधः ॥

गुणवान् । त्रि । गुणविशिष्टे । महधीना एते गुणा इत्यभिमानवति ॥ गुणवन्तं नियुञ्जीत गुणहीनन्तु वर्ज्जयेत् । पण्डितस्य गुणाः सर्वे मूर्खे दोषा हि केवलमिति गारुडे नीतिसारः ॥ गुणोऽस्यास्ति । मतुप् ॥ सम्बन्धिनि ॥

गुणवादः । पुं । प्रमाणान्तरविरोधे सत्यर्थवादे ॥ यथा । आदित्यो यूपः इत्यादिषु यूपे आदित्याभेदस्य प्रत्यक्षबाधितत्वात् आदित्यवदुज्ज्वलरूपो गुणोऽनेन लक्षणया प्रतिपाद्यते । इति ॥

गुणवित् । त्रि । साङ्ख्यज्ञे ॥ स च सत्त्वरजस्तमांसि त्रयो गुणाः साम्येनावस्थिताः जगतो महदादिलक्षणस्य कारणमिति कल्पयति ॥ गुणज्ञे ॥

गुणवृक्षः । पुं । कूपके । नौकामध्यस्थे रज्जुबन्धनस्तम्भे । गुणधरा मस्तूल इति भाषा ॥ गुणानां रज्जूनां वृक्षः ॥

गुणवृक्षकः । पुं । कूपके ॥ स...

तम् ॥

गुणसङ्गः । पुं । शब्दादिषु सुखदुःख-मोहात्मकेष्वभिलाषे ॥ गुणेषु सङ्गः ॥

गुणसङ्ख्यानम् । न । साङ्ख्ये कापिलशास्त्रे ॥ गुणाः सत्त्वरजस्तमांसि सम्यक् कार्यभेदेन ख्यायन्ते प्रतिपाद्यन्ते ऽस्मिन्निति व्युत्पत्तेः ॥

गुणसम्मूढः । त्रि । गुणैः कार्यतयाधर्म्मैर्देहादिभिर्विकारैः सम्यङ्मूढे । स्वरूपास्फुरणेन तानेवात्मत्वेन मन्यमाने ॥

गुणसागरः । पुं । ब्रह्मणि । विधातरि ॥ बुद्धविशेषे ॥ त्रि । सकलगुणाधारे ॥ गुणानां सागरः ॥

गुणा । स्त्री । दूर्वायाम् ॥ मांसरोहिण्याम् ॥

गुणाकरः । पुं । बुद्धे ॥ त्रि । गुणान्विते ॥ गुणानामाकरः ॥

गुणातीतः । त्रि । परमेश्वरे ॥ गुणाः शीतोष्णसुखदुःखादयः सत्त्वादयो वा तान् अतीतो ऽतिक्रान्तः ॥ स्थितप्रज्ञे ॥

गुणान्वितः । त्रि । विवेकवैराग्योपरतितितिक्षासमाधानयुक्ते ॥ सुख-दुःखमोहात्मकगुणैर्युक्ते ॥ गुणयुक्ते ॥

गुणितः । त्रि । आहते । पूरिते ॥ य-था । पञ्चधा गुणिता पञ्चसङ्ख्या पञ्चविंशतिर्भवतीत्यादिः ॥ पिण्डिते ॥ आवर्त्तिते । अभ्यस्ते ॥ गुण्यते स्म । गुण आमन्त्रणे । क्तः ॥

गुणी । पुं । धनुषि । शरासने ॥ चापे ॥ त्रि । गुणविशिष्टे ॥ गुणोऽस्यास्ति । इनिः ॥

गुणीभूतः । त्रि । अप्रधानीभूते ॥

गुणीभूतव्यङ्ग्यः । पुं । काव्यविशेषे ॥ यथा । अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् ॥

गुणेशः । त्रि । सत्त्वादिगुणानां नियामके । ईश्वरे ॥

गुणेश्वरः । पुं । चित्रकूटाचले ॥ त्रि । गुणाढ्ये ॥ गुणानाम् ईश्वरः ॥

गुणोत्कर्षः । पुं । अतिशये । गुणप्राधान्ये । परभागे ॥

गुणोत्कीर्त्तनम् । न । गुणकथने ॥ विरहकालिकमित्रादिविषयकप्रशंसाप्रतिपादने ॥

गुण्ठितः । त्रि । वेष्टिते ॥ गुण्डिते । रूषिते ॥ गुण्ठ्यते स्म । गुठि वेष्टने । क्तः ॥

गुत्सः । पुं । असिपत्रे । नीलपत्रे । तृणविशेषे ॥ यस्य कस्यः कसेरुः ॥

गुण्डकः । पुं । मलिने ॥ धूलौ ॥ कलौ । कलौ ॥ स्नेहपात्रे ॥

गुण्डकन्दः । पुं । कशेरुणि ॥

गुण्डारोचनिका । स्त्री । काम्पिल्ले । कंबीला इति भाषा ॥

गुण्डाला । स्त्री । क्षुद्रक्षुपविशेषे । जलोद्भतायाम् । गुच्छवधायाम् ॥

गुण्डासिनी । स्त्री । तृणविशेषे । गुच्छमूलिकायाम् । चिपिटायाम् ॥

गुण्डिकः । पुं । स्त्री । गुण्डके । तण्डुलादिचूर्णे ॥ गुण्डिकैः सितपीतैश्च मण्डयन्तो गृहाङ्गनम् ॥

गुण्डिचा । स्त्री । श्रीपुरुषोत्तमदेवस्य रथारोहणानन्तरं वासार्थं मण्डपविशेषे । गुण्डीचावाडी इतिभाषा ॥ सप्ताहं ये प्रपश्यन्ति गुण्डिचामण्डपस्थितम् । मां च रामं सुभद्रां च मम सायुज्यमाप्नुयुरित्युत्कलखण्डम् ॥

गुण्ठितः । त्रि । रजसा कीर्णे । रूषिते ॥ गुण्ठ्यते स्म । गुडि वेष्टने । क्तः ॥

गुण्यः । त्रि । गुणयति । प्रशस्तगुणयुक्ते ॥ अन्येभ्योपि दृश्यत इति यप् ॥

गुत्यः । पुं । गवेधुकायाम् ॥

गुत्यकम् । न । ग्रन्थिपर्णे ॥

गुत्सः । पुं । स्तबके ॥ विकासोन्मुखकलिकायाम् ॥ कलिकादिकदम्बे ॥ गुध्यते गुधपरिवेष्टने । उन्दिगुधिकुषिभ्यश्चेति सः किम् ॥ स्तबः ॥ द्वात्रिंशद्यष्टिके हारे ॥ ग्रन्थिपर्णे ॥

गुत्सकः । पुं । स्तबके । गुच्छा इति भाषा ॥ ग्रन्थपरिच्छेदे ॥

गुत्सकपुष्पः । पुं । सप्तपर्णे ॥

गुत्सार्द्धः । पुं । गुच्छार्द्धे । चतुर्विंशतियष्टिकाभिर्निर्मिते हारे ॥ गुत्सस्य अर्द्धः ॥

गुदम् । न । अपाने ॥ गुदस्य मानं सर्वस्य सार्द्धं स्याच्चतुरङ्गुलम् । तस्य स्युर्वलयस्तिस्रः शङ्खावर्त्तनिभाः स्मृताः ॥ प्रवाहिनी भवेत् पूर्वा सा सार्द्धाङ्गुलमिता मता उत्सर्जनी च तदधः सा सार्द्धाङ्गुलसम्मिता ॥ तस्याः अधः संवरणी स्याद् द्व्यङ्गुलसम्मिता । अर्द्धाङ्गुलप्रमाणस्तु बुधैर्गुदमुखं मतम् ॥ मलोत्सर्गस्य मार्गोयं पायुर्देहे विनिर्मितः ॥ गोदते । गुदक्रीडायाम् । इगुपधेति कः ॥ यद्वा । गूयतेऽनेन । गुपुरीषोत्सर्गे । गवते वा । गुङ्शब्दे । अब्दादय इति साधु ॥

गुदकीलः । पुं । } अर्शोरोगे ॥
गुदकीलकः । पुं ।

गुदग्रहः । पुं । उदावर्त्तरोगे ॥

गुदभ्रंशः । पुं । रोगविशेषे ॥ तस्य लक्षणं यथा । प्रवाहणातिसाराभ्यां निर्गच्छति गुदं बहिः । रूक्षदुर्बलदेहस्य गुदभ्रंशं तमादिशेदिति ॥

गुदयोनिः । पुं । कुम्भीके ॥

गुदाङ्कुरः । पुं । अर्शोरोगे ॥

गुधेरः । पुं । लौहघातके ॥ गोप्तरि । रक्षके ॥ गुध्यति । गुधपरिवेष्टने । मूलेराद्दयश्चेत्येरक् ॥

गुन्दलः । पुं । मर्दलशब्दे ॥

गुन्द्रः । पुं । तेजनके । शराभिधतृणे ॥ गोँदपटेरा इतिभाषाप्रसिद्धे तृणविशेषे । पटेरके । शृङ्गवेराभमूले ॥ गुन्द्रः कषायो मधुरः शिशिरः पित्तरक्तजित् । स्तन्यशुक्ररजोमूत्रशोधनो मूत्रकृच्छ्रजित् ॥ गोदते । गुद० । बाहुलकात् रक् । पृषोदरादिः ॥

गुन्द्रमूला । स्त्री । एरकायाम् ॥

गुन्द्रा । स्त्री । प्रियङ्गौ ॥ भद्रमुस्तके ॥ गांजलं द्राति । द्रागतौ । आतोनुपेतिकः । पृषोदरादिः । टाप् ॥ एरकायाम् ॥ गवेधुकायाम् ॥ गुन्द्रयति । गुद्रिक्षोदे । पचाद्यच् ॥

गुन्द्रालः । पुं । जीवञ्जीवपक्षिणि ॥

गुपिलः । पुं । राज्ञि ॥ गोपायति । गुपूरक्षणे गुपादिभ्यःकिदिति इलच् ॥

गुप्तः । त्रि । रक्षिते । कृतरक्षणे । पाते ॥ गूढे । कृतगोपने ॥ संवृते ॥ आहारनिर्हारविहारयोगाः सुसंवृताधर्मविदा तु कार्याः । वाग्गुप्तिकार्याणि तप स्तथैव धनायुषी गुप्ततमे तु कार्ये ॥ इतिवशिष्ठ ॥ वैश्यस्य संज्ञाबोधने ॥ गुप्यते स्म । गुपङ्गोपनादौ । क्तः ॥

गुप्तगतिः । पुं । अपसर्पे । चरे ॥ गुप्ता गतिर्यस्य ॥

गुप्तचरः । पुं । बलदेवे । हलायुधे ॥ गुप्तचारे ॥ गुप्तश्चासौ चरश्च ॥ त्रि । पूर्वगुप्ते ॥

गुप्तस्नेहः । पुं । अङ्कोठवृक्षे ॥

गुप्ता । स्त्री । कपिकच्छाम् ॥ परकीयान्तर्गतनायिकाप्रभेदे ॥

गुप्तिः । स्त्री । रक्षणे ॥ राज्ञा मात्मगतायां राष्ट्रगतायाञ्च रक्षायाम् ॥ कारागारे ॥ भूगर्त्ते ॥ अवस्करस्थाने । पोखरा इतिभाषा ॥ भूगर्त्ते ॥ यमे ॥ गुप्यते । गोपनञ्च । गुपू० । क्तिन् ॥ गोपने ॥ नगुप्तिरन्नं विना ॥

गुप्तिकर्म्म । न । प्राकारपरिखादिनिर्म्माणे ॥

गुफितः । त्रि । गुम्फिते । ग्रथिते ॥

गुम्फः । पुं । गुम्फने । ग्रन्थने ॥ बाहोरलङ्कारे । दोर्भूषणे ॥ श्मश्रुणि ॥

गुम्फनम् । न । ग्रथिते । दृब्धे ॥

गुम्फना । स्त्री । रचनायाम् ॥ यथा । वाक्ये शब्दार्थयोः सम्यग्रचना गुम्फना स्मृता । शब्दार्थक्रमपर्यायपदवाक्यकृताचसेति ॥

गुम्फितः । त्रि । दृब्धे । ग्रथिते ॥ गुम्फ

ग्रन्थे । गयन्तः । क्तः ॥

गुरणम् । न । उद्यमे । भाराद्युद्यमने
॥ गुरी उद्यमे । कुटादिः । ल्युट् ॥
गुरुः । पुं । निषेकादिकृति ॥ निषे
कोगर्भाधानम् आदिना सीमन्तोन्न
यनादेर्मन्त्रविद्यादानादेश्च ग्रहण
म् । तत्कर्त्ता पित्रादिर्गुरुःस्यात् ।
यथा । निषेकादीनि कर्म्माणि यः
करोति यथाविधि । सम्भावयतिचा
न्नेन सविप्रोगुरुरुच्यते इतिमनुः ॥
सगुरुर्यः क्रियां कृत्वा वेदमस्मै प्र
यच्छति ॥ पितृमात्राचार्यादौ ॥
शास्त्रोपदेष्टरि ॥ साङ्गवेदबोधके ॥
उपदेष्टरि । सम्प्रदायप्रवर्त्तके ॥ शा
न्तो दान्तः कुलीनश्च विनीतः शुद्धवे
शवान् । शुद्धाचारः सुप्रतिष्ठः शुचि
र्दक्षः सुबुद्धिमान् ॥ आश्रमी ध्यान
निष्ठश्च मन्त्रतन्त्रविशारदः । निग्र
हानुग्रहेशक्तो गुरुरित्यभिधीयते
॥ उद्धर्त्तुञ्चैव संहर्त्तुं समर्थो ब्राह्म-
णोत्तमः । तपस्वी सत्यवादी च गृ
हस्थो गुरुरुच्यते ॥ तस्य देशभेदे
नविशेषो यथा । मध्यदेशकुरुक्षे
त्रलाटकोङ्कणसम्भवाः । अन्तर्वेदी
प्रतिष्ठाना आवन्त्याश्चगुरूत्तमाः ॥
गौडाः साल्वोद्भवाः सौरा मागधाः
केरलास्तथा । कोसलाश्च दशार्णा



श्च गुरवः सप्तमध्यमाः ॥ कर्णाटन
र्मदारेवाकच्छातीरोद्भवा स्तथा ।
कालिङ्गाश्च कलम्बाश्च काम्बोजाश्चा
ऽधमा मताः ॥ मध्यदेशसमुद्भूतः
शान्तः सर्वगुणैर्युतः । पुत्रदारैश्च स
म्पन्नोगुरुरागमसम्मतः ॥ मध्यदेश
समुद्भूत इति श्रेष्ठत्वदर्शनार्थम् ॥ शा
क्ते शाक्तो गुरुः शस्तः शैवे शैवो गु
रु र्मतः । वैष्णवे वैष्णवः सौरे सौ
रो गुरु रुदाहृतः ॥ गाणपे गाणप
श्चैव कौलः सर्वत्र सद्गुरुः ॥ इति
श्रीमहानिर्वाणतन्त्रम् ॥ रोगग्रस्तो
यथा वैद्यः पररोगचिकित्सकः । त
था गुरु र्मुमुक्षोर्मे गृहस्थो यं बिभ
न्ननेति श्रीदेवीभागवतम् ॥ विशे
षस्तन्त्रसाराद् ज्ञेयः ॥ शिष्येण सद्गु
रो र्निन्दादिकं न श्रोतव्यं तत्रप्रमा
णमाह । गुरो र्यत्र परीवादो नि
न्दावापि प्रवर्त्तते । कर्णौ तत्र पिधा
तव्यौ गन्तव्यं वा ततोन्यत इति ॥
अत्र निन्दापरीवादयोः सदसद्दोष
विषयकत्वेन भेदो बोध्यः ॥ द्विमा
त्रे । दीर्घे ॥ दीर्घस्वरो बिन्दुयुतो
विसर्गी संयुक्तपूर्वश्च गुरु र्द्विमात्रः ।
पादान्तगामीतु गुरु र्लघुर्वा वर्णो वि
कल्पेन गुरु र्नियुक्तः ॥ बृहस्पतौ ।
सुराचार्ये ॥ द्रोणाचार्ये ॥ कपिकच्छ्वा

म् ॥ त्रि । गम्भीरार्थे ॥ बलवति ॥ पूज्ये ॥ महति ॥ दुर्ज्जरे ॥ अलघौ ॥ गृणाति उपदिशति धर्मादि । गॄ शब्दे । गिरत्यज्ञानं वा । गॄ निगरणे । कृग्रोरुच्चेति कुः । उत्वमन्त्यादेशः ॥

गुरुक्रमः । पुं । इतिहः । पारम्पर्योपदेशे ॥ इतिहलायुधः ॥

गुरुगृहम् । न । आचार्यवेश्मनि ॥ धनुर्मीनराश्योः ॥

गुरुघ्नः । पुं । गौरसर्षपे ॥ त्रि । गुरुहन्तरि ॥

गुरुदण्टकः । पुं । तिलमयूरे ॥ इतित्रिकाण्डशेषः ॥

गुरुतरः । त्रि । गरीयसि ॥ सारवत्तरे ॥

गुरुतल्पगः । पुं । विमातृगन्तरि ॥

गुरुता । स्त्री । गुरुत्वे ॥ भावितत्व ॥

गुरुतालः । पुं । तालविशेषे ॥ यथा । एकएव गुरुर्यत्र गुरुतालः स कथ्यते । अपरं नियमंविनेति ॥

गुरुत्वम् । न । महत्त्वे ॥ पतनप्रतियोगिनि गुणे । आद्यपतनासमवायिकारणे । अलघुतायाम् ॥ यथा । अतीन्द्रियं गुरुत्वं स्यात् पृथिव्यादिद्वये तु तत् । अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ तदेवासमवायि स्यात् पतनाख्ये तु कर्मणि ॥ इतिभाषापरिच्छेदः ॥ गुरोर्भावः । तस्यभावस्त्वतलाविति त्वः । त्वान्तं क्लीवम् ॥ पिण्डपुष्टौ ॥

गुरुदैवतम् । न । पुष्यनक्षत्रे ॥ त्रि । गुरुतत्परे ॥ गुरुर्दैवतं यस्य ॥

गुरुपत्रम् । न । रङ्गे ॥

गुरुपत्रा । स्त्री । अम्लिकायाम् । तिन्तिडीवृक्षे ॥

गुरुभारिकम् । न । लघुपाके ॥

गुरुमर्द्दलः । पुं । डिण्डिमवाद्ये ॥

गुरुरत्नम् । न । पुष्परागमणौ ॥

गुरुवर्ज्जाग्नः । पुं । लिम्पाके । कागदीनींबू इतिभाषा ॥

गुरुवर्त्ती । त्रि । गुरुशुश्रूषके ॥

गुरुवासी । पुं । नैष्ठिकब्रह्मचारिणि ॥ अष्टाशीतिसहस्राणां यतीनामूर्द्ध्वरेतसाम् । स्मृतं स्थानन्तु यत्तेषां तदेवगुरुवासिनाम् ॥

गुरुशिंशपा । स्त्री । शिंशपाद्रुमे ॥

गुरुशुश्रूषा । पुं । विद्यादातुःसेवायाम् ॥ यथाह भगवान् । नाहमिज्याप्रजातिभ्यां तपसोपशमेनवा । तुष्येयं सर्वभूतात्मागुरुशुश्रूषयायथेति ॥

गुरुसारा । पुं । शिंशपायाम् ॥

गुरुस्कन्धः । पुं । श्लेष्मातवृक्षे ॥

गुरुहा । पुं । गुरुघ्ने । नरकीलके ॥

गुरूपदिष्टः । त्रि । शास्त्रीये ॥

गुर्ज्जरः । पुं । देशविशेषे ॥ तद्देशस्थे

पुम्भूम्नि ॥

गुर्ज्जरी । स्त्री । रागिणीविशेषे ॥ रीतिभेदे ॥ गुर्जरदेशवनितायाम् ॥ वसतिरतिपतिर्गुर्जरीणां कुचेषु ॥

गुर्व्वादित्यः । पुं । योगविशेषे । सूर्य्यजीवयोरेकराशिस्थितौ ॥

गुर्व्विणी । स्त्री । गर्भिण्याम् ॥ गुरु र्दुर्धरो लघुर्वा गर्भोऽस्त्यस्याः । ब्रीह्यादित्वात् इनिः । संज्ञापूर्व्वकत्वान्नगुणः ॥ यद्वा । गर्वति । गर्वगतौ । गर्वरतउणे तीनन् । गौरादित्वान्ङीष् ॥

गुर्व्वी । स्त्री । गुर्व्विण्याम् । गर्भवत्याम् ॥ नहि वन्ध्या विजानाति गुर्व्वीप्रसववेदनाम् ॥ गुरुपत्न्याम् ॥ गुरुत्वयुक्तायाम् ॥

गुलः । पुं । ऐक्षवे । गुडे ॥

गुलञ्चकन्दः । पुं । गुञ्चालकन्दे । निघण्टिकायाम् । कुली इति गौड़भाषा ॥

गुला । स्त्री । सुह्यीवृक्षे । थूहर इति भाषा ॥

गुलिका । स्त्री । गुटिकायाम् ॥ गोली इतिभाषाप्रसिद्धे आग्नेयास्त्रप्रक्षेप्यवस्तुनि ॥ गुडयुक्तकुष्माण्डव्यञ्जनविशेषे ॥ एतेन गुडयुक्तेन गोलकुष्माण्डखण्डकान् । रन्धितान् गौरमरिचैः रिमान् सुगुलिका विदुः ॥

रोगविशेषे ॥

गुली । स्त्री । गुटिकायाम् । सीतला इति भाषा प्रसिद्धे रोगे ॥

गुलुच्छः । पुं । गुच्छे । स्तवके ॥ पशुअङ्घायाम् । गुलुछ इति पर्वतीयभाषा ॥ गुच्छशब्दार्थेषु । गुतसो गुच्छो गुलुच्छवदितिद्विरूपकोषात् ॥

गुलुञ्छः । पुं । गुच्छे ॥

गुल्फः । पुं । घुटिकायाम् । पादग्रन्थौ । टकुना इति भाषा ॥ गलति गलते वा । गलअदने । कलिगलिभ्यां फगस्योच्चेतिफक् प्रत्ययः । अतउत्वञ्च ॥

गुल्मः । पुं । सत्यप्रधानपुरुषाधिष्ठिते रक्षितृपुरुषसमूहे ॥ चिषुसेनामुखेषु ॥ तत्र इभाः ९ रथाः ९ अश्वाः २७ पदातयः ४५ । समुदायेन ९० । एतत्परिमाणविशिष्टा सेना गुल्म इत्यर्थः ॥ सैन्यरक्षणे ॥ घट्टमभेदे ॥ रक्षार्थं सैन्यस्थाने ॥ अप्रकाण्डवृक्षे । स्तम्बे । लताप्रतानादौ । तृणसमूहे । एकमूलाः सङ्घातजाताः शरेक्षुप्रभृतयो गुल्माः ॥ प्लीहरोगे ॥ वायुगोला इति प्रसिद्धरोगे ॥ यथा । दुष्टा वातादयोऽत्यर्थं मिथ्याहारविहारतः । कुर्वन्ति पञ्चधा गुल्मं कोष्ठान्तर्ग्रन्थिरूपिणम् ॥

तस्य पर्व्वत्रिधं स्थानं पार्श्वहृन्नाभिवस्तयः॥ हृन्नाभ्योरन्तरे ग्रन्थिः सञ्चारी यदिवा,चलः। वृत्त श्चयापचयवान् स गुल्मइतिकीर्त्तितः॥ स च स्तैजायते दोषैः समस्तैरपिचोच्छ्रितैः। पुरुषाणां तथा स्त्रीणां ज्ञेयो रक्तेन चापरइति॥ गुध्यते ऽस्मात् । भीमादयोपादाने इतिसाधुः॥ यद्वा। गुध्यते गुडतिवा। गुडवेष्टने रक्षणे वा। बाहुलकात् मक्। डलयोरेकत्वञ्च॥

गुल्मकेतुः। पुं। अम्लवेतसे॥

गुल्ममूलम्। न। आर्द्रके॥

गुल्मवल्ली। स्त्री। सोमलतायाम्॥

गुल्मी। त्रि। गुल्मवति। गुल्मविशिष्टे॥

गुल्मिनी। स्त्री। त्रपुषीद्राक्षातामूल्यादिरूपायां प्रतानिन्यां लतायाम्। सशाखलतायाम्। उलपे॥ गुल्मः प्रतानोऽस्त्यस्याः। अतइनिठनाविती निः। ङीप्॥

गुल्मी। स्त्री। आमलक्याम्॥ लवल्याम्॥ एलायाम्॥ वस्त्रवेश्मे। पटैाकसि॥ वन्याम्॥ गृध्रनखीवृक्षे। गुडकाँ झोकी इतिगैाडभाषाप्रसिद्धे॥

गुल्यः। पुं। मधुरे। स्वादै॥

गुवाकः। पुं। सुपारी इतिप्रसिद्धे वृक्षे। घोण्टायाम्। पूगे। क्रमुके॥ गुवन्त्यनेन। गुपुरीषोत्सर्गे। पिनाकादयश्चेति साधुः॥

गुहः। पुं। कार्त्तिकेये। स्कन्दे॥ अश्वे। घोटके॥ शृङ्गवेरपुरवासिनि निषादाधिपतैा श्रीरामसखे॥ गूहति रक्षति सेनाम्। गुहूसंवरणे। इगुपधेतिकः॥ विष्णैा॥ गूहते संवृणोति स्वरूपादीनिमाययेतियोगात्॥

गुहषष्ठी। स्त्री। मार्गशीर्षशुक्लषष्ठ्याम्॥

गुहा। स्त्री। सिंहपुच्छीलतायाम्॥ गर्त्ते॥ अकृत्रिमेऽद्रिविवरे। पर्वतान्तरावकाशे। देवखाते। बिले। गुफा द्वारइतिचभाषा॥ कप्रत्ययान्ताट्टाप्॥ भिदाद्यङ् वा॥ गूहा अस्यां स्थानमेयत्वात्पदार्थाः इतिव्याख्यानात् विदुषांबुद्धौ॥ हृदये हृदाकाशे॥ अज्ञाने॥

गुहाचरः। त्रि। बुद्धावुपलभ्यमाने॥ गुहायांचरति। चरेष्टः॥

गुहाशयः। पुं। मूषिके॥ सिंहादिषु॥ सिंहव्याघ्रवृका ऋक्षतरक्षुद्वीपिन स्तथा। बभ्रुजम्बुकमार्जाराः इत्याद्याः स्युः गुहाशयाः॥ गुहाशया वातहारा गुरूष्णा मधुराश्च ते। स्निग्धा बल्या हिता नित्यं नेत्रगुह्यविकारि

णाम् ॥ विष्णौ । परमात्मनि ॥ प्रश्यु द्गमप्रश्रयणाभिवादनं विधीयते सा धु मिथः सुमध्यमे । प्राज्ञैः परस्मै पुरुषाय चेतसा गुहाशयायैव नदे हमानिने ॥ गुहायां शेते । शीङ्० । अधिकरणे शेतेरित्यच् ॥

गुहाहितः । त्रि । वुद्धिस्थे । गुहायामा हितः ॥

गुहिलम् । न । धने ॥ वने ॥ गूहति गूहते वा । गुहू० । गुपादिभ्यः किदि तीलच् ॥

गुहेरः । पुं । गोप्तरि ॥ लौहकारे ॥ गूहति गूहते वा । गुहू० । मूलेरादू यश्चेत्येरक् ॥

गुह्यः । पुं । कमठे ॥ दम्भे ॥ परमात्म नि । विष्णौ ॥ रहस्योपनिषद्वेद्यत्वा त् गुहायां बुद्धौ हृदयाकाशे वा नि हितः इति वा गुह्यः । गुहामर्हति । दण्डादिभ्यइतियत् ॥ न । रहसि ॥ उपस्थे । भगलिङ्गयोः ॥ गुदे ॥ त्रि । रहस्ये । गोप्ये । यस्मै कस्मै चिदवक्त मनर्हे ॥ निर्जने ॥ गुहानिवासिनि ॥ गूहनम् गुह्यते वा । गुहू० । शंसिदु हीतिक्यप् ॥

गुह्यकः । पुं । देवयोनिविशेषे । कुबे रनिधिरक्षके मणिभद्रादौ ॥ गूह ति निधिं रक्षति । गुहू० । ण्वुल् । पृषोदरादित्वाद्यगागमः ॥ निधिं रक्ष न्ति ये यक्षास्ते स्युर्गुह्यकाः स्मृताः इति व्याडिः ॥ यद्वा । गुह्यं कुत्सितं कायति । कैशब्दे । आतइति कः ॥ गुह्यं गोपनी यं कं सुखं यस्य ति वा । अनयोः पक्ष योः शंसिदुहि गुहिभ्योवेतिकाशिको क्तःक्यप् ॥ गुंझा इति प्रसिद्धे पक्वान्ने । तस्यप्रकारः । समितां सर्पिषा भृष्टां सिताद्राक्षादिसम्भृताम् । एलालवङ्ग कर्पूरमरीचपरिवासिताम् ॥ क्षिप् त्वान्यसमितालम्बपुटे वेष्टय च्छते प चेत् । ततः खण्डे न्यसेत् पक्वे गुह्य को ऽय मुदाहृतः ॥ गुह्यको बृंहणो हृद्यो दृष्यः पित्तानिलापहः । मधु रो ऽतिगुरुः पाके किञ्चित् सन्धान कृत्सरः ॥

गुह्यकलोकः । पुं । पिशाचलोकादुप रि गन्धर्वलोकादधो वर्त्तमानेभुवने ॥

गुह्यकाली । स्त्री । देवीविशेषे ॥ ने पालस्थेतत्स्थाने ॥

गुह्यकेश्वरः । पुं । मनुष्यधर्मणि । कुबे रे ॥ गुह्यंकायन्तीतिगुह्यकाः । तेषा मीश्वरः ॥

गुह्यगुरुः । पुं । शिवे ॥

गुह्यदीपकः । पुं । खद्योते ॥

गुह्यनिष्यन्दः । पुं । मूत्रे ॥

गुह्यपुष्पः । पुं । अश्वत्थवृक्षे ॥

गुप्तभाषितम् । नं । मन्त्रे ॥ गुप्तवाक्ये ॥ गुप्तञ्चतत् भाषितञ्च ॥

गुप्तबीजः । पुं । भूतृणे ॥

गुप्ताष्टकम् । न । भारभूत्यादिषु ॥ ते च यथा । भारभूत्याषाढिर्डिण्डिका च कुरुक्षेत्रपुष्कराः । प्रभासनैमिषौ चेतिगुप्ताष्टकमिदंजले ॥ इति स्मृतेन्द्रसंहिता ॥

गूः । स्त्री । मले । विष्ठायाम् ॥ गच्छति । गम्लृ० । क्विप् । ऊङ्गमादीनामिति वार्त्तिकेन मलोपोऽकारस्य ऊङादेशः ॥

गूढम् । न । रहसि ॥ गुप्ते ॥ त्रि । अप्रकटे । गुप्ते । संवृते ॥ गहने । दुर्विवेचने ॥ गुह्यते स्म । गुहू० । क्तः । यस्यविभाषेतीडभावः ॥

गूढजः । पुं । गूढोत्पन्नपुत्रे ॥

गूढनीडः । पुं । खञ्जनखगे ॥

गूढपत्रः । पुं । करीरे ॥ अङ्कोठे ॥

गूढपथः । पुं । अन्तःकरणे ॥ गुप्तेवर्त्मनि ॥

गूढपात् । पुं । सर्पे ॥ गूढाः पादा अस्य । पृषोदरादिः ॥ यद्वा । गूढं पादयति । पदगतौ । णयन्तात् क्विप् ॥

गूढपादः । पुं । सर्पे ॥ गूढाः संवृताः पादा अस्य । पादस्य बा सर्पि विषये वे ग्रते वे च विंशती इत्यागमः ॥

गूढपुरुषः । पुं । प्रणिधौ । राज्ञांचरे ॥ गूढश्चासौ पुरुषश्च ॥

गूढपुष्पकः । पुं । बकुलपादपे ॥

गूढफलः । पुं । बदरे ॥

गूढमार्गः । पुं । भूमध्यमार्गे । सुरङ्गायाम् । सुरङ्ग इति भाषा ॥ गूढश्चासौमार्गश्च ॥

गूढमैथुनः । पुं । काके ॥ गूढं मैथुनमस्य ॥

गूढवर्चाः । पुं । दर्दुरे ॥ गूढं वर्चोस्य ॥

गूढवल्लिका । स्त्री । अङ्कोठवृक्षे ॥

गूढसाक्षी । त्रि । येोऽर्थिना गूढतया प्रत्यर्थिवचनं श्रावितः सः ॥ तथाच नारदः । अर्थिना स्वार्थसिद्धार्थं प्रत्यर्थिवचनं स्फुटम् । यः श्राव्यते तदा गूढो गूढसाक्षी स उच्यते । इति ॥

गूढाङ्गः । पुं । कच्छपे ॥

गूढाङ्घ्रिः । पुं । सर्पे ॥

गूढोत्पन्नः । पुं । पुत्रविशेषे ॥ यथा । उत्पद्यते गृहे यस्य नच ज्ञायेत कस्य सः । सगृहे गूढउत्पन्नस्तस्य स्याद्यस्यतल्पजः ॥

गूथ । पुं । न । मले । शकृति ॥ गूयते । गु ङ शब्दे गपुरीषोत्सर्गेबा । तिथपृष्ठगूथेतिसाधुः ॥

गूथकन्तः । पुं । शरभक्ष । क्षुद्रचूडे । गुये सालिक इति गौड भाषा प्रसि

द्वे खगे ॥

गूनः । त्रि । कृतपुरीषोत्सर्गे । इत्वे ॥ गूयते स्म । गु० । क्तः । दुग्वोर्दीर्घश्चेति नत्वम् ॥

गूरणम् । न । उद्यमे ॥

गूवाकः । पुं । क्रमुके । गुवाके ॥ गुवन्त्यनेन । गु० । पिना० साधुः ॥

गूषणा । स्त्री । मेचके । मयूरपिच्छचक्र ॥

गृञ्जनः । पुं । लसुसन इति प्रसिद्धे रशोनके ॥ रक्तलशुने ॥ इतिराजनिर्घण्टः ॥ न । विषदिग्धपशोर्मांसे ॥ सालगम इति प्रसिद्धे कन्दे । शिखिमूले । वर्त्तुले । यवनेष्टे ॥ गृञ्जनः पित्तजो ग्राही तीक्ष्णोष्णो रोगमाशनः । गन्धाकृतिरसैस्तुल्यः सूक्ष्मनालः पलाण्डुना ॥ गृञ्ज्यते भक्ष्यत्वेन कथ्यते रोगेषु । गृञ्जिशब्दे । कर्मणिल्युट् ॥

गृडीवः । पुं । लोपाके । पृथुशृगाले । बडा मोटा सिआल इतिभाषा ॥ इतिहेमचन्द्रः ॥

गृत्सः । पुं । कन्दर्पे ॥ गृध्यति । गृधुअभिकाङ्क्षायाम् । गृधिपण्योर्दकौचेति सः । धातोर्दन्तादेशः ॥

गृत्समदः । पुं । ऋषिविशेषे ॥

गृधिः । स्त्री । महदभिलापे ॥

गृधुः । पुं । कामदेवे ॥ गृध्यति । गृधु० । पृभिदिव्यधिगृधिधृषिभ्यः कु इति कुः ॥

गृध्नुः । त्रि । लुब्धे ॥ गर्द्धनशीलः । गृधु० । त्रसिगृधिधृषिक्षिपेः क्नुः । नेडुश्रि कृतीतीडूनिषेधः ॥

गृध्नुता । स्त्री । लुब्धत्वे । रागे । सङ्गे ॥

गृध्रः । पुं । दाक्षाय्ये । वज्रतुण्डे । परमांसभक्षणाभिकाङ्क्षिणिखगे । गीध इति भाषा ॥ आसन्नमृत्यो र्निपतन्ति गृध्रादयो मूर्ध्नि गृहोर्द्ध्वभागे ॥ त्रि । लुब्धके ॥ गृध्यति । गृधु० । सुसूधागृधिभ्यः क्रन् ॥

गृध्रकूटः । पुं । मगधदेशस्थसीमाशैले ॥

गृध्रनखी । स्त्री । कोलिवृक्षे । वदर्याम् ॥ कालियाकडा इति गौडभाषाप्रसिद्धे कुलिकवृक्षे ॥ हिंस्रायाम् । हींस इति भाषाप्रसिद्धे वृक्षे ॥

गृध्रपत्रा । स्त्री । धूम्रपत्रावृक्षे ॥

गृध्रराजः । पुं । जटायुपक्षिणि ॥

गृध्रसी । स्त्री । जङ्घसन्धौ वातरोगविशेषे ॥ ल० यथा । स्फिक्पायूरुकटिपृष्ठजानुजङ्घापदं क्रमात् । गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः ॥ वाता द्वातकफा त्तन्द्रागौरवाऽरोचकान्विता । इति ॥ गृध्रमपिस्यति । शोऽन्तकर्मणि । आतश्चोप कः गौरा:

दित्वात् ङीष् ॥

गृष्टिः । स्त्री । सकृत्प्रसूतायां गवि ॥ वराहकान्तायाम् ॥ बदरायामोषधौ ॥ काश्मर्याम् ॥ गृह्णाति । ग्रह उपादाने । क्तिच् । पृषोदरादिः ॥ सकृत्प्रसूतायाम् ॥ अतएव गृष्ट्याश्रुतप्यास्त्वेपि गृष्ट्यादिभ्यश्चेत्यत्र पुनर्ग्रहणं कृतम् ॥

गृहम् । न । इष्टकादिरचिते वासस्थाने । गेहे । उदवसिते । वेश्मनि । घर इति भाषा ॥ गृह्णाति धान्यादिकम् । ग्रह० । गेहेकः ॥ यद्वा । गृह्यते । गर्ह्यते । इगुपधेतिकः ॥ कलत्रे । भार्यायाम् । दारपरिग्रहलक्षणे श्रौतस्मार्त्तयोरन्यतराग्निनिषेविते सर्वकर्मसम्पादके त्रिवर्गकारणे ॥ न गृहं गृहमित्याहु र्गृहिणी गृहमुच्यते । तया हि सहितः सर्वान् पुरुषार्थान् समश्नुते ॥ नामनि ॥ भवने । राशौ ॥ चतुर्थभवने ॥ गृह्णाति पुरुषं यस्माद्गृहं तेन प्रकीर्त्तितम् ॥ अत्राहव्यासः । न गृहं बन्धनागारं बन्धनेन च कारणम् । मनसा यो विनिर्मुक्ता गृहस्थोपि विमुच्यत इति ॥ नहि जडं गृहं पुरुषं बध्नाति नचान्यद्बन्धने कारणमस्ति किन्तु मनस आसक्तिमात्रं कारणं तां विहाय संसारं कुर्वाणो मुच्यतएवेत्यर्थः ॥

गृहाः । पुंभूम्नि । कलत्रे । दारेषु ॥ तात्स्थ्यात् । भवतिहि तात्स्थ्यात् ताच्छब्द्यम् । मञ्चाः क्रोशन्तीत्यादौ मञ्चशब्देन पुरुषा अपिव्यपदिश्यन्ते । एवञ्च गृहशब्दो वेश्मनि मुख्यो दारेषु त्वौपचारिकः । अत्रेदमवधेयम् । गृहशब्दोयमर्द्धर्चादित्वादुभयलिङ्गः । तत्र नपुंसकलिङ्गोऽभिधेयवचनः । पुंल्लिङ्गस्तु बहुवचनान्तएवेति ॥

गृहकच्छपः । पुं । पेषणशिलायाम् ॥

गृहकन्या । स्त्री । घृतकुमार्य्याम् ॥

गृहकपोतः । पुं । प्रासादकुक्कुटे । भिल्लीकण्ठे । पारावते ॥

गृहकर्त्ता । पुं । धूसरेऽतिसूक्ष्मेचटके । धान्यभक्षणे ॥

गृहकारकः । पुं । घरामी राज इतिच प्रसिद्धे वर्णसङ्करजातिविशेषे ॥ यथा । प्रतिमाघटकादेव कन्यायां नापितस्यच । सूत्रकारस्य सम्भूतिः सोपानगृहकारकः इति पराशरपद्धतिः ॥

गृहकारी । पुं । कुम्हारी इतिभाषाप्रसिद्धे कीटे ॥

गृहकूलकः । पुं । चिचिण्डाख्ये शाके ॥

गृहगोधा । स्त्री । विशम्भरायाम् । प-

ल्लिकायाम् । छिपकली विस्तुया इति भाषा ॥

गृहगोधिका । स्त्री । मुषल्याम् । गृह गोधायाम् ॥ अल्पागोधा । अल्पार्थे कन् । गृहस्यगोधिका ॥

गृहगोलिका । स्त्री । पल्ल्याम् ॥

गृहजातः । पुं । दास्यामुत्पन्ने दासविशेषे ॥

गृहणी । स्त्री । काञ्जिके ॥

गृहतटी । स्त्री । वीथ्याम् ॥ इतिहारावली ॥

गृहद्रुमः । पुं । मेषशृङ्गीवृक्षे ॥

गृहधूपः । पुं । गेहधूपे ॥

गृहनाशनः । पुं । वनकपोते । चित्रकण्ठे । घुघुती पिण्डुकिया इतिचभाषा ॥

गृहनीडः । पुं । चटके ॥

गृहपङ्क्तिः । स्त्री । रक्षकजनावासपङ्क्तौ । जिसे अववारिक कहते ॥

गृहपतिः । पुं । गृहस्थे ॥ सत्रिणि । सदान्नदानकर्त्तरि गृहस्थे ॥ मन्त्रविशेषे ॥ धर्मे ॥ गृहस्यपतिः ॥ स्त्री । गृहपत्न्याम् ॥ विभाषासपूर्वस्येतिपाक्षिकोनत्वाभावः ॥

गृहपालः । पुं । शुनि ॥ गृहंपालयति । पालरक्षणे । कर्मण्यण् ॥

गृहपोतकः । पुं । वास्तौ । हवेली घर इति चभाषा ॥ इतिशब्दरत्नावली ॥

गृहप्रवेशः । पुं । गृहाभ्यन्तर्गमने ॥

गृहबभ्रुः । पुं । गेहनकुले ॥

गृहबलिप्रियः । पुं । बकपक्षिणि ॥

गृहबलिभुक् । पुं । चटके ॥ काके ॥ बके ॥

गृहभूमिः । स्त्री । वास्तौ । वेश्मभुवि ॥

गृहमणिः । पुं । दीपे ॥

गृहमाचिका । स्त्री । चर्मचट्याम् । अजिनपत्रायाम् । चाम्चिरया इति भाषा ॥

गृहमृगः । पुं । कुक्कुरे ॥

गृहमेधी । पुं । कृतदारपरिग्रहे । गृहस्थे ॥ गृहैर्दारैर्मेधते सङ्गच्छते । मेधृसङ्गमेच । सुप्यजाताविति णिनिः ॥

गृहमेधिनी । स्त्री । सात्त्विक्यांबुद्धौ ॥ गृहस्थपत्न्याम् ॥

गृहमेधीयम् । न । गृहमेध्ये ॥ गृहमेधो देवतास्य । द्यावापृथिवीतिछः ॥

गृहमेधीयः । पुं । गृहाश्रमविहितेकर्मादौ ॥

गृहमेध्यम् । न । गृहमेधीये ॥ गृहमेधो देवतास्य । द्यावापृथिवीतियत् ॥

गृहयाय्यः । पुं । गृहस्वामिनि ॥ गृहयते । गृहग्रहणे । श्रुदक्षिस्पृहिगृहिभ्य आय्यः ॥

गृहयालुः । पुं । ग्रहीतरि । ग्रहणशीले ॥ गृहयते तच्छीलः । गृह०चु० । स्पृहिगृहिपतीत्यालुच् । अयामन्तेतिणेरयादेशः ॥

गृहवाटिका । स्त्री । गृहान्तिककृतारामे ॥

गृहसंवेशकः । पुं । गृहसन्निवेशोपदेशके । वास्तुविद्योपजीविनि ॥

गृहस्थः । पुं । गृहिणि । गृहपतौ । ज्येष्ठाश्रमिणि । द्वितीयाश्रमिणि ॥ न्यायार्जितधन स्तत्त्व ज्ञाननिष्ठोऽतिथिप्रियः । श्राद्धकृत् सत्यवादी च गृहस्थोऽपिविमुच्यते ॥ गृहशब्दस्य दारवचनत्वात् कृतदारपरिग्रहोगृहस्थः । गृहेतिष्ठति । ष्ठा० । सुपिस्थइतिकः ॥

गृहस्थूणम् । न । गृहस्तम्भे ॥ गृहस्य स्थूणा ॥

गृहाक्षः । पुं । वातायने ॥

गृहागतः । पुं । अतिथौ ॥ त्रि । गेहमायाते ॥

गृहाधिपः । पुं । गृहस्थे ॥

गृहाम्लम् । न । काञ्जिके ॥

गृहायनिकः । पुं । गृहिणि ॥

गृहारामः । पुं । निष्कुटे । गृहोपवने ॥ गृहस्य आरामः ॥

गृहालिका । स्त्री । शकुनश्यायाम् । गृहगोधिकायाम् ॥

गृहावग्रहणी । स्त्री । देहल्याम् ॥ गृहमवगृह्यते ऽनया । ग्रहउपादाने । करणे ल्युट् ॥

गृहाश्रया । स्त्री । ताम्बूल्याम् । नागवल्ल्याम् । पानकी बेल इतिभाषा ॥

गृहाश्मा । पुं । पेषणशिलायाम् । सिल इतिभाषा ॥

गृहासक्तः । पुं । गृह्यके ॥ त्रि । गृहे आसक्तिविशिष्टे ॥

गृहिणी । स्त्री । भार्यायाम् ॥ इनिर्मत्वर्थीयः । ङीप् । गेहकर्मकुशलायाम् ॥

गृही । पुं । गृहस्थे ॥ गृहाः दाराः सन्त्यस्य । इनिः ॥

गृहीतः । त्रि । स्वीकृते ॥ ज्ञाते ॥ प्राप्ते ॥ धृते ॥ गृहीत इव केशेषुमृत्युना धर्ममाचरेत् ॥

गृहीतदिक् । त्रि । पलायिते । तिरोहिते ॥

गृहीतिः । स्त्री । ग्रहणे ॥

गृहीती । स्त्री । गृहीतवति ॥ गृहीतमनेन । इष्टादिभ्यश्चेति कर्त्तरि इनिः ॥

गृहेनर्दी । पुं । गेहेशूरे ॥

गृहेशः । पुं । गृहपतौ ॥

गृहोलिका । स्त्री । पल्ल्याम् ॥

गुह्यः । पुं । गुह्यासक्तमृगाण्डजयोः ॥ गुह्यते । गुह्॰ । पदास्वैरीतिक्यप् ॥ न । मलवर्त्मनि । गुदे ॥ ग्रन्थप्रभेदे । गुह्यसूचे ॥ त्रि । अस्वैरिणि ॥ पच्ये ॥ गुह्॰ । ऋदुपधाच्चाक्लृपिचृतेरितिक्यप् ॥ गृहेभवो वा । यत् ॥

गुह्यकः । पुं । छेके । गुह्यासक्तपक्षिमृगयोः ॥ त्रि । निघ्ने । आयत्ते ॥ क्यबन्तात् स्वार्थेऽनुकम्पायां वा कन् ॥

गुह्या । स्त्री । शाखापुरे । इतिमेदिनी । टाप् ॥

गेन्दुः । पुं । ⎫ कन्दुके । गेंद इतिभाषा ॥ गे गगने इन्दुरिव ॥ गे इन्दुरिव प्रतिकृतिर्वा । इवे प्रतिकृताविति कन् ॥ पृषोदरादित्वाद्दीर्घः ॥
गेन्दुकः । पुं । ⎬
गेन्दूकः । पुं । ⎭

गेयम् । न । गीते ॥ यथा । गेयं गीतानामसहस्रम् ॥ त्रि । गातव्ये ॥ गायने ॥ अर्हेकृत्यतृचश्चेति योग्यतायामचोयत् । ईद्यति । गुणः ॥ गायति । गैशब्दे । भव्यगेयेति कर्त्तरिवा यत् । गीयते इतिवा ॥

गेष्णः । पुं । पर्व्वणि ॥

गेष्णुः । पुं । गायने ॥ नटे ॥ गायति । गै॰ । गादाभ्यामिष्णुच् ॥ सामगानकर्त्तरि ॥

गेहम् । न । उदवसिते । गृहे ॥ गेन गणेशेन ईह्यते काम्यते । ईह॰ । कर्मणि घञ् ॥ गे गणेशो गन्धर्वो वा ईहः ईप्सितो यस्मिन् वा ॥

गेहधूपः । पुं । अपराजितधूपे ॥ यथा । मयूरपिच्छं निम्बस्यपत्राणि वृहतीफलम् । मरिचं हिङ्गु मांसी च वीजं कर्पाससम्भवम् ॥ छागरोमाऽहिनिर्मोको विष्ठा वैडालिकी तथा । गजदन्तश्च तच्चूर्णं किञ्चिद्घृतविमिश्रितम् ॥ गेहेषु धूपनं दत्तं सर्वान् वालग्रहान् जयेत् । पिशाचान् राक्षसान् हत्वा सर्वज्वरहरं भवेदिति ॥

गेही । पुं । गृहिणि ॥

गेहेनर्दी । पुं । कापुरुषे । पिण्डीशूरे ॥

गेहेशूरः । पुं । गेहेनर्द्दिनि ॥ इतिहेमचन्द्रः ॥

गैरिकम् । न । रक्तधातौ । गेरु इति भाषा ॥ गैरिकं रक्तधातुश्च गैरेयं गिरिजन्तथा । सुवर्णगैरिकन्त्वन्यत् ततो रक्ततरं हि तत् ॥ गैरिकद्वितयं स्निग्धं मधुरं तुवरं हिमम् । चक्षुष्यं दाहपित्तास्रकफहिक्काविषापहम् ॥ स्वर्णे ॥ गिरौ भवम् ॥ अध्यात्मादित्वाट्ठञ् ॥

गैरिकाक्षः । पुं । जलमधूकवृक्षे ॥

गैरी । स्त्री । लाङ्गलिकीवृक्षे ॥

गैरेयम् । न । शिलाजतुनि ॥ गिरौभ

षम्। नद्यादिभ्यश्चेतिढक् ॥

गौः। पुं। बलीवर्दे। अनडुहि ॥ स्वर्गे। रश्मौ॥ कुलिशे। वज्रे ॥ चन्द्रे ॥ सूर्ये ॥ गोमेधयज्ञे ॥ ऋषभनामौषधे ॥ स्त्री। सौरभेय्याम्। अर्जुन्याम्। उस्रायाम् ॥ गोमांसं गुरु सुस्निग्धं पित्तश्लेष्मविवर्द्धनम्। बृंहणं वातहृद्बल्य मपथ्यं पीनसप्रणुत् ॥ चक्षुषि ॥ वाणे ॥ दिशि ॥ मातरि ॥वाचि ॥ भूमौ ॥ वृषराशौ ॥ नवाङ्के ॥ गच्छति गम्यते वा ऽनेन वा। गम्लृ०। गमेर्डोः ॥

गावः। पुंभूम्नि। उदके। जले ॥

गोकण्टकः। पुं। गोक्षुरके ॥ स्थपुटे। विषमोन्नते ॥गोखुरैः स्थपुटीकृते इति हेमचन्द्रः ॥ गवां खुरे ॥ विकण्टकवृक्षे ॥ गोर्धेनोःपृथिव्यावा कण्टकः ॥

गोकर्णः। पुं। अश्वतरे ॥ सर्पे ॥ गौः कर्णोयस्य। गोशब्दस्य चक्षुःपरत्वात् गोकर्णःसर्पः ॥ सारङ्गे। मृगविशेषे ॥ गोरिवकर्णावस्य॥ गणदेवताविशेषे ॥ अङ्गुष्ठानामिकोन्माने। अनामिकायुक्तविस्तृताङ्गुष्ठे ॥ गोः कर्णइव॥ शैवे सिद्धक्षेत्रविशेषे ॥ यथा। महालक्ष्मीगोकर्णे शिवभद्राचर्चिकाण्डकेत्यागमः। गोकर्णे भद्रकर्णीत्यादिति देवीगीता ॥

गोकर्णी। स्त्री। मूर्वालतायाम्॥ गोः कर्णइव। गौः कर्णोयस्या वा। पाककर्णेतिङीष् ॥

गोकिराटिका। स्त्री। विट्सारिकायाम् ॥

गोकिराटी। स्त्री। सारिकाख्यखगे॥

गोकिलः। पुं। मुसले ॥ हले ॥

गोकीलः। पुं। मुषले ॥ लाङ्गले ॥

गोकुलम्। न। गोसमूहे। गोधने ॥ गोस्थाने ॥ यथा। गोकुले कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः। अमीमांस्यानि शौचानि स्त्रीषुबालातुरेषु च ॥ व्रजेप्रसिद्धेनन्दावासे ॥ गवां कुलम् ॥

गोकुलिकः। पुं। केकरे। बधिरे ॥ पङ्कस्थगव्युपेक्षके ॥

गोकृतम्। न। गोमये ॥ त्रि। गोभिरा चरिते ॥

गोक्षुरः। पुं। गोक्षुरके॥ गोक्षुरःशीतलः स्वादुर्बलकृद् वस्तिशोधनः। मधुरो दीपनो वृष्यः पुष्टिद श्चाश्मरीहरः ॥ प्रमेहश्वासकाशार्शः कृच्छ्रहृद्रोगवातनुत् ॥ क्षुरति। क्षुर विलेखने। इगुपधज्ञाप्रीकिरः कः। गौरिवक्षुरः ॥

गोक्षुरकः। पुं। गोक्षुर इतिभाषाप्र

सिद्धार्थापत्यकृषायाम् । स्वादुकण्टके ॥ गौर्गौर्वा क्षुरः ॥ स्वार्थे कन् ॥

गोक्षुरः । पुं । गोक्षुरे ॥ न । गवांशफे ॥

गोगोयुगम् । न । गोद्वये ॥ द्वौ गावौ । द्वित्वे गोयुगम् ॥

गोगोष्ठम् । न । गवांस्थाने ॥ गोष्ठजादयः स्थानादिषु पशुनामभ्यः ॥

गोग्रन्थिः । पुं । करीषे ॥ गोष्ठे ॥ गोजिह्विकौषधौ ॥

गोघृतम् । न । गव्येघृते ॥ वर्षजले ॥

गोघ्नः । पुं । अतिथौ ॥ त्रि । गोघातके ॥

गोचरः । पुं । इन्द्रियार्थे । रूपशब्दगन्धरसस्पर्शस्वरूपे ॥ प्रयुज्यतेहि । उपादानगोचरं ज्ञानमिति ॥ देशे । गवांगम्यस्थाने । वने ॥ तथाचभारविः । उपारताः पश्चिमरात्रिगोचरादिति ॥ जन्मराश्यवधिग्रहचक्रान्तराराशिषु ॥ गावइन्द्रियाणि चरन्त्यस्मिन् । गोचरसञ्चरेतिनिपातितः ॥ त्रि । गोगामिनि ॥

गोचरफलम् । न । जन्मराशेः सकाशात् ग्रहाणां सञ्चारवशेन शुभाशुभफले ॥ गोचरशुद्धिर्यथा । केतूपप्लवभौमजमन्दगतयः षष्ठत्रिसंस्थाः शुभाश्चन्द्रार्कावपि तौच तौच दशमौ चन्द्रः पुनः सप्तमः । जीवः सप्तनवद्विपञ्चमगतो युग्मेषु सोमात्मजः शुक्रः षड्दशसप्तवर्ज्जमितरे सर्वेऽप्युपान्ते शुभा इति ॥

गोचर्म्म । न । गोत्वचि ॥ परिमाणविशेषे ॥ सप्तहस्तेन दण्डेन त्रिंशद्दण्डैर्निवर्त्तनम् । दशतान्येव गोचर्म दत्त्वा स्वर्गे महीयतइति बृहस्पतिः ॥ यत् किञ्चित् कुरुते पापं ज्ञानतोऽज्ञानतोऽपि वा । अपि गोचर्ममात्रेण भूमिदानेन शुध्यतीत्याचारे मिताक्षरा ॥

गोची । स्त्री । चिमाख्यमत्स्याम् ॥ गावः श्रुतिरूपाः श्रुतिस्मृतीतिहासपुराणादिसम्बन्धिनी मेधादेविषयिणी वाचः अञ्चति पूजयति यद्वा गच्छति प्राप्नोति तात्पर्यरूपेण शृणोति । अञ्चु० । क्विप् । ङीप् ॥

गोछालः । पुं । भूकदम्बे । कोकशिमा इति गौडभाषा ॥

गोजरः । पुं । वृद्धबलीवर्द्दे ॥

गोजलम् । न । गोमूत्रे ॥

गोजा । स्त्री । गोलोमिकायाम् ॥ पृथिव्यां व्रीहियवादिरूपेणोत्पन्नयाम् ॥ गोषु जायते । जनी० । जनसनेति विट् । विड्वनोरित्यात्वम् ॥

गोजागरिकः । पुं । भक्ष्यकारके ॥ न । मङ्गले ॥

गोजापर्णी । स्त्री । क्षुद्रक्षुपविशेषे । दुग्धफेनीवृक्षे । अश्वकेतुघन्याम् ॥

गोजिह्वा । स्त्री । दार्विकायाम् । गोजियालता दारियाशाक इतिवङ्गभाषा ॥ गोजिह्वा वातला शीता ग्राहिणी कफपित्तनुत् । हृद्याप्रमेहकासास्त्रश्वास्वरहरी लघुः ॥ कोमला तुवरा तिक्ता स्वादुपाकरसा स्मृता ॥ पत्रशाकस्तुगुणाः । गोजिह्वा कुष्ठमेहास्त्रकृच्छ्रज्वरहरीलघुः ॥ गोजिह्वेव ॥

गोजिह्विका । स्त्री । गोजिह्वालतायाम् ॥ गोजिह्वेव । कन् ॥

गोडिम्ब: । पुं । मृगालजम्वाम् ॥

गोडुम्ब: । पुं । शीर्षडम्बे । तरमूज इति भाषा ॥

गोडुम्बा । स्त्री । गवादन्याम् । चित्राख्यकर्कव्याम् । गोमुक इतिगौडभाषा ॥ गांभुवं तुम्बति । तुविअर्द्दने । मूलकः । पृषोदरादिः ॥

गोडुम्बिका । स्त्री । गोडुम्बायाम् ॥

गोणी । स्त्री । धान्याधारे गूण इतिभाषाप्रसिद्धे आवपने ॥ गोणशब्दादावपनेर्थे जानपदकुण्डगोणेतिङीष् ॥ छिद्रवस्त्रे । आणयाम् ॥ धान्यमानभेदे ॥ द्रिशूर्पोगोणयुदाहृता तामेव भारंजानीयादित्युक्तः ॥ शेणीपरिमाणमिति वैद्यकपरिभाषा ॥

गोणीतरी । स्त्री । ह्रस्वगोणयाम् ॥ ह्रस्वागोणी । कासूगोणीभ्यांष्टरच् । षित्त्वान् ङीष् ॥

गोण्ड: । पुं । पामरजातौ ॥ वृद्धनाभौ । नाभिगुडके ॥ त्रि । दृढनाभिमति ॥ गोः अण्ड इव ॥

गोतम: । पुं । ब्रह्मण: पुत्रे गौतममुनौ ॥

गोतमान्वय: । पुं । शाक्यमुनौ ॥

गोतीर्थम् । न । गोष्ठे ॥

गोत्र: । पुं । अद्रौ । पर्वते ॥ न । आख्यायाम् । नामनि ॥ सम्भावनीयबोधे ॥ कानने ॥ क्षेत्रे ॥ वर्त्मनि ॥ छत्रे ॥ सजातीयगणे ॥ पूर्वाचार्याणांमतेनाऽपत्ये ॥ कुले । अभिजने । ऋषिशब्दवाच्ये आदिपुरुषे स्वसम्मानसंज्ञाकारिणि ब्राह्मणरूपे ॥ क्षत्रियवैश्ययो रुपदिष्टातिदिष्टगोत्रम् । शूद्रस्यातिदिष्टातिदिष्टगोत्रम् । यथा । न समानगोत्रां भार्यां विन्देतेत्यनेन शूद्रस्यापि सगोत्रा कथं न निषिध्यते इतिचेत् अत्रोपदिष्टातिदिष्टगोत्रस्यैवनिषेधो नत्वतिदिष्टातिदिष्टशूद्रगोत्रादेरितिनिर्णय: ॥ क्षत्रियवैश्यशूद्राणा मतिदिष्टातिदिष्टगोत्रप्रवरम् अतएवैतेषांपुरोहितगोत्रप्रवरमित्यर्थ: । तथाचाग्निपुराणे

वर्णसङ्करोपाख्याने । क्षत्रियवैश्यशूद्राणां गोत्रञ्च प्रवरादिकम् । तथान्यवर्णसङ्कराणां येषां विप्राश्च याजका इति ॥ गोत्राणितु चतुर्विंशतिः । तथाचमनुः । शाण्डिल्यः काश्यपश्चैव वात्स्यः सावर्णक स्तथा । भरद्वाजो गौतमश्च सौकालीन स्तथापरः ॥ कल्किष श्चाग्निवेश्यश्च कृष्णात्रेयवशिष्ठकौ । विश्वामित्रः कुशिकश्च कौशिक श्चतथापरः ॥ घृतकौशिकमौद्गल्यौ आलम्यानः पराशरः । सौपायन स्तथाऽत्रिश्च वासुकी रोहितस्तथा । वैयाघ्रपद्यकश्चैव जामदग्न्य स्तथापरः । चतुर्विंशति गोत्राणां कथितापूर्वपण्डितैः ॥ अपिचमनुः । जमदग्नि भरद्वाजो विश्वामित्रात्रिगौतमाः । वशिष्ठकाश्यपागस्त्या मु-नयो गोत्रकारिणः ॥ एतेषां यान्यपत्यानि तानिगोत्राणिमन्वते- । एतदुपलक्षण मन्येषामपि दर्शनात् । तथाच । सौकालीनकमौद्गल्यौ पराशरबृहस्पती । काञ्चनोविष्णुकौशिक्यौ कात्यायनात्रेयकावकाः ॥ कृष्णात्रेयः साङ्कृतिश्च कौ-ण्डिन्यो गर्गसंज्ञकः । आङ्गिरसइति ख्यातः अनाहकाख्यसंज्ञितः ॥ अथ जैमिनिरुद्दालाख्याः शाण्डिल्यो वात्स्य



एवच । सावर्णोलम्यानश्चैयाघ्रपद्या-श्च घृतकौशिकः ॥ शक्तिः कात्यायनश्चैव वासुकी गौतम स्तथा । शुनकः सौपायनश्च मुनयो गोत्रकारिणः ॥ एतेषां यान्यपत्यानि तानि गोत्रा-णि मन्वते । सर्वेद्विजाश्चारिंशद्गोत्राः ॥ इतिधनञ्जयकृतधर्मप्रदीपः ॥ गूयते शब्द्यते स्वसम्मानप्रभवोऽनेन । गुङ् शब्दे । ष्ट्रन् । गुधृवीपचीत्यादिनात्रो वा ॥ गां त्रायते वा । त्रैङ्पालने । आतोनुपसर्गे इति कः ॥

गोत्रजः । त्रि । गोत्रोत्पन्ने ॥ सतु जन्मनामस्मृतिपर्य्यन्तसमानोदकभावात् पश्चाद्भवति ॥

गोत्रभित् । पुं । इन्द्रे । शक्रे ॥ गोत्रान् गिरीन् भिनत्ति । भिदिर् ० । सत् सूद्विषेति भिदेः क्विप् ॥

गोत्रवृक्षः । पुं । धन्वनवृक्षे ॥

गोत्रसंप्लवः । पुं । पक्षिविशेषे ॥

गोत्रस्खलनम् । न । अन्यस्त्रीनाम ग्रहणे ॥ यथा । गोत्रस्खलने भ्रान्तिं मानिनि जानीहि केवलां मेऽच । व्याख्यानतो विशेषप्रतिपत्तिः पाणिनीय-इवेति ॥

गोत्रा । स्त्री । कौ । पृथिव्याम् ॥ गोत्राः शैलाःसन्त्यस्याम् । अर्शआद्यच् ॥ गाः जलानि त्रायते वा । त्रैङ् ० कः ।

टाप् ॥ गङ्गायाम् । गवांगणे ॥ गवां समूहः । इतिचकव्यचश्चेति चः ॥
गोदः । पुं । मस्तिष्के ॥ त्रि । गोप्रदे ॥ गांददाति । डुदाञ्० । आतदतिकः ॥
गोदन्तम् । न । नटमण्डने । हरिताले ॥ पुं । गोदन्ते ॥
गोदा । स्त्री । गोदावर्यां नद्याम् ॥
गोदानम् । न । व्रतविशेषे । केशान्ते ॥ गावःकेशाः दीयन्तेखण्ड्यंते ऽस्मिन् । डुदाञ्० । कर्मणि ल्युट् ॥
गोदारणम् । न । हले ॥ कुद्दाले ॥ गां भूमिं दारयति । दृविदारणे । ल्युट् ॥ गौ र्भूमिर्दार्यते ऽनेन । करणेल्युड्वा ॥
गोदावरी । स्त्री । नदीविशेषे । गौतमसङ्गमायाम् । ब्रह्माद्रिजातायाम् ॥
गोदुग्धम् । न । गोः क्षीरे ॥ अस्यगुणाः । गव्यं दुग्धं विशेषेण मधुरं रसपाकयोः । शीतलं स्तन्यकृत् स्निग्धं वातपित्तास्रनाशनम् ॥ दोषधातुमलस्रोतः किञ्चित् क्लेदकरं गुरु । जरासमस्तरोगाणां शान्तिकृत् सेवितं सदा ॥ * ॥ कृष्णाया गोर्भवं दुग्धं वातहारिगुणाधिकम् । पीताया हरते पित्तं तथा वात हरं भवेत् ॥ श्लेष्मलं गुरु शुक्लाया रक्ताचित्राच वातहृत् । वाखवत्सविवत्सानां गवां दुग्धं त्रिदोषकृत् ॥ वत्कयिण्या स्त्रिदोषघ्नं तर्पणं बलकृत् पयः । जाङ्गलानूपशैलेषु चरन्तीनां यथोत्तरम् । पयो गुरुतरं स्नेहो यथाहारं प्रवर्त्तते ॥ खल्पान्नभक्षणाज्जातं क्षीरं गुरु कफप्रदम् । तत्तु वल्यं परंवृष्यं स्वस्थानां गुणदायकम् ॥ पलालतृणकार्पासबीजजं रोगिणे हितम् ॥ * ॥ अपिचाहरात्रमिश्रेषु । गवां प्रत्यूषसि क्षीरं गुरुविष्टम्भि दुर्जरम् । तस्मा दभ्युदिते सूर्ये याम यामाईमेववा ॥ समुत्तार्य पयोग्राह्यं तत् पथ्यं दीपनं लघु । विवत्सावालवत्सानां पयो दोषलमीरितम् ॥ अस्तं वत्सैकवर्णायाश्च वर्णीकृष्णायो रपि । इत्यादा आषपर्णादा जर्द्धशृङ्गी च या भवेत् ॥ तासां गवां हितं क्षीरं घृतं वा ऽमृतमेव वा । गवां सितानां वातघ्नं कृष्णानां पित्तनाशनम् ॥ श्लेष्मघ्नं रक्तवर्णानां त्रीन् हन्ति कपिलापयः ॥ इति ॥
गोदुग्धदा । स्त्री । चणिकातृणे । सुनीलायाम् ॥
गोधुक् । पुं । गोपे । गोदोग्धरि ॥ गां दोग्धि । दुह प्रपूरणे । सत्सूद्विषेति क्विप् ॥

गोदुह: । पुं । गोदुहि । गोपे ॥ गां दोग्धि । दुह० । मू० क: ॥

गोदोहनम् । न । गवां दोहनस्थाने ॥ गावोदुह्यन्ते ऽस्मिन् । ल्युट् ॥ काल विशेषे । मुहूर्त्ता ऽष्टमभागे ॥ यथा। आचम्य च ततः कुर्यात् प्राज्ञो द्वारावलोकनम् । मुहूर्त्तस्याष्टमं भागमुदी क्ष्योऽप्यतिथिर्भवेत् इति ॥

गोदोहनी । स्त्री । गोदोहनपात्रे । पात्र्याम् ॥ गौर्दुह्यते यस्याम् । दुहेः करणाधिकरणयोश्चेति ल्युट् । ङीप् ॥

गोद्रव: । पुं । गोमूत्रे ॥

गोधन: । पुं । स्थूलाग्रवाणे । सुक्का इति भाषा ॥ इति हरिवंश: ॥ न । गोसमूहे । गोकुले ॥ गवांधनं समूह: ॥

गोधा । स्त्री । तलायाम् । ज्याघातवारणे । धनुर्गुणाघातवारणाय प्रकोष्ठतआवद्धायां चर्मपट्याम् ॥ निहाकायाम् । गोधिकायाम् । गोह इति भाषा ॥ अस्या मांसपाकविधि: । गोधा च्छोण्याजले भूय: क्षालितां खण्डश: कृताम् । स्विन्नाञ्च तक्रतोयाभ्यां क्षालितां सूक्ष्मखण्डिताम् ॥ तलये द्वेसवाराद्यै: प्रलेह्यो वा विधानत: ॥ विपाके मधुरा गोधा वातपित्तप्रशामिनी । कषाया कटुका प्रोक्ता कफघ्नी बलवर्द्धनी ॥ सा तु स्थलज जलजभेदाद्द्विविधेति व्याख्यातार: ॥ गुध्यते वाह्यर्यया । गुधपरिवेष्टने । हलश्चेतिघञ् ॥

गोधापदिका । स्त्री । गोधापदीलतायाम् । गोयालिया इति गौड भाषा ॥

गोधापदी । स्त्री । मुषलायाम् । गोधापदिकायाम् ॥ गोधा इवपादोमूलमस्या: । कुम्भपदीषुचेति साधु: ॥

गोधास्कन्ध: । पुं । विट्खदिरे ॥

गोधि: । पुं । ललाटे ॥ गोधिकायम् ॥ गुध्यते । गुध० । इन् ॥ गावो नेत्रेधीयन्ते यस्मिन् । कर्मण्यधिकरणेचेति किर्वा ॥

गोधिका । स्त्री । गोधायाम् । निहाकायाम् ॥ गोहीति प्रसिद्धेजलचरे ॥ गुध्यति । गुध० । ण्वुल् ॥

गोधिकापुत्र: । पुं । गोधाशावके । गौ: धेये । सर्पाद्गोधायामुत्पन्ने चन्दनगोह इति प्रसिद्धे जन्तुविशेषे ॥ गुध्यति । गुध० । ण्वुल् । गोधिकाया: पुत्र: ॥

गोधिनी । स्त्री । वृश्चिकभेदे । चविकायाम् ॥

गोधुम: । पुं । गोधूमे ॥ इति शब्दचन्द्रिका ॥

गोधूम: । पुं । नागरङ्गे ॥ ओषधीविशेषे ॥ गीहूं इति प्रसिद्धे व्रीहिविशे

षे । रसाले । सुमने ॥ गोधूमः सुमनोऽपिस्यात् त्रिविधः सच कीर्त्तितः । महागोधूम इत्याख्यः पश्चाद्देशात् समागतः ॥ मधूली तु ततः किञ्चिदल्पा मध्यदेशजा । निःशूको दीर्घगोधूमः क्वचिन्नन्दीमुखाभिधः ॥ गोधूमो मधुरः शीतो वातपित्तहरो गुरुः । कफशुक्रप्रदो बल्यः स्निग्धः सन्धानकृत् सरः ॥ जीवनो बृंहणो वर्ण्यो रुच्यो वीर्य्यस्थिरत्वकृत् । कफप्रदो नवीनो नचपुराणः । पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभुगिति वाग्भटेनवसन्ते गृहीतत्वात् ॥ मधूली शीतला स्निग्धा पित्तघ्नी मधुरा लघुः । शुक्रला बृंहणी पथ्या तद्वन्नन्दीमुखा स्मृता ॥ गुध्यति गुध्यते वा । गुध० । गुधेरूमः ॥

गोधूमसम्भवम् । न । काञ्जिकप्रभेदे । सौवीरे ॥

गोधूमसारः । पुं । सुमनस्य सारांशे । सीरा इति सत्इतिचख्याते ॥ तद्विधिर्यथा । निस्तुषान् गोधूमानुदूखले कण्डयित्वा सायङ्काले मृत्तिकादिपात्रे जले मग्नङ् कारयित्वा परदिने प्रभातसमये उपरिस्थजलं क्रमेण दूरीकृत्वा ऽधस्थंसार मातपे शुष्कं कृत्वा पात्रान्तरे स्थापयेदिति पाक राजेश्वरः ॥

गोधूमी । स्त्री । गोलोमिकायाम् । गोधूमा इति पायरी इतिचगौडभाषा प्रसिद्धे क्षुद्रक्षुप विशेषे ॥

गोधूलिः । पुं । स्त्री । समयविशेषे ॥ यथा । सन्ध्यातपाक्रान्तपश्चिमदिग्विभागे व्योम्नि स्फुरद्विरलतारकसन्निवेशे । रुद्धे गवां खुरपुटोत्क्षिप्तै रजोभिर्गोधूलिरेष कथितो भृगुजेन योगः ॥ अपिच । यावत्सिन्दूरवर्णं गगनतलगतं भानुबिम्बं च नास्तं यावन्नो दिक्षु शान्तिं व्रजति खुरपुटैरुद्धतो रेणुसङ्घः । तावन्नैवास्तिदोषः प्रभवतिनच सा क्रूरदृष्टि प्रेक्षायां यात्रायां वा विवाहे सकलशुभकरी सर्वकार्य्यस्य सिद्धिः ॥ सा त्रिविधेति दीपिका । यथा । गोधूलिं त्रिविधां वदन्ति मुनयो नारीविवाहादिके हेमन्ते शिशिरे प्रयाति मृदुतां पिण्डीकृते भास्करे । ग्रीष्मे ऽर्द्धास्तमिते वसन्तसमये भानौ गते दृश्यतां सूर्य्ये चास्तमुपागते च नियतं वर्षाशरत्कालयोः ॥ हेमन्तशिशिरयोर्मृदुता प्राप्तपिण्डीकृतरविकालः । ग्रीष्मे ऽर्द्धास्तरविकालः । वर्षाशरद्वसन्तेष्व ऽस्तगतरविकाल इत्यर्थः ॥

गोनन्दी । स्त्री । सारसखगस्त्रियाम् ॥

गोनर्द: । पुं । सारसखगे ॥ पर्वतविशेषे ॥ न । कैवर्त्तीमुस्तके ॥ गांजलं नर्दयति । नर्द शब्दे । कर्मण्यण् ॥

गोनर्दीय: । पुं । पतञ्जलिमुनौ । गोनर्दे ॥ गोनर्दभव: । वृद्धाच्छ: ॥

गोनस: । पुं । सर्पविशेषे । तिलित्से । मण्डलीवोडे ॥ गोरिव नासिका अस्य । अच् नासिकाया इत्यच् नसादेशश्च ॥ वैक्रान्तमणौ ॥

गोनाथ: । पुं । अनडुहि ॥

गोनाय: । पुं । गोपाले ॥ गांनयति । णीञ् प्रापणे । कर्मण्यण् ॥

गोनास: । पुं । गोनसे ॥ गोरिव नासा यस्य ॥ न । वैक्रान्तमणौ ॥

गोनिष्यन्द: । पुं । गोमूत्रे ॥

गोप: । पुं । गुवाल इति भाषाप्रसिद्धे सङ्करजातिविशेषे । आभीरे । वल्लवे ॥ मणिवन्र्यां तन्त्रवायात् गोपजाते श्च सम्भव: इति पराशरपद्धति: ॥ गोष्ठाध्यक्षे ॥ भूपतौ ॥ ग्रामौघाधिकृते ॥ बोले ॥ त्रि । रक्षके । उपकारके ॥ गोपायति । गुपूरक्षणे । आयादय आर्द्धधातुकेवा । अच् ॥ गांपातिवा । पारक्षणे । आतोनुपेतिक: ॥ गोर्जलात् पातिवा । पा० । सुपीतिक: ॥

गोपक: । पुं । गोपशब्दार्थे ॥ स्वार्थेक: ॥

गोपकन्या । स्त्री । आभीरसुतायाम् ॥ शारिवौषधौ ॥

गोपघोण्टा । स्त्री । हस्तिकोलौ । बदरीच्छदायाम् ॥ बदरीसदृशाकारो वृक्ष: सूक्ष्मफलो भवेत् । अटव्यामेवसा घोण्टा गोपघोण्टेतिचोच्यते ॥ विकङ्कतवृक्षे ॥

गोपति: । पुं । शिवे । शम्भौ ॥ षण्डे । साँड इति भाषाप्रसिद्धे वृषे ॥ नृपे ॥ भास्करे ॥ विट्शाधिपे ॥ ऋषभनामौषधौ ॥ गवांपति: ॥ श्रीकृष्णे ॥ गवांपालनात् । गौर्मही तस्या: पतिर्वा ॥

गोपदल: ।·पुं । गुवाके ॥

गोपनम् । न । अपह्नवे ॥ गोपनाक्षीयते सत्यं न गुप्तिरक्षतं विना ॥ रक्षायाम् ॥ तेजपात इति भाषाप्रसिद्धे तमालपत्रे ॥

गोपनीय: । त्रि । गोपितव्ये । गोप्ये ॥

गोपभद्रम् । न । शालूके ॥

गोपभद्रा । स्त्री । काश्मर्याम् ॥

गोपभद्रिका । स्त्री । गम्भार्याम् ॥

गोपवधू: । स्त्री । शारिवायाम् ॥ गोपाङ्गनायाम् ॥ गोपीएववधू: । स्त्रिया: पुंवद्भिस्यादिनापुंवद्भाव: ॥

गोपरस: । पुं । बोले । गन्धरसे ॥ गो

पे उत्पलौ रसोष्ठ ॥

गोपवल्ली । स्त्री । मूर्वायाम् ॥ सारिवायाम् ॥ श्यामालतिकायाम् ॥

गोपा । स्त्री । गोपालिकायाम् ॥ श्यामालतायाम् ॥ गोपायति । गुपू० । पचाद्यजन्तात् अजादित्वाट्टापू इति केचित् ॥ गा:पाति । पारक्षणे । आतोनुपसर्गे इति कप्रत्ये । बाल कृपन्यायेन आतोमनिन् क्वनिब्वनिपश्चेति चेन विचि अइन्तलाभावा द्वार्द्विवेरभावे गोपा: विन्वपादिदितिबोध्यम् ॥

गोपानसी । स्त्री । छादनान्तकुटावक्रि । वडभ्याम् । कुड्येषु छादनार्थं दत्ते वक्रकाष्ठे ॥ छादनाधारे । पटलाधारवंशपञ्जरे ॥ गोपायति । गुपू० । बाहुलकात् नसट् प्रत्यय: । कल्लोपय लोपौ ॥ गवां गोभिर्वा पानम् किरणानां ग्रहणम् किरणैर्वा शोषणम् । तत् स्यति निवर्त्तयति । षोन्तकर्मणि । आतोनुपेतिक: । गौ० ङी ॥ घ्

गोपायित: । त्रि । रक्षिते ॥ गोपाय्यते स्म । गुपू० । क्त: । आयादयआर्द्धधातुकेवा ॥

गोपाल: । पुं । नृपे । भूपे ॥ गोपे । गवां पालके ॥ ईशे ॥ श्रीकृष्णे ॥ तद्ध्यानं यथा । अव्याद्व्याकोषनीलाम्बु-

अवपि रदयाम्भोजनेत्रो ऽम्बुजस्थो बालो जङ्घाकटीरस्थलकलितरणत्किङ्किणीको मुकुन्द: । दोर्भ्यां हैयङ्गवीनं दधद् ऽतिविमलं पायसं विश्ववन्द्यो गोगोपीगोपवीतो रुरुनखविलसत्कण्ठभूष श्चिरंव इतितन्त्रसार: ॥ सर्वस्य जगत: पालनात् । विष्णौ ॥ गां भूमिं वेदं तन्मूलं यज्ञादिकं वा । पा॰रक्षणे । मा:पालय तिवा । पा॰रक्षणे । कर्मण्यण् ॥ वृगणे । मध्यमुरौ । ऽ । ॥

गोपालक: । पुं । शिवे ॥ श्रीकृष्णे ॥ गवांपालके ॥ गोपालएव । स्वार्थेकन् ॥

गोपालकर्कटी । स्त्री । ग्वालककाकडी इति प्रसिद्धे कर्कटीप्रभेदे । वृहद्वैरौ । वृहच्चिर्भिटायाम् ॥

गोपालिका । स्त्री । गोपालकस्त्रियाम् ॥ अत्रपुंयोगलक्षणोङीषुप्राप्त: पालकान्तान्नेति निषिध्यते ॥ कीटविशेषे । मत्याभीरौ ॥ सारिवायां गोपयौ ॥

गोपाली । स्त्री । गोपालकपत्न्याम् ॥ गोरक्ष्याम् ॥ गोप्याम् ॥ गोपाली: करतालीनर्त्तनप्राली पुनातुवनमाली ॥

गोपाष्टमी । स्त्री । गोष्ठाष्टम्याम् ॥ यथा । शुक्लाष्टमीकार्त्तिकेतु स्मृता गोपाष्ट

मी बुधैः । तद्दिने वासुदेवोऽभूद् गोपः पूर्वन्तु वत्सपः ॥ तत्र कुर्याद् गवां पूजां गोग्रासं गोप्रदक्षिणम् । गवानुगमनं कार्यं सर्वान् कामानभीप्सता ॥

गोपिका । स्त्री । गोपस्त्र्याम् ॥ गोपायति । गुपू० । ण्वुल् ॥ गोप्याम् ॥

गोपित्तम् । न । गोरोचनायाम् ॥

गोपिनी । स्त्री । श्यामालतायाम् ॥

गोपी । स्त्री । गोपस्त्रनार्याम् ॥ गोपस्य स्त्रीत्यर्थे पुंयोगादाख्यायामिति ङीष् ॥ शारिवायाम् ॥ रक्तिकायाम् ॥ रक्षिकायाम् । मूलप्रकृतौ ॥ गोपायति । गुपू० । आयाभावे । पचाद्यच् । गौरादिङीष्० ॥

गोपीथः । पुं । न । रक्षणे ॥ न । तीर्थे ॥ जलद्रोण्याम् ॥ गावः पिबन्त्यस्मिन् । पा० । निशीथगोपीथावगथा इति थक् ॥ गोपीथः सोमपानमिति- वेदभाष्यम् ॥

गोपुच्छः । पुं । हारविशेषे ॥ गोलाङ्गूले ॥ गोलाङ्गूलवानरे ॥

गोपुटा । स्त्री । स्थूलैलायाम् ॥

गोपुटिकम् । न । शिववृषस्य मस्तके ॥

गोपुरम् । न । पुरद्वारे ॥ द्वारमात्रे ॥ कैवर्त्तीमुस्तके ॥ गां जलं पिपर्त्ति । पृ पालनपूरणयोः । मू० कः ॥ गौर्जलं पुरमस्येतिवा ॥ यद्वा । पुरति । पुर अग्रगमने । इगुपधेति कः । गवां पुरम् ॥ गोपायति वा । गुपू० । बाहुलकादुरच् ॥ यद्वा । पोखते । पुल महत्त्वे । इगुपधत्वात् कः । रलयोरभेदः गोभिः पुरम् ॥ गाः पुरति वा । पुर० । मू० कोवा ॥

गोपुरकः । पुं । कुन्दुरुके । बहुगन्धे ॥

गोपुरीषम् । न । गोमये ॥

गोपेन्द्रः । पुं । विष्णौ ॥ गोपराजे ॥

गोपेशः । पुं । शाक्यमुनौ ॥ गोपराजे ॥ नन्दघोषे ॥

गोप्ता । त्रि । रक्षके ॥ गोपायति । गुपू० । तृच ॥ श्रीकृष्णे ॥ सहिस्त्वमायया स्वात्मानं संवृणोति ॥

गोप्त्री । स्त्री । गोपिकायाम् ॥ रक्षिकायाम् ॥

गोप्यः । पुं । दासीपुत्रे ॥ त्रि । रक्षणीये ॥ गुह्ये ॥ सङ्गोपनीये ॥ यथा । आयु र्वित्तं गृहच्छिद्रं मन्त्रमैथुनभेषजम् । अपमानं तपो दानं नव गोप्यानि यत्नत इति ॥ गुप्यते । गुपू० । ऋहलोर्ण्यत् ॥

गोप्यकः । पुं । दासे ॥ गोप्यात् स्वार्थे कः ॥ गोप्यं कायति वा । कै० । आतइति कः ।

गोप्याधिः । पुं । बन्धकविशेषे ॥ तथा च नारदः । अधिक्रियत इत्याधिः

स विज्ञेयो द्विलक्षणः । कृतकालो ऽपनेयश्च यावद्देयोद्यत स्तथा ॥ स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्त थैवच । गोप्योरक्षणीयः ॥

गोवाली । स्त्री । ओषधिविशेषे ॥ पाककर्णेतिङीष् ॥

गोभण्डीरः । पुं । जलकुक्कुभखगे ॥

गोमक्षिका । स्त्री । मक्षिकाविशेषे । दंशे । डाँस इतिभाषा ॥

गोमान् । त्रि । गवीश्वरे । गोमिनि ॥ बहवोगावोऽस्य । भूम्नि तदस्यास्ती तिमतुप् ॥

गोमतम् । न । गव्यूतौ ॥

गोमतल्लिका । स्त्री । प्रशस्तायांगवि ॥ प्रशंसावचनैश्चेति नित्यसमासः ॥

गोमती । स्त्री । स्वनामाख्यातायां नद्या म् । वाशिष्ठ्याम् ॥ वैदिकमन्त्रवि शेषे ॥ उगितश्चेतिङीप् ॥

गोमन्तः । पुं । विन्ध्यप्रत्यन्तपर्वते ॥

गोमयः । पुं । न । गोविषि ॥ गोःपुरी षम् । गोश्चपुरीषे इतिमयट् ॥ अ त्यल्पजीर्णदेहाया वन्ध्यायाश्च विशे षतः । रोगार्त्तायाः प्रसूताया न गो र्गोमयमाहरेत् ॥

गोमयच्छत्रम् । न । शिलीन्ध्रके ॥

गोमयच्छत्रिका । स्त्री । उच्छिलीन्ध्रे । शिलीन्ध्रे । दिलीरे ॥

गोमयप्रियम् । न । भूतृणे ॥

गोमयोत्था । स्त्री । गोमयजातकीट विशेषे । गर्द्दभ्याम् । गोवरीला इति भाषा ॥

गोमायुः । पुं । शृगाले ॥ गन्धर्वविशेषे ॥ गां विकृतां वाचं मिनोति । डुमि ञ्० । कृवापेत्युण् ॥

गोमी । पुं । शृगाले ॥ बुद्धभिक्षुशिष्ये । ग्रामणेरे ॥ त्रि । गोमति ॥ उपा सके ॥

गोमीनः । पुं । मत्स्यविशेषे ॥

गोमुखः । पुं । मातलिपुत्रे ॥ महादे वगणान्तरे ॥ नक्रे ॥ यक्षविशेषे ॥ न । कुटिलागारे ॥ वाद्यभाण्डे ॥ ले पने ॥ चौरक्रियमाणे सुरङ्गायाः प्र भेदे ॥ जपमालागोपनाय पट्टवस्त्रा दिनिर्मिते गोमुखी इति प्रसिद्धे य न्त्रविशेषे ॥ यथा । चतुर्विंशाङ्गुल मितं पट्टवस्त्रादिसम्भवम् । निर्मा या ऽष्टाङ्गुलिमुखं ग्रीवां तत्षडङ्ग- शाङ्गुलम् ॥ ईदृशं गोमुखयन्त्रञ्च सर्वं तन्त्रेषुगोपितम् । तन्मुखे स्थापये न्मालां ग्रीवामध्यगतः करः ॥ प्रजपे द्विधिनागुप्तंवर्णमालाधिकंप्रिये । इ ति मुण्डमालातन्त्रम् ॥ गोमुखादै ततोमालां गोपयेन्मातृजारवत् । इति मयातन्त्रम् ॥

गोमुखी । स्त्री । मन्त्रजपार्थकर्पटादिनिर्मितगुप्तिकायाम् । गोमुखे । राढदेशस्थनदीविशेषे ॥

गोमूत्रम् । न । गोजले ॥ अस्यगुणाः । गोमूत्रं कटु तीक्ष्णोष्णं क्षारं तिक्तं कषायकम् । लघ्वग्निदीपनं मेध्यं पित्तकृत् कफवातहृत् ॥ शूलगुल्मोदरानाहकण्डूक्षिमुखरोगजित् । किलासगदवातामवस्तिरुक् कुष्ठनाशनम् ॥ कासश्वासापहं शोथकामलापाण्डुरोगहृत् ॥ * ॥ कण्डूकिलासगदशूलमुखाक्षिरोगान् गुल्मातिसारमरुदामयमूत्ररोधान् । कासं सकुष्ठजठरक्रिमिपाण्डुरोगान् गोमूत्र मेक मपि पीत मपाकरोति ॥ सर्वेष्वपिचमूत्रेषु गोमूत्रं गुणतोधिकम् । अतो विशेषात्कथने मूत्रं गोमूत्र मुच्यते ॥ प्लीहोदरश्वासकासशोथवर्चोग्रहापहम् । शूलगुल्मरुजानाहकामलापाण्डुरोगनुत् ॥ कषायं तिक्ततीक्ष्णञ्च पूरणात् कर्णशूलहृत् ॥

गोमूत्रिका । स्त्री । तृणविशेषे । चोषजायाम् । रक्ततृणायाम् ॥ चित्रकाव्यविशेषे । यथा । गतिरुक्तावत्या यत्र मार्गे मूत्रस्य गोरिव । गोमूत्रिकेति तत् प्राहुर्दुष्करं चित्रवेदिनः ॥ अपिच । वर्णानामेकरूपत्वं यद्येकान्तरमर्द्धयोः । गोमूत्रिकेति तत् प्राहुर्दुष्करंतद्विदोविदुरिति ॥ षोडशकोष्ठद्वये पङ्क्तिद्वये ऽर्द्धद्वयं क्रमेण विलिख्यैकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिर्भवतीत्युद्धारः ॥

उदाहरणंयथा ॥

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| प्र | वृ | त्ते | वि | क | स | द्वा | नं | सा | ध | ने | ष्य | वि | षा | द्वि | भिः। |
| व | ह | षे | वि | क | स | द्दा | नं | यु | ध | मा | ष्य | वि | षा | णि | भिः॥ |

इतिमाघे १९ सर्गे ४६ श्लोकः॥ अस्याश्चत्वारोभेदाः । पादगोमूत्रिका अर्द्धगोमूत्रिका श्लोकगोमूत्रिका विपरीतगोमूत्रिकेतिभेदा इति सरस्वतीकण्ठाभरणम् ॥

गोमेदः । पुं । गोमेदकमणौ ॥ द्वीपविशेषे ॥ यथा । गोमेदे गोपतिर्नाम राजा भूत्रोसवेष्टितः । याज्यो ऽभूद्वह्निकल्पानां गौतम्यानां मनोः कुले ॥ स तेष हरियज्ञाय प्रवृत्तेषु भृगून्गुरून् । अत्रेतं गौतमः को पाद्शपत् सो ऽगमत् क्षयम् ॥ यज्ञवाटे ऽस्य ता गावो दग्धाः कोपाग्निना मुनेः । तन्मेदसा मही छन्ना

गोमेदः सततोऽभवदिति ॥

गोमेदकः । पुं । स्वनाम्ना प्रसिद्धे मणिविशेषे ॥ न । पीतमणौ ॥ राहुरत्ने । तमोमणौ ॥ अस्यपरीक्षा यथा । हिमालयेवा सिन्धौवा गोमेदमणिसम्भवः । स्वच्छकान्ति गुरुः स्निग्धो वर्णाढ्यो दीप्तिमानपि ॥ वस्त्रः पिञ्जरो धन्यो गोमेद इतिकीर्त्तितः । चतुर्द्धा जातिभेदस्तु गोमेदेपि प्रकाश्यते ॥ ब्राह्मणः शुक्लवर्णःस्यात् क्षत्रियोरक्तउच्यते । आपीतोवैश्यजातिस्तु शूद्रस्त्वानीलउच्यते ॥ छाया चतुर्विधा श्वेता रक्ता पीता ऽसिता तथा ॥ गुरुप्रभाढ्यः सितवर्णरूपः स्निग्धो मृदुर्वातिमलः पुराणः ॥ स्वच्छस्तु गोमेदमणि धृतोयं करोति लक्ष्मी धनधान्य वृद्धिम् । लघु र्विरूपो ऽशिखरोऽप्यमानः स्नेहोपलिप्तो मलिनः खरोपि ॥ करोति गोमेदमणि विनाशं सम्पत्तिभोगायबलवीर्य्यराशेः ॥ ये दोषा हीरके प्रोक्ता स्ते गोमेदमणावपि । परीक्षा वज्रितः कार्या मणेवा रत्नकोविदैः ॥ स्फटिकेनैवजायन्ते गोमेदप्रतिरूपिणम् । शुद्धस्य गोमेदमणेस्तु मूल्यं सुवर्णतो द्वैगुणमाहुरेकौ । अन्येतथा विद्रुमतुल्यमूल्यं तथा परेषामरतुल्यं माहुः ॥ चतुर्विंशामा मेषांतु धार्यं परिसम्भतमिति ॥ काकोले ॥ पद्मके ॥

गोमेदसन्निभः । पुं । दुग्धपाषाणे ॥

गोमेधः । पुं । यज्ञविशेषे ॥ तस्य कलौनिषेधो यथा । अश्वालम्भं गवालम्भं सन्न्यासंपलपैतृकम् । देवराच्चसुतोत्पत्तिः कलौपञ्चविवर्जयेत् ॥

गोयुगम् । न । गोद्वये ॥ गवोर्युगम् ॥

गोरक्षः । पुं । नागरङ्गे । नारङ्गे ॥ ऋषभनामौषधौ ॥ त्रि । गोरक्षके । गोपे ॥ रक्षतीतिरक्षः । गोःरक्षः ॥

गोरक्षकर्क्कटी । स्त्री । चिर्भिटायाम् ॥

गोरक्षजम्बूः । स्त्री । गोधूमे ॥ गोरक्षतण्डुलायाम् ॥ घोण्टाफले ॥

गोरक्षतण्डुला । स्त्री । गोरक्षचाउलि या इति गौडभाषाप्रसिद्धे क्षुद्रलताविशेषे । गाङ्गेरुक्याम् । नागबलायाम् ॥

गोरक्षतुम्बी । स्त्री । कुम्भतुम्ब्याम् ॥

गोरक्षदुग्धा । स्त्री । क्षुद्रक्षुपविशेषे । ताम्रदुग्धायाम् । बहुपत्रायाम् । अमृतसञ्जीवन्याम् ॥

गोरक्षी । स्त्री । क्षुद्रक्षुपविशेषे । गन्धबहुलायाम् । पञ्चपर्णिकायाम् ॥ गोरक्षदुग्धायाम् ॥ कुम्भतुम्ब्याम् ॥

गोरक्ष्यम् । न । पाशुपाल्ये ॥ गोरक्षती

ति गोरथः। तस्य भावः। ष्यञ् ॥

गोरङ्कुः। पुं। पक्षिविशेषे॥ नग्नके॥ वन्दिनि॥

गोरटः। पुं। दुष्खदिरे॥

गोरणम्। न। गुरणे। उद्यमे। भारा द्युद्यमने॥ गूर उद्यमे। चु०। ल्युट्॥

गोरसः। पुं। दुग्धे॥ दधि॥ दुग्धा-कृते। घोले। तक्र॥ गोरसस्य दुग्धस्य विकारत्वात् उपचारात्॥

गोरसजम्। न। तक्रे॥

गोराटी। स्त्री।
गोराटिका। स्त्री। } शारिकाविहगे॥
गोरिका। स्त्री।

गोरुतम्। न। क्रोशयुग्मे॥ गोःशब्दे॥

गोरोचनम्। न। हरिताले॥

गोरोचना। स्त्री। स्वनामख्यातपीत वर्णद्रव्ये। शोभनायाम्। मङ्गलाया म्। मेध्यायाम्॥ गोरोचना हिमा तिक्ता वश्या मङ्गलकान्तिदा। विषा ऽलक्ष्मीग्रहोन्मादगर्भस्त्रावक्षतास्त्रहृत्॥

गोर्दम्। न। मस्तिष्के। मस्तकभवस्ने हे॥ गुर्यते गुरतेवा। गुरी उद्यम ने। अच्छाद्य इतिसाधु॥

गोलः। पुं। सर्ववर्त्तुले॥ मदनवृक्षे॥ जारात् विधवासुते॥ भूगोले॥ खगोले॥ यथा। गोलं श्रोतुं यदि तव मति र्भास्करीयं शृणु त्वमिति शिरोमणिः॥ एकराशौ षड्ग्रहयोगे॥ यथा। षड्ग्रहा मेकस्मिन् यदि भवन्ति यस्मां निवसति सदा गोलोयो गः प्रलयपदं मिन्द्रोपि लभते। भवे लोको रङ्कः परिहरति पुत्रश्च जननी न्नृपाणां न शः स्वाज ज्वल ति वसुधा शुष्यति नदीति॥ एकराशौ सप्तग्रहयोगे॥ यथा। सप्तग्रहा यदैकस्था गोलयोग स्तदाभवेत्। दुर्भिक्षं राष्ट्रपीडाच तस्मिन् काले न्नृपक्षय इति॥ न। मण्डले॥ गुडे॥ डलयोरभेदः॥

गोलकः। पुं। जारतोविधवासुते॥ मणिके। अलिञ्जरे। गोल इतिभाट इतिचभाषा॥ गुडे॥ पिण्डे॥ यथा। ते असौ गोलकः सूर्यो ग्रहर्क्षाणामपि गोलकाः। प्रभावन्तो हि दृश्यन्ते सूर्य रश्मिविदीपिताः॥ इतिसूर्यसिद्धान्तः॥ गन्धरसे। बोले॥ न। गोलोके॥ गुल्यते। गुडरक्षायाम्। घञ्। स्वार्थेकन्। डलयोरैक्यम्॥

गोलक्षणम्। न। गवां प्रशस्ताप्रशस्त स्वरूपे॥ यथा। पराशरः प्राह बृहद्रथाय गोलक्षणं तत् क्रियते ततो ऽयम्। मया समासः शुभलक्षणा-स्ताः सर्वा स्तथा प्यागमतो ऽभिधा

स्ये ॥ अशुभलक्षणा गाव आह । सास्नाविलम्बाख्यो मूषिकनयनाश्च न शुभा गावः । प्रचला श्चिपिटविषाणाः करटाः खरसदृशवर्णा श्च ॥ दशसप्तचतुर्दन्त्यः प्रलम्बमुण्डानना विनतपृष्ठाः । ह्रस्वस्थूलग्रीवायवमध्या दारित खुराश्च ॥ श्यावातिदीर्घजिह्वाः गुल्फै रतितनुभि रति दृहद्भिर्वा । अतिककुदाः कृषदेहा नेष्टा हीनाधिकाङ्ग्यश्च ॥ ४ ॥ अथ वृषलक्षणम् । वृषभो प्येवंस्थूलातिलम्बवृषणः सिराततक्रोडः । स्थूलसिराचितगण्ड स्त्रिस्थूनं मेहतेयश्च ॥ मार्जाराक्षः कपिलः करटो वा न शुभदो द्विजस्यैव । कृष्णोष्ठतालुजिह्व श्वसनो यूथस्य घातकरः ॥ ६ ॥ स्थूलशकृन्मणिशृङ्गः सितोदरः कृष्णसारवर्णश्च । गृहजातो ऽपिच्याज्यो यूथविनाशावहो वृषभः ॥ ७ ॥ श्यामक पुष्पचिताङ्गो भस्मारुणसन्निभो विडालाक्षः । विप्राणा मपि न शुभंकरोति वृषभः परिगृहीतः ॥ ये चोद्धरन्ति पादान् पङ्कादिव योजिताः कृशग्रीवाः । कातरनयना हीनाश्च पृष्ठत स्ते नभारसहाः ॥९॥ अशुभलक्षणसहितानाह । मृदुसंहतताम्रौष्ठा तनुस्फिक ताम्रतालुजि ह्वास्य । ह्रस्वतनूच्चश्रवणाः सुकुक्षयः पृष्ठजङ्घाश्च ॥ आताम्रसंहतखुरा व्यूढोरस्का वृहत्ककुद्युक्ताः । स्निग्धश्लक्ष्णतनुत्वग्रोमाणा स्ताम्रतनुशृङ्गाः ॥ तनुभूस्पृग्वालधयो रक्तान्तविलोचना महोच्छ्वासाः । सिंहस्कन्धा स्तन्वल्पकम्बलाः पूजिताः सुगताः ॥ ११ ॥ वामावर्त्तैर्वामे दक्षिणपार्श्वे च दक्षिणावर्त्तैः । शुभदा भवन्त्यनडुहो जङ्घाभिश्चैणकनिभाभिः ॥ वैदूर्यमल्लिकाबुद्बुदेक्षणाः स्थूलनेत्रवर्त्मानः । पार्ष्णिभि रस्फुटिताभिः शस्ताः सर्वे च भारसहाः ॥ घ्राणोद्देशे सवलि र्मार्जारमुखः सितश्च दक्षिणतः । कमलोत्पललाक्षाभः सुवालधि र्वाजितुल्यजवः ॥ लम्बै र्वृषणै र्मेषोदरैश्च सङ्क्षिप्तवङ्क्षणक्रोडः । ज्ञेयो भाराध्वसहो जवे ऽश्वतुल्यश्च शस्तफलः ॥ १५ ॥ सितवर्णः पिङ्गाक्ष स्ताम्रविषाणेक्षणो महावक्त्रः । हंसो नामशुभफलो यूथस्य विवर्द्धनः प्रोक्तः ॥ १६ ॥ भूस्पृग्वालधि राताम्रविषाणो रक्तदृक् ककुद्मांश्च । कल्माष श्चस्वामिन मचिरात् कुरुते पतिं लक्ष्म्याः ॥ १७ ॥ योवासितै श्च चरणै र्येथेष्टवर्णश्च सोपि शुभफलकृत् । स्निग्धपाणो ऽस्निग्धाक्षो

यदि मैकान्तप्रशस्तोऽपि ॥ १८ ॥
इतिवाराहीसंहितायां गोलक्षणंनामाष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

गोला । स्त्री । गोदावर्य्याम् ॥ सख्याम् ॥ कुनट्याम् ॥ दुर्गायाम् ॥ पत्राञ्जने ॥ मण्डले ॥ अलिञ्जरे ॥ वालखेलने । वालक्रीडनकाष्ठे ॥ गां दीप्तिं लाति । ला० । आतइति कः ॥ गुड्यते वा । गुड वेष्टने । घञ् । डलयोरैक्यम् ॥

गोलाङ्गूलः । पुं । असितमुखे कपिविशेषे । कपित्थास्ये । दधिशोणे ॥ कृष्णवानरे ॥

गोलासः । पुं । शिलीन्ध्रे ॥

गोलिहः । पुं । घण्टापाटलौ ॥

गोलीढः । पुं । लोध्रविशेषे । घण्टापाटलौ ॥ गोभिर्लिह्यतेस्म । लिह० । क्तः ॥

गोलोकः । पुं । न । श्रीकृष्णस्य नित्ये धामनि ॥ श्रीकृष्णस्थाने ॥ यथा । वैकुण्ठस्य दक्षभागे गोलोकं सर्व्वमोहनम् । तत्रैव राधिका देवी द्विभुजो मुरलीधरः ॥ यद्रूपं गोलकं धाम तद्रूपं नास्ति मामके । स्थाने वा चक्षुषोः किं वा ध्यानयोगे न विद्यते ॥ शुद्धतत्त्वमयं देवि नानादेवेन शोभितम् । मध्यदेशे गोलकाख्यं श्रीविष्णोर्लोभमन्दिरम् ॥ श्रीविष्णोः सत्त्वरूपस्य यत्स्थलं चित्तमोहनम् । तस्यस्थानस्यमाहात्म्यं किंमया कथ्यतेऽधुनेत्यादि माहात्म्यादिकं तन्त्रशास्त्रे ब्रह्मवैवर्त्तपुराणे च द्रष्टव्यम् ॥

गोलोमिका । स्त्री । गोधुमा इति पाथरी इतिच गौडभाषाप्रसिद्धे क्षुद्रक्षुपविशेषे । क्रोष्टुकपुच्छिकायाम् । प्रसारिण्याम् ॥

गोलोमी । स्त्री । श्वेतदूर्व्वायाम् ॥ गोलोमसु जाता । तत्रजातइत्यण् ॥ वचायाम् ॥ भूतकेशे ॥ गोलोम्नामियम् । तस्येदमित्यण् । संज्ञापूर्व्वकत्वान्नवृद्धिः ॥ वेश्यायाम् ॥ गोलोमानि सन्त्यस्याः । गोशब्दोगोलोमसदृशेलाक्षणिकः । अनउपधालोपिन इति ङीप् ॥ गोलोमिकायाम् ॥

गोवत्सादी । पुं । वृके ॥

गोवन्दनी । स्त्री । प्रियङ्गौ । फलिन्याम् ॥ गविभूमौवन्द्यते । वदि० । कर्म्मणिल्युट ॥ पीतदण्डोत्पले ॥

गोवरम् । न । गोमयविशेषे ॥ गोष्ठान्त गोखुरक्षुण्णं शुष्कचूर्णितगोमयम् । गोवरं तत् समाख्यातं वरिष्ठं रससाधने ॥

गोवर्द्धनः । पुं । स्वनाम्ना प्रसिद्धे पर्व्वतविशेषे । गिरिराजे ॥ अनादि र्हरि

दाशोऽयं भूधरो नात्र संशयः । शुक्लप्रतिपदि प्रातः कार्त्तिकेऽर्च्योऽन्नवैर्व्यञ्जनैः ॥ पूजामन्त्रस्तु । गोवर्द्धनधराधारगोकुलत्राणकारकः । विष्णुवाहुकृतोच्छ्रायो गवां कोटिप्रदो भवेति ॥ त्रि । गोवर्द्धके ॥ गवां वर्द्धनः ॥

गोवर्द्धनधरः । पुं । श्रीकृष्णे । नन्दनन्दने ॥ गोवर्द्धनस्य गिरेः धरो धारकः ॥

गोवर्द्धनधारी । पुं । श्रीकृष्णे । यशोदानन्दने ॥

गोवशा । स्त्री । वन्ध्यायाङ्गवि ॥

गोविन्दः । पुं । वासुदेवे ॥ तद्ध्यानं यथा । फुल्लेन्दीवरकान्तमिन्दुवदनं बर्हावतंसप्रियं श्रीवत्साङ्कमुदारकौस्तुभधरं पीताम्बरं सुन्दरम् । गोपीनां नयनोत्पलार्च्चिततनुं गोगोपसङ्घावृतं गोविन्दं कलवेणुवादनपरं दिव्याङ्गभूषं भजेदिति ॥ गोशब्दवाच्यानि इन्द्रियाणि निश्चयं प्राप्ते ॥ गां वेदलक्षणां वाणीं विन्दति इति व्युत्पत्त्या सर्ववेदोपादानत्वेन सर्वज्ञे ॥ गां भुवं धेनुं स्वर्गं वेदं वा अविदत् विन्दति वा । विद॰ विद्लृ॰ । गवादिषु विन्देः संज्ञायामिति शः । वाराहरूपेणोद्धरणात् कामधेनोरैश्वर्यप्राप्तेः । इन्द्रेणास्वर्गस्य निवेदनात् मत्स्यादिरूपेण वेदोद्धरणाद्वा ॥ गोभिर्वाणीभिर्वेदान्तवाक्यैर्विद्यते वा । गोभिरेव यतो वेद्यो गोविन्दः समुदाहृतः इति विष्णुतिलकम् ॥ वह्निपुराणे यमानुशासने तन्नाममाहात्म्यं यथा । ये तिष्ठन्तः स्वपन्तश्च गच्छन्तः स्खलिते क्षुते । सङ्कीर्त्तयन्ति गोविन्दं ते वस्याज्याः सुदूरत इति ॥ गवाध्यक्षे ॥ वृहस्पतौ ॥

गोविन्दद्वादशी । स्त्री । फाल्गुनशुक्लद्वादश्याम् ॥

गोविट् । पुं । गोमये ॥ गोर्विट् ॥

गोविष्ठा । स्त्री । गोमये ॥ वनोपले ॥ गोर्विष्ठा ॥

गोवीथी । स्त्री । मध्यममार्गे नक्षत्रविशेषाणां संज्ञाविशेषे ॥ यथा । हस्तश्चित्रा तथा स्वाती गोवीथीति तु शब्दितेति ॥

गोवृन्दम् । न । गोसमूहे ॥

गोशकृत् । न । गोमये ॥

गोशरण्यः । पुं । व्याघ्रादितो दुर्गेषु गोः परित्राणकारके ॥ गौर्गवां वा शरण्यः ॥

गोशालम् । न । गोगृहे ॥ गवां शाला : विभाषा सेनेति पाक्षिकं क्लीवत्वम् ॥ त्रि । गोशाले जाते ॥ स्वामात्मगोशालेति जातार्थप्रत्ययस्य लुक् ॥

गोशाला । स्त्री । गोशाले । गोसाला

इतिभाषा ॥ गवां शाला ॥

गोशीर्षम् । न । चन्दने ॥ चन्दनविशेषे । हरिचन्दने ॥ गोशीर्षाकारेमलये कदेशेजाते कालताम्रच्छामिश्रवर्णे उत्पलगन्धिनि अतिसुरभिशीतलतया सदैव सर्पैर्वेष्टिते इति व्याख्यातारः ॥ गोः शीर्षमिव गोशीर्षोगिरिरुत्पत्त्याकर इति स्वामी ॥ गवांमस्तके ॥

गोशीर्षकः । पुं । द्रोणपुष्पीवृक्षे ॥ कपश्चाद्रिसमुद्भवे गोरोचनासदृशवर्णे चन्दनजातिविशेषे ॥ गोमस्तके ॥

गोशृङ्गः । पुं । बर्बुरवृक्षे ॥ न । गोर्विषाणे ॥

गोश्रुतिः । पुं । वैयाघ्रपद्येऋषिविशेषे ॥

गोष्ठम् । न । गवांस्थाने ॥ गावस्तिष्ठन्त्यत्र । ष्ठा० । घञर्थ इति सुपिस्थ इति वा कः । अम्बाम्बेतिषत्वम् ॥ चिदधिष्ठिताहङ्कारे ॥ गावः श्रोत्रादीनीन्द्रियाणि तिष्ठन्त्यत्रेति पूर्ववत् प्रक्रिया ॥ गोष्ठीमाहे ॥

गोष्ठपतिः । पुं । गवांस्थानाध्यक्षे ॥

गोष्ठश्वः । पुं । परहिंसके । यः स्वगृहात्प्रनेस्थितः परान्द्वेष्टितस्मिन् ॥ गोष्ठेश्वा इति सप्तमीतत्पुरुषे अचतुरेत्यादिना ऽच् । मतल्लिकादितिढिलोपः ॥ षष्ठीतत्पुरुषेतु गोष्ठश्वाइत्येव ॥

गोष्ठाष्टमी । स्त्री । गोपाष्टम्याम् ॥

गोष्ठी । स्त्री । सभायाम् । परिषदि ॥ संलापे ॥ पोष्यवर्गे ॥ विष्णुं गोष्ठी दरिद्रस्य ॥ गावोऽनेकावाचस्तिष्ठन्त्यस्याम् । घञर्थे कः । अम्बाम्बगोभूमीतिषत्वम् । गौरादित्वान् ङीष् ॥

गोष्ठीपतिः । पुं । पोष्यवर्गाभिपालके ॥ सभापतौ ॥

गोष्ठीभेदः । पुं । क्रीडाविशेषे ॥

गोष्पदम् । न । गोखुरश्वभ्रे ॥ त्रि । गवां गतिगोचरे ॥ गोपद प्रमाणे ॥ गोःपदम् । गावः पद्यन्ते यस्मिन्देशे स गोभिः सेवितो गोष्पदः । गोष्पदंसेवितासेवितप्रमाणेष्विति सुट् सत्वषत्वञ्चनिपात्यते । असेविते अगोष्पदान्यरण्यानि । प्रमाणे गोष्पदमात्रं क्षेत्रम् ॥

गोसः । पुं । बोले ॥ उषःकाले । विभाते ॥ गां जलं स्यति । षोऽन्तकर्मणि । आत इतिकः ॥

गोसङ्ख्यः । पुं । गोपे ॥ गावः सञ्चष्टे । चक्षिङ् । चक्षिङःख्याञ् । समिख्य इतिकः ॥

गोसदृक्षः । पुं । गवये ॥

गोसन्दायः । पुं । गोदानकर्त्तरि ॥

गोसम्भवा । स्त्री । श्वेतदूर्वायाम् ॥ त्रि ।

गोर्जाते ॥

गोसर्गः । पुं । प्रभाते ॥

गोसवः । पुं । गोमेधयज्ञे ॥

गोस्तनः । पुं । चतुर्यष्टिकहारे ॥ गोः कुचे ॥

गोस्तनी । स्त्री । कपिलद्राक्षायाम् । द्राक्षायाम् । मनक्कादाख इतिभाषा ॥ गौः स्तनोऽस्याः । गोस्तनसदृशे गोशब्दो गौणः । स्वाङ्गाच्चोपसर्जनादिति ङीष् ॥

गोस्थानम् । न । गोष्ठे ॥ गवां स्थानम् ॥

गोस्थानकम् । न । गोष्ठे ॥ स्वार्थे कः ॥

गोस्वामी । चि । गोपतौ ॥

गोहन्नम् । न । गोमये ॥

गोहरीतकी । स्त्री । विल्वे ॥

गोहालिया । स्त्री । गोवालिया इति ख्याते लताविशेषे ॥

गोहितः । पुं । घोषलतायाम् ॥ विल्वे ॥ श्रीकृष्णे ॥ गवां विहत्यर्थं गोवर्द्धनगिरिं धृतवान् इतिगोभ्योहितः । चतुर्थीतदर्थेत्यादिना चतुर्थी तत्पुरुषः । गोर्भूमेर्भारावतरणेच्छया शरीरग्रहणंकुर्वन् वा हितः ॥ चि । गवां हितकारके । गोग्रासाहर्त्तरि ॥

गोहिरम् । न । पादमूले ॥

गोह्यः । पुं । मेनासुते । मैनाके ॥ गोह्याः हिमालयपत्न्याः अपत्यम् । स्त्रीभ्योढगिति ढकिप्राप्ते छन्दसि व्यत्ययो बहुलमिति व्यत्ययेन गर्गादिभ्योयञिति यञ् ॥

गौञ्जिकः । पुं । स्वर्णकारे ॥ गुञ्जायाव हर्त्तरि ॥

गौडः । पुं । देशविशेषे ॥ तद्देशसीमा यथा । वङ्गदेशं समारभ्य भुवनेशान्तगं शिवे । गौडदेशः समाख्यातः सर्वविद्याविशारदः ॥ तद्देशस्थे पुंभूम्नि गौडाः ॥ तेच पञ्चोक्ताःस्कन्दपुराणे । सारस्वताः कान्यकुब्जाः गौडमैथिलकौत्कलाः । पञ्चगौडा इति ख्याता विन्ध्यस्योत्तरवासिनः इति ॥

गौडवास्तूकः । पुं । न । वास्तूकप्रभेदे ॥ तदेवतु हरित् पत्रं रक्तं स्याद्गौडवास्तुकम् ॥

गौडिकः । पुं । इक्षुकुट्टके ॥ इक्षौ ॥ गुडेसाधुः । गुडादिभ्यष्ठञ् ॥ न । मद्यविशेषे ॥

गौडी । स्त्री । सुराप्रभेदे । वाल्कख्याम् ॥ रागिणीविशेषे । मेघरागस्य योषिति ॥ काव्यरीतिप्रभेदे ॥ यथा । ओजः प्रसादमाधुर्यं गुणत्रितयभेदतः । गौडवैदर्भपाञ्चालरीतयः परिकीर्त्तिता इति ॥

गौणः । त्रि । गुणयोगात्प्रवृत्ते ॥ अमु

स्ये ॥ यस्कोपपोदितैर्थं ॥ गुणादागतः । अण् ॥

गौणधातुः । पुं । उपधातौ ॥

गौणसन्न्यासी । स्त्री । अत्यागिनि । कर्मफलत्यागित्वेपिकर्मानुष्ठायिनि । अत्रे ॥

गौणी । स्त्री । वृत्तिविशेषे ॥ अशीतिप्रकारलक्षणान्तर्गतलक्षणाविशेषे ॥ पश्यात्र साहित्यदर्पणम् ॥

गौतमः । पुं । नचिकेतसः पितरि मुनिविशेषे । उद्दालके गोचतो गौतम इति प्रसिद्धे ॥ मुनिविशेषे । शतानन्दे ॥ शाक्यवंशावतीर्णे बुद्धमुनिविशेषे । शाक्यसिंहे । शौद्धोदनौ ॥ कृपे ॥ गोतमस्यायंशिष्यः । तस्येदमित्यण् । तत्रापत्यतारादा ॥ गोतमस्यापत्ये । ऋष्यण् । वहुत्वे गोतमाः ॥

गौतमसम्भवा । स्त्री । गोदावर्या नद्याम् ॥

गौतमी । स्त्री । उमायाम् । दुर्गायाम् ॥ गोरोचनायाम् ॥ गोदावर्याम् ॥ कृप्याम् ॥ शाक्यलक्षण गौतमप्रणीतायां विद्यायाम् ॥ षोडशपदार्थप्रतिपादिकायामहल्यापतिगोतमप्रोक्तायामर्थविद्यायाम् ॥ शार्ङ्गरवाद्यणो ङीन् ॥ राक्षसीविशेषे ॥

गौत्तमः । पुं । स्थावरविषस्य प्रभेदे ॥

गौधारः । पुं । गोधिकासुते । अहेर्गोधायांजाते चन्दनगोहेतिख्याते ॥ गोधाया अपत्यम् । आरगुदीचामिप्यारक् ॥

गौधूमः । पुं । गोधूमविकारे ॥ गोधूमस्यावयवो विकारो वा । विल्वाद्यण् ॥

गौधूमीनम् । न । गोधूमक्षेत्रे ॥ गोधूमानां भवनं क्षेत्रम् । धान्यानांभवनेक्षेत्रेखञ् ॥

गौधेयः । पुं । गोधिकात्मजे । गौधेरे ॥ गोधाया अपत्यम् । शुभ्रादित्वाट्ढक् ॥

गौधेरः । पुं । गौधारे ॥ गोधाया अपत्यम् । गोधायाढ्रक् ॥

गौरः । पुं । श्वेतसर्षपे ॥ चन्द्रे ॥ धववृक्षे ॥ अरुणवर्णे ॥ गोरा इतिख्याते पीतिवर्णे ॥ श्वेतवर्णे ॥ त्रि । तद्वर्णवति ॥ विशुद्धे ॥ न । पद्मकेशरे ॥ कुङ्कुमे ॥ स्वर्णे ॥ गुरति गवते मनोऽत्र वा । गुरीउद्यमने गुङ्गतौ वा । ऋज्रेन्द्रेतिसाधुः ॥ गूर्यते ऽनेनवा । गुरी० । हलश्चेति घञ् । गोरएव । प्रज्ञाद्यण् ॥

गौरत्यम् । न । पाशुपाल्ये ॥

गौरजीरकः । पुं । अजाज्याम् । श्वेतजीरके ॥

गौरतित्तिर: । पुं । कपिञ्जले ॥

गौरत्वक् । पुं । इङ्गुदीवृक्षे ॥

गौरवम् । न । अभ्युत्थाने ॥ गुरुत्वे । लाघवाभावे ॥ गुरोर्भाव: । इगन्ता च्चलघुपूर्वादित्यण् ॥

गौरवित: । त्रि । आर्यमिश्रे ॥ गौरव: सञ्जातोऽस्य । तारकादित्वादि तच् ॥

गौरशाक: । पुं । गिरजमधूके । अल्प पत्रे ॥

गौरसर्षप: । पुं । श्वेतसर्षपे । सिद्धार्थे ॥ गौरश्चासौ सर्षपश्च ॥ त्रिभी राज सर्षपै: परिमिते ॥

गौरसुवर्णम् । न । चित्रकूटप्रसिद्धे प- त्रशाकप्रभेदे । वारिजे । गन्धशाके ॥

गौरा । स्त्री । गौर्याम् । शिवायाम् ॥ इत्यपि रूप: ॥

गौरार्द्रक: । पुं । स्थावरविषविशेषे ॥

गौरास्य: । पुं । कृष्णवानरे ॥

गौरिका । स्त्री । अष्टवर्षीयांकन्याया- म् ॥ गौर्येव । क: ॥

गौरिल: । पुं । सिद्धार्थे ॥ लौहचूर्णे ॥

गौरी । स्त्री । पार्वत्याम् ॥ योगाग्नि दग्धदेहा या पुनर्जाता हिमालये । शङ्खेन्दुकुन्दधवला ततो गौरीति सा स्मृता ॥ अलब्धरजः कन्यायाम् ॥ हरिद्रायाम् ॥ दारुहरिद्रायाम् ॥ गोरोचनायाम् ॥ प्रियङ्गुवृक्षे ॥ व- सुधायाम् ॥ नदीविशेषे ॥ वरुणभा र्यायाम् ॥ बुद्धशक्तिविशेषे । माया- देव्याम् ॥ मञ्जिष्ठायाम् ॥ श्वेतदूर्वा याम् ॥ मल्लिकायाम् ॥ तुलस्याम् ॥ सुवर्णकदल्याम् ॥ आकाशमांस्याम् ॥ रागिणी विशेषे । मालवरागभार्या याम् ॥ गौरवर्णान्वितायाम् ॥ गूयते । गुङ्शब्दे । ऋज्रेन्द्रेति रन्प्रत्ययान्तो गौ रो निपातित: । गौरो वर्णोऽस्त्यस्या: । गौरादित्वान् ङीष् ॥

गौरीगुरु: । पुं । हिमवति ॥ गौर्या: गुरु: ॥

गौरीजम् । न । अभ्रके ॥

गौरीतक्रम् । न । तक्रविशेषे ॥ यथा । लवणं मरिचं शिग्रुं जीरं नार ङ्गजन्तवम् । एलाचूर्णान्वितं तक्रं धूपयेद् घृतहिङ्गुना ॥ पार्वत्या वि हितं तक्रं सर्वदोषनिबर्हणम् । सुरु च्यं पाचनं दिव्यं महेशस्य सदाप्रि यमिति ॥

गौरीपुत्र: । पुं । कार्त्तिकेये ॥ गणेशे ॥

गौरीपुष्प: । पुं । प्रियङ्गुवृक्षे ॥

गौरीललितम् । न । हरिताले ॥

गौरीशिखरम् । न । तीर्थविशेषे ॥

गौरीसुत: । त्रि । दशवर्षीयाकन्याजे ॥

गौरुतल्पिक: । पुं । गुरुस्त्रीगामिनि ॥ गुरुतल्पं गच्छति । गच्छतौ परदा

गादिभ्यः इति ठक् ॥

गौत्मिकः । पुं । मुष्ककवृषे ॥

गौल्यम् । न । मधुरे ॥

गौश्रतिकः । त्रि । गोश्रतस्वामिनि ॥

गौष्ठीनम् । न । भूतपूर्वगोष्ठे ॥ पूर्वं भूतं गोष्ठम् । गोष्ठात् खञ् भूतपूर्वे इतिखञ् ॥ तीर्थविशेषे ॥

ग्रथितः । त्रि । गुम्फिते । दृब्धे । कृतग्रन्थने । गाँठा इतिगूँथा इतिचभाषा ॥ आक्रान्ते ॥ हते । हिंसिते ॥ ग्रथ्यतेस्म । ग्रन्थसन्दर्भे । क्तः

ग्रथितमालः । पुं । वट्टुवल्लौ ॥

ग्रन्थः । पुं । गुम्फे । ग्रन्थनायाम् ॥ धने ॥ शास्त्रे ॥ अक्षरसङ्ख्यायाम् । द्वात्रिंशद्वर्णनिर्मितौ । अनुष्टुप्श्लोके ॥ प्रबन्धे । विवक्षितार्थप्रतिपत्त्यनुकूलत्वे सति निबद्ध्यमानवाक्यसमुदाये । सन्दर्भे ॥ ग्रन्थनम् । ग्रन्थ० घञ् ॥

ग्रन्थकः । पुं । द्वात्रिंशदक्षरान्विते अनुष्टुपछन्दःश्लोके ॥ संज्ञायांकन् ॥

ग्रन्थकर्त्ता । पुं । ग्रन्थकारे ॥

ग्रन्थकुटी । स्त्री । लेखभूमौ । लेख्यस्थाने । दफतरखाना इति आपिस् इतिच अपराङ्गजभाषा ॥

ग्रन्थनम् । न । गुम्फने । ग्रन्थने । सन्दर्भे ॥

ग्रन्थना । स्त्री । ग्रन्थने ॥

ग्रन्थसन्धिः । पुं । काण्डे ॥ पटले ॥ स्थाने ॥ प्रकरणे ॥ पर्वणि ॥ अध्याये ॥ आह्निके ॥ उल्लासे ॥

ग्रन्थिः । पुं । ग्रन्थिपर्णे ॥ गाँठ इति भाषा प्रसिद्धे वस्त्रादिबन्धे ॥ वंशादिसन्धौ । पर्वणि । पोरी इति भाषा ॥ भङ्गुरत्वायाम् ॥ हितावस्थाम् ॥ पिण्डालौ ॥ कौटिल्ये ॥ अन्योन्याध्यासे ॥ मायाख्यपाशे ॥ रुग्भेदे ॥ ॥ तस्य निदानसम्प्राप्ती यथा । वातादयो मांसमसृक्प्रदुष्टाः सन्दूष्य मेदश्च तथा शिराश्च वृत्तोन्नतं विग्रथितन्तु शोथं कुर्वन्त्यतो ग्रन्थिरितिप्रदिष्ट इति ॥ ग्रन्थते । ग्रथि० । सर्वधातुभ्यइन् ॥ खनिकष्यज्यसिवसिवपिसनिध्वनिग्रन्थिचरिभ्यश्चेति इर्वा । स्वरभेदः ॥

ग्रन्थिकः । पुं । करीरे ॥ दैवज्ञे ॥ सहदेवपाण्डवे ॥ न । पिप्पलीमूले ॥

ग्रन्थिपर्णी ॥ पुं । न । गुग्गुलौ ॥ ग्रन्थिप्रतिकृतिः । इवेप्रतिकृताविति कन् ॥

ग्रन्थिका । स्त्री । पिप्पलीमूले ॥

ग्रन्थितः । त्रि । ग्रथिते । गुम्फिते ॥ ॥ ग्रथ्यतेस्म । ग्रथि० । क्तः ॥

ग्रन्थिदला । स्त्री । मालाकन्दे ॥

ग्रन्थिदूर्वा । स्त्री । मालादूर्वायाम् ॥
ग्रन्थिपर्णः । पुं । चोरनामगन्धद्रव्ये ॥ न । बर्हिपुष्पे । कुक्कुरे । कुकुरौंदा इति ख्याते ॥ ग्रन्थिपर्णं तिक्ततीक्ष्णं कटूष्णं दीपनंलघु । कफवातविषश्वासकण्डूदौर्गन्ध्यनाशनम् ॥ अस्यले पनगुणः । रूचताऽलक्ष्मीराक्षसज्वरनाशित्वमिति ॥ ग्रन्थीपर्णान्यस्य । ग्रन्थयइवपर्णान्यस्येतिवा ॥
ग्रन्थिपर्णा । स्त्री । जतुकालतायाम् ॥
ग्रन्थिपर्णी । स्त्री । गण्डदूर्वायाम् ॥
ग्रन्थिपाशः । पुं । ग्रन्थ्यात्मनिमायास्यपाशे ॥
ग्रन्थिफलः । पुं । शाकुरण्डवृक्षे ॥ मदनवृक्षे ॥ कपित्थवृक्षे ॥
ग्रन्थिभेदः । पुं । गंठकटा इति भाषाप्रसिद्धे तस्करविशेषे । यःपटप्रान्तस्थितं सुवर्णादिकं ग्रन्थिमोक्षणेन चोरयतिसइत्यर्थः ॥
ग्रन्थिमान् । पुं । अस्थिसंहारिणि । हाडजोडा इति भाषा ॥ त्रि । ग्रन्थियुक्ते ॥ ग्रन्थिरस्त्यस्यास्मिन्वा । मतुप् ॥
ग्रन्थिमत्फलः । पुं । लकुचे ॥
ग्रन्थिमूलम् । न । गृञ्जने । शिखिमूले ॥
ग्रन्थिमूला । स्त्री । मालादूर्वायाम् ॥
ग्रन्थिलः । पुं । करीरद्रुमे ॥ विकङ्कततरौ ॥ मण्डुकीयशाके ॥ पिलाव ल्याम् ॥ पिण्डालौ ॥ चोरकनामगन्धद्रव्ये ॥ न । पिप्पलीमूले ॥ आर्द्रके ॥ त्रि । ग्रन्थियुक्ते ॥ ग्रन्थिरस्यास्ति । सिध्मादित्वाल्लच् ॥ ग्रन्थिं लातिवा । ला० । कः ॥
ग्रन्थिला । स्त्री । भद्रमुस्तायाम् ॥ गण्डदूर्वायाम् ॥ मालादूर्वायाम् ॥
ग्रन्थिवर्णी । पुं । ग्रन्थिपर्णे ॥
ग्रन्थिहरः । पुं । अमात्ये । मन्त्रिणि ॥
ग्रन्थीकम् । न । पिप्पलीमूले ॥
ग्रसनम् । न । ग्रासे ॥ ग्रसुअदने । ल्युट् ॥
ग्रसितः । त्रि । कृतग्रासे । कवलिते ॥
ग्रसिष्णुः । त्रि । ग्रसनशीले ॥ न । प्रलयकाले ॥
ग्रस्तः । त्रि । लुप्तवर्णपदे । असम्पूर्णोच्चारिते । अपूर्णवचसि ॥ लुप्तो वर्णः पदंवा यत्रवाक्ये पदेवा ॥ ग्रस्यते । ग्रसु० । क्तः । यस्यविभाषेति पाक्षिक इडभावः ॥ भक्षिते । भुक्ते ॥
ग्रहः । पुं । अनुग्रहे ॥ निर्बन्धे । आग्रहे । अभिनिवेशे ॥ ग्रहणे ॥ रणोद्यमे ॥ पूतनादिबालग्रहे ॥ सैंहिकेये ॥ उपरागे । राहुकर्तृकचन्द्रादिकर्मकग्रहणरूपक्रियायाम् ॥ सोमादिपाके ॥ यथा । सोमामश्नां सुराग्रहान् गृह्णाति ॥ सूर्यादिनवसु

॥ ते चयथा । सूर्य्य श्चन्द्रो मङ्गलश्च बुधश्चापि बृहस्पतिः । शुक्रः शनैश्चरो राहुः केतुश्चेति नव ग्रहाः ॥ एषामष्टधा गति र्यथा । वक्रा ऽतिवक्रा कुटिला मन्दा मन्दतरा समा । शीघ्रा शीघ्रतरा चैवं ग्रहाणां गति रष्टधा ॥ ग्रहणम् गृह्णातिवा । ग्रह उपादाने । ग्रहवृढनिश्चिगमश्चेत्यप् । विभाषाग्रहस्त्यल्वा ॥ बन्धने ॥ गृह्यते बध्यते चेष्टो येन ग्रहसंज्ञकेन बन्धनेनेतिभाष्यम् ॥

ग्रहकल्लोलः । पुं । राहौ ॥

ग्रहणम् । न । स्वीकारे ॥ हस्तयोर्थ्यापारे । आदाने ॥ आदरे ॥ करे । हस्ते ॥ उपलब्धौ ॥ बन्द्याम् ॥ धीगुणे ॥ प्रस्थाये ॥ इन्द्रिये ॥ बन्धने ॥ उपरागे । पर्वप्रतिपत्सन्धौ राहुणा सूर्यचन्द्रमसोर्ग्रसने ॥ अथ सूर्य चन्द्रयो र्ग्रहणकारणम् । यथा । भत्रिपादान्तरे राहोः केतोर्वा संस्थितो रविः । चतुष्पादन्तरे चन्द्रस्तदासम्भाव्यतेग्रहः ॥ यस्मिन्नृक्षे रविस्तस्मा च्चतुर्दशमतः शशी । पूर्णिमा प्रतिपत्सन्धौ राहुणाग्रस्यते शशी ॥ कृष्णपक्षे तृतीयायां मासर्क्षं यदि जायते । तत सूर्योदये सूर्यो राहुणा ग्रस्यते रविः ॥ ग्रहणकालिकरवि



चन्द्रयो र्मेघेनाच्छादनेनाच्छादनकारणं यथा । रविभौमनवांशेतु निरभ्रं ग्रास मादिशेत् । बुधसौरि नवांशेतु मलिनं धूम्रवर्णकम् ॥ गुरोरंशक मासाद्य दृश्यते सवलाहकः । शशिशुक्रनवांशेतु प्राहट्काले महज्जलम् ॥ अन्यत्राप्यक्तभूतौ तौ हृश्येते छादिताम्बरा विति ॥ चन्द्रग्रहश्चन्द्रवारे सूर्ये सूर्यग्रहस्तथा । चूडामणिरयं योगस्तत्रानन्तफलं स्मृतम् ॥ अन्यस्माद्ग्रहणात् कोटिगुणम् पुफलं लभेत् ॥ ह्युतिविशेषः ॥ गृह्यते ऽनेन । ग्रह० । करणेल्युट् । सामान्येनपुंसकम् ॥

ग्रहणिः । स्त्री । ग्रहणीरोगे ॥ गृह्णाति । ग्रह० । ग्रहेरनिः ॥

ग्रहणी । स्त्री । पुरीषपूर्णायामग्न्यधिष्ठानमाड्याम् ॥ रोगविशेषे । प्रवाहिकायाम् । सङ्ग्रहण्याम् ॥ तस्यनिदानसम्प्राप्ती यथा । अतीसारे निवृत्ते ऽपि मन्दाग्ने रहिताशिनः । भूयः सन्दूषितो वह्नि र्ग्रहणीमपि दूषयेत् ॥ एकैकशः सर्वशश्च दोषैरत्यर्थमूर्च्छितैः । सा दुष्टा बहुशो भुक्त माम मेव विमुञ्चति ॥ पक्कं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम् । ग्रहणीरोगमाहुस्तमायुर्वेदविदोजनाः

ना इति । अतीसारेऽस्वधातुप्रवृ-
त्तिः ग्रहण्यामन्नुमद्दुष्टापि मलस्य प्रवृ
त्तिरिति तयोर्भेदः ॥ गृह्णाति जाठ
राग्निम् गृह्यते वा । ग्रह० । कृत्यल्यु
टोबहुलमितिल्युट् । ङीप् ॥ यद्वा
। ग्रहेरनिः । कृदिकारादिति ङीष् ॥
ग्रहणीरुक् । स्त्री । ग्रहण्याम् । प्रवा-
हिकायाम् ॥
ग्रहणीहरम् । न । लवङ्गे ॥ त्रि । ग्रह
णीहारिणि ॥
ग्रहदेवता । स्त्री । ग्रहाणां दैवते ॥ य
था । शिवाधिदैवतं सूर्य्यं वह्निप्रत्य
धिदैवतम् । १ । उमाधिदैवतं सोमं
जलप्रत्यधिदैवतम् । २ । स्कन्दाधि
दैवतं भौमं क्षितिप्रत्यधिदैवतम् ३
॥ नारायणाधिदैवञ्च विष्णुप्रत्यधि
दैवतम् । बुधम् । ४ । ब्रह्माधिदैवं
सूर्य्यास्य मिन्द्रप्रत्यधिदैवतम् । ५ ।
शक्राधिदैवतं शुक्रं शचीप्रत्यधिदै
वतम् ६ ॥ यमाधिदैवतं प्रजापति
प्रत्यधिदैवतम् ७ ॥ कालाधिदैवं
सूर्य्यास्यं सर्पप्रत्यधिदैवतम् । ८ ॥
चित्रगुप्ताधिदैवञ्च ब्रह्मप्रत्यधिदैव
तम् ९ ॥ अग्न्यादिषु च । अग्निरापो
धरा विष्णुरिन्द्रेन्द्राण्यौ प्रजापतिः ।
सार्पराजौ तथा ब्रह्मा ग्रहाणां देव
ताः स्मृताः । इति वृद्धशौनकीमत

म । वृद्धशौनकग्रन्थे शिवादीनामेव
ग्रहदेवतात्वमुक्तम् ॥
ग्रहद्रुमः । पुं । शाकवृक्षे ॥
ग्रहनायकः । पुं । सूर्य्ये ॥ शनैश्चरे ॥
ग्रहनाशः । पुं । छातियान इति गौड
भाषाप्रसिद्धे वृक्षे ॥
ग्रहनाशनः । पुं । ग्रहनाशे ॥
ग्रहनेमिः । पुं । चन्द्रे ॥
ग्रहपतिः । पुं । सूर्य्ये ॥ ग्रहाणांपतिः ॥
अर्कद्रुमे ॥
ग्रहपुषः । पुं । भानौ । सूर्य्ये ॥
ग्रहभक्तिः । स्त्री । केषां जनपदानां को
ग्रहोऽधिपतिरित्येतत् यत्र निरू
प्यते तद्ग्रन्थे ॥ ग्रहाणां भक्तिर्विभा
गः ॥ विशेषं वृहत्संहितायां १६ अ
ध्याये ॥
ग्रहभिन्नम् । न । भौमादिग्रहैर्भिन्ने ॥
ग्रहेण ग्रहैर्वाभिन्नम् ॥
ग्रहभिन्नभम् । न । भौमादिग्रहैर्भि
न्ने नक्षत्रे ॥ ग्रहभिन्नञ्चतत् भञ्च ॥
ग्रहभीतिजित् । पुं । गन्धद्रव्यविशेषे ।
चीडायाम् । दारुगन्धायाम् ॥
ग्रहमैत्रम् । न । ग्रहाणांमित्रामित्रादि
विचारे ॥ यथा । सूर्य्यस्य मित्राणि
कुजेन्दुजीवाः समो बुधोऽरी श
निभार्गवौ च । चन्द्रस्य मित्रेतु दि
वाकरज्ञौ समाः कुजाद्यास्त्वसितेज्य

भौमाः ॥ कुजस्य मित्राणि रवीन्दुजीवाः समौ तथा मन्दभृगू बुधोरिः । बुधस्यमित्रे सितभास्करौ समाः कुजेज्यमन्दा रिपुरिन्दुरेव ॥ मित्राणि जीवस्यकुजेन्दुसूर्याः शनिःसमः शुक्रबुधौतुशत्रू । शुक्रस्य मित्रेशनिरौहिणेयौ समौ कुजेज्यौतु रिपूरवीन्दू ॥ शनेस्तुमित्रे भृगुचन्द्रपुत्रौ जीवः समोऽन्येप्यरयस्तुशेषाः ॥

ग्रहयागः । पुं । ग्रहाणांयज्ञः ॥ अस्यप्रयोजनन्तु । शान्तौपुष्टौ महेशानि तथा क्रूरेऽपिकर्म्मणि । ग्रहयागं प्रकुर्व्वाणो वाञ्छितार्थं मवाप्नुयादिति महानिर्व्वाणतन्त्रम् । तस्यशान्तिकत्वेमलमासादावपि कर्त्तव्यत्वम् । पौष्टिकत्वेतु शुद्धकाले ॥ अपिच । गोचरे वा विलग्ने वा ये ग्रहारिष्टसूचकाः । पूजयेत् तान् प्रयत्नेन पूजिताः स्युः शुभावहाः ॥ श्रीकामः शान्तिकामो वा ग्रहयज्ञंसमाचरेत् । दृष्ट्यायुः पुष्टिकामो वा तथैवाऽभिचरन्नपीति ग्रहयागतत्त्वम् ॥ अस्य प्रयोगो महानिर्व्वाणे द्रष्टव्यः ॥

ग्रहयुद्धम् । न । ग्रहयोरायोधने ॥ वियति चरतां ग्रहाणा मुपर्य्युपर्यात्ममार्गसंस्थानाम् । अतिदूराद्दृग्विषये समतामिव सम्प्रयातानाम् ॥ आसन्नक्रमयोगाद्भेदोल्लेखांऽशुमर्द्दनासव्यैः । युद्धं चतुष्प्रकारं पराशराद्यैर्मुनिभिरुक्तम् ॥ भेदे वृष्टिविनाशो भेदः सुहृदां महाकुलानाञ्च । उल्लेखे शस्त्रभयं मन्त्रिविरोधः प्रियान्नत्वम् ॥ अंशुविरोधे युद्धानि भूभृतां शस्त्ररुक्क्षुदवमर्द्दाः । युद्धे चाप्यपसव्ये भवन्ति युद्धानि भूपानाम् ॥ विशेषोबाराह्यां १७ अध्याये ॥

ग्रहयुद्धभम् । न । ग्रहयुद्धर्क्षं । यस्मिन्नृक्षे ग्रहयोर्युद्धंजातं तस्मिन् ॥

ग्रहराजः । पुं । रवौ ॥ चन्द्रे ॥ ग्रहाणां राजा । टच् ॥ गुरौ ॥

ग्रहवर्षफलाध्यायः । पुं । कस्य ग्रहस्यकस्मिन्वर्षे कीदृशानि शुभफलानि भवन्ति तन्निरूपणपरे ग्रन्थसन्धौ ॥ यतोवराहमिहिरेण पूर्व्वमेवप्रतिज्ञातमासीत् । वर्षे यद्यस्यफलंमासेचमुनिप्रणीतमालोक्य । तद्वृत्तैर्वक्ष्येऽहं होरातन्त्रोक्तविधानइति ॥ विशेषं पश्यवाराह्यां १९ अध्याये ॥

ग्रहवह्निः । पुं । ग्रहाणां होमाधिकरणे ॥ तेच नव सङ्ख्यकाः । यथा । कपिलः पिङ्गलो धूम्रः केतुश्च जठराग्निकः । शिखीच हाटकश्चैव महातेजा हुताशनः । हुताशनस्य विज्ञेयो नवैतेग्रहवह्नयइति ॥

ग्रहशृङ्गाटकः । पुं । वाराह्याः २० अध्याये ॥

ग्रहसमागमः । पुं । वाराह्याः १८ अध्याये निरूपितः ॥

ग्रहाधारः । पुं । ध्रुवर्क्षे ॥

ग्रहामयः । पुं । भूतादिनाजाते रोगे । आवेश ॥

ग्रहाशी । पुं । ग्रहनाशवृक्षे ॥

ग्रहाह्वयः । पुं । भूताङ्कुशद्रुमे ॥

ग्रहीता । त्रि । गृहयालौ । ग्रहणकर्त्तरि ॥ गृह्णाति । ग्रह० । तृन् ॥

ग्रामः । पुं । संवसथे । विप्रादिवर्णमाये प्राकारपरिखादिरहिते हट्टादिशून्ये बहुजनवासस्थाने ॥ विप्राश्च विप्रभृत्याश्च यत्रचैव वसन्तिहि । स तु ग्राम इति प्रोक्तः शूद्राणां वासएवच ॥ तथा शूद्रजनप्रायाः सुसमृद्धकृषीवलाः । क्षेत्रोपयोगभूमध्ये वसतिर्ग्रामसंज्ञिका ॥ शब्दादिपूर्वको ग्रामः समूहार्थे । यथा । शब्दग्रामः भूतग्रामः । इत्यादि ॥ संपूर्वः संयोगभृतः ॥ स्वरविशेषे ॥ सप्त स्वरास्त्रयो ग्रामा मूर्च्छना एकविंशतिः ॥ तेषु षड्जग्रामो मध्यमग्रामः पञ्चमग्रामश्चेति त्रयः । ग्रामलक्षणं । यथा कुटुम्बिनः सर्वएकी भूताभवन्तिहि । तथा स्वराणां सन्दोहो ग्रामइत्यभिधीयते ॥ षड्जग्रामो भवेदादौ मध्यमग्राम एवच । गान्धारग्राम इत्येतत् ग्रामत्रयमुदाहृतम् ॥ तथा । नन्द्यावर्त्तो वर्जीमूतः सुभद्रो ग्रामकास्त्रयः । षड्जमध्यमगान्धारास्त्रयाणांजन्महेतवः ॥ ग्रसते ग्रस्यते वा । ग्रसु अदने । ग्रसेरात्वेतिमन् आत्वञ्च ॥

ग्रामकूटः । पुं । शूद्रविशेषे । वर्णान्तरे । अन्तता इतिभाषा ॥

ग्रामगृह्या । स्त्री । ग्रामबहिर्भूतसेनायाम् ॥ पदास्वैरिबाह्यापक्ष्येषुचेति क्यप् ॥

ग्रामजालिन्यार्थी । स्त्री । [illegible] ॥

ग्रामणीः । पुं । नापिते ॥ यक्षौ ॥ त्रि । प्रधाने ॥ ग्रामाधिपतौ ॥ भोगिके ॥ स्त्री । वेश्यायाम् ॥ ग्रामेयायाम् ॥ नीलिकायाम् ॥ ग्रामंनयति । णी ञ० । सत्सूद्विषद्रुहेत्यादिनाक्विप् । अग्रग्रामाभ्यांनेतिणत्वम् ॥

ग्रामतक्षः । पुं । बहूनां साधारणे काष्ठतक्षिणि ग्रामाधीने वर्द्धकौ ॥ ग्रामस्तक्षा । ग्रामकौटाभ्यांतक्ष्णइति टच् ॥

ग्रामता । स्त्री । ग्रामसमूहे ॥ ग्रामाणांसमूहः । ग्रामजनबन्धुभ्यस्तल् ॥

ग्रामधर्म्मः । पुं । व्यवाये ॥ ग्रामेभवः । युवादित्वादण् । सचासौ धर्मश्च ॥

ग्रामभृतः । पुं । ग्रामप्रेष्ये ॥ विप्रश्चेत् कुपश्वमात्राश्रयः ॥

ग्राममद्गुरिका । स्त्री । ग्रामयुद्धे ॥ मृ क्रीभाषे ॥

ग्राममुखः । पुं । हट्टे ॥

ग्राममृगः । पुं । कुक्कुरे ॥

ग्रामयाजकः । पुं । अग्राह्यविशेषे । ग्रामस्थनानावर्णानां पुरोहिते ॥ ग्रामार्थे यजति ॥ इतिश्रीधरस्वामी ॥

ग्रामयाजी । पुं । बहूनांयाजके ॥

ग्रामश्यालकः । पुं । भगिनीपतौ ॥

ग्रामाधानम् । न । मृगयायाम् ॥

ग्रामाधीनः । त्रि । ग्रामवशवर्त्तिनि नापितकर्त्तृकादौ ॥ ग्रामेऽधि । सप्तमीतिसमासः । अडधच्चेतिखः ॥

ग्रामान्तम् । न । उपशल्ये । ग्रामस्यनिकटे ॥ ग्रामस्यान्तम् समीपम् ॥

ग्रामिकी । स्त्री । नीलीवृक्षे ॥

ग्रामी । त्रि । ग्रामविशिष्टे । ग्रासम इति भाषा ॥ यथा । कडीचनाल हरीतवाल इत्यादि ॥

ग्रामीणः । पुं । ग्राम्यशूकरे ॥ कुक्कुरे ॥ काके ॥ त्रि । ग्रामोद्भूते ॥ ग्रामे भवः । खञ् ॥

ग्रामीणा । स्त्री । नीलिकौषधौ ॥ पालक्यशाके ॥ ग्रामेभवा । ग्रामाद्यखञावितिखञ् । टाप् ॥

ग्रामेयकः । पुं । ग्राम्ये ॥ ग्रामेभवः । कत्र्यादित्वात्ढकञ् ॥

ग्रामेया । स्त्री । ग्राम्यनार्याम् ॥

ग्रामेशः । पुं । ग्रामस्याधीशे । ग्रामेश्वरे॥

ग्राम्यम् । न । स्त्रीकरणे । रतबन्धे ॥ त्रि । प्राकृते । मूढे । ग्रामभवे । ग्रामीणे ॥ दम्भालिकन्याघटतौलिचापा ग्राम्या निशायां वृषमेषकौच ॥ अश्लीले । भण्डादिवचने ॥ छागादिषु ॥ छागमेषवृषाश्वाद्याः ग्राम्याः प्रोक्ता महर्षिभिः । ग्राम्या वातहराः सर्वे दीपनाः कफपित्तलाः ॥ मधुरा रसपाकाभ्यां वृंहणा बलवर्द्धनाः ॥ ग्रामेभवः । ग्रामाद्यखञा वितिशेषिकौयः ॥

ग्राम्यकन्दः । पुं । स्थलकन्दे । वनओल इति भाषा ॥ ग्राम्यकन्दसमुदोषलः ॥

ग्राम्यकर्कटी । स्त्री । कुष्माण्डे ॥

ग्राम्यकुङ्कुमम् । न । कुसुम्भे ॥

ग्राम्यधर्म्मः । पुं । ग्रामधर्मे । मैथुने ॥ ग्रामेभवाः ग्राम्याः हालिकमाकटिकप्रभृतयः । तेषांधर्मः ॥

ग्राम्यपशुः । पुं । ग्रामजातजन्तौ ॥ सतु सप्तविधो यथा । गौ मेषो ऽश्वो

मनुष्यस्य अश्वाश्वतरगर्द्दभाः। इति॥

ग्राम्यमद्गुरिका। स्त्री। शृङ्गीमत्स्ये॥

ग्राम्यमृगः। पुं। कुक्कुरे॥

ग्राम्यराशिः। पुं। मिथुनकन्यातुलावृश्चिकधनुष्कुम्भेषु॥ राशौ मेषवृषयोः॥

ग्राम्यवल्लभा। स्त्री। पालङ्क्यशाके॥

ग्राम्यशूकरः। पुं। ग्रामोत्पन्नवराहे। विड्वराहे॥

ग्राम्या। स्त्री। तुलस्याम्॥ नखनिष्पाविकायाम्॥ नील्याम्॥ वृत्त्यनुप्रासघटकवृत्तिभेदेषु कोमलापर्याये॥

ग्राम्याश्वः। पुं गर्द्दभे॥

ग्रावा। पुं। प्रस्तरे॥ पृथ्वीधरे। पर्वते॥ ग्रसते। ग्रसुअदने। अन्येभ्योपीति डः। आवनति। वनसम्भक्तौ शब्दे वा। विच्। ग्रश्चासावावाच॥ ग्रसते। अन्ये० वनिप्। पृ० वा॥ यद्वा। गिरति गृणाति वा। गृनिगरणेशब्दे वा। अन्येभ्योपीति वनिप्। पृ०॥ यद्वा। गरति। गसेके। मू० कः। अवति। अवरक्षणादौ। गाहुलकात् कनिः। ग्रश्चासावावाच॥ मेघ॥ इतिविश्वः॥ त्रि। दृढे॥ इति शब्दरत्नावली॥

ग्रावस्तुत्। पुं। ऋत्विग्विशेषे॥ ग्रावभासेति क्विप्॥

ग्रासः। पुं। कवले। पिण्ड। मुखपूरणमात्रादौ॥ यथा। कुक्कुटाण्डप्रमाणंस्याद्यावान्वा प्रविशेन्मुखम्। एतं ग्रासं विजानीयात् शुद्ध्यर्थं कायशोधनम्॥ इति प्रायश्चित्तेपराशरः॥ ग्रस्यते। ग्रसु०। अकर्त्तरीतिघञ्॥

ग्राहः। पुं। गाह इति भाषा प्रसिद्धे जलजन्तुविशेषे। अवहारे॥ ग्रहणे॥ गृह्णाति। ग्रह०। विभाषाग्रहइति व्यवस्थितविभाषया जलचरे नित्यमेव ग प्रत्ययः। स्वार्थेग्रहणादेष घञ्वा॥ शिशुके॥

ग्राहकः। पुं। व्याधानांघातिपक्षिणि। श्येने॥ सितावरशाके॥ विषवैद्ये॥ त्रि। गाहक इति भाषाप्रसिद्धे ग्रहीतरि॥ धान्यानांग्रहीतरि॥ गृह्णाति। ग्रहउपादाने। ण्वुल्॥

ग्राहयिता। त्रि। ग्रहणकारयितरि॥

ग्राहिणी। स्त्री। क्षुद्रदुरालभायाम्॥ चिरइति इतिगौडभाषाप्रसिद्धे ताम्रमूलावृक्षे॥

ग्राहितः। त्रि। ग्रहणं प्रापिते। ग्रहण करायाइतिभाषा॥

ग्राही। पुं। कपित्थे॥ त्रि। ग्रहणकर्तरि। ग्राहके॥ मलबद्धके। धारके॥ गृह्णाति। ग्रह०। ग्रह्यादिभ्याणिनिः॥

ग्रहिष्णुः । पुं । अपिग्रागमे ॥

ग्राह्यः । त्रि । उपादेये । ग्रहीतुमुचिते ॥

ग्रीवा । स्त्री । कन्धरायाम् । शिरोधरायाम् ॥ तच्छिरायाम् ॥ गिरन्त्यनया गीर्यते ऽनयावा । शेवयह्वजिह्वाग्रीवेतिसाधुः ॥

ग्रीष्मी । पुं । स्त्री । उष्ट्रे ॥ त्रि । प्रशस्तग्रीवायुक्ते ॥ अतिशयिता प्रशस्तावा ग्रीवा अस्यास्य । ग्रीवादिस्वादिनिः ॥

ग्रीष्मः । पुं । निदाघर्त्तौ । ज्येष्ठाषाढयोः । उष्मागमे ॥ अथकालस्य फलं यथा । ग्रीष्मोद्भवो भोगभवानुरक्तो वक्ता सुशीलो जलकेलिशीलः । विद्याधनैश्वर्ययशोमनोज्ञो धन्वी सुवेशः परदारचित्तइति ॥ त्रि । तद्वति ॥ ग्रसतेरसान् । ग्रसु० । ग्रीष्मइत्युणादिस्तु चेमनिपातितः ॥

ग्रीष्मजा । स्त्री । नवल्याम् । लोणाइति गौडप्रसिद्धे फलवृक्षे ॥ ग्रीष्मे जायते । जनी० । डः ॥ नवमाल्याम् ।

ग्रीष्मपुष्पी । स्त्री । करुणीपुष्पवृक्षे ॥

ग्रीष्मभवा । स्त्री । नवमल्लिकायाम् ॥ ग्रीष्मेभवोऽस्याः ॥

ग्रीष्मसुन्दरः । पुं । } गीमाइति

ग्रीष्मसुन्दरकः । पुं । } गौडप्रसिद्धे शाकविशेषे ॥

ग्रीष्महासम् । न । इन्द्रतूले । वृद्धसूचके । बुढियाकाबूत इति भाषा ॥

ग्रीष्मी । स्त्री । } नवमल्लिकायाम् ॥

ग्रीष्मोद्भवा । स्त्री । }

ग्रैवम् । न । ग्रीवाभरणे ॥ ग्रीवायांभवः । अण् ॥ त्रि । तद्वस्ये ॥

ग्रैवेयम् । न । कण्ठभूषणे ॥ ग्रीवायां भवम् । ग्रीवाभ्योऽणचेतिढञ् ॥

ग्रैवेयकम् । न । कण्ठभूषायाम् ॥ ग्रीवायांभवम् । कुलकुक्षिग्रीवाभ्यःश्वास्यलङ्कारेष्वितिढकञ् ॥

ग्रैष्मिकः । पुं । ग्रीष्मसम्बन्धिनि ॥ ग्रीष्मः । तमधीतेवेदवा । वसन्तादिभ्यष्ठक् ॥

ग्रैष्मी । स्त्री । नवमल्लिकायाम् ॥ ग्रीष्मजायाम् ॥ ग्रीष्मेजातादिः । सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् । ङीप् ॥

ग्लपितः । त्रि । कर्षिते ॥

ग्लस्तः । त्रि । भक्षिते ॥ ग्लस्यतेस्म । ग्लसुअदने । क्तः ॥

ग्लहः । पुं । पणे । द्यूते लाभस्थाने । द्यूतादौजयलब्धेनस्थापिते ॥ ग्लह्यते ऽनेन वा । ग्लहआदाने । पुंसीतिघः । प्रस्थेतिघञ्वा । संज्ञापूर्वकत्वान्नवृद्धिः ॥ गृह्यते इतिवा ग्लहः । अक्षेषुग्लहइति देवनविषये-पकारूपेणग्राह्येवस्तुनि निपातनंवा ॥

घटः | घटयो

ग्लाता । चि । ग्लानियुक्ते ॥

ग्लानः । त्रि । रोगात्क्षीणकाये । ग्लासौ ॥ रोगिणि ॥ ग्लाधतिक्ष्म । ग्लैक्षये । गत्यर्थेति क्तः । संयोगादेरितिनत्वम् ॥

ग्लानिः । स्त्री । अस्वाच्छन्द्ये । बलहीनतायाम् ॥ रोगे ॥ हानौ ॥ अनुत्साहे ॥ ग्लानम् । ग्लै० । ग्लाज्याहाभ्योनिः ॥

ग्लानिच्छेदी । त्रि । खेदहारिणि ॥

ग्लावः । पुं । मैत्रेये । वकाख्यपै । चैकितायने ॥

ग्लास्नुः । त्रि । ग्लाने । रोगक्षीणदेहे ॥ ग्लानशीलः । ग्लाजिस्थश्चग्स्नुः ॥

ग्लेपनम् । न । दैन्ये ॥ ग्लेपृदैन्ये । ल्युट् ॥

ग्लौः । पुं । मृगाङ्के । चन्द्रमसि ॥ कर्पूरे ॥ ग्लायति । ग्लै० । ग्लानुदिभ्यांडौः ॥

घः

घः । पुं । घकारे ॥ घण्टायाम् ॥ घर्घरशब्दे ॥ इतिमेदिनिकरः ॥

घटः । पुं । समाधिभेदे । कुम्भके ॥ इभशिरःकूटे ॥ कुटे । पृथुबुध्नोदराकारे । कम्बुग्रीवादिमदाकारादिरूपे । कलसे ॥ कुम्भराशौ ॥ द्रोणपरिमाणे ॥ घटते । घटचेष्टायाम् । पचाद्यच् ॥

घटकः । पुं । वनस्पतौ ॥ योजके । व्यवहारे ॥ तल्लक्षणं यथा । धावको भावकश्चैव योजकश्चाभकस्तथा । दूषकस्तावकश्चैव षडेते घटकाः स्मृताः ॥ अन्यच्च । के नो विदन्ति पुरुषाः पुरुषानुपूर्वीमुर्वीतले कुलभृतांपरिवर्त्तनं वा । अस्यमन्तरङ्गमपि येकुलतारतम्यंजानन्तितेपि घटकानतु योजकाद्याः ॥ इत्याधुनिकैर्गौडदेशोद्भवैः कल्पिता कुलदीपिका ॥ ह्रस्वघटे ॥ घटयति । घटनात् घटेर्ण्वुल् ॥

घटजन्मा । पुं । अगस्त्यमुनौ ॥

घटदासी । स्त्री । कुट्टन्याम् । रतताल्याम् ॥

घटनम् । न । निर्माणे । घडना इति भाषा ॥ घटेर्ल्युट् ॥

घटना । स्त्री । हस्तिसङ्घे ॥ करिणांघटना घटा ॥ मेलने । योजनायाम् ॥ यथा । अघटनघटनापटीयसी मायेति ॥ घटनम् । घटसङ्घाते । चु० । ण्यासश्रन्थोयुच् । टाप् ॥

घटयोनिः । पुं । अगस्त्यमुनौ ॥

घटराजः । पुं । कुम्भे ॥

घटा । स्त्री । घटने ॥ गजसंहतौ । घटनायाम् ॥ गोष्ठ्याम् ॥ समूहे ॥ घटनम् । घट० । घटादयः षित इति षित्त्वादङ् ॥

घटालाबुः । स्त्री । कुम्भतुम्ब्याम् ॥

घटिकः । पुं । चक्रिके । घटिकावादके ॥ घटीकायति । कै० । आतइतिकः । क्यापोरितिह्रस्वः ॥ न । नितम्बे ॥ षि । घटेनतरणशीले ॥ घटेनतरति । नौद्व्यचष्ठन् ॥

घटिका । स्त्री । घडी इति भाषाप्रसिद्धे दण्डे । नाडिकायाम् ॥ घटिकाज्ञानोपायो यथा । निमेषो मानुषो योयं मात्रामात्रप्रमाणकः । तैः पञ्चदशभिः काष्ठा त्रिंशत्काष्ठास्तथाकला ॥ नाडिकातु प्रमाणेनकलादशचपञ्चच । उन्मानेनाम्भसःसातु पलान्यर्द्धत्रयोदश ॥ हेममाषैः कृतच्छिद्रा चतुर्भिश्चतुरङ्गुलैः । मागधेन प्रमाणेन जलप्रस्थस्तुसंभृतः ॥ इतिविष्णुपुराणम् ॥ नैमित्तिकलयं प्रपञ्चयिष्यन् निमेषादिक्रमेण प्रथमांशोक्तमेवकल्पप्रमाण मनुस्मारयति निमेषइति सप्तभिः । मात्रैव मात्रं प्रमाणं यस्य । एकमात्रलघ्वक्षरोच्चारणकालसम्मितोहि निमेषः । निमेषकालतुल्यैवहि मात्रा लघ्वक्षरञ्च यत इतिब्रह्माण्डोक्तेः ॥ नाडिकाज्ञानोपायमाह । उन्मानेनेति सार्द्धेन । अम्भस उन्मानेन उन्मीयतेऽनेनेत्युन्मानं पात्रम् । अर्द्धेनयोगे त्रयोदश सार्द्धद्वादशेत्यर्थः । उन्मानरूपेण घटितानि सार्द्धद्वादशपलानि सानाडिका । सार्द्धद्वादशपलताम्रनिर्मितपात्रेण सानाडिकाज्ञातव्येत्यर्थः । किंप्रमाणंतत्पात्रं कार्यं तदाह । मागधेन प्रमाणेन जलप्रस्थस्तुसंभृत इति । सार्द्धद्वादशपलजलेनहि मागधदेशप्रस्थः पूर्यते । तत् प्रमाणं पात्रं कार्यमित्यर्थात् सिद्धम् । ननु तथापि पात्रेणकथं नाडिकाज्ञानं क्रियापरिच्छेद्यत्वात् कालस्ये त्याशङ्क्य क्रियासिद्धये-प्रस्थादि विशिनष्टि । हेमेति । माषः पञ्चगुञ्जः । हेम्नो माषैश्चतुर्भिश्चतुरङ्गुलेन शलाकारूपेण रचितैः कृतच्छिद्रा । एतदुक्तं भवति । सार्द्धद्वादशपलताम्रमयं मागधप्रस्थसंमित मूर्द्धायतं पात्रं चतुर्माषचतुरङ्गुलहेमशलाकया कृताधश्छिद्रं जलेस्थापितं तेन छिद्रेण यावता कालेन पूर्यते तावान् कालोनाडिकेति । तथाचशुकः । द्वादशार्द्धप

लोन्मानं घनुर्भ मनुरङ्गुलैः । स्व यंमाघैः कृतच्छिद्रं यावत् प्रस्थजल पूर्णमिति । इतितट्टीकायांश्रीधर स्वामिनः ॥ गुर्वक्षराणां मुदित व्य घष्ट्या पञ्चं पलानां घटिका किलैकेति कालिदासः ॥ मुहूर्ते ॥ अल्पे घटे ॥ घट्येव । स्वार्थे कः ॥

घटितः । त्रि । निर्मिते ॥

घटी । स्त्री । घटिकायाम् । दण्डे । घडी इतिभाषा ॥ यथा । अमभ्यं यदायुःपलं स्वर्णभारैः रहो तस्य दण्डो मृषा याति यावः । इदानीमपि श्रीश्वरे मत्त चेतो विसज्जित्य कं घोषयन्तीघटीयन्त्रिति ॥ स्वल्पे कुम्भे । घडिआ इतिभाषा ॥ घटते । घट० । अच् । जातित्वात् ङीष् ॥

घटीकारः । पुं । कुलाले ॥ घटींकरोति । कृञः कर्मण्यण् ॥

घटीयन्त्रम् । न । अरघट्टे । कूपादेर्जलोद्धारणयन्त्रे । उद्घाटने ॥ घटीनांयन्त्रम् ॥ गण्डीरोगभेदे ॥ यथा । मलुभिः पार्श्वयोः शूलं तथा जल घटीध्वनिः । तंवदन्ति घटीयन्त्रमसाध्यं गण्डीमदमिति ॥

घटोत्कचः । पुं । हिडम्बायां भीमसेनाज्जाते राक्षसविशेषे ॥

घटोत्कचात्मजः । पुं । कर्णे । राधेये । युधिष्ठिराग्रजे ॥

घटोद्भवः । पुं । अगस्त्यमुनौ ।

घट्टः । पुं । नद्यादौ स्नानाद्यर्थं मवतरणस्थाने । घाट इति भाषा ॥ तीर्थावतारे ॥ शुल्कग्रहस्थाने । जगात इति भाषा ॥ घट्यते ऽत्र । घट्टचलने । हलश्चेतिघञ् ॥

घट्टगा । स्त्री । नदीविशेषे ॥ यथा । मलापहा भीमरथीच घट्टगा यथा च कृष्णा जलसाम्यता गुणैः । मला पहा घट्टपयस्तथापि पथ्यं लघु स्वादुतरं सुकान्तिदम् ॥ इति राजनिघण्टः ॥

घट्टजीवा । पुं । पाटुनि इतिगौडभाषा प्रसिद्धे वैश्यायां रजका ज्जाते वर्णसङ्करजातिविशेषे ॥

घट्टनम् । न । अभिघाते ॥

घट्टना । स्त्री । चलनायाम् ॥ वृत्तौ ॥

घट्टितः । त्रि । निर्मिते । घडागया इति भाषा ॥ चित्रपटार्थं रञ्जनाद्याञ्जेन लिप्ते वस्त्रादौ ॥

घरटः । पुं । अञ्जनविशेषे ॥

घरटकः । पुं । } घेंटको इति

घरटकर्णः । पुं । } गौडभाषाप्रसिद्धे खगविशेषे ॥

घरट्टा । स्त्री । काष्ठनिर्मिते यावपि-

शेषे । यथा । सर्वेषाञ्चैव घण्टाया याभावे नियोजयेदिति ॥ अतिबला याम् । नागबलायाम् ॥ घण्टापाटलौ ॥ अच्छानि । बाहुलकाट्टलेष्टो घस्विश्व । टाप् ॥

घण्टाकर्ण: । पुं । शिवस्यातिवल्लभे गणविशेषे ॥

घण्टाताड: । पुं । घडियावली घण्टा पाँडे इतिचभाषाप्रसिद्धे घण्टावादिनि ॥

घण्टानाद: । पुं । कुवेरमन्त्रिणि ॥

घण्टापथ: । पुं । पुरप्रधानमार्गे । मरुतिराजमार्गे । संसरणे ॥ यथा । दशधन्वन्तरो राजमार्गो घण्टापथ: स्मृत: ॥ घण्टोपलक्षित: पन्था: । शाकपार्थिवादि: ॥ यद्वा । घण्टानां पन्था: । घण्टाग्रहणं वादित्राणां तद्वतां हस्त्यादीनां वोपलक्षणम् । ऋक्पूरिच्च: ॥

घण्टापाटलि: । पुं । गोलीढे । मुष्ककद्रुमे ॥ अच्छानि इति घण्टा । पटनम् । पटगतौ । घञ् । पाटं लाति । ला० । बाहुलकाट्डि: । घण्टाचासौ पाटलिश्च ॥

घाण्टारवा । स्त्री । वृक्षविशेषे । शणपुष्पिकायाम् । वनसण इति भाषाभनिवा इतिच भाषा ॥ घण्टेव आरौति । शब्दे । अच् ॥

घण्टाली । स्त्री । कोषातक्याम् ॥

घण्टावीजम् । न । जयपाले ॥

घण्टाशब्दम् । न । कांस्ये ॥ इतिहेमचन्द्र: ॥

घण्टिक: । पुं । घरियाराख्ये याद्दोविशेषे ॥

घण्टिका । स्त्री । तालूर्ध्वस्थक्षुद्रजिह्वायाम् । लम्बिकायाम् ॥

घण्टिनीवीजम् । न । जयपाले ॥

घण्टु: । पुं । गजघण्टायाम् ॥ प्रतापे ॥

घण्टेश्वर: । पुं । मङ्गलपुत्रे व्रणदातरि देवताविशेषे ॥

घतम: । पुं । मारके ॥ हन्ति । हन० । हन्तेर्घुत्राद्यन्तयोर्घस्तश्च ॥

घन: । पुं । मुस्तायाम् ॥ अब्दे । मेघे ॥ ओघे ॥ दार्ढ्ये । काठिन्ये ॥ मूर्त्तिगुण: काठिन्यम् । असर्वगतद्रव्यपरिमाणं मूर्त्ति: । सैवगुण: ॥ विस्तारे ॥ लोहमुद्गरे ॥ हन्यते ऽनेनवा ॥ शरीरे ॥ कफे ॥ अभ्रके ॥ सजातीयाङ्कत्रयस्यपूरणे ॥ समत्रिघातश्च घन: प्रदिष्टइति भास्कराचार्योक्ते: ॥ न । कांस्यताला दिवाद्ये ॥ मध्यमनृत्ये ॥ नृत्यइत्युपलक्षणं गीतवाद्ययो: ॥ त्वचे ॥ लौहे ॥ त्रि । निविडे । सान्द्रे ॥ निरन्तरे । पूर्णे ॥ दृढे ॥ हननम् । हन्य

तेवायुमारा। घन० ॥ मूर्त्ती घन इति कल्लेरपघनादेशश्च ॥

घनकफः। पुं। वर्षोपले। करकायाम् ॥ घनस्य कफइव ॥

घनकालः। पुं। वर्षाकाले ॥ घनस्य मेघस्य कालः ॥

घनगोलकः। पुं। संश्लिष्टरजतसुवर्णे। सोनारूपामिला इतिभाषा। इति हेमचन्द्रः ॥

घनच्छदः। पुं। शिग्रौ ॥

घनजम्बालः। पुं। चुलुके ॥

घनज्वाला। स्त्री। मेघदीप्तौ। वज्राग्नौ ॥

घनतालः। पुं। सारङ्गविहगे ॥

घनतोलः। पुं। चातकपक्षिणि ॥

घनत्वम्। न। सान्द्रतायाम् ॥

घनत्वक्। पुं। लोध्रे ॥

घनद्रुमः। पुं। विकण्टकवृक्षे ॥

घननाभिः। पुं। धूमे ॥

घनपत्रः। पुं। पुनर्नवायाम् ॥

घनपदवी। स्त्री। आकाशे ॥

घनपल्लवः। पुं। शोभाञ्जने ॥

घनपाषण्डः। पुं। मयूरे ॥

घनप्रज्ञः। पुं। प्राज्ञे। विशेषविज्ञानविरहिणि ॥ घनीभूताप्रिज्ञायस्य ॥

घनफलः। पुं। विकण्टकवृक्षे ॥

घनमूलः। पुं। मोरटे ॥ न। पूरितसजातीयाङ्कत्रयस्याद्यङ्के ॥

घनरसः। पुं। न। मेघपुष्पे। जले। पुं। सान्द्रे ॥ निर्यासे ॥ मोरटे ॥ कर्पूरे ॥ पीलुपर्ण्याम् ॥ सम्यक्सिद्धरसे ॥

घनवर्त्म। न। आकाशे ॥

घनवल्लिका। स्त्री। विद्युति ॥

घनवल्ली। स्त्री। अमृतस्रवालतायाम् ॥

घनवातः। पुं। नरकविशेषे ॥

घनवासः। पुं। कुष्माण्डे ॥

घनवाहनः। पुं। शिवे ॥ मेघवाहने। इन्द्रे ॥ घनो वाहनमस्य ॥

घनवीथिः। स्त्री। अन्तरीक्षे ॥

घनश्यामः। पुं। श्रीरामे ॥ श्रीकृष्णे ॥ त्रि। निबिडकृष्णवर्णे ॥

घनसारः। पुं। कर्पूरे ॥ दक्षिणावर्त्तपारदे ॥ वृक्षविशेषे ॥ जले ॥ वरवारिदे ॥ घनो दृढः सारोऽस्य ॥ घनस्य सारइववा शीतत्वात् ॥

घनसूची। स्त्री। सूच्याकारेमेघे ॥

घनस्कन्धः। पुं। कोशाम्रवृक्षे ॥

घनस्वनः। पुं। तण्डुलीयशाके ॥ मेघध्वनौ ॥

घना। स्त्री। माषपर्ण्याम् ॥ रुद्रजटायाम् ॥ इतिराजनिर्घण्टः ॥

घनाकरः। पुं। वर्षाकाले ॥ घनानामाकर इव ॥

घनाघनः। पुं। वर्षुकाब्दे ॥ मत्तघ

शुककुञ्जरे ॥ चक्रे ॥ वासवे । इन्द्रे ॥ अन्योन्यघट्टने ॥ त्रि । निरन्तरे ॥ घातुके ॥ हन्ति । हन० । हन्तेर्घत्त्व ञ्चेति० पचाद्यच्चिदित्त्वम् आकृत्या- ध्यातस्य ॥

घनाघना । स्त्री । काकमाच्याम् ॥

घनात्ययः । पुं । शरत्काले ॥

घनामयः । पुं । खर्जूरागमे ॥

घनामलः । पुं । शाकवीरे ॥ पुनर्नवा याम् ॥

घनाश्रयः । पुं । आकाशे ॥

घनोदधिः । पुं । नरकविशेषे ॥

घनोपलः । पुं । करकायाम् ॥

घरः । पुं । गृहे । गेहे ॥ हन्तिहन्यते गम्यतेऽतिथिभिर्वा । हन० । हन्ते रन्घश्चेतिरन् घादेशो नलोपश्चेति दशपादीवृत्तिकृत् ॥

घरट्टः । पुं । घराट इतिपर्वतीयजन प्रसिद्धायां पेषण्याम् । जाँता चक्की इतिचदेशभाषा ॥

घर्घटः । पुं । चिकटमत्स्ये । घ्याङ्गरा इतिगौड भाषाप्रसिद्धे ॥

घर्घरः । पुं । चलद्वारिध्वनौ ॥ घाघ रा इतिप्रसिद्धे नदविशेषे ॥ घूके ॥ द्वारे ॥ स्वरविशेषे ॥

घर्घरकः । पुं । घर्घरनदे ॥ यथा । श्रो स घर्घरके जलम् कश्चिदं सन्ताप- शोषापहं पथ्यं वह्निकरं तथा चवलदं चौषाङ्गहृद्विप्रदमिति राजनिर्घण्टः ॥

घर्घरा । स्त्री । क्षुद्रघण्टिकायाम् ॥ वीणाप्रभेदे ॥ स्वरविशेषे ॥

घर्घरिका । स्त्री । क्षुद्रघण्टायाम् ॥ वा दित्रदण्डे ॥ भृष्टधान्ये ॥ नदीविशेषे ॥ वाद्यप्रभेदे ॥

घर्घरी । स्त्री । क्षुद्रघण्टिकायाम् ॥

घर्घुर्घा । स्त्री । घुर्घुरे । घुरघुरिया इ तिगौड प्रसिद्धे कीटे ॥

घर्म्मः । पुं । निदाघे । स्वेदे । श्रमवा रिणि । पसीना इति भाषा ॥ आ- तपे ॥ ग्रीष्मे ॥ उष्मणि ॥ जिघर्त्ति- क्षमनेन । घृक्षरणदीप्त्योः । घरत्य ङ्गमनेनवा । घृसेके । घर्मइति घ धातोर्मगुणश्चनिपात्यते ॥

घर्म्मवारणम् । न । छत्रे ॥

घर्म्मविचर्चिका । स्त्री । घर्मविचर्च्याम् । घमाची अमौरी घमौरी कलाई इत्यादि भाषा ॥ स्वेदवाही निदुष्य न्ति कोधशोकभयै स्तथा । ततः स्वे दः प्रवर्त्तेत दौर्गन्ध्यं घर्मचर्चिका ॥ राजिकाकृति रुष्णोत्था यतोघर्मवि चर्च्चिका ॥

घर्म्मान्तः । पुं । वर्षाकाले ॥

घर्म्मान्तकामुकी । स्त्री । बलाकायाम् ॥

घर्म्मितः । त्रि । सञ्जातघर्म्मे ॥ तारका

द्दिश्वादिरतच् ॥

घर्षः । पुं । विमर्दे । घसना इतिभाषा ॥

घर्षणम् । न । घर्षे । निघर्षे । घस् ना इतिभाषा ॥ घृषुसङ्घर्षे । ल्युट् ॥

घर्षणाल: । पुं । पेषणाश्मनि । शिला पुत्रे । लोढा वट्टा रमणा इत्यादि भाषा ॥

घर्षणी । स्त्री । हरिद्रायाम् ॥

घसि: । पुं । आहारे ॥

घस्मर: । पुं । अस्मरे । भक्षके ॥ घस ति तच्छील: । घस्लृ अदने । सृघस्य दःक्मरच् ॥

घस्र: । पुं । अहनि । दिवसे ॥ घसत्य न्धकारम् । घस्लृ० । स्फायितञ्चीति रक् ॥ न । कुङ्कुमे ॥ त्रि । हिंस्रे ॥

घा । स्त्री । काञ्च्याम् ॥ घाते ॥

घाट: । पुं । अवटौ । ग्रीवापश्चाद्भागे । घाटायाम् ॥ घाटेरच् घञ्वा ॥ घा टाऽस्याऽस्ति वा । अर्शआद्यच् ॥

घाटा । स्त्री । घाटे । कृकाटिकायाम् । शिरस: पश्चात् सन्धौ ॥ घाटयति । घाट्यते वा । घटसङ्घाते । चु० । अच् घञ्वा ॥

घाटिका । स्त्री । घाटायाम् ॥ घाटैव ॥

घाण्टिक: । पुं । चाक्रिके । मिलिता- नां राजस्तावकानां संश्रयम् । बहु भिर्मिलित्वास्तुतिपाठके ॥ घण्टया चरति । चरतीतिठक् ॥ अन्यत्तु । राज्ञ: प्रबोधसमये घण्टाशिल्पा- स्तु घाण्टिका: ॥ घुस्तूरट्चे ॥ त्रि । घण्टावादिनि ॥

घात: । पुं । काण्डे । बाणे ॥ प्रहारे ॥ मारणे ॥ अङ्कपूरणे ॥ यथा । स मन्निघातश्चघन: प्रदिष्ट: ॥ हननम् । हन० । घञ् । हनस्तोचिण्णलो: । ह्रोहन्तेरितिकुत्वम् ॥

घातक: । त्रि । वधकृति । हननकर्त्त रि ॥ बहूना मेककार्याणां सर्वेषां शस्त्रधारिणाम् । यद्येको घातक स्तत्र सर्वेते घातका: स्मृता: ॥ ह- न्ति । हन० । ण्वुल् । हनस्तोचिण्ण लो: । ह्रोहन्तेरितिकुत्वम् ॥

घातनम् । न । हनने ॥ वधे ॥ यज्ञा र्थपशुवधे ॥ त्रि । वधकर्त्तरि ॥

घातवार: । पुं । राशिविशेषे विशेषवा रे ॥ यथा । नक्रे भौमो गोहरिण्यौ शुमन्द श्चन्द्रोद्वन्द्वेऽर्कोऽजभे च श्चकर्के । शुक्र: कोदण्डालिमीने षुकुम्भयूकेजीवो घातवारानशस्ता इति ॥

घाति: । स्त्री । पक्षिबन्धने ॥

घाती । त्रि । हननशीले ॥ घातयति हन्ति तच्छील: । णिनि: ॥

घातिपक्षी । पुं । श्येने ॥

घातुकः । त्रि० । क्रूरे ॥ हिंस्रे ॥ हन्ति । हन० । लषपतपदेत्युकञ् ॥

घात्यः । त्रि । हननयोग्ये ॥ यथा । सत्यं भावं न विन्ति व्यंपनुदति य तः क्रमेणाघ्यो घटादिर्मिथ्याभूत स्व कर्म चपयति न तथा विचिघात्यं यत स्तत् । इत्थं सिद्धे विभागे श्रुति शिखरगिरा विन्दिघात्यप्रतीतो बन्धो मिथ्येतिसिद्धे न तदपहतये कर्म जातं समर्थ मिति ॥

घारः । पुं । सेचने ॥ इतिहेमचन्द्रः ॥

घारि । न । छन्दोविशेषे ॥ रं विधाय लं निधाय । घारिनाम वृत्तमेहि ॥ यथा । रामराम रामराम । सारमे तदेव नाम ॥

घार्त्तिकः । पुं । घृतपूरे ॥

घासः । पुं । यवसे । स्वनामाख्याते तृ णे ॥ अद्यते गवादिभिः । अद० । घञ् । घञपोश्चेति अदेर्घस्लृ ॥

घासिः । पुं । अग्नौ ॥ भक्ष्ये ॥ घसति । घस्लृ अदने । जनिघसिभ्यामिण् ॥

घुः । पुं । ध्वनौ ॥ इतिजटाधरः ॥

घुटः । पुं । } पादग्रन्थौ । गुल्फे । टकुना इतिभाषा ॥
घुटिः । स्त्री । }
घुटिकः । पुं । }

घुटिका । स्त्री । गुल्फे । पादग्रन्थौ ॥ घोटते ऽनया । घुटपरिवर्त्तने । कुन् । टाप् । इत्वम् ॥

घुटी । स्त्री । गुल्फे ॥ इतिशब्दरूपः ॥

घुणः । पुं । काष्ठकृमौ । काष्ठवेधके ॥ घोणते । घुणभ्रमणे । इगुपधेतिकः ॥

घुणप्रिया । स्त्री । दन्त्याम् । उदुम्ब रपर्ण्याम् ॥

घुणवल्लभा । स्त्री । अतिविषायाम् ॥ इतिभावप्रकाशः ॥

घुण्टः । पुं । } गुल्फे । पादग्रन्थौ ॥
घुण्टकः । पुं । }

घुण्डः । पुं । भृङ्गे ॥ घोणते । घुण० । क्वादिभ्यःकिदितिडः ॥

घुर्घुरः । पुं । यमकीटे । घुर्घुरिया इतिगौडभाषा ॥ शूकरशब्दे ॥

घुर्घुरी । स्त्री । जलजन्तुविशेषे । मु- त्किरायाम् ॥

घुलञ्चः । पुं । गवेधुकायाम् ॥

घुलघुलारवः । पुं । पारावतप्रभेदे ॥

घुषितः । त्रि । शब्दिते ॥ शब्देन प्रक टीकृताभिप्राये वाक्ये ॥ घुषिर्वि शब्दने । क्तः ॥

घुष्टः । त्रि । शब्दिते ॥ घुष्यतेस्म । घुषिर् । क्तः ॥

घुष्टान्नम् । न । को भोक्तेत्युद्घुष्य स र्वादौ दीयमानेऽन्ने ॥

घुसृणम् । न । कुङ्कुमे ॥

घूकः । पुं । कौशिके । उलूके ॥

घूकारिः । पुं । वायसे । काके ॥

घूकावासः । पुं । शाखोटद्रुमे ॥

घूर्णः । पुं । शीष्मसुन्दरके । गुमा इति प्रसिद्धे ॥

घूर्णनम् । न । चक्रावर्त्ते । भ्रमणे ॥

घूर्णायमानः । त्रि । भ्राम्यमाणे । घूर्णायमानेचर्णीतियथा ॥

घूर्णिः । स्त्री । घूर्णने ॥

घूर्णितः । त्रि । प्रचलायिते । भ्रमिते । य उपविष्टो निद्रया घूर्णते तस्मिन् ॥ घूर्णतेस्म । घूर्णभ्रमणे । गत्यर्थेति क्तः ॥ घूर्णासंज्ञाभास्वा । तारकादित्वादितच् ॥ कम्पिते ॥

घूर्ण्यमानः । त्रि । भ्राम्यमाणे ॥ वायुनाघूर्ण्यमानोवृक्षः ॥

घृणा । स्त्री । ऋतीयायाम् । जुगुप्सायाम् ॥ करुणायाम् । कृपायाम् ॥ घ्रियन्तेऽनया । घृसेचने । बाहुलकान्नक् । टाप् ॥ घर्षणम् । घृणुदीप्तौ । भिदाद्यङ्वा ॥

घृणावासः । पुं । कुष्माण्डे ॥ त्रि । घृणायुते ॥

घृणिः । पुं । किरणे । अंशौ ॥ ज्वालायाम् ॥ तरङ्गे ॥ सूर्ये ॥ घरति । घृ० । जिघर्त्तिवा । घृक्षरणदीप्त्योः । घृणिपृश्नीतिनिप्रत्ययोगुणाभावश्चनिपातितः ॥

घृतम् । त्रि । प्रदीप्ते ॥ न । जले ॥ आज्ये । पक्वनवनीते । सर्पिषि ॥ अस्यगुणाः ॥ घृतं रसायनं स्वादु चक्षुष्यं वह्निदीपनम् । शीतवीर्यं विषालक्ष्मीपापपित्तानिलापहम् ॥ अल्पाभिष्यन्दि कान्त्योजस्तेजोलावण्यवृद्धिकृत् । स्वरस्मृतिकरं मेध्यमायुष्यं बलकृद्गुरु ॥ उदावर्त्तज्वरोन्मादशूलानाहव्रणान् हरेत् । स्निग्धं कफकरं रक्षःक्षयवीसर्परक्तनुत् ॥ * ॥ गव्यं घृतं विशेषेण चक्षुष्यं वृष्यमग्निकृत् । स्वादुपाकरसं शीतं वातपित्तकफापहम् ॥ मेधालावण्यकान्त्योजस्तेजोवृद्धिकरं परम् । अलक्ष्मीपरचोघ्नं वयसःस्थापकं गुरु ॥ बल्यं पवित्रमायुष्यं सुमङ्गल्यं रसायनम् । सुगन्धं रोचनं चारु सर्वाज्येषु गुणाधिकम् ॥ * ॥ माहिषन्तु घृतं स्वादु पित्तरक्तानिलापहम् । शीतलं श्लेष्मलं वृष्यं गुरु स्वादुविपच्यते ॥ * ॥ आज माज्यं करोत्यग्निं चक्षुष्यं बलवर्द्धनम् । कासे श्वासे क्षये चापि हितं पाके भवेत् कटु ॥ * ॥ घृतं दुग्धभवं ग्राहि शीतलं नेत्ररोगहृत् । निहन्ति पित्तदाहास्रमदमूर्च्छाभ्रम निलान् ॥ * ॥ विहस्तनदुग्धोत्थं तत् स्याद्वै यक्ष्मवी

.नकम्। स्थैर्याग्निवीर्यं चक्षुष्यं दीपनं रुचिकृत् परम्। वलकृद्बृंहणं वृष्यं विशेषाज्ज्वरनाशनम्॥ * ॥ वर्षाद्दूर्द्धं भवेदाज्यं पुराणं तत् त्रिदोषनुत्। मूर्च्छाकुष्ठविषोन्मादापस्मारतिमिरापहम्॥ यथायथाऽखिलं सर्पिः पुराण मधिकं भवेत्। तथा तथागुणैः स्वैःस्वै रधिकंतदुदाहृतम्॥ * ॥ योजयेन्नव मेवाज्यं भोजने तर्पणे श्रमे। बलक्षये पाण्डुरोगे कामिलानेत्ररोगयोः॥ * ॥ राजयक्ष्मणि वाले च वृद्धे श्लेष्मकृते गदे। रोगे सामे विषूच्याञ्च विवन्धे च मदात्यये॥ ज्वरेच दहने मन्दे नसर्पिर्बहुमन्यते॥ * ॥ घृत मब्दात् परं पक्कं हीनवीर्यत्व माप्नुयात्। तैलं पक्क मपक्कंवा चिरस्थायि गुणाधिकमिति॥ * ॥ औषधघटित पक्कघृतस्य पूर्णवीर्यत्वं षण्मासपर्यन्तं तिष्ठति॥ म्रियते जिघर्त्तिवा। घृ०। अञ्जिघृसिभ्यः क्तः॥

घृतकरञ्जः। पुं। करञ्जभेदे प्रकीर्य्ये। घृतपर्णके। घियाकरञ्ज इति भाषा॥

घृतकुमारिका। स्त्री। घृतकुमार्याम्॥

घृतकुमारी। स्त्री। कुमार्याम्। सहायाम्। तरुण्याम्॥



घृतदीधितिः। पुं। अग्नौ॥

घृतपर्णकः। पुं। घृतकरञ्जे॥

घृतपूरः। पुं। घेवर इतिप्रसिद्धेपक्कान्नविशेषे। घृतवरे। पिष्टपूरे॥ यथा। मर्द्दितां समितां क्षीरनालिकेरघृतादिभिः। अवगाह्य घृते पक्त्वा घृतपूरोऽयमुच्यते॥ घृतपूरो गुरुर्वृष्यः कफकृद्रक्तमांसदः। रक्तपित्तहरो-हृद्यः स्वादुः पित्तहरोऽपिदः॥ अपिच। क्षीरेण मर्द्दितं चूर्णं गोधूमानां सुगालितम्। विस्तार्य सर्पिषा पाच्यं कटाहेऽर्थ सितान्वितम्॥ घृतपूरोऽयमुद्दिष्टः कर्पूरमरिचान्वितः॥ नालिकेरजस्तु। समिता मर्द्दिता क्षीरे नालिकेरसितार्द्रकैः। अवगाह्य घृते पाच्या घृतपूरोऽपरः स्मृतः॥ दुग्धजोपि। पाकपिण्डीकृतं क्षीरंशर्कराचूर्णमिश्रितम्। घृतपूरविनिर्माणं कारयेत् स्वल्पसर्पिषि॥ शालिभवोपि। सुशालिपिष्टं दुग्धन्तु क्वथितं वस्त्रगालितम्। खण्डयुक्तं घृते पक्कं घृतपूरो भवेदयम्॥ कशेरुजोपि। कशेरुचूर्णं निःक्षिप्य पाकपिण्डीकृतं पयः। निर्माणं घृतपूराणां शर्करासहितं भवेत्॥ आम्ररसभवोपि। पक्काम्रस्य घृते तप्ते रसस्तु घनलपिण्डितः। शुद्धशर्कराया

योऽज्यो घृतपूरो यद्वच्छया ॥ क्षीरमावं स्वल्पपिष्टं खण्डं चूर्णं ततः घृतम् । योजिते योऽविशेषो ऽत्र तहाख्यास्त्वयं संस्थितः ॥ घृतपूरो गुरुर्वृष्यो हृद्यः पित्तानिलापहः । सद्यः प्राणप्रदो बल्यः सुरुच्यो ऽग्निप्रदीपनः ॥ शृङ्गाटकमुखाना मप्येवंस्याद् घृतपूरकः । विचार्य वस्तुसंयोगं तत्तु सानपिचारयेदिति ॥

घृतपूर्णः । पुं । } करञ्जवृक्षे ॥
घृतपूर्णकः । पुं । }

घृतमण्डलिका । स्त्री । हंसपदीवृक्षे ॥

घृतमण्डा । स्त्री । मायसुरसी इतिख्याते वायसोलीवृक्षे ॥

घृतवरः । पुं । घृतपूरे । घेवर इतिभाषा ॥

घृता । स्त्री । घृतमण्डायाम् ॥

घृताची । स्त्री । अप्सरोविशेषे ॥

घृताचीगर्भसम्भवा । स्त्री । स्थूलैलायाम् ॥

घृताह्वः । पुं । } सरलद्रवे ॥
घृताह्वयः । पुं । }

घृतेली । स्त्री । पिङ्गकपिशायाम् ॥

घृतोदः । पुं । घृताब्धौ ॥ घृतमुदकं यस्य । उत्तरपदस्यचेत्युदकस्योदः ॥

घृष्टः । त्रि । घर्षिते । निघृष्टे । घसा इति भाषा । पुं । गन्धविशेषे ॥ यथा । घृष्टोमलयजो गन्धः सरलस्य मते यथा । अगुरुप्रभृतिश्चापि यस्यपङ्कः प्रदीयते । घृष्टासघृष्टो. गन्धोऽयं द्वितीयः परिकीर्त्तितइति ॥



घृष्टिः । पुं । किरौ । वराहे ॥ स्त्री । घर्षणे ॥ ब्राह्मीयाम् ॥ विष्णुक्रान्तायाम् । अपराजितायाम् ॥ वाराह्याम् । चामर आलु इति गौड भाषा ॥ घर्षति । घृषुसङ्घर्षे । क्तिच् ॥

घृष्टिका । स्त्री । विष्णुपर्णिकायाम् । पृश्निपर्ण्याम् ॥

घृष्विः । पुं । वराहे । सूकरे ॥ घर्षति । घृषु० । कृविघृष्विच्छविस्थविकिकीदिविरिति क्विन्नन्तो निपातस्सिद्धः ॥

घेञ्चुलिका । स्त्री । क्रोञ्चादने । घेंचु इतिगौडभाषा ॥

घोङ्कः । पुं । खगान्तरे ॥

घोटः । पुं । अश्वे । घोटके ॥ घोटते । घुटपरिवर्त्तने । पचाद्यच् ॥

घोटकः । पुं । घोडा इतिभाषाप्रसिद्धे पशुविशेषे । अश्वे । तुरगे । पीतौ । तुरङ्गमे ॥ अथाऽश्वलक्षणम् । दीर्घग्रीवाक्षिकूटस्त्रिकहृदयपृथुस्ताम्रताल्वोष्ठजिह्वः सूक्ष्मत्वक्केशवालः सुशफगतिमुखो ह्रस्वकर्णोष्ठपुच्छः । जङ्घाजानूरुवृत्तः [illegible]

वे द्वेषतां यदि समीपतो जयः ॥ भक्ष्यपानखलिनाभिनन्दिनः पत्युरौपयिकनन्दिनोऽथवा । सव्यपार्श्वगतदृष्टयोऽथवा वाञ्छितार्थफलदास्तुरङ्गमाः ॥ वामैश्च पादैरभिताडयन्तो महीं प्रवासाय भवन्ति भर्त्तुः । सन्ध्यासु दीप्ता मवलोकयन्तो हेषन्ति चेद्बन्धपराजयाय ॥ अतीव हेषन्ति किरन्ति वालान् निद्रारताश्च प्रवदन्ति यात्राम् । रोमत्यजो दीनखरस्वनाश्च पांशून् ग्रसन्तश्च भयाय दृष्टाः ॥ * ॥ समुन्नवद्दक्षिणपार्श्वशायिनः पादं समुत्क्षिप्य च दक्षिणं स्थिताः । जयाय शेषेष्वपि वाहनेष्विदं फलं यथा सम्भव मादिशेद् बुधः ॥ आरोहति क्षितिपतौ विनयोपपन्नो यात्रानुगोऽन्यतुरगं प्रतिहेषितश्च । वक्त्रेण वा स्पृशति दक्षिणमात्मपार्श्वं योऽश्वः स भर्त्तुरचिरात् प्रचिनोति लक्ष्मीम् ॥ मुहुर्मुहुर्मूत्रशकृत् करोति न ताड्यमानोऽप्यनुलोमयायी । अकार्यभीतोऽश्रुविलोचनश्च शिवं न भर्त्तुस्तुरगोऽभिधत्ते ॥ इति वाराह्यां ९१ अध्यायः ॥

घोटिका । स्त्री । [illegible]याम् । लोनी इतिभाषा ॥ घोटिकाऽश्वरसा

न्दोषव्रणगुल्मघ्नी श्वासकासप्रमेहनुत् ॥ शोथे लोचनरोगे च हिता तज्ज्ञै रुदाहृता ॥ इत्यविशेषे । तुरङ्ग्याम् । चतुरङ्गायाम् ॥

घोणा । स्त्री । नासायाम् ॥ प्रोथे । अश्वनासिकायाम् ॥ घोणति अनया वा । घुण भ्रमणे । अच् हलश्चेति घञ्वा ॥

घोणी । पुं । वराहे । ऋक्षरोमणि ॥ घोणा नासाऽस्त्यस्य । व्री° इनिः ॥

घोण्टा । स्त्री । बदर्याम् । गोपघोण्टायाम् । झडबेरी इति भाषा ॥ पूगवृक्षे ॥ घोणते । घुण° । बाहुलकात् टः ॥ बदरीफलवृक्षयोः ॥

घोत्कारः । पुं । नासिकायाः शब्दे । घुर्राटा इति भाषा ॥

घोनसः । पुं । गोनसे । तिलित्ससर्पे ॥

घोरः । पुं । त्रिपुरान्तके ॥ आङ्गिरसगोत्रोत्पन्ने ऋषिविशेषे ॥ आकाशादिषु स्थूलेषु दुःखप्रकाशकाः अनवस्थिताः रजःप्रधानतया केचिद्विशेषास्ते च घोरसंज्ञकाः ॥ न । विषे ॥ त्रि । दारुणे । भयानके ॥ हिंसाद्यनेकायासबहुले क्रूरे ॥ परस्यात्मनश्चपीडाकरे ॥ दुर्गमे ॥ घोरयति । घुर भीमार्थशब्दयोः । ण्यन्तादच् ॥ यद्वा । हन्यते । हन° ।

स्थच धातोर्घुरादेशः ॥

घोरदर्शनः । पुं । उलूके ॥ त्रि । भयानकरूपे ॥

घोरपुष्पम् । न । कांस्ये ॥

घोरवासनः । पुं । } शृगाले । भूरिमाये ॥
घोरवासी । पुं । }

घोरवासितम् । न । भयानकशब्दे ॥

घोरा । स्त्री । रात्रौ ॥ देवदालीलतायाम् ॥ भयानकायाम् ॥ सङ्क्रान्तिविशेषे ॥ रवावुग्रभे सङ्क्रमे भास्करस्यमवेद्घोरनाम्नी सुखीशूद्रवर्गः ॥ राजस्यां मनसोहर्त्री ॥

घोलम् । न । मथितेदधनि । दण्डाहते ॥ ससरं निजलं घोलं वातपित्तहरं स्मृतम् ॥*॥ मस्तुना रहितं गाल्यं दधिशुभ्रतरे पटे । जीरसैन्धवसम्मिश्रं घोलं घनतरं स्मृतम् ॥ जीरसैन्धवसंयुक्तं घोलं वातप्रनाशनम् । अतीसारेत्र मन्देग्नौ हितं रुच्यं बलप्रदम् ॥

घोलिः । स्त्री । } पत्रशाकविशेषे
घोलिका । स्त्री । } । कुक्कालुकायाम् ॥
घोली । स्त्री । }

घोषः । पुं । आभीरपल्ल्याम् ॥ घोषन्तिशब्दा ऽत्र । घुषिर्विशब्दने । हलश्चेतिघञ् ॥ गोपाले ॥ ध्वनौ ॥ [illegible] दे ॥ [illegible] ॥ वाह्यप्रयत्नविशेषे ॥ पुं । कांस्ये ॥

घोषणम् । घुषघुष्टौ । घञ् ॥

घोषकः । पुं । मुक्ताकौष्ठ्यसक्षाम् । श्वेतघोषके ॥ घोषति । घुषिर्० । पं । चाद्यच् । स्वार्थेकन् ॥

घोषकाकृतिः । पुं । घोषके ॥

घोषणा । स्त्री । उच्चैर्घुष्टे । लोकविज्ञापनायोच्चैः शब्दिते ॥ यथा । मकर्मणा कनीयस्ता हृद्विर्वा नान्तरात्मनः । इति वाह मिवोद्भुस्य वेदान्ते घोषणा कृतेति ॥ घुषिर्० । ण्यासश्रन्थो युच् ॥

घोषयित्नुः । पुं । विप्रे ॥ कोकिले ॥ घोषयति । घुषिर्० । वाहुलकात् इत्नुच् ॥ वन्दिनि ॥

घोषवती । स्त्री । वीणायाम् ॥

घोषा । स्त्री । मधुरिकायाम् ॥ शतपुष्पायाम् ॥ कर्कटशृङ्ग्याम् ॥ कोशातक्याम् । तुरयी तोरञी इति सप्रसिद्धे फलशाके ॥

घ्नन् । त्रि । नुदति ॥

घ्राणम् । न । नासिकायाम् । गन्धग्रहणलिङ्गेन्द्रिये ॥ न्यायमते घ्राणेन्द्रियग्राह्योगन्धस्त्वादौ ॥ त्रि । घ्राते ॥ घ्रायतेऽनेन । घ्राणगन्धोपादाने । करणेल्युट् ॥ घ्रायतेस्मवा । घ्रा० । नद्दषिदेति वा नत्वम् ॥

घ्रातः

आघ्रातर्पणः । पुं । सुगन्धौ ॥ घ्राणदुःखदा । स्त्री । छिक्कन्याम् ॥ घ्रातः । त्रि । घ्राणविषयीकृते पुष्पादौ । घ्रातगन्धे । आघ्राते । घ्राणे ॥ घ्रायते स्म । घ्रा० । क्तः । नुदविदेति पाक्षिकोनत्वाभावः ॥

घ्रातिः । स्त्री । घ्राणे । नासिकायाम् ॥ घ्राते ॥ घ्राणम् । घ्रा० । क्तिप् ॥

ङः

ङः । पुं । विषये ॥ विषयस्पृहायाम् ॥ भैरवे ॥ ङ कारे ॥ * ॥ * ॥

इत्थादिगौडकुलोत्पन्नाडोचवासप्रधानोपनामतुलारामनिश्रात्मज श्रीधनपतिमिश्रापरनाम्ना तथा श्रीसद्गुरुकृष्णावधूतश्रीपरमहंसपरिव्राजकाचार्यश्रीमद्धरिहरानन्दनाथभारतिशिष्येण ब्राह्मावधूतश्रीसुखानन्दनाथपरनामधेयेन विरचिते शब्दार्थचिन्तामणौ कवर्गः समाप्तिमगात् ॥ * ॥ * ॥

सर्वार्थसिद्धौ सर्वेषां सुखानन्देन निर्मितः ॥
श्रीघासीराममिश्रैस्तु मुद्रालिप्या प्रकाशितः ॥



वैक्रमे १९२१ शरदि । शालिवाहनीये १७८६ शके मार्गशीर्षासितैकादश्यां सुराचार्यवारे सुम्नपुरे श्रीघासीरामकनहियालालयोः
स्वकीयसंस्कृतयन्त्रे वर्णयोजकाध्यक्षकायस्थवंशोद्भव
श्रीरामप्रसाददासदृष्ट्या
मुद्राङ्कितः ॥